2B. II] वर्ज्यो नोभयथा। "भूतमात्रं दशायतनानी"ति भदन्तबुद्धदेवः। तच्च नैवं भूतानां चतुष्ट्व[1]खक्खटादिलक्षणावधारणात् सूत्रे। तेषां[2] स्प्रष्टव्यत्वात्। नहि काठिन्यादीनि चक्षुरादिभिर्गृह्यन्ते नापि वर्णादयः कायेन्द्रियेण। उक्तं च सूत्रे "चक्षुर्भिक्षो आध्यात्मिक[3]मायतनं चत्वारि महाभूतान्युपादाय रूपप्रसादो रूप्यनिदर्शनं सप्रतिघं एवं यावत् कायः। रूपाणि भिक्षो बाह्यमायतनं चत्वारि महाभूतान्युपादाय रूपि सनिदर्शनं सप्रतिघम्[4]। शब्दो भिक्षो बाह्यमायतनं चत्वारि महाभूतान्युपादाय रूप्यनिदर्शनं सप्रतिघम्। एवं गन्धरसाः। स्प्रष्टव्यानि भिक्षो बाह्यमायतनं चत्वारि महाभूतानि चत्वारि महाभूतान्युपादाय रूप्यनिदर्शनं सप्रतिघमि"ति। स्प्रष्टव्यायतनैकदेशेनैव भूतानां संग्रहाच्छेषं न भूतानीति स्पष्टमार्दाशितम्। यर्त्तीह सूत्रे उक्तं "यच्चक्षुषि मांस[5]पिण्डे खक्खटं खरगतमि"ति। तेनाविनिर्भागवर्त्तिनो मांसपिण्डस्यैष उपदेशः[6]। षड्धातुरयं भिक्षो पुरुष" इति गर्भावक्रान्तौ मौलसत्त्वद्रव्यसंदर्शनार्थम्। पुनः षट्स्पर्शायतनवचनाच्चैत्ताभावप्रसङ्गाच्च। नच युक्तं चित्तमेव चैत्ता इत्यभ्युपेतुम्[7]। "संज्ञा च वेदना च चैतसिक एष धर्मश्चित्तान्वयाच्चित्त[8]निश्रित" इति सूत्रे वचनात्सरागचित्तादि[9]वच-[19 a. 2 A. III]नाच्च। तस्माद्य[10]थोक्तं धातूनां भूतभौतिकत्वम्।

कति संचिताः कत्यसंचिताः।

**संचिता दश रूपिणः ॥३५॥**

पञ्चेन्द्रियधातवः पञ्च विषयाः **संचिताः**। परमाणुसंघातत्वात् शेषा न संचिता इति सिद्धं भवति॥

अष्टादशानां धातूनां कश्छिनत्ति कश्छिद्यते को दहति को दह्यते कस्तुलयति कस्तुल्यते।

**छिनत्ति च्छिद्यते चैव बाह्यं धातु[11]चतुष्टयम्।**

रूपगन्धरसस्प्रष्टव्याख्यं परशुदार्वादिसंज्ञकम्। छेदो[12] नाम क एष धर्मः। सम्बन्धोत्पादिनः संघातस्रोतसो[13]विभक्तोत्पादनम्। न कायेन्द्रियादीनि च्छिद्यन्ते। निरवशेषाङ्गच्छेदे तदद्वैधीकरणात्। नहीन्द्रियाणि द्विधा भवन्ति। छिन्नस्याङ्गस्य निरिन्द्रियत्वात्। न चापि च्छिन्दन्ति। मणिप्रभावदच्छत्वात्[14]। यथा च्छिनत्ति च्छिद्यते चैव वाह्यं धातुचतुष्टयम्

१. Y. one reading is चतुष्क। २. Y. adds च। ३. MS. आत्मिकं...। ४. MS. drops ति। ५. MS. मान्स। ६. MS. ....स्येषोपदेश। ७. Y. भ्युपपंत्तुम्, भ्युत्पत्तुम्, प्रतिपत्तुम्, भ्युपगन्तुम्। ८. MS. ....न्वयच्चित। Y. omits चित्तान्वयात्। ९. MS. सरागश्चित्तादि। Y. सरागादिचित्त। १०. MS. तद्यस्मा। ११. MS. बाह्यंन्धातु....। १२. MS. च्छेदो। १३. MS. श्रोतसो। १४. Y. ...दच्छत्वात्।

**दह्यते तुलयत्येवं**

तदेव दह्यते तदेव तुलयति । नेन्द्रियाण्यच्छत्वान्मणिप्रभावत् । न शब्द उच्छेदित्वात् ।

**विवादो दग्धृतुल्ययोः ॥३६॥**

केचिदाहुः तदेव धातुचतुष्टयं दाहकं तुल्यं च । केचिदाहुस्तेजोधातुरेव दग्धा गुरुत्वमेव च तुल्यमिति ।

कति विपाकजाः धातवः कत्यौपचयिकाः कति नैष्यन्दिका कति द्रवयुक्ताः कति क्षणिकाः । आह ।

**विपाकजौपचयिकाः पञ्चाध्यात्मं**

अध्यात्मं तावत् पञ्च धातवः चक्षुरादयो वि-[19 b. 2B. III]पाकजाश्चौपचयिकाश्च । नैःष्यन्दिका न सन्ति । तद्व्यतिरिक्तनिष्यन्दाभावात् । तत्र विपाकहेतोर्जाताः विपाकजाः । मध्यपदलोपात् गोरथवत् । फलकालप्राप्तं वा कर्म विपाक इत्युच्यते । विपच्यत इति कृत्वा । तस्माज्जाता विपाकजाः । फलं तु विपक्तिरेवेति विपाकः । भवतु[1] फलहेतौ फलोपचारो यथा फले[2] हेतूपचारः । "षडिमानि स्पर्शायतनानि पौराणं कर्म वेदितव्यमि"ति । आहारसंस्कारस्वप्नसमाधिविशेषैरुपचिता औपचयिकाः । ब्रह्मचर्येण चेत्येके । अनुपघातमात्रं तु तेन स्यान्नोपचयः । विपाकसन्तानस्योपचयसन्तानः प्रतिप्राकार इवारक्षा । शब्द औपचयिको नैःष्यन्दिकश्चास्ति ।

**विपाकजः[3] ।**

**न शब्दः**

किं कारणम् । ईहातः[4] प्रवृत्तेः । यर्त्तहि प्रज्ञप्तिशास्त्रे उक्तं "पारुष्यविरतेः सुभावितत्वाद्ब्रह्मस्वरता महापुरुषलक्षणं निर्वर्त्तत" इति । तृतीयाऽसौ[5] परंपरेत्येके । पञ्चम्यसौ परंपरेत्यपरे । कर्मभ्यो हि भूतानि भूतेभ्यः शब्दः इति । पञ्चम्यसौ परंपरेत्यपरे । कर्मभ्यो हि[6] विपाकजानि महाभूतानि[7] तेभ्यश्चौ[8]पचयिकानि तेभ्यो नैःष्यन्दिकानि तेभ्यः शब्द इति । एवं तर्हि शारीरिक्यपि वेदना कर्मजभूतसंभूतत्वान्न विपाकः[9] प्राप्नोति । यदि शब्दवद्युक्तिविरोधः स्यात् ।

**अप्रतिघा अष्टौ नैःष्यन्दि-[20a 2A. IV]क[10] विपाकजाः ॥३७॥**

कतमेऽष्टौ । सप्त चित्तधातवो धर्मधातुश्च । नैःष्यन्दिकाः सभागसर्वत्रगहेतुजनिताः ।

---

१. Y. adds वा and omits फल । २. MS. फल । ३. MS. विपाकजो न । ४. Y. इच्छातः । ५. MS. तृतीयान्सौ । ६. Y. omits हि । ७. Y. omits महा । ८. Y. omits च । ९. Y. विपाकजा । १०. G. नैष्यन्दिक ।

विपाकजा विपाकहेतुजनिताः । औपचयिका न सन्त्यप्रतिघानां चयाभावात्[1] ।

**त्रिधाऽन्ये**

**अन्ये** चत्वारः शेषा रूपरसगन्धस्प्रष्टव्यधातवः । ते विपाकजा अप्यौपचयिका अपि नैःष्यन्दिका अपि ।

**द्रव्यवानेकः**

असंस्कृतं हि सारत्वाद् द्रव्यम् । तच्च धर्मधातावस्त्यतो धर्मधातुरेको द्रव्ययुक्तः ।

**क्षणिकाः पश्चिमास्त्रयः ।**

मनोधातुर्धर्मधातुर्मनोविज्ञानधातुश्च[2] पाठक्रमेण **पश्चिमाः** । ते प्रथमानास्रवे दुःखे धर्मज्ञानक्षान्तिकलापे क्षणमेकमनैःष्यन्दिका भवन्त्यतः **क्षणिका** इत्युच्यन्ते । अन्य-संभूतसंस्कृतो नास्ति कश्चिदनैःष्यन्दिकः । तत्र दुःखे[3] धर्मज्ञानक्षान्तिसंप्रयुक्तं चित्तं मनोधातुर्मनोविज्ञानधातुश्च । शेषास्तत्सहभुवो धर्मधातुः ॥

इदं विचार्यते । यश्चक्षुर्धातुनाऽसमन्वागतः समन्वागमं प्रतिलभते चक्षुर्विज्ञान-धातुनाऽपि सः । यो वा चक्षुर्विज्ञानधातुना चक्षुर्धातुनाऽपि सः । आह ।

**चक्षुर्विज्ञानधात्वोः स्यात् पृथक् लाभः सहापि च ॥३८॥**

**पृथक्** तावत् स्याच्चक्षुर्धातुना न चक्षुर्विज्ञानधातुना । कामधातौ क्रमेण चक्षुरिन्द्रियं प्रतिलभमानः । आरूप्यधातुच्युतश्च द्वितीयादिषु ध्यानेषूपपद्यमानः । स्याच्चक्षु-र्विज्ञानधातुना न चक्षुर्धा-[20b. 2B. IV]तुना । द्वितीयादिध्यानोपपन्नश्चक्षु-र्विज्ञानसंमुखी[4]कुर्वाणस्ततप्रच्युतश्चाधस्तादुपपद्यमानः । **सहापि** स्यादुभयेन समन्वा-गमं प्रतिलभते । आरूप्यधातुच्युतः कामधातौ ब्रह्मलोके चोपपद्यमानः । नोभयेन । एतानाकारान् स्थापयित्वा । यश्चक्षुर्धातुना समन्वागतश्चक्षुर्विज्ञानधातुनाऽपि सः । चतुष्कोटिकः । प्रथमा कोटिर्द्वितीयादिषु ध्यानेषूपपन्नश्चक्षुर्विज्ञानासंमुखीकुर्वाणः[5] । द्वितीया कामधातावलब्धविहीन[6]चक्षुः । तृतीया कामधातौ लब्धाविहीनचक्षुः प्रथमध्यानोपपन्नो द्वितीयादिध्यानोपपन्नश्च पश्यन् । चतुर्थ्येतानाकारान् स्थाप-यित्वा । एवं चक्षुर्धातुरूपधात्वोश्चक्षुर्विज्ञानरूपधात्वोश्च प्रतिलम्भसमन्वागमो यथायोगमभ्यूहितव्यौ । एतस्य प्रसङ्गस्य समुच्चयार्थश्चशब्दः **सहापि च** इति ।

---

१. Y. नहि त औपचयिकाः संचयाभावात् । २. MS. मनोधातुर्मनोविज्ञानधातुश्च ।
३. Y. one reading is दुःखधर्म··· । ४. Y. विज्ञानं संमुखी···, D. विज्ञानमसंमुखी···।
५. D. ···विज्ञानमसंमुखीकुर्वाणः । ६. D. विहीनं ।

कत्याध्यात्मिका धातवः कति बाह्याः ।

**द्वादशाध्यात्मिकाः**

कतमे द्वादश ।

**हित्वा रूपादीन्**

षड् विज्ञानानि षडाश्रया इत्येते द्वादश धातव आध्यात्मिकाः । रूपादयस्तु षड् विषयधातवो बाह्याः । आत्मन्यसति कथमाध्यात्मिकं[1] बाह्यं वा । अहंकारसन्निश्रयत्वाच्चित्तमात्मेत्युपचर्यते ।

"आत्मना हि सुदान्तेन स्वर्गं प्राप्नोति पण्डितः"

इत्युक्तम् । चित्तस्य चान्यत्र दमनमुक्तं भगवता ।

"चित्तस्य दमनं साधु चित्तं दान्तं सुखाव-[21 a 2A V]हम्" इति । अत आत्मभूतस्य चित्तस्याश्रयभावेन प्रत्यासन्नत्वात् । चक्षुरादीनामाध्यात्मिकत्वं रूपादीनां विषयभावाद् बाह्यत्वम् । एवं तर्हि षड् विज्ञानधातव आध्यात्मिका न प्राप्नुवन्ति । नह्येते मनोधातुत्वमप्राप्ताश्चित्तस्याश्रयीभवन्ति । यदा तदा त एवं ते भवन्तीति लक्षणं नातिवर्त्तन्ते । अन्यथा हि मनोधातुरतीत एव स्यान्नानागतप्रत्युत्पन्नः । इष्यन्ते चाष्टादश धातवस्त्रैयध्विकाः । यदि चा[2]नागतप्रत्युत्पन्नस्य विज्ञानस्य मनोधातुलक्षणं न स्यात् अतीतेऽप्यध्वनि मनोधातुर्न व्यवस्थाप्येत । नहि लक्षणस्याध्वसु व्यभिचारोऽस्तीति ॥

कति धातवः सभागाः कति तत्सभागाः । एकान्तेन तावत्

**धर्मसंज्ञकः ।**

**सभागः**

यो हि विषयो यस्य विज्ञानस्य नियतो यदि तत्र तद्विज्ञानमुत्पन्नं भवत्युत्पत्तिधर्मि वा एवं[3] स विषयः सभाग इत्युच्यते । नच सोऽस्ति कश्चिद्धर्मधातुर्यत्र नानन्तं मनोविज्ञानमुत्पन्नमुत्पंत्स्यते वा । तथाहि सर्वार्यपुद्गलानामिदं चित्तमवश्यमुत्पद्यते "सर्वधर्मा अनात्मान"[4] इति । तस्य च स्वभावसहभूनिर्मुक्ताः सर्वधर्मा आलम्बनम् । स पुनश्चित्तक्षणोऽन्यस्य चित्तक्षणस्यालम्बनमिति द्वयोः क्षणयोः सर्वधर्मा ह्यालम्बनं[5] भवन्ति । तस्माद् धर्मधातुर्नित्यं सभागः ।

**तत्सभागाश्च शेषाः**

सभागश्चेति चशब्दः । कोऽयं तत्सभागो नाम ।

---

१. MS. ...कथमध्यात्मिकं । २. Y. वा । ३. Y. omits एवं । ४. MS. सर्वधर्म्मानात्मान ।
५. Y. omits हि ।

**यो न स्वकर्मकृत् ॥३९॥**

[21b. 2B. V] उक्तं भवति यः स्वकर्मकृत्स[1] सभाग इति। तत्र येन चक्षुषा रूपाण्यपश्यत् पश्यति द्रक्ष्यति वा तदुच्यते सभागं चक्षुः। एवं यावन्मनः स्वेन विषयकारित्रेण वक्तव्यम्। तत्सभागं चक्षुः काश्मीराणां चतुर्विधम्। यद् दृष्ट्वा रूपाणि निरुद्धं निरुध्यते निरोत्स्यते वा यच्चानुत्पत्तिधर्मि। पाश्चात्यानां पुनः पञ्चविधम्। तदेवानुत्पत्तिधर्मि द्विधा कृत्वा विज्ञानसमायुक्तं [2]चासमायुक्तं च। एवं यावत् कायो वेदितव्यः। मनस्त्वनुत्पत्तिधर्मकमेव तत्सभागम्। रूपाणि च यानि चक्षुषाऽपश्यत् पश्यति द्रक्ष्यति वा तानि सभागानि। तत्सभागानि चतुर्विधानि। यान्यदृष्टान्येव निरुद्धानि निरुद्धचन्ते निरोत्स्यन्ते वा यानि चानुत्पत्तिधर्मीणि। एवं यावत् स्प्रष्टव्यानि। स्वेन्द्रियकारित्रेण सभागतत्सभागानि वेदितव्यानि। यदेकस्य चक्षुः सभागं तत्सर्वेषाम्। एवं तत्सभागमपि। तथा यावन्मनः। रूपं तु यः पश्यति तस्य सभागं यो न पश्यति तस्य तत्सभागम्। किं कारणम्। अस्ति हि संभवो यद्रूपमेकः पश्यति तद्बहवोऽपि पश्येयुर्यथा चन्द्रनटमल्लप्रेक्षासु। नतु संभवोऽस्ति यदेकेन चक्षुषा द्वौ पश्येताम्। अतोऽस्यासाधारणत्वादेकसन्तानवशेन व्यवस्थानम्। रूपस्य तु साधारणत्वात् अनेकसन्तानवशेन। यथा रूपमेवं शब्दगन्धरसस्प्रष्टव्य-धातवो वेदितव्याः। भवतु श-[22a. 2A. VI]ब्द एवम्। गन्धादयस्तु य एकेन गृह्यन्ते न तेऽन्येन प्राप्तग्रहणादित्यसाधारणत्वादेषां चक्षुरादिवदतिदेशो[3] न्याय्यः। अस्त्येतदेवमपि त्वेषामपि संभवं प्रति साधारणत्वम्। अस्ति ह्येष संभवो य एव गन्धादय एकस्य घ्राणादिविज्ञानमुत्पादयेयुस्त एवान्येषामपि। न त्वेवं चक्षुरादयः। तस्मादेषां रूपादिवदतिदेशः। चक्षुर्विज्ञानादीनां सभागत-त्सभागत्वमुत्पत्त्यनुत्पत्तिधर्मित्वाद्यथा मनोधातोः।

सभाग इति कोऽर्थः। इन्द्रियविषयविज्ञानानामन्योन्यभजनं कारित्रभंजनं वा भागः। स एषामस्तीति सभागः। स्पर्शसमानकार्यत्वाद्वा। ये पुनरसभागास्ते तेषां सभागानां जातिसामान्येन सभागत्वात् तत्सभागाः।

कति धातवो दर्शनहेयाः कति भावनाहेयाः कत्यहेयाः[4]। रूपिणस्तावत्

**दश भावनया हेयाः[5] पञ्च च**

विज्ञानधातवः।

**अन्त्यास्त्रयस्त्रिधा।**

मनोधातुर्धर्मधातुर्मनोविज्ञानधातुश्च। एते त्रयो धातवः पाठानुपूर्व्याऽन्त्यास्त्रिप्रकाराः।

---

१. MS.····कृत्स्व। २. Y. omits च। ३. MS.····दितिदेशो। ४. MS. कत्यहेया। ५. MS. भावनाहेयाः।

अष्टाशीत्यनुशयाः तत्सहभुवस्तत्प्राप्तयश्च सानुचरा दर्शनहेयाः। शेषाः सास्रवा भावनाहेयाः। अनास्रवा अप्रहेयाः[1]। ननु चान्यदपि दर्शनप्रहातव्यमस्ति पृथग्जनत्वमापायिकं[2] च कायवाक्कर्म।[3] आर्यमार्गविरोधि-[22b. 2B. VI]त्वात् न तद् दर्शनप्रहातव्यम्।[4] एष हि संक्षेपः।

**न दृष्टिहेयमक्लिष्टं न रूपं**

नास्ति किंचिदक्लिष्टं दर्शनप्रहातव्यं नापि रूपम्।[5] अक्लिष्टाव्याकृतं च पृथग्[6]-जनत्वम्। समुच्छिन्नकुशलमूलवीतरागाणामपि तत्समन्वागत[7]रूपं[8] कायवाक्कर्म। तस्मान्न दर्शनप्रहातव्यम्। सत्येष्व[9]विप्रतिपत्तेर्दुःखे धर्मज्ञानक्षान्तौ पृथग्[10]-जनत्वप्रसङ्गाच्च।

**नाप्यषष्ठजम् ॥४०॥**

षष्ठमुच्यते मनआयतनम्। तस्मादन्यत्र जातमषष्ठजं पञ्चेन्द्रियजं च यत्तदपि नास्ति दर्शनप्रहातव्यम् ॥

अष्टादशानां धातूनां कति दृष्टिः कति न दृष्टिः।

**चक्षुश्च धर्मधातोश्च प्रदेशौ दृष्टिः**

कतमः स इत्याह

**अष्टधा।**

पञ्च सत्कायदृष्ट्यादिका दृष्टयः लौकिकी सम्यग्[11]दृष्टिः शैक्षी दृष्टिरशैक्षी दृष्टिरित्ययमष्टप्रकारो धर्मधातुर्दृष्टि[12]रवशिष्टो न दृष्टिः। तत्र सत्कायदृष्ट्यादीनामनुशयनिर्देशे निर्देशः प्राप्तकालो भविष्यति। लौकिकी पुनः सम्यग्दृष्टिर्मनोविज्ञानसंप्रयुक्ता कुशलसास्रवा प्रज्ञा। शैक्षस्यानास्रवा दृष्टिः शैक्षी अशैक्षस्य अशैक्षी। समेघामेघरात्रिदिवरूपदर्शनवत् क्लिष्टाक्लिष्टलौकिकीशैक्ष्यशैक्षीभिर्दृष्टिभिर्धर्मदर्शनम्। अथ कस्माल्लौकिकी सम्मग्दृष्टिर्मनोविज्ञानसंप्रयुक्तै वोच्यते। यस्मात् [23a. 2A. VII]

**पञ्चविज्ञानसहजा धीर्न दृष्टिरतीरणात् ॥४१॥**

सन्तीरिका हि दृष्टिरुपध्यान[13]प्रवृत्तत्वात्। नचैवं[14]पञ्चविज्ञानसहजा प्रज्ञा।

---

१. Y. अहेयाः। २. Y. अपायसंवर्त्तनीयं। ३. MS. वाक्कर्म्मार्यं। ४. MS...तव्यमेष। ५. MS. रूपमक्लिष्टा...। ६. MS. पृथक्। ७. Y. समन्वागमात्। ८. MS. रूप। ९. MS. सत्येष्वपि विप्रति...। १०. MS. पृथक्। ११. MS. सम्यक्। १२. MS. धातुदृष्टि...। १३. Y. seems to be उपनिध्यान। १४. MS. नचैव।

तस्मादसौ न दृष्टिः । अत एव चान्याऽपि क्लिष्टाऽक्लिष्टा वा प्रज्ञा न दृष्टिः । चक्षुरिदानीमसन्तीरकत्वे कथं दृष्टिः । रूपालोचनार्थेन । यस्मात्

**चक्षुः पश्यति रूपाणि**

यदि चक्षुः पश्येदन्यविज्ञानसमङ्गिनोऽपि पश्येत् । न वै सर्वं चक्षुः पश्यति । किं तर्हि

**सभागं**

सविज्ञानकं यदा भवति तदा पश्यत्यन्यदा नेति । एवं तर्हि तदेव चक्षुराश्रितं विज्ञानं पश्यतीत्यस्तु ।

**न तदाश्रितम् ।**

**विज्ञानं**

पश्यतीति शक्यमविज्ञातुम् । किं कारणम् ।

**दृश्यते रूपं न किलान्तरितं यतः ॥४२॥**

यस्मात् किल रूपं कुड्यादिव्यवहितं न दृश्यते । यदि हि विज्ञानं पश्येत्तस्याप्रतिघत्वात्[१] कुड्यादिषु प्रतिघातो[२] नास्ति इत्यावृतमपि रूपं पश्येत् । नैव ह्यावृते चक्षुर्विज्ञानमुत्पद्यत इत्यनुत्पन्नं कथं द्रक्ष्यति । किं खलु नोत्पद्यते । यस्य तु चक्षुः पश्यति तस्य चक्षुषः सप्रतिघत्वाद्व्यवहिते वृत्त्यभाव[३] इति विज्ञानस्यानुत्पत्ति[४]राश्रयेणैक[५]विषयप्रवृत्तत्वात् युज्यते । किं नु वै चक्षुः प्राप्तविषयं कायेन्द्रियवत् यत आवृतं न पश्येत् । सप्रतिघत्वात् ।[६] काचाभ्रपटलस्फटिकाम्बुभिश्चान्तरितं कथं दृश्यते । तस्मान्न सप्रतिघत्वाच्चक्षुष आवृतस्य रूपस्यादर्शनम् । [23 b. 2 B. VII] किं तर्हि । यत्रालोकस्याप्रतिबन्ध आवृतेऽपि[७] रूपे तत्रोपपद्यत एव चक्षुर्विज्ञानम् । यत्र तु प्रतिबन्धस्तत्र नोत्पद्यत इत्यनुत्पन्नत्वादावृतं नेक्षते[८] । यत्तर्हि सूत्र उक्तं "चक्षुषा रूपाणि दृष्ट्वे"ति । तेनाश्रयेणेत्ययमत्राभिसन्धिर्यथा "मनसा धर्मान् विज्ञाये" त्याह । न च[९] मनो धर्मान् विजानाति । अतीतत्वात् । किं तर्हि । मनोविज्ञानम् । आश्रितकर्म वा आश्रयस्योपचर्यते । यथा मञ्चाः क्रोशन्तीति । यथा च सूत्र उक्तं "चक्षुर्ज्ञेयानि रूपाणीष्टानि[१०] कान्तानी"ति । न च तानि चक्षुषा विज्ञायन्ते । उक्तं च सूत्रे "चक्षुर्ब्राह्मण द्वारं यावदेव रूपाणां दर्शनाय" इत्यतो गम्यते चक्षुषा द्वारेण विज्ञानं पश्यतीति । दर्शने तत्र द्वाराख्या । नह्येतद्युज्यते । चक्षुर्दर्शनं[११] रूपाणां दर्शनायेति ।

---

१. MS... प्रतिपत्वात् । २. MS. प्रतिघाते । ३. MS. वृत्यभाव । ४. Y. विज्ञानस्याप्यनुत्पत्ति । ५. Y. आश्रयेण सहैक । ६. MS... घत्वात्काचाभ । ७. Y. omits अपि । ८. Y. नेक्ष्यते । ९. Y. हि । १०. Y. omits इष्टानि । ११. Y. omits चक्षुर् ।

यदि विज्ञानं पश्यति को विजानाति कश्चानयोर्विशेषः। यदेव हि रूपस्य विज्ञानं तदेवास्य दर्शनमिति। तद्यथा काचित्प्रज्ञा पश्यतीत्यप्युच्यते प्रजानातीत्यप्येवं किंचिद्विज्ञानं पश्यतीत्यप्युच्यते विजानातीत्यपि। अन्ये पुनराहुः। "यदि चक्षुः पश्यति कर्तृभूतस्य चक्षुषः काऽन्या दृशिक्रिये"ति वक्तव्यम्। तदेतदचोद्यम्। यदि हि[1] विज्ञानं विजानातीतीष्यते[2]। न च तत्र कर्तृक्रियाभेदः। एवमत्रापि। अपरे पुनर्ब्रुवते। "चक्षुर्विज्ञानं दर्शनं तस्याश्रयभावाच्च-[24a. 2A. VIII]क्षुः पश्यतीत्युच्यते। यथा नादस्याश्रयभावात् घण्टा नदतीत्युच्यत" इति। ननु चैवं विज्ञानस्याश्रयभावाच्चक्षुर्विजानातीति प्राप्नोति। न प्राप्नोति। तद्विज्ञानं दर्शनमिति रूढं लोके। तथाहि तस्मिन्नुत्पन्ने रूपं दृष्टमित्युच्यते न विज्ञातम्। विभाषायामप्युक्तं "चक्षुः संप्राप्तं चक्षुर्विज्ञानानुभूतं दृष्टमित्युच्यत" इति। तस्माच्चक्षुः पश्यतीत्येवोच्यते न विजानातीति। विज्ञानं तु सान्निध्यमात्रेण रूपं विजानातीत्युच्यते। यथा सूर्यो दिवसकर इति। अत्र सौत्रान्तिका आहुः। किमिदमाकाशं खाद्यते। चक्षुर्हि प्रतीत्य रूपाणि चोत्पद्यते चक्षुर्विज्ञानम्। तत्र कः पश्यति को वा दृश्यते। निर्व्यापारं हीदं धर्ममात्रं हेतुफलमात्रं च। तत्र व्यवहारार्थं[3] च्छन्दत उपचाराः क्रियन्ते। चक्षुः पश्यति विज्ञानं विजानातीति नात्राभिनिवेष्टव्यम्। उक्तं हि भगवता "जनपदनिरुक्तिं नाभिनिविशेत संज्ञां[4] च लोकस्य नाभिधावेदि"ति। एष तु काश्मीरवैभाषिकाणां सिद्धान्तः। चक्षुः पश्यति श्रोत्रं शृणोति घ्राणं जिघ्रति जिह्वा आस्वादयति कायः स्पृशति मनो विजानातीति।

तद्यदि चक्षुः पश्यति किमेकेन चक्षुषा रूपाणि पश्यत्याहोस्विदुभाभ्याम्[5]। नात्र नियमः।

**उभाभ्यामपि चक्षुर्भ्यां पश्यति व्यक्तदर्शनात्।**

**उभाभ्यामपि चक्षुर्भ्यां** [24b. 2B. VIII] **पश्यतीत्याभिधार्मिकाः**। तथाहि द्वयोर्विवृतयोः परिशुद्धतरं दर्शनं भवति[6]। एकस्मिंश्चोन्मीलिते [7]चक्षुषि द्वितीये चार्द्धनिमीलिते[7] द्विचन्द्रादिग्रहणं भवति। नैकतरान्यथीभावात्। नचाश्रयविच्छेदाद्[8] विच्छेदप्रसङ्गो विज्ञानस्य देशाप्रतिष्ठितत्वाद् रूपवदिति।

यदि चक्षुः पश्यति श्रोत्रं शृणोति यावन्मनो विजानाति किमेषां प्राप्तो विषय[9] आहोस्विदप्राप्तः।

---

१. Y. omits हि। २. MS. drops ना। ३. Y. omits व्यवहारार्थं। ४. MS. संज्ञा। ५. K. पश्यति आहोस्वि....। ६. K. दर्शनम्भवति। ७........७. K. omits चक्षुषि.... निमीलिते। ८. K. ....च्छेदाद्विच्छेद। ९. K. किमेषाम्प्राप्तविषय।

**चक्षुःश्रोत्रमनोऽप्राप्तविषयं**

तथाहि दूराद्रूपं पश्यत्यक्षिस्थमञ्जनं[1] न पश्यति। दूराच्छब्दं शृणोति। सति च प्राप्तविषयत्वे दिव्यं[2] चक्षुःश्रोत्रमिह[3] ध्यायिनां[4] नोपजायेत। घ्राणादिवत्। यद्य-प्राप्तविषयं चक्षुः[5] कस्मान्न सर्वमप्राप्तं[6] पश्यति दूरं तिरस्कृतं च[7]। कथं तावद॰यस्कान्तो न सर्वमप्राप्तमयः कर्षति। प्राप्तविषयत्वेऽपि चैतत्समानम्। कस्मान्न[8] सर्वं प्राप्तं पश्यत्यञ्जनं[9] शलाकां वा। यथा च घ्राणादीनां प्राप्तो विषयो नतु सर्वः। सहभूगन्धाद्यग्रहणात्।[10] एवं चक्षुषोऽप्यप्राप्तः[11]स्यान्न तु सर्वः। मनस्त्व-रूपित्वात् प्राप्तु[12]मेवाशक्तम्। केचित् पुनः श्रोत्रं प्राप्ताप्राप्तविषयं मन्यन्ते। कर्णाभ्यन्तरेऽपि शब्दश्रवणात्। शेषं तु घ्राणजिह्वाकायाख्यम्।

**त्रयमन्यथा ॥४३॥**

प्राप्तविषयमित्यर्थः। घ्राणं कथं प्राप्तविषयम्। निरुच्छ्वासस्य गन्धाग्रहणात्। केयं प्राप्तिर्नाम। निरन्तरोत्पत्तिः[13]। [25a. 2A₁. I] किं पुनः[14] परमाणवः स्पृशन्त्यन्योन्यमाहोस्विन्न। न स्पृशन्तीति काश्मीरकाः[15]। किं कारणम्। यदि तावत् सर्वात्मना स्पृशेयुर्मिश्रीभवेयुर्द्रव्याणि। अथैकदेशेन सावयवाः प्रसज्येरन्। निरवयवाश्च परमाणवः। कथं तर्हि[16] शब्दाभिनिष्पत्तिर्भवति। अत एव यदि हि स्पृशेयुर्हस्तो[17] हस्तेऽभ्याहतः सज्येतो[18]पलश्चोपले। कथं चितं[19] प्रत्याहतं न विशीर्यते। वायुधातुसंधारितत्वात्। कश्चिद्धायु[20]धातुर्विकिरणाय प्रवृत्तो यथा संवर्त्तन्यां कश्चित्संधारणाय यथा विवर्त्तन्यामिति। कथमिदानीं निरुत्तर[21]प्राप्त्या प्राप्तविषयं त्रयमुच्यते। तदेवैषां निरुत्तरत्वं[22] यन्मध्ये नास्ति किंचित्।[23] अपि खलु संघाताः सावयवत्वात् स्पृशन्तीत्यदोषः। एवं च[24] कृत्वाऽयमपि ग्रन्थ उपपन्नो भवति विभाषायाम्। किं नु[25] स्पृष्टहेतुकं स्पृष्टमुत्पद्यते आहो-स्विदस्पृष्टहेतुकमिति प्रश्नयित्वाह "कारणं प्रति[26]। कदाचित् स्पृष्टहेतुकम-स्पृष्टमुत्पद्यते यदा विशीर्यते। कदाचिदस्पृष्टहेतुकं स्पृष्टं यदा चयं गच्छति।

---

१. K. पश्यति अक्षि...। २. K वेदितव्यं। ३. Y adds मनुष्येषु। ४. K. ध्यायिनान्नो...। ५. K. विषयश्चक्षुः। ६. K. कस्मात् सर्व्वमप्राप्तन्न। ७. K. तिरस्कृतञ्च। ८. K. कस्मात् न। ९. K. पश्यति अञ्जनं। १०. ग्रहणादेवं। ११. K. ....प्यप्राप्तत्वं। १२. K. प्राप्त। १३. MS. ....त्पत्ति। १४. K किम्पुनः। १५. K. काश्मीराः। १६. Y. omits तर्हि। १७. MS. हस्ते। १८. MS. सज्येतापन...., Y. सज्जेत, K. साध्यत। १९. MS. चित्तं। २०. K. कश्चिद्धि वायु। २१. K. ....न्निरन्तर। २२. Y. K निरन्तरत्वं। २३. K. किञ्चि-दपि। २४. K. omits च। २५. K. किन्नु। २६. K. प्रश्नयित्वा आह कारणम्प्रति।

कदाचित् स्पृष्टहेतुकं स्पृष्टं यदा चयवतां चयः। कदाचिदस्पृष्टहेतुकमस्पृष्टं यदा वातायनरज" इति। यदि परमाणवः स्पृशेयुरुत्तरक्षणावस्थानं स्यादिति भदन्तवसुमित्रः। नस्पृशन्ति। [25b. 2B₁. I] निरन्तरे तु स्पृष्टसंज्ञेति भदन्तः। भदन्तमतं चेष्टव्यम्। अन्यथा हि सान्तराणां परमाणूनां शून्येष्वन्तरेषु गतिः केन प्रतिबाध्येत। यतः सप्रतिघा इष्यन्ते। नच परमाणुभ्योऽन्ये संघाता इति। त एव ते संघाताः[1] स्पृश्यन्ते यथा रूप्यन्ते। यदि च परमाणोर्दिग्भागभेदः कल्प्यते[2] स्पृष्टस्यास्पृष्टस्य वा सावयवत्वप्रसङ्गः। नो[3]चेत् स्पृष्टस्याप्यप्रसङ्गः ॥

किं पुनरेभिश्चक्षुरादिभिरात्मपरिमाणतुल्यस्यार्थस्य ग्रहणं भवत्याशुवृत्त्या च पर्वतादीनामलातचक्रादिवदाहोस्वित्तुल्यातुल्यस्य। यानि तावदेतानि प्राप्तविषयाण्युक्तान्येभिः

त्रिभिर्घ्राणादिभिस्तुल्यविषयग्रहणं मतम्।

यावन्तो हीन्द्रियपरमाणवस्तावन्तो हि विषयपरमाणवः समेत्य विज्ञानं जनयन्ति। चक्षुःश्रोत्राभ्यां त्वनियमः। कदाचिदल्पीयांसो[4] यदा वालाग्रं पश्यति। कदाचित्समा यदा द्राक्षा[5]फलं पश्यति। कदाचित् भूयांसो[6] यदा महान्तं पर्वतं पश्यत्युन्मिषितमात्रेण। एवं श्रोत्रेण मशक[7]मेघादिशब्दश्रवणे घोषम्। मनस्त्वमूर्त्तिवदेवेति नास्य परिमाणपरिच्छेदः संप्रधार्यते। कथं पुनरेषां चक्षुरादीन्द्रियपरमाणूनां संनिवेशः। चक्षुरिन्द्रियपरमाणवस्तावदक्षितारकायामजाजीपुष्पवदवस्थिताः। अच्छचर्मव-[26a. 2A₁. II]च्छादितास्तु न विकीर्यन्ते। अधरौत्तर्येण पिण्डवदवस्थिता इत्यपरे। नचान्योऽन्यमावृण्वन्ति स्फटिकवदच्छत्वात्। श्रोत्रेन्द्रियपरमाणवो भूर्जाभ्यन्तरावस्थिताः। घ्राणेन्द्रियपरमाणवो घटाभ्यन्तरेण[8] शलाकावत्। आद्यानि त्रीणीन्द्रियाणि मालावदवस्थितानि। जिह्वेन्द्रियपरमाणवोऽर्धचन्द्रवत्। वालाग्रमात्रं किल मध्यजिह्वायां जिह्वेन्द्रियपरमाणुभिरस्फुटम्। कायेन्द्रियपरमाणवः कायवदवस्थिताः। स्त्रीन्द्रियपरमाणवो भेरीकटाहवत्। पुरुषेन्द्रियपरमाणवोऽङ्गुष्ठवत्। तत्र चक्षुरिन्द्रियपरमाणवः कदाचित् सर्वे सभागा भवन्ति कदाचित्तत्सभागाः। कदाचिदेके सभागाः एके तत्सभागाः। एवं यावज्जिह्वेन्द्रियपरमाणवः। कायेन्द्रियपरमाणवस्तु सर्वे सभागा न भवन्ति। प्रदीप्तनरकाभ्यन्तरावरुद्धानामपि ह्यपरिमाणाः कायेन्द्रियपरमाणवस्तत्सभागा भवन्ति। सर्वैः किल[9] विज्ञानोत्पत्तावाश्रयो

१. Y. another reading is संघाते। Y. adds परमाणवः। Y. कल्प्येत। ३. Y. न।
४. MS. ....ल्पीयान्सो। ५. MS. द्रक्षा। ६. MS. भूयान्सो। ७. MS. समक।
८. Y. घटाभ्यन्तरे। ९. Y. स किल।

विशीर्येत । नचैक इन्द्रियपरमाणुर्विषयपरमाणुर्वा विज्ञानं जनयति । संचिताश्रयालम्बनत्वात् पञ्चानां विज्ञानकायानाम् । अत एवानिदर्शनः परमाणुरदृश्यत्वात् ॥

य इमे षड्विज्ञानधातव उक्ताश्चक्षुर्विज्ञानं यावन्मनोविज्ञानं किमेषां यथा विष-[26b. 2B₁. II]यो वर्त्तमानः पञ्चानां चरमस्य त्रिकाल[1] एवमाश्रयोऽपि । नेत्याह । किं तर्हि ।

**चरमस्याश्रयोऽतीतः**

मनोविज्ञानधातोः समनन्तरनिरुद्धं मन आश्रयः ।

**पञ्चानां सहजश्च तैः ॥४४॥**

अतीतश्चेति चशब्दः । तत्र चक्षुर्विज्ञानस्य चक्षुः सहज आश्रयो यावत् कायविज्ञानस्य कायः । अतीतः पुनरेषामाश्रयो मन इत्यप्येते पञ्च विज्ञानकाया इन्द्रियद्वयाश्रयाः । अत एवोच्यते "यश्चक्षुर्विज्ञानस्याश्रयभावेन समनन्तरप्रत्ययभावेनापि स तस्ये"ति । चतुष्कोटिकः । प्रथमा कोटिश्चक्षुः । द्वितीया समनन्तरातीतश्चैतसिको[2] धर्मधातुः । तृतीया समनन्तरातीतं मनः । चतुर्थी कोटिरुक्तनिर्मुक्ता धर्माः । एवं यावत् कायविज्ञानस्य स्वमिन्द्रियं वक्तव्यम् । मनोविज्ञानस्य पूर्वपादकः । यस्तावदाश्रयभावेन समनन्तरप्रत्ययभावेनापि सः । स्यात्समनन्तरप्रत्ययभावेन नाश्रयभावेन । समनन्तरास्यतीत[3]श्चैतसिको धर्मधातुरिति ।

किं पुनः कारणमुभयाधीनायां विज्ञानोत्पत्तौ चक्षुरादयः एवाश्रया उच्यन्ते न रूपादयः ।

**तद्विकारविकारित्वादाश्रयाश्चक्षुरादयः ।**

धातव इत्यधिकारः । चक्षुरादीनां हि विकारेण तद्विज्ञानानां विकारो भ-[27a. 2A₁. III]वत्यनुग्रहोपघातपटुमन्दतानुविधानात् नतु रूपादीनां विकारेण तद्विकारः । तस्मात्साधीयस्तदधीनत्वात्त एवाश्रया न रूपादयः ।

किं पुनः कारणं रूपादयश्च तैर्विज्ञायन्ते चक्षुर्विज्ञानं चोच्यते यावन्मनोविज्ञानम् । न पुना रूपविज्ञानं यावद्धर्मविज्ञानमिति । य एते चक्षुरादय आश्रया एषाम्

**अतोऽसाधारणत्वाद्धि विज्ञानं[4] तैर्निरुच्यते ॥४५॥**

कथमसाधारणत्वम् । नहि चक्षुरन्यस्य विज्ञानस्याश्रयीभवितुमुत्सहते । रूपं तु मनोविज्ञानस्यालम्बनीभवत्यन्यचक्षुर्विज्ञानस्यापीति । एवं यावत् कायो वेदितव्यः । तस्मादाश्रयाभावादसाधारणत्वाच्च विज्ञानं तेनैव[5] निर्दिश्यते न रूपादिभिः । यथा भेरीशब्दो यवाङ्कुर इति ।

---

१. MS. विकाल । २. MS. श्चेतसिको । ३. Y. समनन्तरातीत । ४. MS. drops वि । G. ...साधारणत्वाच्च । ५. Y. तैरेव ।

अथ यत्र काये स्थितश्चक्षुषा रूपाणि पश्यति किं तानि कायचक्षूरूपविज्ञानान्येकभूमिकान्येव भवन्त्याहोस्विदन्यभूमिकान्यपि। आह। सर्वेषां भेदः। कामधातूपपन्नस्य स्वेन चक्षुषा स्वानि रूपाणि पश्यतः सर्वं स्व[1]भूमिकं भवति। तस्यैव स्वानि रूपाणि प्रथमध्यानचक्षुषा पश्यतः कायरूपे स्वभूमिके विज्ञानचक्षुषी तद्भूमिके।[2] प्रथमध्यानभूमीनि पश्यतो रूपाणि त्रीण्यपि[3] तद्भूमिकानि[4]। द्वितीयध्यानचक्षुषा स्वानि रूपाणि पश्यतः कायरूपे स्वभूमिके चक्षुस्तद्भूमिकं विज्ञानं प्रथमध्यान भू-[27b. 2B1. III]मिकम्। प्रथमध्यानभूमीनि पश्यतो विज्ञानरूपे तद्भूमिके कायः कामावचरश्चक्षुर्द्वितीयध्यानभूमिकम्। द्वितीयध्यानभूमीनि पश्यतश्चक्षूरूपे तद्भूमिके कायः कामावचरो विज्ञानं प्रथमध्यानभूमिकम्। एवं तृतीयचतुर्थध्यानभूमिकेन[5] चक्षुषा तद्भूमिकाधरभूमिकानि रूपाणि पश्यतो योजयितव्यम्। प्रथमध्यानोपपन्नस्य स्वेन चक्षुषा स्वानि रूपाणि पश्यतः सर्वं स्वभूमिकमधराणि पश्यतः त्रयं स्वभूमिकम्[6]। द्वितीयध्यानचक्षुषा स्वानि रूपाणि पश्यतस्त्रयं स्वभूमिकं चक्षुस्तद्भूमिकम्। कामावचराणि पश्यतः कायविज्ञाने स्वभूमिके रूपाण्यधराणि चक्षुस्तद्भूमिकम्। द्वितीयध्यानभूमीनि पश्यतश्चक्षूरूपे तद्भूमिके शेषं स्वभूमिकम्। एवं तृतीयध्यानचक्षुषा योज्यम्। द्वितीयादिध्यानोपपन्नस्य स्वपरचक्षुर्भ्यां स्वपरभूमिकानि रूपाणि पश्यतो यथायोगं योजयितव्यम्। अयं तु नियमः।

**न कायस्याधरं चक्षुः**

पञ्चभूमिकानि हि कायचक्षूरूपाणि कामावचराणि यावच्चतुर्थध्यानभूमिकानि। द्विभूमिकं चक्षुर्विज्ञानं कामावचरं प्रथमध्यानभूमिकं च। तत्र यद्भूमिकः कायस्तद्भूमिकं चक्षुरूर्ध्वभूमिकं वा चक्षुर्भवति न त्वधरभूमिकम्। यद्भूमिकं चक्षुस्तद्भूमिकमधरभूमिकं वा रूपं [28a. 2A1. IV] विषयो भवति।

**ऊर्ध्वं रूपं न चक्षुषः।**

नहि कदाचिदूर्ध्वभूमिकं रूपमधोभूमिकेन चक्षुषा द्रष्टुं शक्यते।

**विज्ञानं च**

ऊर्ध्वं न चक्षुषो रूपवत्।

---

१. MS. सर्व्वं स्वं। २. MS. तत् भूमिके। ३. MS. रूपाण्यपि। ४. MS. तत् भूमि ....similarly in the following cases of यत् and तत्। ५. MS.....भूमिके। ६. D. adds. रूपाणि कमावचराणि। ७. Y. तृतीयादि।

**अस्य रूपं तु कायस्योभे च सर्वतः ॥४६॥**

अस्येत्यनन्तरोक्तस्य चक्षुर्विज्ञानस्य रूपं सर्वतो विषयः ऊर्ध्वमधः स्वभूमौ च। कायस्योभे रूपविज्ञाने सर्वतो भवतः। यथा चेदं चक्षुरुक्तं विस्तरेण वेदितव्यम्

**तथा श्रोत्रं**

"न कायस्याधरं श्रोत्रमूर्ध्वं शब्दो न च श्रुतेः।
विज्ञानं चास्य शब्दस्तु कायस्योभे च सर्वतः॥" इति

विस्तरेण योज्यम्।

**त्रयाणां तु सर्वमेव स्वभूमिकम्।**

घ्राणजिह्वाकायधातूनां कायविषयविज्ञानानि स्वभूमिकान्येव। इत्युत्सर्गविशेषेण कृत्वा पुनर्विशेषणार्थमपवाद आरभ्यते।

**कायविज्ञानमधरस्वभूमि**

कायः कायधातुः स्प्रष्टव्यं च स्वभूमिकान्येव नित्यं भवन्ति। कायविज्ञानं तु केषांचित् स्वभूमिकं यथाकामधातुप्रथमध्यानोपपन्नानाम्। केषांचिदधरभूमिकं यथा द्वितीयादिध्यानोपपन्नानामिति।

**अनियतं मनः ॥४७॥**

कदाचित् कायमनोविज्ञानधर्मैः समानभूमिकं मनो भवति कदाचिदूर्ध्वाधोभूमिकम्। पञ्चभूमिकेऽपि हि[1] काये सर्वभूमिकानि मनआदीनि भवन्ति समापत्त्युपपत्तिकाले[2] यथायोगमिति विस्तरेण समापत्तिनि-[28b. 2B1. IV]-र्देशे कोषस्थान एतदाख्यायिष्यते। अतिवहुग्रन्थभारपरिहारार्थं तु नेदानीं पुनराख्यायते। अल्पं च प्रयोजनं महांश्च श्रम इति समाप्त आनुषङ्गिक[3]प्रसङ्गः।

इदमिदानीं विचार्यते। अष्टादशानां धातूनां षण्णां च विज्ञानानां कः केन विज्ञेयः। आह।

**पञ्च बाह्या द्विविज्ञेयाः[4]**

रूपशब्दगन्धरसस्प्रष्टव्यधातवो यथासंख्यं चक्षुःश्रोत्रघ्राणजिह्वाकायविज्ञानैरनुभूता मनोविज्ञानेन विज्ञायन्ते। एवमेते प्रत्येकं द्वाभ्यां विज्ञानाभ्यां विज्ञेया भवन्ति। शेषास्त्रयोदश धातवः पञ्चानां विज्ञानकायानामविषयत्वादेकेन मनोविज्ञानेन विज्ञेया इत्याख्यातं भवति।

---

१. Y. omits हि। २. Y. seems to be उपपत्तिसमापत्तिकाले। ३. Y. आनुषङ्गिकः। ४. MS. द्विज्ञेयाः।

एषामष्टादशानां धातूनां मध्ये कति नित्याः कत्यनित्याः। न कश्चित् सकलोऽस्ति नित्यो धातुरपि तु

**नित्या धर्मा असंस्कृताः।**

तेन धर्मधात्वेकदेशो नित्यः शेषा अनित्याः।

कतीन्द्रियं कति नेन्द्रियम्।

**धर्मार्धमिन्द्रियं ये च द्वादशाध्यात्मिकाः स्मृताः ॥४८॥**

द्वाविंशतिरिन्द्रिया[१]ण्युक्तानि सूत्रे। चक्षुरिन्द्रियं श्रोत्रेन्द्रियं घ्राणेन्द्रियं जिह्वेन्द्रियं कायेन्द्रियं मनइन्द्रियं स्त्रीन्द्रियं पुरुषेन्द्रियं जीवितेन्द्रियं सुखेन्द्रियं दुःखेन्द्रियं सौमनस्येन्द्रियं दौर्मनस्येन्द्रियं उपेक्षे-[29b. 2B1. V]न्द्रियं श्रद्धेन्द्रियं वीर्येन्द्रियं स्मृतीन्द्रियं समाधीन्द्रियं प्रज्ञेन्द्रियम् अनाज्ञातमाज्ञास्यामीन्द्रियम् आज्ञेन्द्रियं आज्ञातावीन्द्रियमिति। आभिधार्मिकास्तु षडायतनव्यवस्थानमादृत्य जीवितेन्द्रियानन्तरं मनइन्द्रियं पठन्ति। सालम्बनत्वात्। तत्र धर्मार्धं[२] जीवितेन्द्रियादीन्येकादशेन्द्रियाणि त्रयाणां च भागो धर्मधातुप्रदेशत्वात्। द्वादशानामाध्यात्मिकानां चक्षुरादयः पञ्च स्वनामोक्ताः। सप्त चित्तधातवो मनइन्द्रियं[३] स्त्रीपुरुषेन्द्रिये कायधातुप्रदेश इति पश्चाद्वक्ष्यति। शेषाः पञ्च धातवो धर्मधातुप्रदेशश्च नेन्द्रियमिति सिद्धम् ॥

अभिधर्मकोशभाष्ये धातुनिर्देशो नाम
प्रथमं कोशस्थानं समाप्तमिति।



ये धर्मा हेतुप्रभवा हेतुस्तेषां तथागतो ह्यवदत्[४]।
तेषां च यो निरोध एवंवादी महाश्रमणः ॥

लिखापितमिदं श्रीलामावाकेनेति।

१. Y. one reading is द्वाविंशतीन्द्रिया...। २. MS looks like धर्मार्थं।
३. MS. मनः। इन्द्रियं। ४. MS.....वदत्तेषां।

# द्वितीयं कोशस्थानम्

[1b. 2B1. VI] ओं नमो बुद्धाय ।

उक्तानीन्द्रियाणि । कः पुनरिन्द्रियार्थः । "इदि परमैश्वर्ये" । तस्य इन्दन्तीति[1] इन्द्रियाणि । अत आधिपत्यार्थ इन्द्रियार्थः । कस्य चैषां क्वाधिपत्यम् ।

**चतुर्ष्वर्थेषु पञ्चानामाधिपत्यं**

चक्षुःश्रोत्रयोस्तावत् प्रत्येकं **चतुर्ष्वर्थेष्वाधिपत्यम्** । आत्मभावशोभायामन्धवधिरयोरकान्तरूपत्वात् । आत्मभावपरिकर्षणे दृष्ट्वा श्रुत्वा च विषमपरिवर्जनात् । चक्षुःश्रोत्रविज्ञानयोः ससंप्रयोगयोरुत्पत्तौ । रूपदर्शनशब्दश्रवणयोश्चासाधारणकारणत्वे । घ्राणजिह्वाकायानामात्मभावशोभायां पूर्ववत् । आत्मभावपरिकर्षणे तैः कवडीकाराहारपरिभोगात् । घ्राणादिविज्ञानानां ससंप्रयोगाणा[2]मुत्पत्तौ । गन्धघ्राणरसास्वादनस्प्रष्टव्यस्पर्शनानां चासाधारणकारणत्व इति ।

**द्वयोः किल ।**

**चतुर्णां**

स्त्रीपुरुषजीवितमनइन्द्रियाणां **द्वयोरर्थयोः प्रत्येकमाधिपत्यम्** । स्त्रीपुरुषेन्द्रिययोस्तावत्सत्त्वभेदविकल्पयोः । तत्र सत्त्वभेदः स्त्री पुरुष इति । सत्त्वविकल्पः स्तनादिसंस्थानस्वराचारान्यथात्वम् । संक्लेशव्यवदानयोरित्यपरे । तथा हि तद्विप्रयुक्तविकल्पानां[3] षण्ढ[4]पण्डकोभयव्यञ्जनानामसंवरानन्तर्यकुशलमूलसमुच्छेदा न भवन्ति संवरफलप्राप्तिवै-[2a. 2A1. VII]राग्याणि चेति । जीवितेन्द्रियस्य निकायसभागसंबन्धसाधारणयोः । मनइन्द्रियस्य पुनर्भवसंबन्धवशिभावानुवर्त्तनयोः[5] । तत्र पुनर्भवसंबन्धे यथोक्तं "गन्धर्वस्य तस्मिन् समये द्वयोश्चित्तयोरन्यतरान्यतरचित्तं संमुखीभूतं भवत्यनुनयसहगतं वा प्रतिघसहगतं वे"ति । वशिभावानुवर्त्तने यथोक्तं "चित्तेनायं लोको नीयत" इति विस्तरः । यत् पुनः सुखादीन्द्रियपञ्चकं यानि चाष्टौ श्रद्धादीनि तेषां

**पञ्चकाष्टानां संक्लेशव्यवदानयोः ॥१॥**

आधिपत्यं यथाक्रमं पञ्चानां सुखादीनां संक्लेशे । रागादीनां तदनुशायित्वात् । श्रद्धादीनां

१. Y. one reading is इन्दति । २. MS....गाना...। ३. Y. विकलानां । ४. Y. शण्ठ । ५. Y. no compound.

व्यवदाने । तै[1]र्व्यवदायते । व्यवदानेऽपि सुखादीनामाधिपत्यमित्यपरे । "यस्मात् सुखितस्य चित्तं समाधीयते"[2] । दुःखोपनिषच्छ्रद्धाषण्नैष्क्रम्याश्रिताः सौमनस्यादय इति वैभाषिकाः । अपरे पुनराहुः । नैव चक्षुःश्रोत्राभ्यामात्मभावपरिकर्षणं विज्ञाय विषमपरिहारात् । विज्ञाने तु तयोराधिपत्यम् । नापि विज्ञानादन्यद्रू[3]पदर्शनं शब्द-श्रवणं वाऽस्ति । यतस्तयोरसाधारणकारणत्वे पृथगाधिपत्यं युज्येत । तस्मान्नैव-मेषामिन्द्रियत्वम् । कथं तर्हि ।

**स्वार्थोपलब्ध्याधिपत्यात् सर्वस्य च षडिन्द्रियम् ।**

चक्षुरादीनां पञ्चानां स्वस्यस्वस्यार्थस्योपलब्धावाधिप-[2b.2B₁ VII]त्यम् । मनसः पुनः सर्वार्थोपलब्धावाधिपत्यम् । अत एतानि षट् प्रत्येकमिन्द्रियम् । ननु चार्थाना-मप्यत्राधिपत्यम् । नाधिपत्यम् । अधिकं हि प्रभुत्वमाधिपत्यम् । चक्षुषश्चक्षूरूपो-पलब्धावधिकमैश्वर्यम् । सर्वरूपोपलब्धौ सामान्यकारणत्वात्तत्पटुमन्दताद्यनुविधा-नाच्चोपलब्धेः ।[4] न रूपस्य । तद्विपर्ययात् । एवं यावत् मनसो धर्मेषु योज्यम् ।

**स्त्रीत्व[5]पुंस्त्वाधिपत्यात्तु कायात् स्त्रीपुरुषेन्द्रिये ॥२॥**

कायेन्द्रियादेव स्त्रीपुरुषेन्द्रिये पृथक् व्यवस्थाप्येते । नार्थान्तरभूते । कश्चिदसौ कायेन्द्रियभाग उपस्थ प्रदेशो यः स्त्रीपुरुषेन्द्रियाख्यां प्रतिलभते । यथाक्रमं स्त्रीत्व-पुंस्त्वयोराधिपत्यात् । तत्र स्त्रीभावः स्त्र्याकृतिः स्वरचेष्टा अभिप्रायाः[6] । एतद्धि स्त्रिया स्त्रीत्वम् । पुंभावः पुरुषाकृतिः स्वरचेष्टा अभिप्रायाः । एतद्धि पुंसः पुंस्त्वम् ।

**निकायस्थितिसंक्लेशव्यवदानाधिपत्यतः ।**

**जीवितं वेदनाः पञ्च श्रद्धाद्याश्चेन्द्रियं मताः ॥३॥**

निकायसभागस्थितौ जीवितेन्द्रियस्याधिपत्यं संक्लेशे वेदनानाम् । तथाहि सुखायां वेदनायां रागोऽनुशेते दुःखायां प्रतिघोऽदुःखासुखायामविद्येत्युक्तं सूत्रे । व्यवदाने श्रद्धादीनां पञ्चानाम् ।[7] तथाहि तैः क्लेशाश्च विष्कम्भ्यन्ते[8] मार्गश्चावाह्यते[9] । अत एतेऽपि प्रत्येकमिन्द्रियमिष्टाः ।

---

१. Y. adds हि । २. Y. adds इत्युक्तं सूत्रे । ३. MS. विज्ञानाद्रूप... । ४. MS. ...लब्धेर्न
५. MS. drops त्व । ६. Y. स्त्र्याकृतिस्वरचेष्टाभिप्रायाः । ७. MS. पञ्चानान्तथा
८. Y. विस्कम्भ्यन्ते । MS. looks like...श्राचाक्ष्यते ।

आज्ञास्या[3a.2A1.VIII]म्याख्यमाज्ञाख्यमाज्ञातावीन्द्रियं तथा ।
उत्तरोत्तरसंप्राप्तिनिर्वाणाद्याधिपत्यतः ॥४॥

प्रत्येकमिन्द्रिमित्युपदर्शनार्थं तथाशब्दः । तत्राज्ञास्यामीन्द्रियस्याज्ञेन्द्रियस्य प्राप्ताधिपत्यम् । आज्ञेन्द्रियस्याज्ञातावीन्द्रियप्राप्तौ आज्ञातावीन्द्रियस्य परिनिर्वाणे । नह्यविमुक्तचित्तस्यास्ति परिनिर्वाणमिति । आदिशब्दोऽन्यपर्यायद्योतनार्थः । कतमोऽन्यः पर्यायः । दर्शनहेयक्लेशपरिहाणं प्रत्याज्ञास्यामीन्द्रियस्याधिपत्यम् । भावनाहेयक्लेशप्रहाणं प्रत्याज्ञेन्द्रियस्य । दृष्टधर्मसुखविहारं प्रत्याज्ञातावीन्द्रियस्य । विमुक्तिप्रीतिसुखसंवेदनादिति । आधिपत्यादिन्द्रियत्वेऽविद्यादीनामुपसंख्यानं कर्त्तव्यम् । अविद्यादीनामपि हि संस्कारादिष्वाधिपत्यमत एषामपीन्द्रियत्वमुपसंख्यातव्यम् । वागादीनां च । वाक्पाणिपादपायूपस्थानामपि चेन्द्रियत्वमुपसंख्यातव्यम् । वचनादानविहरणोत्सर्गानन्देष्वाधिपत्यात् । न खलूपसंख्यातव्यम् । यस्मादिहेष्टम्

चित्ताश्रयस्तद्विकल्पः स्थितिः संक्लेश एव च ।
संभारो व्यवदानं च यावता तावदिन्द्रियम् ॥५॥

तत्र चित्ताश्रयः षडिन्द्रियाणि । एतच्च षडायतनं मौलं सत्त्वद्रव्यम् । तस्य स्त्रीपुरुषविकल्पः स्त्रीपुरुषेन्द्रियाभ्यां स्थितिर्जीवितेन्द्रियेण संक्लेशो वेदना[3b.2B1.VIII]भिः । व्यवदानसंभरणं[1] पञ्चभिर्व्यवदानं त्रिभिः । अतो नाविद्यादीनामिन्द्रियत्वमिष्टम् ।

प्रवृत्तेराश्रयोत्पत्तिस्थितिप्रत्युपभोगतः ।
चतुर्दश तथाऽन्यानि निवृत्तेरिन्द्रियाणि वा ॥६॥

मतविकल्पार्थो वाशब्दः । अपरे पुनराहुः । प्रवृत्तेराश्रयः षडिन्द्रियाणि । उत्पत्तिः स्त्रीपुरुषेन्द्रिये । तत उत्पत्तेः । स्थितिर्जीवितेन्द्रियम् । तेनावस्थानात् । उपभोगो वेदनाभिः । अत एतानि चतुर्दशेन्द्रियाणि । तेनैव प्रकारेण निवृत्तेरन्यानि । श्रद्धादीनि[2] हि निवृत्तेराश्रयाः । आज्ञास्यामीन्द्रियं प्रभवः स्थितिराज्ञेन्द्रियम् उपभोग आज्ञातावीन्द्रियेणेत्यत एताव[3]न्त्येवेन्द्रियाणि । अत एव चैषामेषोऽनुक्रमः । वाचस्तु नेन्द्रियत्वं वचने[4] शिक्षाविशेषापेक्षत्वात् । पाणिपादस्य चादानविहरणादनन्यत्वात् । तदेव हि तदन्यथाऽन्यत्र चोत्पन्नमादानं विहरणं चोच्यते । विनापि च पाणिपादेनादानविहरणादुरगप्रभृतीनाम् । पायोरपि नेन्द्रियत्वमुत्सर्गे गुरुद्रव्यस्याकाशे सर्वत्र पतनात् । वायुना च तत्प्रेरणात् ।

१. MS. सभरणं । २. Y. श्रद्धादयो । ३. MS. एव ताव....but व seems to be struck off. ४. MS. वचनेन ।

उपस्थस्यापि नेन्द्रियत्वमानन्दे स्त्रीपुरुषेन्द्रियकृतं हि तत् सौख्यमिति । कण्ठदन्ताक्षिवर्त्मपर्व[१]णामपि चाभ्यवहरणचर्वणोन्मेषनिमेषाकुञ्चनविका-[4a. 3A. I]-शन[२]क्रियास्विन्द्रियत्वं प्रसज्येत । सर्वस्य वा कारणभूतस्य स्वस्यां क्रियायामित्ययुक्तं वागादीनामिन्द्रियत्वम् ।।

तत्र चक्षुरादीनां पुरुषेन्द्रियपर्यन्तानां कृतो निर्देशः । जीवितेन्द्रियस्य विप्रयुक्तत्वाद्विप्रयुक्तेष्वेव करिष्यते निर्देशः । श्रद्धादीनां चैत्तेषु करिष्यते । सुखादीनामाज्ञास्यामीन्द्रियादीनां च कर्त्तव्यः । सोऽयं क्रियते ।

**दुःखेन्द्रियमशाता[३] या कायिकी वेदना**

अशातेत्युपघातिका दुःखेत्यर्थः ।

**सुखम् ।**

**शाता**

सुखेन्द्रियं कायिकी शाता वेदना । शातेत्यनुग्राहिका सुखेत्यर्थः ।

**ध्याने तृतीये तु चैतसी सा सुखेन्द्रियम् ।।७।।**

तृतीये तु ध्याने सैव शाता वेदना चैतसी सुखेन्द्रियम् । नहि तत्र कायिकी वेदनाऽस्ति । पञ्चविज्ञानकायाभावात् ।

**अन्यत्र सा सौमनस्यं[४]**

तृतीयाद्ध्यानादन्यत्र कामधातौ प्रथमे द्वितीये च ध्याने सा चैतसिकी शाता वेदना सौमनस्येन्द्रियम् । तृतीये तु ध्याने प्रीतिवीतरागत्वात् सुखेन्द्रियमेव सा न सौमनस्येन्द्रियम् । प्रीतिर्हि सौमनस्यम् ।

**अशाता चैतसी पुनः[५] ।**

**दौर्मनस्यमुपेक्षा तु मध्या**

नैवशातानाशाता अदुःखासुखा वेदना मध्येत्युच्यते । सोपेक्षेन्द्रियम् । किं कायिकी चैतसिकीत्याह ।

**उभयी**

किं पुनः कारणमियमभिसमस्यैकमिन्द्रियं क्रियते । [4b. 3B. I]

---

१. Y. वर्त्माङ्गुलिपर्व... । २. Y. seems to be संकोचविकाश । ३. Y. uses साता and आसाता but this MS. शाता and अशाता । ४. MS. drops न । ५. MS. पुनर्दौर्मनस्यं । उपेक्षा ।

**अविकल्पनात् ॥८॥**

चैतसिकं हि सुखदुःखं प्रायेण विकल्पनादुत्पद्यते न तु कायिकम्। विषयवशादर्हतामप्युत्पत्तेः। अतस्तयोरिन्द्रियत्वेन भेदः। उपेक्षा तु स्वरसेनाविकल्पयत एवोत्पद्यते कायिकी चैतसिकी चे[1]त्येकमिन्द्रियं क्रियते। अन्यथा[2] च कायिकं सुखमनुगृह्णात्यन्यथा चैतसिकम्। एवं दुःखमन्यथा कायिकमुपहन्त्यन्यथा चैतसिकम्। उपेक्षायां त्वेष विकल्पो नास्त्यत उपेक्षणं प्रत्यविकल्पनादभेदः।

**दृग्भावनाऽशैक्षपथे नव त्रीणि**

मनःसुखसौमनस्योपेक्षाः श्रद्धादीनि च पञ्च। तानि नवेन्द्रियाणि त्रिषु मार्गेषु त्रीणीन्द्रियाण्युच्यन्ते। दर्शनमार्गे अनाज्ञातमाज्ञास्यामीन्द्रियं भावनामार्ग आज्ञेन्द्रियम् अशैक्षमार्गे आज्ञातावीन्द्रियमिति। किं कारणम्। दर्शनमार्गे ह्यनाज्ञातमाज्ञातुं प्रवृत्तः। भावनामार्गे नास्त्यपूर्वमाज्ञेयं तदेव त्वाजानाति शेषानुशयप्रहाणार्थम्। अशैक्षमार्गे त्वाज्ञातमित्यवगम आज्ञातावः।[3] सोऽस्यास्तीति आज्ञातावी। आज्ञातमवितुं[4] शीलमस्येति वा। क्षयानुत्पादिज्ञानलाभात्। "दुःखं मे परिज्ञातं न पुनः परिज्ञातव्यमिति" तथाभूतस्येन्द्रियमाज्ञातावीन्द्रियम्।

स्वभावनिर्देशं कृत्वा प्रकारभेदो वक्तव्यः कति [5a. 3A. II] सास्रवाणि कत्यनास्रवाणि इन्द्रियाणीत्येवमादि। तत्र तावद्यदेतदनन्तरोक्तमाज्ञास्यामीन्द्रियादिकमेतत्

**अमलं त्रयम्।**

अनास्रवमित्यर्थः। मलानामास्रवपर्यायत्वात्।

**रूपीणि जीवितं दुःखे सास्रवाणि**

रूपीणि सप्तेन्द्रियाणि जीवितेन्द्रियं दुखःदौर्मनस्येन्द्रिये चैकान्तसास्रवाणि। रूपीणि पुनः सप्त चक्षुःश्रोत्रघ्राणजिह्वाकायस्त्रीपुरुषेन्द्रियाणि रूपस्कन्धसंग्रहात्।

**द्विधा नव ॥९॥**

मनःसुखसौमनस्योपेक्षाः श्रद्धादीनि च पञ्च एतानि नवेन्द्रियाणि सास्रवाण्यनास्रवाण्यपि। अनास्रवाण्येव श्रद्धादीनीत्येके। उक्तं हि भगवता "यस्येमानि पञ्चेन्द्रियाणि सर्वेण सर्वं[5] न सन्ति तमहं बाह्यं पृथग्जनपक्षावस्थितं वदामी"ति। नेदं ज्ञापकमनास्रवाण्यधिकृत्य[6] वचनात्। तथा ह्यार्यपुद्गलव्यवस्थानं कृत्वा यस्येमानीत्याह। पृथग्जनो वा द्विविधः।

---

१. Y. वा। २. Y. seems to be अनेन। ३. MS. आज्ञाताभावः। ४. MS. looks like ....मचित्तं...। ५. Y. सर्वाणि। ६. Y. ...स्रवत्वमधिकृत्य।

आभ्यन्तरकश्चासमुच्छिन्न[1]कुशलमूलो वाह्यकश्च[2] समुच्छिन्नकुशलमूलः। तमधिकृत्याह[3] "वाह्यं पृथग्जनपक्षावस्थितं वदामी"ति। उक्तं च सूत्रे "सन्ति च[4] सत्त्वा लोके जाता लोके वृद्धास्तीक्ष्णेन्द्रिया अपि मध्येन्द्रिया अपि मृद्विन्द्रिया अपी" त्यप्रवर्त्तित एव धर्मचक्रे। तस्मात्सन्त्येव सास्रवाणि श्रद्धादीनि। पुनश्चोक्तं "यावच्चाहमेषां [5b. 2B. II] पञ्चानामिन्द्रियाणां समुदयं चास्तगमं च स्वादं[5] चादीनवं च निःसरणं च यथाभूतं नाभ्यज्ञासिषं[6] न तावदहमस्मात्सदेवकाल्लोकादि"ति विस्तरः। न चानास्रवाणां धर्माणामेष[7] परीक्षाप्रकारः॥

कतीन्द्रियाणि विपाकः कति न विपाकः। एकान्तेन तावत्

**विपाको जीवितं**

अथ यदर्हन् भिक्षुरायुःसंस्कारान् स्थापयति तज्जीवितेन्द्रियं कस्य विपाकः। शास्त्र उक्तं "कथमायुःसंस्कारान् स्थापयति। अर्हन् भिक्षुः ऋद्धिमांश्चेतोवशित्वं प्राप्तः संघाय वा पुद्गलाय वा पात्रं वा चीवरं वा अन्यतमान्यतमं वा श्रामणकं जीवितपरिष्कारं वा दत्त्वा तत् प्रणिधाय प्रान्तकोटिकं चतुर्थं ध्यानं समापद्यते। स तस्मात् व्युत्थाय चित्तमुत्पादयति वाचं च भाषते यन्मे भोगविपाकं तदायुर्विपाकं भवत्विति। तस्य यत् भोगविपाकं तदायुर्विपाकं भवति। येषां पुनरयमभिप्रायो विपाकोच्छेषं विपच्यत इति। त आहुः पूर्वजातिकृतस्य कर्मणो विपाकोच्छेषम्। स भावनाबलेनाकृष्य प्रतिसंवेदयत" इति। कथमायुःसंस्कारानुत्सृजति। तथैव दानं दत्त्वा प्रणिधाय प्रान्तकोटिकं चतुर्थं ध्यानं समापद्यते। यन्मे आयुर्विपाकं तत् भोगविपाकं भवत्विति त-[6a. 3A. III]स्य तथा भवति। भदन्तघोषकस्त्वाह। तस्मिन्नेव आश्रये रूपावचराणि महाभूतानि ध्यानबलेन संमुखकरोत्यायुषोऽनुकूलानि वैरोधिकानि च। एवमायुःसंस्कारान् स्थापयत्येवमुत्सृजतीति। एवं तु भवितव्यम्। समाधिप्रभाव एव स तेषां तादृशो येन पूर्वकर्मजं च स्थितिकालावेधमिन्द्रियमहाभूतानां व्यावर्त्तयन्त्यपूर्वं च समाधिजमावेधमाक्षिपन्ति[8]। तस्मान्न तज्जीवितेन्द्रियं विपाकं ततोऽन्यत्तु विपाकः।

प्रश्नात् प्रश्नान्तरमुपजायते। किमर्थमायुःसंस्कारानधितिष्ठन्ति। परहितार्थं शासनस्थित्यर्थं वा[9]। ते ह्यात्मनः क्षीणमायुः पश्यन्ति। न च तत्रान्यं शक्तं पश्यन्ति। अथ किमर्थमुत्सृजन्ति।

१. MS. आभ्यन्तरकथासमुच्छिन्न...D. आभ्यन्तरश्चासमुच्छिन्न। २. D. बाह्यश्च। ३. D. उक्तं। ४. D. omits च। ५. D. चास्वादं। ६. D. नाभ्यज्ञासिषं। ७. Y. omits धर्म्माणाम्। ८. Y. omits आवेधम्। ९. Y. च।

अल्पं च परहितं जीविते पश्यन्ति रोगाभिभूतं[1] चात्मभावम्। यथोक्तं

"सुचीर्णे ब्रह्मचर्येऽस्मिन् मार्गे चैव सुभाविते।
तुष्ट आयुःक्षयात् भवति रोगस्यापगमे यथा॥"

इति[2]। अथैतदायुःसंस्काराणां स्थापनार्थमुत्सर्जनं वा क्व कस्य वा[3] वेदितव्यम्। मनुष्येष्वेव त्रिषु द्वीपेषु स्त्रीपुरुषयोरसमयविमुक्तस्यार्हतः प्रान्तकोटिकध्यानलाभिनः। तस्य हि समाधौ[4] वशित्वम्। क्लेशैश्चानुपस्तब्धा सन्ततिः। सूत्र उक्तम् "भगवान् जीवितसंस्काराधिष्ठायायुःसंस्कारानुत्सृष्टवान्"। तेषां को [6b. 3B. III] विशेषः। न कश्चिदित्येके। तथा ह्युक्तम् "जीवितेन्द्रियं कतमत्। त्रैधातुकमायुरि"ति। पूर्वकर्मफलमायुःसंस्काराः प्रत्युत्पन्नकर्मफलं जीवितसंस्कारा इत्यपरे। यैर्वा निकायसभागस्थितिस्त आयुःसंस्काराः। यैस्तु कालान्तरं जीवति ते जीवितसंस्कारा इति। बहुवचनं बहूनामायुर्जीवितसंस्कारक्षणानामु[5]त्सर्जनाधिष्ठानात्। नह्येकस्य क्षणस्योत्सर्जनमधिष्ठानं चास्ति[6]। न च कालान्तरस्थावरमेकमायुर्द्रव्यमिति द्योतनार्थमित्येके। बहुष्वेव संस्कारेष्वायुराख्या नास्त्येकमायुर्द्रव्यम्। अन्यथा[7] नैव संस्कारग्रहणमकरिष्यदित्यपरे। किमर्थं पुनर्भगवता आयुःसंस्कारा उत्सृष्टाश्चाधिष्ठिताश्च। मरणवशित्वज्ञापनार्थमुत्सृष्टा जीवितवशित्वज्ञापनार्थमधिष्ठिताः। त्रैमास्यमेव नोर्ध्वम् विनेयकार्याभावात्। यच्चापि तत् प्रतिज्ञातम् "एवंभावितैरहं चतुर्भिर्ऋद्धि[8]पादैराकाङ्क्षन् कल्पमपि तिष्ठेयं कल्पावशेषमपी"ति। तस्यापि संपादनार्थम्। स्कन्धमरणमारयोर्निर्जयार्थमिति वैभाषिकाः। बोधिमूले क्लेशदेवपुत्रमारौ निर्जिताविति। निष्ठितमानुषङ्गिकम्॥

प्रकृतमेवारभ्यते।

द्वेधा द्वादश

कतमानि द्वादश।

अन्त्याष्टकादृते।

[7a. 3A. IV] दौर्मनस्याच्च

अन्त्यमष्टकं श्रद्धादीनि दौर्मनस्यं च वर्जयित्वा। जीवितेन्द्रियादन्यानि द्वादश द्विविधानि[9] विपाकश्चा-

१. Y. one reading is रोगादिभूतं। २. MS. यथेति। ३. Y. च। ४. Y. adds च।
५. Y. जीवितसंस्काराणाम्। ६. Y. उत्सर्जनेऽधिष्ठाने वा प्रयोजनमस्ति। ७. Y. adds हिं।
८. MS. चतुर्भी ऋद्धि..। ९. Y. adds इन्द्रियाणि।

विपाकश्च। तत्र चक्षुरादीनि सप्तौपचयिकानि अविपाकः। शेषाणि विपाकः। मनोदुःखसुखसौमनस्योपेक्षेन्द्रियाणि कुशलक्लिष्टान्य[1] विपाकः। ऐर्यापथिकशैल्पस्थानिकनैर्माणिकानि च यथायोगम्। शेषाणि विपाकः। जीवितेन्द्रियं चक्षुरादीनि द्वादश हित्वा शेषाण्यविपाक इति सिद्धम्। यदि दौर्मनस्येन्द्रियं न विपाक इति सूत्रं कथं नीयते "त्रीणि कार्याणि। सौमनस्यवेदनीयं कर्म दौर्मनस्यवेदनीयं कर्म उपेक्षावेदनीयं कर्मे"ति संप्रयोगवेदनीयतामधिकृत्योक्तम्। दौर्मस्येन संप्रयुक्तं कर्म दौर्मनस्यवेदनीयम्। यथा सुखसंप्रयुक्तः स्पर्शः सुखवेदनोयः। सौमनस्योपेक्षावेदनीये अपि तर्हि कर्मणी एवं भविष्यतः। यथेच्छसि तथाऽस्तु। संप्रयोगेऽपि न दोषः विपाकेऽपि न दोषः। अगत्या ह्येतदेवं गम्येत। का पुनरत्र युक्तिर्दौर्मनस्यं न विपाक इति। दौर्मनस्यं हि परिकल्पविशेषैरुत्पाद्यते[2] च व्युपशाम्यते च। नचैवं विपाकः। सौमनस्यमप्येवं न स्याद्विपाकः। यदि तर्हि दौमनस्यं वि-[7b. 2B.IV]-पाकः स्यादानन्तर्यकारिणां तन्निमित्तं[3] दौर्मनस्योत्पादात्तत्कर्म विपक्वं स्यात्। सौमनस्यमप्येवम्। यदि सौमनस्यं विपाकः स्यात् पुण्यकारिणां तन्निमित्तं सौमनस्योत्पादात्तत्कर्म विपक्वं स्यात्। वीतरागाणां[4] तर्हि दौर्मनस्यासंभवात्। न चैवं विपाकः। सौमनस्यमप्येषामव्याकृतं कोदृशं विपाकः स्यात्। यादृशं तादृशमस्तु। सति तु संभवे सौमनस्यस्यास्ति विपाकावकाशो न दौर्मनस्यस्य। सर्वथाऽसमुदाचारादिति नास्त्येवं दौर्मनस्यं विपाक इति वैभाषिकाः। तत्र जीवितेन्द्रियाष्टमानि सुगतौ कुशलस्य विपाको दुर्गतावकुशलस्य। मनइन्द्रियमुभयोरुभयस्य। सुखसौमनस्योपेक्षेन्द्रियाणि कुशलस्य। दुःखेन्द्रियमकुशलस्य। सुगतावुभयव्यञ्जनस्याकुशलेन तत्स्थानप्रतिलम्भः। नत्विन्द्रियस्य कुशलाक्षेपात्। गतमेतद्।

इदं तु वक्तव्यम्। कतीन्द्रियाणि सविपाकानि कत्यविपाकानि। यदेतत् दौर्मनस्यमनन्तरोक्तं

**तत्त्वेकं सविपाकं**

तदेकं सविपाकमेव। तुशब्द एवकारार्थो भिन्नक्रमश्च वेदितव्यः। नहि तदव्याकृतमस्ति नाप्यनास्रवमसमाहितत्वात्। अतो नास्त्यविपाकं दौर्मनस्यम्।

**दश द्विधा[5] ॥१०॥**

सविपाकान्यविपाकानि च। कतमानि दश।

---

१. Y. one reading adds तानि।　२. Y. व्युत्पाद्यते।　३. MS. तन्नि।
४. Y. वीतरागादीनां।　५. MS. दशविधा।

[8a. 3A. V] **मनोऽन्यवित्तिश्रद्धादीनि**

अन्यवित्तिग्रहणात् दौर्मनस्यादन्यत् वेदितं[1] गृह्यते। **श्रद्धादीनि** श्रद्धावीर्यस्मृतिसमाधिप्रज्ञाः। तत्र मनःसुखसौमनस्योपेक्षा अकुशलाः कुशलाः सास्रवाश्च सविपाकाः। अनास्रवा अव्याकृताश्चाविपाकाः। दुःखेन्द्रियं कुशलाकुशलं सविपाकमव्याकृतमविपाकम्। श्रद्धादीनि सास्रवाणि सविपाकान्यनास्रवाण्यविपाकानि। अन्यदविपाकमिति सिद्धम्।

कति कुशलानि कत्यकुशलानि कत्यव्याकृतानि। एकान्तेन तावत्

**अष्टकं कुशलं**

पञ्चश्रद्धादीनि त्रीणि चाज्ञास्यामीन्द्रियादीनि।

**द्विधा।**

**दौर्मनस्यं**

कुशलं चाकुशलं च।

**मनोऽन्या च वित्तिस्त्रेधा**

कुशलाकुशलाव्याकृतानि।

**अन्यदेकधा ॥११॥**

किंचिदन्यत्। जीविताष्टमं चक्षुरादि। एतदव्याकृतमेव॥

कतमदिन्द्रियं कतमधात्वाप्तमेषामिन्द्रियाणाम्।

**कामाप्तममलं हित्वा**

कामप्रतिसंयुक्तं तावदिन्द्रियं वेदितव्यम्। एकान्तानास्रवमाज्ञास्यामीन्द्रियादित्रयं हित्वा। तद्धचप्रतिसंयुक्तमेव।

**रूपाप्तं स्त्रीपुमिन्द्रिये।**

**दुःखे च हित्वा**

अमलं चेति वर्त्तते। दुःखे इति दुःखदौर्मनस्ये। तत्र मैथुनधर्मवैराग्यादशोभाकरत्वाच्च रूपधातौ स्त्रीपुरुषेन्द्रिये न स्तः। कथमिदानीं पुरुषास्त उच्यन्ते। [8b.3B.V] क्वोच्यन्ते। सूत्रे। "अस्थानमनवकाशो यत् स्त्री ब्रह्मत्वं कारयिष्यति। नेदं स्थानं विद्यते। स्थानमेतत् विद्यते यत् पुरुष" इति। अन्यः पुरुषभावो[2] यः कामधातौ पुरुषाणां भवति। दुःखेन्द्रियं नास्त्याश्रयस्याच्छत्वादकुशलाभावाच्च। दौर्मनस्येन्द्रियं नास्ति शमथस्निग्धसन्तानत्वादाघातवस्त्वभावाच्च।

---

१. MS. ...दन्यत्वेदितं। २. Y. adds अस्ति।

**आरूप्याप्तं सुखे चापोह्य रूपि च ।।१२।।**

स्त्रीपुरुषेन्द्रिये[1] दुःखे चामलं[2] हित्वेति वर्त्तते । किमवशिष्यते । मनोजीवितोपेक्षेन्द्रियाणि श्रद्धादीनि च पञ्च । एतान्यारूप्यप्रतिसंयुक्तानि सन्ति नान्यानि ।

कतीन्द्रियाणि दर्शनप्रहातव्यानि कति भावनाप्रहातव्यानि कत्यप्रहातव्यानि ।

**मनोवित्तित्रयं त्रेधा**

कतमद् वित्तित्रयम् । सुखसौमनस्योपेक्षाः ।

**द्विहेया दुर्मनस्कता ।**

दौर्मनस्यं द्वाभ्यां प्रहेयं दर्शनभावनाभ्याम् ।

**नव भावनया**

हेयानीत्यधिकारः । जीविताष्टमानि चक्षुरादीनि दुःखेन्द्रियं च भावनाहेयान्येव ।

**पञ्च त्वहेयान्यपि**

श्रद्धादीनि पञ्च भावनाहेयान्यप्यहेयान्यपि । सास्रवानास्रवत्वात् ।

**न त्रयम् ।।१३।।**

त्रयं नैव प्रहेयमाज्ञास्यामीन्द्रियादिकमनास्रवत्वात् । नहि निर्दोषं प्रहाणार्हम् । उक्तः प्रकारभेदः ।

लाभ इदानीं वक्तव्यः । कतीन्द्रियाणि क-[9a. 3A. VI]स्मिन्धातौ विपाकः प्रथमतो लभ्यन्ते ।

**कामेष्वादौ विपाकौ[3] द्वे लभ्यते[4]**

कायेन्द्रियं जीवितेन्द्रियं च । ते पुनः

**नोपपादुकैः ।**

उपपादुकप्रतिषेधादण्डजजरायुजसंस्वेदजैरिति वेदितव्यम् । कस्मान्न मनउपेक्षेन्द्रिये । प्रतिसन्धिकाले[5] तयोरवश्यं क्लिष्टत्वात् । अथोपपादुकैः कति लभ्यन्ते ।

**तैः षड् वा**

यद्यव्यञ्जना भवन्ति । यथा प्राथमकल्पिकाः । कतमानि षट् । चक्षुःश्रोत्रघ्राणजिह्वाकायजीवितेन्द्रियाणि ।

---

१. Y. स्त्रीपुमिन्द्रिये । २. Y. adds च । ३. Y. G. विपाकौ । ४. Y. G. लभ्येते ।
५. MS. काल ।

**सप्त वा**

यद्येकव्यञ्जना भवन्ति। यथा देवादिषु।

**अष्टौ वा**

यद्युभयव्यञ्जना भवन्ति। किं पुनरुभयव्यञ्जना अप्युपपादुका भवन्ति। भवत्यपायेषु[1]। एवं तावत् कामधातौ। अथ रूपधातावारूप्यधातौ च कथमित्याह।

**षड् रूपेषु**

कामप्रधानत्वात् कामधातुः कामा इति निर्दिश्यते। रूपप्रधानत्वाद् रूपधातू रूपाणीति[2]। सूत्रेऽप्युक्तं "येऽपि ते भिक्षवः[3] शान्ता विमोक्षा अतिक्रम्य रूपाण्यारूप्या" इति। तत्र रूपधातौ षडिन्द्रियाणि विपाकः प्रथमतो लभ्यन्ते। यान्येव कामधातावव्यञ्जनैरुपपादुकैः

**एकमुत्तरे ॥१४॥**

रूपधातोरारूप्यधातुरुत्तरः। समापत्तितश्च परत्वादुपपत्तितश्च प्रधानतरत्वात्। तस्मिन् एकमेव जीवितेन्द्रियं विपाकः प्रथमतो लभ्यते ना-[9b. 3B. VI]न्यत्। उक्तो लाभः।

त्याग इदानीं वक्तव्यः। कस्मिन्धातौ म्रियमाणः कतीन्द्रियाणि निरोधयतीति

**निरोधयत्युपरमान्नारूप्ये जीवितं मनः।**

**उपेक्षां चैव रूपेऽष्टौ**

रूपधातौ म्रियमाणोऽष्टौ निरोधयति। तानि च त्रीणि चक्षुरादीनि पञ्च। सर्वे ह्युपपादुकाः समग्रेन्द्रिया उपपद्यन्ते च।

**कामे दश नवाष्टौ वा ॥१५॥**

कामधातौ म्रियमाण उभयव्यञ्जनो दशेन्द्रियाणि निरोधयति। तानि चाष्टौ स्त्रीपुरुषेन्द्रिये च। एकव्यञ्जनो नव। अव्यञ्जनोऽष्टौ। सकृन्मरण एष न्यायः।

**क्रममृत्यौ[4] तु चत्वारि**

क्रमेण तु म्रियमाणश्चत्वारीन्द्रियाणि निरोधयति। कायजीवितमनउपेक्षेन्द्रियाणि। नह्येषां पृथग्निरोधः। एष च न्यायः क्लिष्टाव्याकृतचित्तस्य मरणे वेदितव्यः। यदा तु कुशले चेतसि स्थितो म्रियते तदा

१. MS. भवत्यपायेषु। २. Y. रूपाणीति रूपधातु। ३. Y. omits भिक्षवः। ४. Y. ....मृत्योस्तु।

**शुभे सर्वत्र पञ्च च ।**

कुशले चेतसि म्रियमाणः सर्वत्र यथोक्तमिन्द्रियाणि निरोधयति । श्रद्धादीनि च पञ्चाधिकानि । एषां कुशले चेतस्यवश्यंभावः । एवमारूप्येष्वष्टौ निरोधयति रूपेषु त्रयोदशेति विस्तरेण गणनीयम् ।

इन्द्रियप्रकरणे सर्वे इन्द्रियधर्मा विचार्यन्ते । अथ कतमच्छ्रामण्यफलं कतिभिरिन्द्रियैः प्राप्यते ।

**नवाप्तिरन्त्य[10A. 3A. VII]फलयोः**

नवभिरिन्द्रियैः प्राप्तिरन्त्यफलयोः । के पुनरन्त्ये । स्रोत[1]आपत्तिफलमर्हत्त्वं च । के मध्ये । सकृदागामिफलमनागामिफलं च । तत्र स्रोतआपत्तिफलस्य श्रद्धादिभिराज्ञातावीन्द्रियवर्ज्यैर्मनउपेक्षेन्द्रियाभ्यां चेति नवभिः । आज्ञास्यामीन्द्रियमानन्तर्यमार्गे वेदितव्यमाज्ञेन्द्रियं च विमुक्तिमार्गे । उभाभ्यां हि तस्य प्राप्तिर्विसंयोगप्राप्तेरावाहकसन्निश्रयत्वाद्यथाक्रमम् । अर्हत्त्वमस्य पुनः श्रद्धादिभिराज्ञास्यामीन्द्रियवर्ज्यैर्मनइन्द्रियेण सुखसौमनस्योपेक्षेन्द्रियाणां चान्यतमेनेति नवभिः ।

**सप्ताष्टनवभिर्द्वयोः ॥१६॥**

सकृदागाम्यनागामिफलयोः प्रत्येकं सप्तभिरष्टभिर्नवभिश्चेन्द्रियैः प्राप्तिः । कथं कृत्वा । सकृदागामिफलं तावद्यद्यानुपूर्विकः[2] प्राप्नोति स च लौकिकेन मार्गेण तस्य सप्तभिरिन्द्रियैः प्राप्तिः । पञ्चभिः श्रद्धादिभिरुपेक्षामनइन्द्रियाभ्यां चेति । अथ लोकोत्तरेण मार्गेण तस्याष्टभिरिन्द्रियैः प्राप्तिः । आज्ञेन्द्रियमष्टमं भवति । अथ भूयोवीतरागः प्राप्नोति तस्य नवभिर्येनेव[3] स्रोतआपत्तिफलस्य । अनागामिफलं यद्यानुपूर्विकः प्राप्नोति स च लौकिकेन मार्गेण तस्य सप्तभिरिन्द्रियैः प्राप्तिः । यथा सकृ-[10b. 3B. VII]दागामिफलस्य । अथ लोकोत्तरेण मार्गेण तस्याष्टभिस्तथैव । अथ वीतरागः प्राप्नोति तस्य नवभिः । यथा स्रोतआपत्तिफलस्य । अयं तु विशेषः । सुखसौमनस्योपेक्षेन्द्रियाणामन्यतमं[4] भवति । निश्रयविशेषात् । यदाप्ययमानुपूर्विको नवमे विमुक्तिमार्गे तीक्ष्णेन्द्रियत्वा[5]द्ध्यानं प्रविशति लौकिकेन मार्गेण तदाप्यष्टाभिरिन्द्रियैरनागामिफलं प्राप्नोति । तत्र[6] हि नवमे विमुक्तिमार्गे सौमनस्येन्द्रियमष्टमं भवत्यानन्तर्यमार्गे तूपेक्षेन्द्रियमेव नित्यमुभाभ्यां च तस्य प्राप्तिः । अथ लोकोत्तरेण प्रविशति तस्य नवभिरिन्द्रियैः प्राप्तिः । आज्ञेन्द्रियं नवमं भवति । यत्तर्ह्यभिधर्मे

---

१. MS. here and later on श्रोत । २. MS. तावद्यानुपूर्विकः । ३. Y. येनैव D. यैरेव । ४. D. अन्यतमद् । ५. D. omits तीक्ष्णेन्द्रियत्वात् । ६. D. तस्य ।

उक्तं "कतिभिरिन्द्रियैरर्हत्त्वं प्राप्नोतीत्याह एकादशभिरिति"। तत् कथं नवभिरित्युच्यते। नवभिरेव तत् प्राप्नोति।

**एकादशभिरर्हत्त्वमुक्तं त्वेकस्य संभवात्।**

अस्ति संभवो यदेकः पुद्गलः परिहाय परिहाय सुखसौमनस्योपेक्षाभिरर्हत्त्वं प्राप्नुयादत एकादशभिरित्युक्तम्। ननु खलु संभवोऽस्ति सुखादीनामेकस्मिन् काले। कथमनागामिनोऽप्येष प्रसङ्गो न भवति। नह्यसौ परिहीणः कदाचित्सुखेन्द्रियेण प्राप्नोति न च वीतरागपूर्वी परिहीयते। तद्वैराग्यस्य [11a. 3A.VIII] द्विमार्गप्रापणात्।

इदं विचार्यते। कतमेनेन्द्रियेण समन्वागतः कतिभिः अवश्यं समन्वागतो भवति। तत्र

**उपेक्षाजीवितमनोयुक्तोऽवश्यं त्रयान्वितः ॥१७॥**

य एषामुपेक्षादीनामन्यतमेन समन्वागतः सोऽवश्यं त्रिभिरिन्द्रियैः समन्वागतो भवत्येभिरेव। नह्येषामन्योऽन्येन विना समन्वागमः[1]। शेषैस्त्वनियमः। स्यात्समन्वागतः स्यादसमन्वागतः। तत्र तावच्चक्षुःश्रोत्रघ्राणजिह्वेन्द्रियै[2]रारूप्योपपन्नो[3] न समन्वागतः। कामधातौ च येनाप्रतिलब्धविहीनानि। [4]कायेन्द्रियेणारूप्योपपन्नो न समन्वागतः। स्त्रीन्द्रियेण रूपारूप्योपपन्नः। कामधातौ येनाप्रतिलब्धविहीनम्। एवं पुरुषेन्द्रियेण[4]। सुखेन्द्रियेण चतुर्ध्यानारूप्योपपन्नः[5] पृथग्जनो[6] न समन्वागतः[7]। सौमनस्येन्द्रियेण तृतीयचतुर्थध्यानारूप्योपपन्नः[8] पृथग्जन[9] एव। दुःखेन्द्रियेण रूपारूप्योपपन्नः[10]। दौर्मनस्येन कामवीतरागः। श्रद्धादिभिः समुच्छिन्नकुशलमूलः। आज्ञास्यामीन्द्रियेण पृथग्जनफलस्थानसमन्वागताः। आज्ञेन्द्रियेण पृथग्जनदर्शनाशैक्षमार्गस्थाः। आज्ञातावीन्द्रियेण पृथग्जनशैक्ष्या असमन्वागताः। अप्रतिषिद्धास्ववस्थासु यथोक्तसमन्वागतो वेदितव्यः।

**चतुर्भिः सुख[11b. 3B. VII]कायाभ्यां**

यः सुखेन्द्रियेण समन्वागतः सोऽवश्यं चतुर्भिरिन्द्रियैस्तैश्च त्रिभिरुपेक्षादिभिः सुखेन्द्रियेण च। यः कायेन्द्रियेण सोऽपि चतुर्भिस्तैश्च त्रिभिः कायेन्द्रियेण च।

---

१. D. समन्वागतः। २. D. चक्षुरादिभिः सप्तभिः। ३. Y. आरूप्यधातूपपन्नो।
४........४. D omits कायेन्द्रियेणा...एवं पुरुषेन्द्रियेण। ५. D. चतुर्थध्यानाद्युपपन्नः।
६. Y. पृथग्जनाः। ७. Y. समन्वागताः। ८. Y. D....पन्नाः। ९. D. पृथग्जनाः।
१०. D..... पन्नाः।

पञ्चभिश्चक्षुरादिमान् ।

यश्चक्षुरिन्द्रियेण सोऽवश्यं पञ्चभिरुपेक्षाजीवितमनःकायेन्द्रियैस्तेन च । एवं श्रोत्र-घ्राणजिह्वेन्द्रियैर्वेदितव्यम् ।

सौमनस्यी च

यश्चापि सौमनस्येन्द्रियेण सोऽवश्यं पञ्चभिरुपेक्षाजीवितमनःसुखसौमनस्यैः । द्वितीयध्यानजस्तृतीयध्यानालाभी कतमेन सुखेन्द्रियेण समन्वागतो भवति । क्लिष्टेन तृतीयध्यानभूमिकेन ।

दुःखी तु सप्तभिः

यो दुःखेन्द्रियेण सोऽवश्यं सप्तभिः कायजीवितमनोभिश्चतुर्भिर्वेदनेन्द्रियैः ।

स्त्रीन्द्रियादिमान्[१] ॥१८॥

अष्टाभिः

यः स्त्रीन्द्रियेण समन्वागतः सोऽवश्यमष्टभिः तैश्च सप्तभिः स्त्रीन्द्रियेण च । आदिशब्देन पुरुषेन्द्रियदौर्मनस्यश्रद्धादीनां संग्रहः । तद्वानपि प्रत्येकमष्टाभिः समन्वागतो भवति । तैश्च सप्तभिरष्टमेन च पुरुषेन्द्रियेण । एवं दौर्मनस्येन्द्रियेण । श्रद्धादिमांस्तु तैश्च पञ्चभिरुपेक्षाजीवितमनोभिश्च ।

एकादशभिस्त्वाज्ञाज्ञाते[२]न्द्रियान्वितः ।

आज्ञात[३] इन्द्रियमाज्ञातेन्द्रियम् । य आज्ञातेन्द्रियेण स-[12a. $3A_1.1$]मन्वागतः[४] सोऽवश्यमेकादशभिः सुखसौमनस्योपेक्षाजीवितमनःश्रद्धादिभिराज्ञेन्द्रियेण च । एवमाज्ञा[५]तावीन्द्रियेणापि । तैरेव दशभिराज्ञातावीन्द्रियेण च ।

आज्ञास्यामीन्द्रियोपेतस्त्रयोदशभिरन्वितः ॥१९॥

कतमैस्त्रयोदशभिः । मनोजीवितकायेन्द्रियैः चतसृभिर्वेदनाभिः श्रद्धादिभिराज्ञास्यामीन्द्रियेण च ॥

अथ यः सर्वाल्पैः समन्वागतः स कियद्भिरिन्द्रियैः ।

सर्वाल्पैर्निःशुभोऽष्टाभिर्विन्मनःकायजीवितैः[६] ।

युक्तः

समुच्छिन्नकुशमूलो निःशुभः । स सर्वाल्पैरष्टाभिरिन्द्रियैः समन्वागतः । पञ्चभिर्वेद-

---

१. MS.....मानष्टाभिः । २. MS. ....स्त्वाज्ञाते... । MS. अज्ञातेन्द्रियं ।

४. MS. seems to omit समन्वागतः । ५ MS. drops ज्ञा । ६. MS. जीवितैर्युक्तः ।

नादिभिः कायमनोजीवितैश्च । वेदना हि वित् वेदयत इति कृत्वा । वेदनं वा वित् । यथा संपदनं संपत् । यथा च निःशुभः सर्वाल्पैरष्टाभिरिन्द्रियैर्युक्तः

**बालस्तथारूप्ये**

बाल इति पृथग्जनस्याख्या । कतमैरष्टाभिः ।

**उपेक्षायुर्मनःशुभैः ॥२०॥**

उपेक्षाजीवितमनोभिः श्रद्धादिभिश्च । एकान्तकुशलत्वात् श्रद्धादीनि शुभग्रहणेन गृह्यन्ते । आज्ञास्यामीन्द्रियादीनामपि ग्रहणप्रसङ्गः । न । अष्टाधिकाराद् बालाधिकाराच्च ॥

अथ यः सर्वबहुभिरिन्द्रियैः समन्वागतः स कियद्भिः ।

**बहुभिर्युक्त एकान्नविंशत्याऽमलवर्जितैः ।**

अना-[12b. 3B1. I] स्रवाणि त्रीणि वर्जयित्वा । स पुनः[1]

**द्विलिङ्गः**

दिव्यञ्जनो यः समग्रेन्द्रियः एकान्नविंशत्या समन्वागतः । कश्चापरः ।

**आर्यो रागी[2]**

अवीतरागोऽपि शैक्षः सर्वबहुभिरेकान्नविंशत्या समन्वागतः ।

**एकलिङ्गद्वचमलवर्जितैः ॥२१॥**

एकं व्यञ्जनं द्वे चानास्रवे वर्जयित्वा । आज्ञातावीन्द्रियं[3] द्वयोश्चान्यतरत् । उक्त इन्द्रियाणां धातुप्रभेदप्रसङ्गेनागतानां विस्तरेण प्रभेदः ।

इदमिदानीं विचार्यते । किमेते संस्कृता धर्मा यथा भिन्नलक्षणा एवं भिन्नोत्पादा उताहो नियतसहोत्पादा अपि केचित्सन्ति । सन्तीत्याह । सर्वं इमे धर्माः पञ्च भवन्ति । रूपं चित्तं चैतसिकाश्चित्तविप्रयुक्ताः संस्कारा असंस्कृतं च । तत्रासंस्कृतं नैवोत्पद्यते[4] । रूपिणां तु धर्माणामयं नियमः ।

**कामेऽष्टद्रव्यकोऽशब्दः परमाणुरनिन्द्रियः ।**

सर्वसूक्ष्मो हि रूप[5]संघातः परमाणुरित्युच्यते । यतो नान्यतरो विज्ञायेत । स कामधातावशब्दकोऽनिन्द्रियश्चाष्टद्रव्यक उत्पद्यते नान्यतमेन हीनः । अष्टौ द्रव्याणि

---

१. MS. पुनर्द्विलिंगः । २ G. आर्यरागी । ३. MS. अज्ञाता....। ४. D. नोदेति न च व्येति । ५. MS. रूपं ।

चत्वारि महाभूतानि चत्वारि चोपादायरूपाणि रूपगन्धरसस्प्रष्टव्यानि। सेन्द्रियस्तु परमाणुरशब्दको नवद्रव्यक उत्पद्यते दशद्रव्यको [13a. 3A1. II] वा। तत्र तावत्

**कायेन्द्रियी नवद्रव्यः**

कायेन्द्रियमत्रास्तीति सोऽयं **कायेन्द्रियी**। तत्र नव द्रव्याणि। तानि चाष्टौ कायेन्द्रियं च।

**दशद्रव्योऽपरेन्द्रियः ॥२२॥**

अपरमिन्द्रियं यत्र परमाणौ तत्र दश द्रव्याणि। तान्येव नव चक्षुःश्रोत्रघ्राणजिह्वेन्द्रियाणां चान्यतमम्[1]। सशब्दा पुनरेते परमाणव उत्पद्यमाना यथाक्रमं नवदशैकादश[2]द्रव्यका उत्पद्यन्ते। अस्ति ह्येन्द्रियाविनिर्भागी[3] शब्दोऽपि य उपात्तमहाभूतहेतुकः। कथमिहाविनिर्भागे[4] भूतानां कश्चिदेव संघातः कठिन उत्पद्यते कश्चिदेव द्रव उष्णो वा समुदीरणो वा। यद्यत्र पटुतमं प्रभावत उद्भूतं तस्य तत्रोपलब्धिः। सूचीतूनी[5]कलापस्पर्शवत् सक्तुलवणचूर्णरसवच्च। कथं पुनस्तेषु शेषास्तित्वं गम्यते। कर्मतः संग्रहधृतिपक्तिव्यूहनात्। प्रत्ययलाभे च सति कठिनादीनां[6] द्रवणा[7]दिभावात् अप्सु शैत्यातिशयादौष्ण्यं गम्यत इत्यपरे। अव्यतिभेदेऽपि तु स्याच्छैत्यातिशयः। शब्दवेदनातिशयवत्। बीजतस्तेषु तेषां भावो न स्वरूपत इत्यपरे। "सन्त्यस्मिन् दारुस्कन्धे विविधा धातव" इति वचनात्। कथं वायौ वर्णसद्भावः। श्रद्धानीय एषोऽर्थो नानुमानीयः। संस्पन्दतो[8] गन्धग्रहणात् तस्य वर्णाव्यभिचारात्। [13b. 3B1. II] रूपधातौ गन्धरसयोरभाव उक्तस्तेन तत्रत्याः परमाणवः षट्सप्ताष्टद्रव्यका इत्युक्तरूपत्वात् न पुनरुच्यन्ते।

किं पुनरत्र द्रव्यमेव द्रव्यं गृह्यते आहोस्विदायतनम्। किं चातः। यदि द्रव्यमेव द्रव्यं गृह्यते अत्यल्पमिदमुच्यते अष्टद्रव्यको नवदशद्रव्यक इति। अवश्यं हि तद्द्रव्यसंस्थानेनापि भवितव्यम्। तस्यापि परमाणुसंचितत्वात्। गुरुत्वलघुत्वयोश्चान्यतरेण श्लक्ष्णत्वकर्कशत्वयोश्च। शीतेनापि क्वचित् जिघत्सया पिपासया च। अथाप्यायतनद्रव्यं गृह्यते अतिबह्विदमुच्यते अष्टद्रव्यक इति। चतुर्द्रव्यको हि वक्तव्यो यावता भूतान्यपि स्प्रष्टव्यायतनम्। किंचिदत्र द्रव्यमेव द्रव्यं गृह्यते यदाश्रयभूतं किंचिदत्रायतनं द्रव्यं गृह्यते यदाश्रितभूतम्। एवमपि भूयांसि[9] भूतद्रव्याणि भवन्त्युपादायरूपाणां प्रत्येकं भूतचतुष्काश्रितत्वात्।

---

१. MS. ....तमत्। २. MS. ....दश एकादश। ३. Y. one reading was अविनिर्भोगी। ४. Y omits इह। ५. Y. तुली। ६. MS. कठिनां। Y. one reading adds द्रवद्रव्याणां च। ७. MS. द्रवाणा। ८. MS. संपन्दतो। Y. संसर्गतो। ९. MS. भूयान्सि।

अत्र[1] पुनर्जातिद्रव्यं गृह्यते । भूतचतुष्कान्तराणां स्वजात्यनतिक्रमात् । कः पुनर्यत्स एवं विकल्पेन वक्तुम् । च्छन्दतोऽपि[2] हि वाचां प्रवृत्तिरर्थस्तु परीक्ष्यः ।

उक्तो रूपिणां सहोत्पादनियमः । शेषाणां वक्तव्यस्तत्र तावत्

**चित्तं[3] चैत्ताः सहावश्यं**

नह्येते विनाऽन्योन्यं भवितुमुत्सहन्ते ।

**सर्वं संस्कृतलक्षणैः ।**

**सहावश्यमिति** वर्त्तते । यत्किं-[14a. 3A1. III] चिदुत्पद्यते रूपं **चित्तं** चैतसिका [4]विप्रयुक्ता वा[5] **सर्वं संस्कृतलक्षणैः** सार्धमुत्पद्यते ।

**प्राप्त्या वा**

**प्राप्त्या** सह सत्त्वाख्यमेवोत्पद्यते नान्यदिति विकल्पार्थो वाशब्दः ।

चैत्ता इत्युच्यन्ते । क इमे चैत्ताः ।

**पञ्चधा चैत्ता महाभूम्यादिभेदतः ॥२३॥**

**पञ्च** प्रकाराश्चैत्ता **महाभूमिकाः** कुशलमहाभूमिकाः क्लेशमहाभूमिकाः अकुशल-महाभूमिकाः परीत्तक्लेशमहाभूमिकाश्च । भूमिर्नाम गतिविषयः । यो हि यस्य गतिविषयः स तस्य भूमिरित्युच्यते । तत्र महती भूमिरेषामिति **महाभूमिकाः** ये सर्वत्र चेतसि भवन्ति । के पुनः सर्वत्र चेतसि ।

**वेदना चेतना संज्ञा च्छन्दः स्पर्शो मतिः स्मृतिः ।**
**मनस्कारोऽधिमोक्षश्च समाधिः सर्वचेतसि ॥२४॥**

इमे किले दश धर्माः सर्वत्र चित्तक्षणे समग्रा भवन्ति । तत्र **वेदना** त्रिविधोऽनुभवः । सुखो दुःखोऽदुःखा[6]सुखश्च । **चेतना** चित्ताभिसंस्कारो[7] मनस्कर्म । **संज्ञा** संज्ञानं विषयनिमित्तोद्ग्रहः[8] । **च्छन्दः** कर्त्तृकामता । **स्पर्श** इन्द्रियविषय-विज्ञानसन्निपातजा स्पृष्टिः । **मतिः** प्रज्ञा धर्मप्रविचयः । **स्मृति**रालम्बना-संप्रमोषः । **मनस्कार**श्चेतस आभोगः । **अधिमोक्षो**ऽधिमुक्तिः । **समाधि**-श्चित्तस्यैकाग्रता । सूक्ष्मो हि चित्तचैत्तानां विशेषः । स एव[9] दुःपरिच्छेदः प्र-[14b. 3B1. III]वाहेष्वपि[10] तावत् किं पुनः क्षणेषु । रूपिणीनामपि

---

१. Y. तत्र । २. Y. omits अपि । ३. G. चित्त । ४. Y. adds चित्त । ५. Y. च । ६. MS. ...दुःख । ७, MS. ....संस्कारा । ८. MS. निमित्तोत्ग्रहः । Y. निमित्तग्राहः । ९. Y. एष । १०. Y. प्रबन्धेष्वपि ।

तावदोषधीनां[1] वहुरसानां कासांचिदिन्द्रियग्राह्या रसविशेषा दुरवधारा भवन्ति किं पुनर्ये धर्मा अरूपिणो बुद्धिग्राह्याः। कुशला महाभूमिरेषां त इमे कुशल[2]महाभूमिका ये सर्वदा कुशले चेतसि भवन्ति। के पुनस्त इति।

**श्रद्धाऽप्रमादः प्रश्रब्धिरुपेक्षा ह्रीरपत्रपा।**

**मूलद्वयमहिंसा[3] च वीर्यं च कुशले सदा ॥२५॥**

इमे दश धर्मा कुशले चेतसि नित्यं भवन्ति। तत्र श्रद्धा चेतसः प्रसादः। सत्यरत्नकर्मफलाभिसंप्रत्यय इत्यपरे। अप्रमादः कुशलानां धर्माणां भावना। का पुनस्तेभ्योऽन्या भावना। या तेष्ववहितता[4]। चेतस आरक्षेति निकायान्तरीताः सूत्रे पठन्ति। प्रश्रब्धिश्चित्तकर्मण्यता। ननु च सूत्रे कायप्रश्रब्धिरप्युक्ता। न खलु नोक्ता। सा तु यथा कायिकी वेदना तथा वेदितव्या। कथं सा बोध्यङ्गेषु योक्ष्यते। तत्र तर्हि कायकर्मण्यतैव कायिकी प्रश्रब्धिर्वेदितव्या। कथं सा बोध्यङ्गमित्युच्यते। बोध्यङ्गानुकूल्यात्। सा हि कायकर्मण्यता चित्तकर्मण्यता बोध्यङ्गमावहति। अस्ति पुनः क्वचित् अन्यत्राप्येवं[5] दृश्यते। अस्तीत्याह। तद्यथा प्रीतिः प्रीतिस्थानीयाश्च धर्माः प्रीतिसंबोध्यङ्ग[6]मुक्तं भगवता। [7]प्रतिघः प्रतिघ-[15a. 3A1. IV]निमित्तं च व्यापादनिवरणमुक्तम्[7]। सम्यक्दृष्टिसंकल्पव्यायामाश्च[8] प्रज्ञास्कन्ध उक्ताः। नच संकल्पव्यायामौ प्रज्ञास्वभावौ तस्यास्त्वनुगुणाविति ताच्छब्द्यं लभेते। एवं कायप्रश्रब्धिरपि बोध्यङ्गानुगुण्याद्बोध्यङ्गशब्दं लभते। उपेक्षा चित्तसमता चित्तानाभोगता। कथमिदानीमेतद्योक्ष्यते। "तत्रैव चित्ते आभोगात्मको मनस्कारोऽनाभोगात्मिका चोपेक्षे"ति। ननु चोक्तं "दुर्ज्ञान एषां विशेष" इति। अस्ति हि नाम दुर्ज्ञानमपि ज्ञायते। इदं तु खल्वतिदुर्ज्ञानं यद्विरोधेऽप्यविरोध इति। अन्यत्राभोगोऽन्यत्रानाभोग इति कोऽत्र विरोधः। न तर्हीदानीमेकालम्बनाः सर्वे संप्रयुक्ताः प्राप्नुवन्ति। एवंजातीयकमत्रान्यदप्यायास्यतीति यस्तस्य नयः सोऽस्यापि वेदितव्यः। ह्रीरपत्राप्यं च पश्चाद्वक्ष्यते। मूलद्वयं द्वे कुशलमूले अलोभाद्वेषौ। अमोहोऽप्यस्ति स तु प्रज्ञात्मकः। प्रज्ञा च महाभूमिकेति नासौ कुशलमहाभूमिक एवोच्यते। अविहिंसा अविहेठना। वीर्यं चेतसोऽभ्युत्साहः।

---

१. Y. omits तावत्। २. MS. कुशला। ३. MS...हिन्सा। ४. MS. भावना या स्मै तेष्ववहिताता। ५. MS. अत्राप्येवं। ६. प्रीतिबोध्यंग। ७....७. D. omits प्रतिघ....निवरणमुक्तम्। ८. D. adds प्रज्ञानुकूल्यात्।

उक्ताः कुशला[1] महाभूमिकाः ।

महती भूमिर्महाभूमिः । क्लेशा महाभूमिरेषां त इमे क्लेशमहाभूमिका ये धर्माः सदैव क्लिष्टे चेतसि भवन्ति । के पुनस्ते सदैव क्लिष्टे चेतसि भवन्ति ।

**मोहः प्रमादः कौशीद्यमा**[15b 3B1 IV]**श्रद्धचं स्त्यानमुद्धवः ।**
**क्लिष्टे सदैव**

तत्र **मोहो** नामाविद्याऽज्ञानमसंप्रख्यानम् । **प्रमादः** कुशलानां धर्माणामभावना-ऽप्रमाद[2]विपक्षो[3] धर्मः । **कौशीद्यं** चेतसो नाभ्युत्साहो वीर्यविपक्षः । **आश्रद्धचं** चेतसोऽप्रसादः श्रद्धाविपक्षः । **स्त्यानं** कतमत् । या कायगुरुता चित्तगुरुता काया-कर्मण्यता चित्ताकर्मण्यता । कायिकं स्त्यानं चैतसिकं स्त्यानमित्युक्तमभिधर्मे । कथं चैतसिको धर्मः कायिक इत्युच्यते । यथा कायिकी वेदना । औद्धत्यं पुनश्चेत-सोऽव्युपशमः । इतीमे षट् क्लेशमहाभूमिकाः । ननु चाभिधर्मे दश क्लेशमहा-भूमिकाः पठचन्ते । "आश्रद्धचं कौशीद्यं मुषितस्मृतिता चेतसो विक्षेपः अविद्या असंप्रजन्यमयोनिशोमनस्कारो[4] मिथ्याधिमोक्ष औद्धत्यं प्रमादश्चे" ति । प्राप्तिज्ञो देवानां प्रियो न त्विष्टिज्ञः । का पुनरत्रेष्टिः । मुषितस्मृतिविक्षेपा-संप्रजन्यायोनिशोमनसिकारमिथ्याधिमोक्षा महाभूमिकत्वात् न क्लेशमहाभूमिका एवावधार्यन्ते । यथैवामोहः कुशलमहाभूमिको नावधार्यते प्रज्ञास्वभावत्वात् । स्मृतिरेव हि क्लिष्टा मुषितस्मृतिता । समाधिरेव क्लिष्टो विक्षेप इत्येवमादि । अत एवोच्यते "ये महा-[16a. 3A1. V]भूमिकाः क्लेशमहाभूमिका अपि त" इति । चतुष्कोटिकः । प्रथमा कोटिर्वेदना चेतना संज्ञा च्छन्दः स्पर्शश्च । द्वितीया-ऽश्राद्धचं कौशीद्यमविद्या औद्धत्यं प्रमादश्च । तृतीया मुषितस्मृत्यादयः[5] पञ्च क्लिष्टा यथोक्ताः । चतुर्थ्येतानाकारान् स्थापयित्वेति । केचित्तु मिथ्यासमाधेर-न्यचेतसो विक्षेपमिच्छन्ति । तेषामन्यथा चतुष्कोटिकः । स्त्यानं पुनरिष्यते सर्व-क्लेशसंप्रयोगीति क्लेशमहाभूमिकेषु तस्यापाठे कस्यापराधः । एवं त्वाहुः पठितव्यं भवेत्समाध्यनुगुणत्वात्तु न पठितम् । क्षिप्रतरं किल स्त्यानचरितः समाधिमुत्पाद-येन्नौद्धत्यचरित इति । कः पुनः स्त्यानचरितो यो नौद्धत्यचरितः को वा औद्धत्य-चरितो यो न स्त्यानचरितः । नह्येते जातु सहचरिष्णुतां[6] जहीतः । तथापि यद्यस्याधिमात्रं स तच्चरितो ज्ञातव्यः । अतः षडेव क्लेशमहाभूमिकाः सिद्धचन्ति । एते हि सदा क्लिष्ट एव चेतसि भवन्ति नान्यत्र ॥

१. MS. कुशला । २ Y. adds भावना । ३. D. भावनाविपक्षभूतो । ४. D. मनसिकारो । ५. Y omits मुषित । ६. MS. सहचरिष्णुता ।

**अकुशले त्वाह्रीक्यमनपत्रपा ॥२६॥**

अकुशले तु चेतस्याह्रीक्यमनपत्राप्यं च नित्यं भवत इत्येतौ द्वौ धर्मावकुशलमहाभूमिकावुच्येते । तयोश्च पश्चाल्लक्षणं वक्ष्यते ।

**क्रोधोपनाहशाठ्येर्ष्याप्रदासम्रक्षमत्सराः ।**

**मायामद[1]विहिंसाश्च परीत्तक्ले-[16b.3B1. V]शभूमिकाः ॥२७॥**

परीत्तक्लेशा[2] भूमिरेषां त इमे **परीत्तक्लेशभूमिका** अविद्यामात्रेण भावनाहेयेन मनोभूमिकेनैव च संप्रयोगात् । एषां तु निर्देश उपक्लेशेषु करिष्यते ।

उक्ता इमे पञ्चप्रकाराश्चैत्ताः । अन्येऽपि चानियताः सन्ति वितर्कविचारकौकृत्यमिद्धादयः । तत्र वक्तव्यं कस्मिंश्चित्ते कति चैत्ता अवश्यं भवन्तीति । कामावचरं तावत् पञ्चविधं[3] चित्तम् । कुशलमकुशलम्[4] । तत्राकुशलं[5] द्विविधमावेणिकमन्यक्लेशसंप्रयुक्तं च । अव्याकृतं[6] द्विविधं निवृताव्याकृतम् अनिवृताव्याकृतं च । तत्र तावत् कामावचरचित्तमवश्यं सवितर्कं सविचारम् । अतोऽत्र

**सवितर्कविचारत्वात् कुशले कामचेतसि ।**

**द्वाविंशतिश्चैतसिकाः**

अवश्यं भवन्ति । दश महाभूमिका दश कुशलमहाभूमिका वितर्को विचारश्च ।

**कौकृत्यमधिकं क्वचित् ॥२८॥**

नहि सर्वत्र कुशले चेतसि कौकृत्यमस्ति । यत्र त्वस्ति तत्र तदेवाधिकं कृत्वा त्रयोविंशतिश्चैत्ता भवन्ति । किमिदं कौकृत्यं नाम । कुकृतस्य भावः[7] कौकृत्यम् । इह तु पुनः कौकृत्यालम्बनो धर्मः कौकृत्यमुच्यते चेतसो विप्रतिसारः । तद्यथा शून्यतालम्बनं विमोक्षमुखं शून्यतेत्युच्यते अशु-[17a. 3A1. VI]भालम्बनश्चा[8]लोभोऽशुभ इति[9] । लोकेऽपि च दृष्टः स्थानेन स्थानिनामतिदेशः सर्वो ग्राम आगतः सर्वो देश आगत इति । स्थानभूतं च कौकृत्यं विप्रतिसारस्य । फले वा हेतूपचारोऽयम् । <u>यथोक्तं</u> "षडिमानि स्पर्शायतनानि पौराणं[10] कर्म वेदितव्यमि"ति । यर्त्तहि अकृतालम्बनं तत् कथं कौकृत्यम् ।[11] अकृतेऽपि कृताख्या भवति ।

---

१. MS. दम । २. MS. ....क्लेश । ३. D. पञ्चप्रकारं । ४. D. omits अकुशलम् । ५ D. omits तत्र । ६. Y. adds अपि । ७. Y. कुकृतभावः । ८. Y. omits च । ९. MS. ....शुभेति । १०. MS. पौरणं । ११. कौकृत्यमकृतेऽपि ।

न मया साधु कृतं यन्न[1] कृतमिति। कतमत् कौकृत्यं कुशलम्। यत्कुशलमकृत्वा तप्यते अकुशलं च कृत्वा। विपर्ययादकुशलं कौकृत्यम्। तदेतदुभयमप्युभयाधिष्ठानम्।

**आवेणिके त्वकुशले दृष्टियुक्ते च विंशतिः।**

यदकुशलं चित्तमावेणिकं तत्र विंशतिश्चैत्ताः। दश महाभूमिकाः षट् क्लेशमहाभूमिका द्वावकुशलमहाभूमिकौ[2] वितर्को विचारश्च। आवेणिकं नाम चित्तं यत्राविद्यैव केवला नान्यः क्लेशोऽस्ति रागादिः। दृष्टियुक्तेऽप्यकुशले विंशतिर्य एवावेणिके। ननु च दृष्ट्यधिकत्वादेक[3]विंशतिर्भवन्ति। न भवन्ति। यस्मान्महाभूमिक एव कश्चित् प्रज्ञाविशेषो दृष्टिरित्युच्यते। तत्राकुशलं दृष्टियुक्तं यत्र मिथ्यादृष्टिर्वा[4] दृष्टिपरामर्शो वा शीलव्रतपरामर्शो वा।

**क्लेशैश्चतुर्भिः क्रोधाद्यैः कौकृत्येनैकविंशतिः॥२९॥**

यत्र पुनश्चतुर्भिः क्लेशैः संप्रयुक्तमकुशलं चित्तं [17b.3B₁.VI₁] रागेण वा प्रतिघेन वा मानेन वा विचिकित्सया वा तत्रैकविंशतिर्भवन्ति। स च क्लेशः आवेणिकोक्ताश्च विंशतिः। क्रोधादिभिरप्युपक्लेशैर्यथोक्तैः संप्रयुक्ते चित्ते एते च विंशतिः स चोपक्लेश इत्येकविंशतिर्भवन्ति। कौकृत्येनाप्येकविंशतिः। तदेव कौकृत्यमेकविंशतितमं भवति[5]। समासत आवेणिके चेतस्यकुशले[6] दृष्टियुक्ते[7] च विंशतिः। अन्यक्लेशोपक्लेशसंप्रयुक्ते त्वेकविंशतिः।

**निवृतेऽष्टादश[8]**

सत्कायान्तग्राहदृष्टिसंप्रयुक्तं चित्तं कामधातौ निवृताव्याकृतम्। तत्राष्टादश चैत्ताः। दश महाभूमिकाः षट् क्लेशमहाभूमिकाः वितर्कविचारौ च। दृष्टिः[9] पूर्ववदेव नाधिका भवति।

**अन्यत्र द्वादशाव्याकृते मताः।**

निवृतादन्यदव्याकृतमनिवृताव्याकृतम्।[10] तत्र द्वादश चैत्ता इष्टाः। दश महाभूमिका वितर्कविचारौ च। बहिर्देशका अव्याकृतमपि कौकृत्यमिच्छन्ति। तेषां तत्संप्रयुक्ते चेतसि त्रयोदश भवन्ति।

**मिद्धं सर्वाविरोधित्वाद्यत्र स्यादधिकं हि तत्॥३०॥**

सर्वैरेभिर्यथोक्तैश्चैत्तैर्मिद्धमविरुद्धं कुशलाकुशलाव्याकृतत्वात्। अतो यत्र तत्स्यात्

---

१. Y. यत्तन्न। २. MS. द्वावकुशलभूमिकौ। ३. MS. ....देव। ४. Y reads च। ५. MS. भवन्ति। ६. MS. चित्तस्य कुशले। ७. Y. दृष्टि संप्रयुक्ते। ८. MS ....दशः। ९. MS. दृष्टि। १०. MS. ...व्याकृतन्तत्र।

तत्राधिकं तद्वेदितव्यम् । यत्र द्वाविंशतिस्तत्र त्रयोविंशतिर्यत्र त्रयोविंशतिस्तत्र चतुर्विंशतिरि-[18a 3A₁ VII]त्येवमादि । य एव कामधातौ चैत्तानां नियम उक्तः

**कौकृत्यमिद्धाकुशलान्याद्ये ध्याने न सन्त्यतः ।**

अतो यथोक्तात् कौकृत्यं मिद्धं च सर्वथा नास्ति प्रथमे ध्याने यत् किंचिदकुशलम् । प्रतिघः शाठ्यमदमायावर्ज्याश्च क्रोधादय आह्रीक्यानपत्राप्ये च । अन्यत्सर्वं तथैव । य एव प्रथमे ध्याने न सन्ति त एव

**ध्यानान्तरे वितर्कश्च**

नास्ति । शेषं तथैव ।

**विचारश्चाप्यतः परम् ॥३१॥**

ध्यानान्तरात् परेण द्वितीयादिषु ध्यानेष्वारूप्येषु च यथाप्रतिषिद्धं नास्ति विचारश्च । माया शाठ्यं चेत्यपिशब्दात् । शेषं तथैव । ब्रह्मणो हि यावच्छाठ्यं पठ्यते पर्षत्सम्बन्धत्वा[1]न्नोर्ध्वम्[2] । स हि स्वस्यां पर्षद्यश्वजिता भिक्षुणा प्रश्नं पृष्टः "कुत्रेमानि ब्रह्मन् चत्वारि[3] महाभूतान्यपरिशेषं निरुध्यन्ते" इति ।[4] अप्रजानन् क्षेपमकार्षीत् । "अहमस्मिन्[5] ब्रह्मा[6] ईश्वरः कर्ता निर्माता स्रष्टा सृजः पितृभूतो भूतानामि"ति[7] । उक्तमेतद्यस्यां भूमौ यत्र चित्ते यावन्तश्चैत्ताः ॥

इदानीं केषांचिदेव चैत्तानां तन्त्रविहितं[8] नानाकारणं वक्ष्यते । आह्रीक्यस्यानपत्राप्यस्य च किं नानाकारणम् ।

**अह्रीरगुरुता**

गुणेषु गुणवत्सु चागौरवता अप्रतीशता अभयमवशवर्तिता[9] आह्रीक्यं गौरवप्रतिद्वन्द्वो धर्मः ॥

**अवद्ये भयादर्शित्व[18b. 3B₁. VII]मत्रपा ।**

अवद्यं नाम यद्विगर्हितं सद्भिः । तत्राभयदर्शिताऽनपत्राप्यम् । भयमत्रानिष्टं फलं भीयतेऽस्मादिति । कथमिदं विज्ञातव्यम् अभयस्य दर्शनमभयदर्शिता आहोस्वित् भयस्यादर्शनम् । किं चातः । अभयस्य दर्शनं चेत् प्रज्ञा विज्ञास्यते भयस्यादर्शनं चेदविद्या विज्ञास्यते । नैव हि दर्शनं दर्शिता नाप्यदर्शनमदर्शिता । किं तर्हि । यस्तयोर्निमित्तमुपक्लेशस्तच्चानपत्राप्यमिति । अन्ये पुनराहुः । आत्मापेक्षया दोषैरलज्जन[10]

---

१. Y. D. संबन्धात् । २. D. omits नोर्ध्वम् । ३. D. तानि चत्वारि ।
४. MS. इत्यप्रजानन् । ५. Y. D. अहमस्मि । ६. Y. D. add महाब्रह्मा ।
७. Y. D. भावानामिति । ८. Y. quotes one more reading तत्र विहितम् ।
९. Y. अभयवशवर्त्तिता । १०. MS. ....रसज्जन ।

माह्रीक्यं परापेक्षयाऽनपत्राप्यमिति। एवमपि द्वे अपेक्षे युगपत् कथं सेत्स्यतः। न खलूच्यते युगपदात्मानं परं चापेक्षत इत्यपि त्वस्त्यसौ कदाचिदलज्जा या आत्मानमपेक्षमाणस्यापि प्रवर्तते सा आह्रीक्यम्। अस्ति या परमपेक्षमाणस्य प्रवर्त्तते साऽनपत्राप्यम्। विपर्ययेण ह्रीरपत्राप्यं च वेदितव्यम्। प्रथमेन तावत् कल्पेन सगौरवता सप्रतीशता न भयवशवर्तिता[1] ह्रीः। अवद्येष्वभयदर्शिताऽपत्राप्यम्। द्वितीयेन कल्पेनात्मपरापेक्षाभ्यां लज्जने।

प्रेम्णो[2] गौरवस्य च किं नानाकारणम्[3]।

**प्रेम श्रद्धा**

द्विविधं हि प्रेम क्लिष्टमक्लिष्टं च। तत्र क्लिष्टं तृष्णा यथा पुत्रदारादिषु। अक्लिष्टं श्रद्धा शास्तृगुरुगुणा-[19a 3A₁. VIII]न्वितेषु। स्याच्छ्रद्धा न प्रेम। दुःखसमुदयालम्बना श्रद्धा। स्यात् प्रेम न श्रद्धा। क्लिष्टं प्रेम। उभयं निरोधमार्गालम्बना श्रद्धा। नोभयमेतानाकारान् स्थापयित्वा। पुद्गलेषु तु प्रेम न गौरवं पुत्रदारसार्द्धंविहार्यन्तेवासिषु। गौरवं न प्रेम अन्यगुरुषु। उभयं स्वगुरुषु। नोभयम् एतानाकारान् स्थापयित्वा। श्रद्धा हि नाम गुणसंभावना। तत्पूर्विका च प्रियता प्रेम। तस्मान्न सैव प्रेमेत्यपरे।

**गुरुत्वं ह्रीः**

गौरवं हि नाम सप्रतीशता। तत्पूर्विका च लज्जा ह्रीः। अतो न गौरवमेव ह्रीरित्यपरे।

**ते पुनः कामरूपयोः ॥३३॥**

आरूप्यधातौ प्रेमगौरवे न स्तः। ननु च श्रद्धा ह्रीश्च कुशलमहाभूमिकत्वात्तत्रापि विद्येते। द्विविधा हि श्रद्धा धर्मेषु पुद्गलेषु च। एवं सप्रतीशताऽपि। तत्र ये पुद्गलालम्बने श्रद्धाह्रियौ ते तत्र न स्तः। ते चेह प्रेमगौरवे अभिप्रेते।

वितर्कविचारयोः किं नानाकारणम्[4]।

**वितर्कचारा[5] वौदार्यसूक्ष्मते**

कस्य। चेतस इति पश्चाद्वक्ष्यति। चित्तौदारिकता वितर्कः। चित्तसूक्ष्मता विचारः। कथं पुनः अनयोरेकत्र चित्ते योगः। केचिदाहुः।[6] यथाऽप्सु निष्ठ्यूतं सर्पिः सूर्यरश्मिभिरुपरिष्टात्स्पृष्टं नातिश्यायते[6] नातिविलीयते[7] एवं वितर्कवि-[19b3B₁.VIII]चारयोगाच्चित्तं

---

१. Y. अभयवशवर्त्तिता। २. MS. प्रेम्णा। ३. MS. ...करणम्। ४. MS. करणम्।
५. MS. वितर्कविचारा, but changed to वितर्कचारा.... for the of sake metre.
६. ....६D. सर्पिर्यथाप्सु निष्ठ्यूतं नातिश्यायते। ७. MS. ...विनीयते।

नातिसूक्ष्मं भवति नात्यौदारिक[१]मित्युभयोरपि तत्रास्ति[२] व्यापारः। एवं तर्हि निमित्तभूतौ वितर्कविचारावौदारिक[३]सूक्ष्मतयोः प्राप्नुतो यथा पयश्चा[४]तपश्च सर्पिषः श्यानत्व[५]विलीनत्वयोर्नतु[६] पुनस्तत्स्वभावौ। [७]आपेक्षिकी चौदारिकसूक्ष्मता भूमिप्रकारभेदादित्याभवाग्राद्वितर्कविचारौ[८] स्याताम्। नचौदारिकसूक्ष्मतया जातिभेदो[९] युक्तः[७]॥ अन्ये पुनराहुः। वाक्संस्कारा वितर्कविचाराः सूत्र उक्ताः[१०]। "वितर्क्य विचार्य वाचं भाषते नावितर्क्याविचार्ये"ति। तत्र ये औदारिकास्ते[११] वितर्काः ये[१२]सूक्ष्मास्ते विचाराः। यदि चैकत्र चित्तेऽन्यो धर्म औदारिकोऽन्यः सूक्ष्मः कोऽत्र विरोध इति। न स्याद्विरोधो[१३] यदि जातिभेदः स्याद्वेदनासंज्ञावत्[१४]। एकस्यां[१५] जातौ मृद्वधिमात्रता युगपन्न संभवति। जातिभेदोऽप्यस्ति। स तर्हि वक्तव्यः। दुर्वचो ह्यसावतो मृद्वधिमात्रतया व्यज्यते। नैवं व्यक्तो भवति। प्रत्येकं जातीनां मृद्वधिमात्रत्वात्। नैव हि वितर्कविचारावेकत्र चित्ते भवत इत्यपरे। कथमिदानीं प्रथमं ध्यानं पञ्चाङ्गयुक्तम्[१६]। भूमितस्तत् पञ्चाङ्गयुक्तं न क्षणतः॥

मानमदयोः किं नाना-[20a. 4A. 1]कारणम्।

**मान उन्नतिः।**

**मदः स्वधर्मे रक्तस्य पर्यादानं तु चेतसः॥३३॥**

येन केनचित् परतो विशेषपरिकल्पेन चेतस उन्नतिः[१७] मानः[१८]। मदस्तु स्वधर्मेष्वेव रक्तस्य यच्चेतसः पर्यादानम्। यथा मद्यज एवं रागजः। संप्रहर्षणविशेषो मद इत्यपरे।

उक्ताः सह चित्तेन चैत्ताः प्रकारश[१९]स्तेषां पुनरिमाः संज्ञाः परिभाष्यन्ते। प्रवचन एताभिः सद्व्यवहारात्।

**चित्तं मनोऽथ विज्ञानमेकार्थं**

चिनोतीति चित्तम्। मनुत इति मनः। विजानातीति विज्ञानम्। चितं शुभा-

---

१. D. नात्युदारम्। २. D. omits अस्ति। ३. D. औदार्य। ४. MS. यथापश्चा and य is written on the top margin, D. यथापश्चा....। ५. MS. श्यानं ६. D. omits तु। ७...७. D. omits आपेक्षिकी....युक्तः। ८. Y. adds औदारिकसूक्ष्मते। ९. MS. जतिभेदो। १०. D. अभिहिताः। ११. D. औदार्यास्ते। १२. Y. एवं। १३. D. omits स्यात्। १४. D. omits वेदनासंज्ञावत्। १५. D adds तु। १६. Y. पञ्चाङ्गमुक्तम्। १७. MS. उन्नति। १८. MS. मानं। १९. Y. प्रकारेण।

शुभैर्धातुभिरिति चित्तम् । तदेवाश्रयभूतं मनः । आश्रितभूतं विज्ञानमित्यपरे । यथा चित्तं मनो विज्ञानमित्येकोऽर्थः । एवं

**चित्तचैतसाः ।**

**साश्रया[1]लम्बनाकाराः संप्रयुक्ताश्च[2]**

एकोऽर्थः । त एव हि चित्तचैत्ताः साश्रया उच्यन्ते इन्द्रियाश्रितत्वात् । सालम्बना विषयग्रहणात् । साकारास्तस्यैवालम्बनस्य प्रकारश[3] आकरणात् । विप्रयुक्ताः समं प्रयुक्तत्वात् । केन प्रकारेण समं प्रयुक्ता इत्याह

**पञ्चधा ॥३४॥**

पञ्चभिः समताप्रकारैराश्रयालम्बनाकारकालद्रव्यसमताभिः । केयं समता । यथैव ह्येकं चित्तमेवं चैत्ता अप्येकैका इति । निर्दिष्टाश्चित्तचैत्ताः सविस्तरप्रभेदाः ।

**विप्रयु-[20b. 4B. I]क्तास्तु संस्काराः प्राप्त्यप्राप्ती सभागता ।**
**आसंज्ञिकं[4] समापत्ती जीवितं लक्षणानि[5] च ॥३५॥**
**नामकायादयश्चेति**

इमे संस्कारा न चित्तेन संप्रयुक्ता नच रूपस्वभावा इति चित्तविप्रयुक्ता उच्यन्ते । तत्र तावत्

**प्राप्तिर्लाभः[6] समन्वयः ।**

द्विविधा हि प्राप्तिरप्राप्तविहीनस्य च लाभः[7] प्रतिलब्धेन च समन्वागमः । विपर्ययादप्राप्तिरिति सिद्धम् । कस्य पुनरिमे प्राप्त्यप्राप्ती ।

**प्राप्त्यप्राप्ती स्वसंतान[8]पतितानां**

न परसंतानपतितानाम् । नहि परकीयैः कश्चित्समन्वागतः नाप्यसंततिपतितानाम् । न ह्यसत्त्वसंख्यातैः कश्चित्समन्वागतः । एष तावत् संस्कृतेषु नियमः । असंस्कृतेषु पुनः प्राप्त्यप्राप्ती

**निरोधयोः ॥३६॥**

सर्वसत्त्वा अप्रतिसंख्यानिरोधेन समन्वागताः । अत एव हि चोक्तमभिधर्मे "अनास्रवैर्धर्मैः कः समन्वागतः । आह । सर्वसत्त्वा" इति । प्रतिसंख्यानिरोधेन सकलबन्धनादिक्षणस्थवर्ज्याः सर्वे आर्याः

१. MS. सास्रवा. : .(not clear). २. MS. सप्रयुक्ताश्च । ३. Y. प्रकारेण । ४. MS. आसंगिकं । ५. MS. लक्षणाणि । ६. MS. प्राप्तिलाभः । ७. Y. प्रतिलाभः । ८. MS. स्वसंतानान. . . ।

पृथग्जनाश्च केचित्समन्वागताः। आकाशेन तु नास्ति कश्चित्समन्वागतः। तस्मादस्य नास्ति प्राप्तिः। यस्य च नास्ति प्राप्तिस्तस्याप्राप्तिरपि नास्तीति सिद्धान्तः। प्राप्तिर्नामास्ति किंचित् भावान्तरमिति। कुत एतत्। आह सूत्रात्। सूत्रे ह्युक्तं "स एषां दशानामशैक्षा-[21a. 4A. II]णां धर्माणामुत्पादात् प्रतिलम्भात् समन्वागमादार्यो भवति पञ्चाङ्गविप्रहीण" इति विस्तरः। तेन तर्हि असत्त्वाख्यैरपि समन्वागमः प्राप्नोति परसत्त्वैश्च। किं कारणम्। सूत्र[1]वचनात्। "राजा भिक्षवश्चक्रवर्ती सप्तभी रत्नैः समन्वागत" इति विस्तरः। वशित्वमत्र समन्वागमशब्देनोक्तम्। तस्य तेषु रत्नेषु वशित्वं कामचार इति। अत्र[2] वशित्वं समन्वागमोऽन्यत्र पुनर्द्रव्यान्तरमिति। कुत एतत् कः पुनरेवमयोगः। अयमयोगः यदस्या नैव स्वभावः[3] प्रज्ञायते रूपशब्दादिवद्रागद्वेषादिवद्वा न चापि कृत्यं चक्षुःश्रोत्रादिवत्। तस्मात् द्रव्यधर्मासंभवादयोगः[4]। उत्पत्तिहेतुर्धर्माणां प्राप्तिरिति चेत्। असंस्कृतस्य न स्यात्। ये च धर्मा अप्राप्ता ये च त्यक्ता भूमिसंचारवैराग्यतस्तेषां कथमुत्पत्तिः स्यात्। सहजप्राप्तिहेतुका चेत्। जातिरिदानीं किंकरी जातिजातिर्वा। सकलबन्धनानां खल्वपि मृदुमध्याधिमात्रक्लेशोत्पत्ति[5]-भेदो न स्यात् प्राप्त्यभेदात्। यतो वा स भेदस्तत एवास्तु तदुत्पत्तिः। तस्मान्नोत्पत्तिहेतुः[6] प्राप्तिः। कश्चैवमाहोत्पत्तिहेतुः प्राप्तिरिति। किं तर्हि। व्यवस्थाहेतुः। असत्यां हि प्राप्तौ लौकिकमानसानामार्यपृथग्जनानामार्या इमे पृथग्जना [21b. 4B. II] इम इति न स्याद् व्यवस्थानम्। प्रहीणाप्रहीण[7]क्लेशताविशेषादेतत् भवितुमर्हति। एतच्चैव कथं भविष्यत्येषां प्रहीणः क्लेश एषामप्रहीण इति। प्राप्तौ सत्यामेतत्सिध्यति तद्विगमाविगमात्। आश्रयविशेषादेतत्सिध्यति। आश्रयो हि स आर्याणां दर्शनभावनामार्गसामर्थ्यात्तथा परावृत्तो भवति यथा न पुनस्तत्प्रहेयाणां[8] क्लेशानां प्ररोहसमर्थो भवति। अतोऽग्निदग्धव्रीहिवदबीजीभूते आश्रये[9] क्लेशानां प्रहीणक्लेश इत्युच्यते। उपहतबीजभावे वा लौकिकेन मार्गेण। विपर्ययादप्रहीणक्लेशः। यश्चाप्रहीणस्तेन[10] समन्वागतो यः प्रहीणस्तेना[11]समन्वागत इति प्रज्ञप्यते। कुशला अपि धर्मा[12] द्विप्रकारा अयत्नभाविनो यत्नभाविनश्च ये त उच्यन्ते उत्पत्तिप्रतिलम्भिकाः प्रायोगिकाश्चेति। तत्रायत्नभाविभिराश्रयस्य तद्बीजभावानुपघातात् समन्वागत उपघातादसमन्वागत उच्यते समुच्छिन्नकुशलमूलः। तस्य

---

१. Y. सूत्रे। २. Y. तत्र। ३. MS. स्वभाव। ४. MS. looks like. ....दरोगः। ५. Y. adds प्रकार। ६. MS. न्नोत्पत्तिः। ७ MS. प्रहीनाप्रहीन। ८. MS. प्रहेयानां। ९. Y. अबीजीभूतं आश्रयः। १०. MS. ....स्थेन। ११. MS. ....स्थेना....। १२. Y. omits धर्म्मा।

तूपघातो मिथ्यादृष्टया वेदितव्यः। न तु खलु कुशलानां धर्माणां वीजभावस्यात्यन्तं सन्ततौ समुद्घातः। ये पुनर्यत्नभाविनस्तैरुत्पन्नैस्तदुत्पत्तिर्वशित्वाविघातात्सन्ततेः समन्वागत[1] उच्यते। तस्माद्बीजमेवात्रानपोद्धतमनुपहतं[2] [22a. 4A. III] परिपुष्टं च वशित्वकाले समन्वागमाख्यां लभते नान्यद् द्रव्यम्। किं पुनरिदं बीजं नाम। यन्नामरूपं फलोत्पत्तौ समर्थं साक्षात् पारंपर्येण वा। सन्ततिपरिणामविशेषात्। कोऽयं परिणामो नाम। सन्ततेरन्यथात्वम्। का चेयं सन्ततिः।[3] हेतुफलभूतास्त्रैयध्विकाः संस्काराः। यत् तूक्तं "लोभेन समन्वागतोऽभव्यश्चत्वारि स्मृत्युपस्थानानि भावयितुमि"ति[4]। [5]तत्राधिवासनं लोभस्याविनोदनं वा समन्वागमः[5]। यावद्धि तस्याधिवासकोऽविनोदको भवति तावत् भव्यस्तानि भावयितुम्। एवमयं समन्वागमः सर्वथा प्रज्ञप्तिधर्मो न तु[6] द्रव्यधर्मः। तस्य च प्रतिषेधोऽसमन्वागम इति। द्रव्यमेव तु वैभाषिकाः उभयं वर्णयन्ति। किं कारणम्।[7] एष हि नः सिद्धान्त इति। सा किलैषा प्राप्तिः

**त्रैयध्विकानां त्रिविधा**

अतीतानां धर्माणामतीताऽपि प्राप्तिरस्त्यनागताऽपि प्रत्युत्पन्नाऽपि। एवमनागतप्रत्युत्पन्नानां प्रत्येकं त्रिविधा।

**शुभादीनां शुभादिका।**

कुशलाकुशलाव्याकृतानां कुशलाकुशलाव्याकृतैव यथाक्रमं प्राप्तिः।

**स्वधातुका तदाप्तानां**

ये धर्मास्तद्धात्वाप्तास्तेषां स्वधातुका प्राप्तिः। कामरूपारूप्यावचराणां कामरूपारूप्यावचरी यथाक्रमम्।

**अनाप्ता-[22b. 4B. III]नां चतुर्विधा ॥३७॥**

अनास्रवाणां[8] धर्माणां चतुर्विधा प्राप्तिः। समासेन त्रैधातुकी चानास्रवा च। तत्राप्रतिसंख्यानिरोधस्य त्रैधातुकी प्रतिसंख्यानिरोधस्य रूपारूप्यावचरी चानास्रवा च। मार्गसत्यस्यानास्रवैव। सेयं समस्य चतुर्विधा भवति।

**शैक्षाणां धर्माणां शैक्षैव प्राप्तिः अशैक्षाणामशैक्षैव नैवशैक्षानाशैक्षाणां तु भेदः।**

---

१. Y. समन्वागम। २. MS. ....हत। ३. MS. तिर्हेतु। ४. Y. उत्पादयितुम्। ५.......५. MS. लोभस्यासमन्वागमः। ६. Y. omits तु। ७. MS. कारणमेष। ८. Y. seems to be अनास्रवाधात्वाप्तानां।

स निर्दिश्यते

त्रिधा नशैक्षाऽशैक्षाणां[1]

नैवशैक्षानाशैक्षा धर्मा उच्यन्ते सास्रवा धर्मा असंस्कृतं च। तेषां शैक्षादिभेदेन त्रिविधा प्राप्तिः। सास्रवाणां तावत् नैवशैक्षानाशैक्षी प्राप्तिः। अप्रतिसंख्या-निरोधस्य च प्रतिसंख्यानिरोधस्य चानार्येण प्राप्तस्य। तस्यैव शैक्षेण मार्गेण प्राप्तस्य शैक्षी अशैक्षेणाशैक्षी। दर्शनभावनाहेयानां यथाक्रमं दर्शनभावनाहेयैव प्राप्तिः। अहेयानां तु भेदः। स निर्दिश्यते

अहेयानां द्विधा मता।

अप्रहेया धर्मा अनास्रवाः। तेषामप्रतिसंख्यानिरोधस्य भावनाहेया प्राप्तिः अनार्य-प्राप्तस्य च प्रतिसंख्यानिरोधस्य। तस्यैवार्यमार्गप्राप्तस्यानास्रवाऽहेया मार्ग-सत्यस्य च।

यदुक्तं "त्रैयध्विकानां त्रिविधे"ति तस्योत्सर्गस्यायमपवादः

अव्याकृता-[23a. 4A. IV]प्तिः सहजा

अनिवृताव्याकृतानां सहजैव प्राप्तिर्नाग्रजा न पश्चात्कालजा। दुर्बलत्वात्। तेन तेषामतीतानामतीतैव यावत् प्रत्युत्पन्नानां प्रत्युत्पन्नैव। किं सर्वस्यैवानिवृता-व्याकृतस्य। न सर्वस्य।

अभिज्ञानैर्माणिकादृते ॥३८॥

द्वे अभिज्ञे अव्याकृते निर्माणचित्तं च वर्जयित्वा। तेषां हि बलवत्त्वात् प्रयोग-विशेषनिष्पत्तेः पूर्वं पश्चात् सहजा प्राप्तिः। शैल्पस्थानिकस्यापि कस्यचिदीर्या-पथिकस्या[2]त्यर्थमभ्यस्तस्येच्छन्ति।

किमनिवृताव्याकृतस्यैव सहजा[3] प्राप्तिरित्याह

निवृतस्य च रूपस्य

निवृताव्याकृतस्यापि विज्ञप्तिरूपस्य सहजैव प्राप्तिरधिमात्रेणाप्यविज्ञप्त्यनुत्थाप-नादौर्बल्यसिद्धेः।

यथाऽव्याकृतानां धर्माणामयं प्राप्तिभेदः किमेवं कुशलाकुशलानामपि कश्चित् प्राप्तिभेदोऽस्ति। अस्तीत्याह।

कामे रूपस्य[4] नाग्रजा।

कामावचरस्य विज्ञप्त्यविज्ञप्तिरूपस्याग्रजा प्राप्तिः सर्वथा नास्ति। सहजा चास्ति पश्चात्कालजा च।

किमप्राप्तेरपि[5] प्राप्तिवत्प्रकारभेदः। नेत्याह। किं तर्हि।

---

१. MS. नशैक्षाअशैक्षाणां। २. Y ऐर्यापथिकस्य च। ३. MS. सहज।
४. Y. one reading is कामरूपस्य। ५. MS. ....प्राप्तिरपि।

**अक्लिष्टाव्याकृताऽप्राप्तिः**

अप्राप्तिरनिवृताव्याकृतैव सर्वा। अध्वभेदेन पुनः

**साऽतीताजातयोस्त्रिधा ॥३९॥**

प्रत्युत्पन्नस्य नास्त्यप्राप्तिः प्रत्युत्पन्ना। अतीतानागत-[23b. 4B. IV]योस्तु त्रैयध्विकी।

**कामाद्याप्तामलानां च**

त्रिविधेति वर्त्तते। कामाप्तानां कामरूपारूप्यावचरी। एवं रूपारूप्याप्तानाम-नास्रवाणां च नास्त्यनास्रवा काचिदप्राप्तिः। तथाहि।

**मार्गस्याप्राप्तिरिष्यते।**

**पृथग्जनत्वम्**

"पृथग्जनत्वं कतमत्[1]। आर्यधर्माणामलाभ" इति शास्त्रपाठः। अलाभश्च नामाप्राप्तिः। नच पृथग्जनत्वमनास्रवं भवितुमर्हति। कतमेषामार्यधर्माणाम-लाभः। सर्वेषामविशेषवचनात्। स तु यो विना लाभेनालाभः। अन्यथा हि बुद्धोऽपि श्रावकप्रत्येकबुद्धगोत्रकै[2]रसमन्वागमादनार्यः स्यात्। एवशब्दस्तर्हि पठितव्यः। न पठितव्यः। एकपदान्यपि ह्यवधारणानि भवन्ति। तद्यथा अब्भक्षो वायुभक्ष इति। दुःखे धर्मज्ञानक्षान्तितत्सहभुवामलाभ इत्यपरे[3]। न च तद्योगा[4]-दनार्यत्वप्रसङ्गः।[5] तदलाभस्यात्यन्तं हतत्वात्। ते तर्हि त्रिगोत्रा इति कतमे-षामलाभः। सर्वेषाम्[6]। एवं तर्हि स एव दोषः। पुनः स एव परिहारः। यत्न-स्तर्हि व्यर्थः। एवं तु साधु यथा सौत्रान्तिकानाम्। कथं च सौत्रान्तिकानाम्। "अनुत्पन्नार्यधर्मसन्ततिः पृथग्जनत्वमि"ति।

अथेयमप्राप्तिः कथं विहीयते। यस्य या धर्मस्य प्राप्तिरसौ

**तत्प्राप्तिभूसंचाराद् विहीयते ॥४०॥**

[24a. 4A. V] यथा तावदार्यमार्गस्यालाभः पृथग्जनत्वं तस्य लाभात्तद्विहीयते भूमिसंचाराच्च। एवमन्येषामपि योज्यम्। विहीयत इति तस्या अप्राप्तेरप्राप्तिरुत्पद्यते प्राप्तिश्छिद्यते। किं पुनरप्राप्तिप्राप्त्योरपि प्राप्त्यप्राप्ती भवतः। उभयोरप्युभयं भवतीत्याहुः। ननु चैवमनवस्था-प्रसङ्गः प्राप्तीनाम्। नानवस्थाप्रसङ्गः[7]। परस्परसमन्वागमात्। आत्मना

१....१. MS. पृथग्जनत्वं कतमत्। २. Y. संतानिकैः। ३. MS. ....मलाभमित्यपरे। Y. omits अलाभः। ४. Y. तत्त्यागाद्। ५. MS. ....प्रसंगस्तद। ६. MS. सर्व्वेषामेवं ७. MS. नाना....।

तृतीयो हि धर्म उत्पद्यते। स च धर्मस्तस्य प्राप्तिः प्राप्तिप्राप्तिश्च। तत्र प्राप्त्युत्पादात्तेन धर्मेण समन्वागतो भवति प्राप्तिप्राप्त्या च। प्राप्तिप्राप्त्युत्पादात्[1] पुनः प्राप्त्यैव[2] समन्वागतो भवत्यतो नानवस्था। एवं च कृत्वा आत्मना तृतीयस्य धर्मस्य कुशलस्य क्लिष्टस्य वा[3] द्वितीये क्षणे तिस्रः जायन्ते। तासां च पुनस्तिस्रोऽनुप्राप्तय[4] इति षड् भवन्ति। तृतीये क्षणे प्रथमद्वितीयक्षणोत्पन्नानां द्रव्याणां नव प्राप्तयः सार्धमनुप्राप्तिभिरित्यष्टादश भवन्ति। एवमुत्तरोत्तरवृद्धिप्रसङ्गेनैताः प्राप्तयो विसर्पन्त्यः सर्वेषामतीतानागतानां क्लेशोपक्लेशक्षणानामुपपत्तिलाभिकानां न कुशलक्षणानां संप्रयोग[5]सहभुवामनाद्यन्तसंसारपर्यापन्नानामनन्ता एकस्य प्राणिनः क्षणे क्षणे उपजायन्ते इ-[24b. 4B. V]त्यनन्तद्रव्याः प्रतिसन्तानमात्मभावक्षणाः सत्त्वानां भवन्ति। अत्युत्सवो बतायं प्राप्तीनां वर्त्तते। केवलं तु अप्रतिघातिन्यो[6] यतोऽवकाशमाकाशे[7] लभन्ते। इतरथा ह्याकाशेऽप्यवकाशो न स्यात् द्वितीयस्य प्राणिनः॥

अथ केयं सभागता।

**सभागता सत्त्वसाम्यं**

सभागता नाम द्रव्यम्। सत्त्वानां सादृश्यं निकायसभाग इत्यस्याः शास्त्रे संज्ञा[8]। सा पुनरभिन्ना भिन्ना च। अभिन्ना सर्वसत्त्वानां[9] सत्त्वसभागता। प्रतिसत्त्वं सर्वेषु भावात्। भिन्ना पुनस्तेषामेव सत्त्वानां धातुभूमिगतियोनिजातिस्त्रीपुरुषोपासकभिक्षुशैक्षा[10]शैक्ष्यादिभेदेन प्रतिनियता धर्मसभागता। पुनः स्कन्धायतनधातुतः यदि सत्त्वसभागता[11] द्रव्यमविशिष्टं न स्यात् अन्योन्यविशेषभिन्नेषु सत्त्वेषु सत्त्वसत्त्व इत्यभेदेन बुद्धिर्न स्यात् प्रज्ञप्तिश्च। एवं स्कन्धादि[12]बुद्धिप्रज्ञप्तयोऽपि योज्याः। स्याच्च्यवेतोपपद्येत न च सत्त्वसभागतां[13] विजह्यान्न च प्रतिलभेतेति। चतुष्कोटिकः। प्रथमा कोटिः यतश्च्यवते तत्रैवोपपद्यमानः[14]। द्वितीया नियाममवक्रामन्। स हि पृथग्जनसभागतां विजह्याद[15]र्यसभागतां प्रतिलभते। तृतीया गतिसंचारात्। चतुर्थ्येताताकारान् स्थापयित्वा।

यदि पृ-[25a. 4A. VI]थग्जनसभागता नाम द्रव्यमस्ति किं पुनः पृथग्जनत्वेन। नहि मनुष्यसभागताया अन्यन्मनुष्यत्वं कल्प्यते। नैव च लोकः सभागतां पश्यत्य-

---

१. Y. ....त्पत्तेः। २. MS. प्राप्तैव। ३. Y. च। ४. Y. adds उद्भवन्ति। ५. Y. ससंप्रयोग। ६. Y. केवलं न प्रतिघातिन्यो। ७. Y. omits आकाशे। ८. D. इत्यस्य शास्त्रसंज्ञा। ९. D. सर्वसत्त्वसत्त्वानां। १०. MS. शैक्षा। ११. Y. सत्त्वभागता। १२. Y. one reading was धात्वादि। १३. D. सत्त्वस्त्रभागतां। १४. MS. ....माणः। १५. Y. विजह्याति।

रूपिणीत्वात् नचैनां प्रज्ञया परिच्छिनत्ति प्रतिपद्यते च सत्त्वानां जात्यभेदमिति सत्या अपि तस्याः कथं तत्र व्यापारः। अपिचासत्त्वसत्त्वसभागताऽपि[1] किं नेष्यते। शालियवमुद्गमाषाम्रपनसलोहकाञ्चनादीनां स्वजातिसादृश्यात् तासां च सभागतानामन्योन्यभिन्नानां कथमभेदेन सभागता प्रज्ञप्तिः क्रियते। वैशेषिकाश्चैवं द्योतिता भवन्ति। तेषामपि ह्येष सिद्धान्तः। सामान्यपदार्थो नामास्ति यतः समानप्रत्ययोत्पत्तिरतुल्यप्रकारेष्वपीति। अयं तु तेषां विशेषः। स एकोऽप्यनेकस्मिन् वर्त्तते यदि द्योतिता यदि न द्योतिता। अस्त्येषा[2] तु सभागता सूत्रे वचनादिति वैभाषिकाः। उक्तं हि भगवता "स चेदित्थंत्वमागच्छति मनुष्याणां सभागताम्"इति। उक्तमेतन्नतूक्तं द्रव्यान्तरमिति। का तर्हि सा। त एव हि तथाभूताः संस्कारा येषु मनुष्यादिप्रज्ञप्तिः शाल्यादिषु सभागतावत्। तत्त्वेतन्न वर्णयन्ति।

अथ किमिदमासंज्ञिकं नाम।

**आसंज्ञिकमसंज्ञिषु।**

**निरोधश्चित्तचैत्तानां**

असंज्ञिसत्त्वेषु देवेषूपपन्ना-[25b. 4B. VI]नां यश्चित्तचैत्तानां निरोधस्तदासंज्ञिकं नाम द्रव्यं येन चित्तचैत्ता अनागतेऽध्वनि कालान्तरं संनिरुध्यन्ते नोत्पत्तुं लभन्ते। नदीतोयसंनिरोधवत्। तत् पुनरेकान्तेन

**विपाकः**

कस्य विपाकः। असंज्ञिसमापत्तेः। कतमे ते सत्त्वा येष्वसंज्ञिसत्त्वाः।

**ते बृहत्फलाः ॥४१॥**

बृहत्फला नाम देवा येषां केचिदसंज्ञिसत्त्वाः[3] प्रदेशे भवन्ति ध्यानान्तरिकावत्। किं पुनस्तेनैव कदाचित् संज्ञिनो भवन्ति। भवन्त्युपपत्तिकाले[4] च्युतिकाले च। "प्रकृष्टमपि कालं स्थित्वा सह संज्ञोत्पादात्तेषां सत्त्वानां तत्स्थानात्[5] च्युतिर्भवती"ति सूत्रे पाठः[6]। ते च ततो दीर्घस्वप्नव्युत्थिता इव च्युत्वा कामधातावुपपद्यन्ते नान्यत्र। पूर्वसमापत्तिसंस्कारपरिक्षयात् अपूर्वानुपचयाच्च क्षिप्ता इव क्षीणवेगा इषवः पृथिवीं पतन्ति। येन च तत्रोपपत्तव्यं तस्यावश्यं कामावचरं कर्मापरपर्यायवेदनीयं भवति। यथोत्तरकौरवाणां देवोपपत्तिवेदनीयम्।

अथ समापत्ती इति यदुक्तं कतमे ते समापत्ती। असंज्ञिसमापत्तिर्निरोधसमापत्तिश्च। केयमसंज्ञिसमापत्तिः। यथैवासंज्ञिकमुक्तं "निरोधश्चित्तचैत्तानाम्"इति।

---

१. MS. प्रभागतापि। २. MS. dr ̣ı s षा। ३. MS. ...सत्त्वः। ४. D. भवन्त्युत्पत्तिकाले। ५. D. तस्मात् स्थानात्। ६. D. सूत्रपाठः।

**तथाऽसंज्ञिसमापत्तिः**

असंज्ञिनां [26a. 4A VII] समापत्तिरसंज्ञा वे[1]त्यसंज्ञिसमापत्तिः। साऽपि चित्तचैत्तानां निरोधः। एतावत्तथाशब्देनान्वाकृष्यते। सा तु समापत्तिः

**ध्यानेऽन्त्ये**

अन्त्य[2]ध्यानं चतुर्थं तत्पर्यापन्नाऽसौ नान्यभूमिका। किमर्थमेनां समापद्यते।

**निःसृतीच्छया।**

निःसरणमेषां मन्यन्ते। अतो मोक्षकामतया समापद्यन्ते। आसंज्ञिकं विपाकत्वात् अव्याकृतमिति सिद्धम्। इयं तु

**शुभा**

कुशलैवासंज्ञिसमापत्तिः। तस्या असंज्ञिसत्त्वेषु पञ्चस्कन्धको विपाकः। कुशला सती

**उपपद्यवेद्यैव**[3]

उपपद्यवेदनीयैव। न दृष्टधर्मपर्यायवेदनीया नापि अनियता। योऽप्येनामुत्पाद्य परिहीयते सोऽपि किलावश्यं पुनरुत्पाद्यसंज्ञिसत्त्वेषूपपद्यत इति। अत[4] एव तल्लाभी नियामं नावक्रामति। सेयं[5] पृथग्जनस्यैवेष्यते।

**नार्यस्य**

नह्यार्या असंज्ञिसमापत्तिं समापद्यन्ते विनिपातस्थानमिवैतां पश्यन्तः[6]। निःसरणसंज्ञिनो हि तां समापद्यन्ते। अथ किमेनामार्याश्चतुर्थध्यानलाभादतीतानागतां प्रतिलभन्ते ध्यानवत्। अन्येऽपि तावन्न प्रतिलभन्ते। किं कारणम्। एषा ह्यचित्ताऽपि सती महाभिसंस्कारसाध्यत्वादचित्तकत्वाच्च[7]।

**एकाध्विकाप्यते ॥४२॥**

एककालिकेत्यर्थः। वर्तमानकालिकैव लभ्यते। यथा प्रातिमोक्ष-[26b. 4B. VII]-संवरः। लब्धया तु द्वितीयादिषु क्षणेष्वतीतयाऽपि समन्वागतो भवति यावन्न त्यजति। अचित्तक[8]त्वान्नानागता भाव्यते।

निरोधसमापत्तिरिदानीं कतमा।

---

१. Y. adds समापत्तिः। २. MS. अन्य। ३. वैद्यैव। ४. Y. ततः। ५. MS. सैयं। ६. Y. मिवैनां पश्यन्ति। ७. MS. ...दचित्तकत्वाच्च। ८. Y. (w) अचैत्तिक।

**निरोधाख्या तथैवेयं**

यथैवासंज्ञिमापत्तिः। तथाशब्देन कः प्रकारो गृह्यते। "निरोधश्चित्तचैत्तानामि"ति। अयं त्वस्या विशेषः। इयं

**विहारार्थं**

शान्तविहारसंज्ञापूर्वकेण मनसिकारेण एनां समापद्यन्ते। तां तु निःसरणसंज्ञापूर्वकेण। सा खल्वपि चतुर्थध्यानभूमिका। इयं तु

**भवाग्रजा।**

नैवसंज्ञानासंज्ञायतनभूमिकैव। सा चेयं

**शुभा**

कुशलैव न क्लिष्टा नाव्याकृता। कुशला सती

**द्विवेद्याऽनियता च**

द्वयोः कालयोर्वेद्या उपपद्यवेदनीया चापरपर्यायवेदनीया च। अनियता च विपाकं प्रति कदाचिन्न विपच्यते। यदीह परिनिर्वायात् तस्या हि भवाग्रे चतुःस्कन्धको विपाकः। सा चेयमेकान्तेन

**आर्यस्य**

नहि पृथग्जना निरोधसमापत्तिमुत्पादयितुं शक्नुवन्त्युच्छेदभीरुत्वादार्यमार्गबलेन चोत्पादनाद्दृष्टधर्मनिर्वाणस्य तदधिमुक्तितः। आर्यस्यापि चेयं न वैराग्यलभ्या। किं तर्हि।

**आप्या प्रयोगतः ॥४३॥**

प्रयोगलभ्यैवेयम्। न चातीता लभ्यते नाप्यनागता भाव्यते। चित्तबलेन तद्-[27a.4A.VII]भावनात्। किं भगवतोऽपि प्रायोगिकी। नेत्याह।

**बोधिलभ्या मुनेः**

क्षयज्ञानसमानं कालं[१] बुद्धा भगवन्त एनां[२] लभन्ते[३] नास्ति किञ्चिद्बुद्धानां प्रायोगिकं नाम। इच्छामात्रप्रतिबद्धो हि तेषां सर्वगुणसंपत्संमुखीभावः। तस्मादेषां सर्ववैराग्यलाभिकम्। कथं खल्वि[४] [५]दानीमनुत्पादितायां निरोधसमापत्तौ क्षयज्ञानकाले[५] भगवानुभयतोभागविमुक्तः सिध्यति। सिध्यत्युत्पादितायामिव तस्यां वशित्वात्[६] प्रागेव तां बोधिसत्त्वः शैक्ष्यावस्थाया-

१. Y. समकालं। २. Y. एतां। MS. एनान्न(?)। ३. Y. प्रतिलभन्ते। ४. Y. कथं पुनः। ५....५. Y. omits इदानी....काले। ६. MS. तस्याम्विशित्वात्।

मुत्पादयतीति पाश्चात्त्याः। अथ कस्मादेवं नेष्यते। एवं च स्थविरोपगुप्त-स्यापीदं नेत्रीपदं प्रामाणिकं भविष्यति। "निरोधसमापत्तिमुत्पाद्य क्षयज्ञानमुत्पाद-यतीति वक्तव्यं तथागत"इति।

**न प्राक्**

नहि पूर्वं तस्या उत्पादनं युज्यत इति काश्मीरकाः। किं कारणम्।

**चतुस्त्रिंशत्क्षणाप्तितः।**

चतुस्त्रिंशता किल चित्तक्षणैर्बोधिसत्त्वो बोधिमनुप्राप्तः। सत्याभिसमये[1] षोडश-भिर्भवाग्रवैराग्ये चाष्टादशभिर्नवप्रकाराणां क्लेशानां प्रहाणाय नवानन्तर्यविमुक्ति-मार्गोत्पादनात्। त एते चतुस्त्रिंशत् भवन्ति। आकिञ्चन्यायतनवीतरागस्यास्य नियामावक्रमणादधोभूमिका न पुनः प्रहेया भवन्ति। अत एतस्मिन्नन्तरे विसभाग-चित्ता-[27b. 4B. VIII]संभवान्निरोधसमापत्तेरयोग इति। किं पुनः स्याद्यदि विसभागचित्तमन्तरा संमुखीकुर्यात्। व्युत्थानाशयः[2] स्यादव्युत्थानाशयाश्च[2] बोधिसत्त्वाः। सत्यमव्युत्थानाशया[2] ननु आस्रव[3]मार्गाव्युत्थानात्। कथं तर्हि "न तावत् भेत्स्यामि पर्यङ्कमप्राप्ते आस्रवक्षय" इति।[4] अस्याशयस्याव्युत्थाना-देकायन एव सर्वार्थपरिसमाप्तेरिति बहिर्देशकाः। पूर्वमेव तु वर्णयन्ति काश्मीराः। यद्यप्यनयोः समापत्त्यो[5]र्बहुप्रकारो विशेषः।

**कामरूपाश्रये भूते[6]**

उभे अपि त्वेते असंज्ञिनिरोधसमापत्ती कामधातौ चोत्पत्स्येते[7]। ये त्वसंज्ञि[8]-समापत्तिं रूपधातौ नेच्छन्ति तेषामयं ग्रन्थो विरुध्यते। स्याद्रूपभवो न चासौ भवः पञ्चव्यवचारः। स्याद्रूपावचराणां सत्त्वानां[9] संज्ञिनां देवानां विसभागे चित्ते स्थितानामसंज्ञिसमापत्तिं निरोधसमापत्तिं च समापन्नानामसंज्ञिनां च देवानामा-संज्ञिके[10] प्रतिलब्धे यो भव" इति। अत उभे अप्येते कामरूपाश्रये। तत्रापि त्वयं विशेषः।

**निरोधाख्यादितो नृषु ॥४४॥**

निरोधसमापत्तिः[11] प्रथमतो मनुष्येषूत्पाद्यते पश्चाद्रूपधातौ परिहीणपूर्वैः। किमतो[12]ऽप्यस्ति परिहाणिः। अस्तीत्याह। अन्यथा हि उदायि [28a. 4A1. I]

१. MS. समयो। २. MS. व्युत्थानाश्रय, but later on आशयस्याव्युत्थानात्। Y. व्युत्थानाशयः। ३. MS. आश्रव। ४. MS. इत्यस्या....। ५. Y. omits समापत्त्योः। ६. Y. one reading is तूभे। G. तूभे। ७. MS. उत्पक्ष्येते। ८. MS. ये त्वासंज्ञि....। ९. Y. omits सत्त्वानां। १०. MS. ....मसंज्ञिके। ११. MS. समापत्तिं। १२. Y. omits अतो।

सूत्रं विरुध्येत । "इहायुष्मन्तो भिक्षुः शीलसंपन्नश्च भवति समाधिसंपन्नश्च प्रज्ञासंपन्नश्च । सोऽभीक्ष्णं संज्ञावेदयित[१]निरोधं समापद्यते च व्युत्तिष्ठते चास्ति चैतत्[२] स्थानमिति यथाभूतं प्रजानाति स न हैव दृष्ट एव धर्मे प्रतिपत्त्ये[३]वाज्ञामारागयति नापि मरणकालसमये भेदाच्च कायस्यातिक्रम्य देवान् कवडीकाराहार[४]भक्षानन्यतरस्मिन् दिव्ये मनोमये काय उपपद्यते । स तत्रोपपन्नोऽभीक्ष्णं संज्ञावेदितनिरोधं समापद्यते च व्युत्तिष्ठते चास्ति चैतत् स्थानमिति यथाभूतं प्रजानाती"ति । अत्र हि दिव्यो मनोमयः कायो रूपावचर उक्तो भगवता । इयं च समापत्तिर्भावाग्रिकी । तत्कथमपरिहीणस्य तल्लाभिनो रूपधातौ स्यादुपपत्तिः । चतुर्थध्यानभूमिकामपि निरोधसमापत्तिं निकायान्तरीया इच्छन्ति । तेषां विनापि परिहाण्या सिध्यत्येतत् । एतदेव[५] तु न सिध्यति । चतुर्थध्यानभूमिकाऽप्यसावस्तीति । किं कारणम् । "नवानुपूर्वसमापत्तय" इति सूत्रे वचनात् । यद्येष नियमः कथं व्युत्क्रान्तसमापत्तयो भवन्ति । प्राथमकल्पिकं प्रत्येष नियमः । प्राप्तप्रकामवशित्वास्तु सन्तो विलङ्घ्यापि समापद्यन्ते । एवमनयोः समापत्त्योर्भूमितोऽपि विशेषः । [28b. 4B1. I] चतुर्थध्यानतयाऽग्रभूमिकत्वात् । प्रयोगतोऽपि निःसरणविहारसंज्ञापूर्वकमनसिकारप्रयोगात् । संतानतोऽपि पृथग्जनार्यसंतानत्वात् । फलतोऽप्यासंज्ञिकभवाग्रफलत्वात् । वेदनीयतोऽपि नियतानियतोपपद्योभयथावेदनीयत्वात्[६] । प्रथमोत्पादनतोऽपि द्विधातुमनुष्योत्पादनात् । कस्मात् पुनरेते चित्तचैत्तनिरोधस्वभावे सत्यावसंज्ञिसमापत्तिः संज्ञावेदितनिरोधसमापत्तिश्चोच्यते । तत्प्रातिकूल्येन तत्समापत्तिप्रयोगात् । वेदनादिज्ञानेऽपि परचित्तज्ञानवचनवत् । कथमिदानीं वहुकालं[७] निरुद्धाच्चित्तात् पुनरपि चित्तं जायते । अतीतस्याप्यस्तित्वात् इष्यते वैभाषिकैः समनन्तरप्रत्ययत्वम् । अपरे पुनराहुः । कथं तावदारूप्योपपन्नानां चिरनिरुद्धेऽपि रूपे पुनरपि रूपं जायते । चित्तादेव हि तज्जायते न रूपात् । एवं चित्तमप्यस्मादेव सेन्द्रियात्कायाज्जायते न चित्तात् । अन्योन्यवीजकं ह्येतदुभयं यदुत चित्तं च सेन्द्रियश्च काय इति पूर्वाचार्याः । भदन्तवसुमित्रस्त्वाह परिपृच्छायां "यस्याचित्तिका[८] निरोधसमापत्तिस्तस्यैष दोषो मम तु सचित्तिका समापत्तिरि"ति । ति । भदन्तघोषक आह तदिदं नोपपद्यते । "सति हि विज्ञाने [29a. 4A1. II] त्रयाणां संनिपातः स्पर्शः । स्पर्शप्रत्यया च वेदना संज्ञा चेतनेत्युक्तं भगवता । अतः संज्ञावेदनयोरप्यत्र निरोधो न स्यात् । अथापि स्यात् ।

---

१. Y. वेदित । २. MS. चेतत् । ३. Y. one reading is प्रतिपद्ये । ४. MS. कवड़ीकाहार । Y. कवड़ीकार । ५. MS. एतेदेव । ६. Y. नियततोभयथावेदनीयत्वात् । ७. Y. वहुकालनिरुद्धा । ८. MS. ....चित्तेका ।

यथा वेदनाप्रत्यया तृष्णे"त्युक्तम् । सत्यामपि तु वेदनायामर्हतो न तृष्णोत्पत्तिरेवं सत्यपि स्पर्शे वेदनादयो[1] न स्युरिति । तस्याविशेषितत्वात् । अविद्यासंस्पर्शजं हि वेदितं प्रतीत्योत्पन्ना तृष्णेत्युक्तं नतु वेदनोत्पत्तौ स्पर्शो विशेषित इत्यसमानमेतत् । तस्मादचित्तिका निरोधसमापत्तिरिति वैभाषिकाः । कथमचित्तिकायाः समापत्तित्वम् । महाभूतसमतापादनात् । समापत्तिचित्तेन च तां समापद्यन्ते समागच्छन्तीति समापत्तिः । किं पुनरेते समापत्ती द्रव्यतः स्त उताहो प्रज्ञप्तितः । द्रव्यत इत्याह । चित्तोत्पत्तिप्रतिबन्धनात् । न । समापत्तिचित्तेनैव तत्प्रतिबन्धनात् । समापत्तिचित्तमेव हि तच्चित्तान्तरविरुद्धमुत्पद्यते येन कालान्तरं[2] चित्तस्याप्रवृत्तिमात्रं भवति । तद्विरुद्धाश्रयापादनात्[3] । याऽसौ समापत्तिरिति प्रज्ञप्यते तच्चाप्रवृत्तिमात्रं न पूर्वमासीन्न पश्चात् भवति व्युत्थितस्येति संस्कृताऽसौ समापत्तिः प्रज्ञप्यते । अथवा आश्रयस्यैव तथा समापादनं समापत्तिः । एवमासंज्ञिकमपि द्रष्टव्यम् । चित्त-[29b. 4B1. II]मेवासौ तत्र चित्तप्रवृत्तिविरुद्धं लभते तच्चाप्रवृत्तिमात्रमासंज्ञिकं प्रज्ञप्यत इति तदेतन्न वर्णयन्ति । व्याख्याते समापत्ती ॥

जीवितं कतमत् ।

**आयुर्जीवितम्**

एवं ह्युक्तमभिधर्मे "जीवितेन्द्रियं कतमत् । त्रैधातुकमायुरि"ति । एतच्चैव न ज्ञायते आयुर्नाम क एष धर्म इति ।

**आधार ऊष्मविज्ञानयोर्हि यः ।**

इदमुक्तं भगवता

"आयुरूष्माऽथ विज्ञानं यदा कायं जहत्यमी ।
अपविद्धस्तदा शेते यथा काष्ठमचेतन[4]" इति ॥

तद् य ऊष्मणो विज्ञानस्य चाधारभूतो धर्मः स्थितिहेतुस्तदायुः । तस्येदानीमायुषः क आधारभूतः । ते एवोष्मविज्ञाने । एवं तर्हि परस्परापेक्ष्यवृत्तित्वादेषां कः पूर्वं निवर्त्तिष्यते । यद्वशादिभवौ विवर्त्तिष्येते इति नित्यानिवृत्तिप्रसङ्गः । आयुषस्तर्हि कर्माधारभूतं यावदाक्षिप्तं कर्मणा तावदनुवर्त्तनात् । ऊष्मविज्ञानयोरपि किमर्थं कर्मैवाधारभूतं नेष्यते । मा भूत् सर्वं विज्ञानमामरणाद्विपाक इति । ऊष्मणस्तर्हि कर्माधारभूतं भविष्यति ऊष्मा च विज्ञानस्य । एवमप्यारूप्येष्वनाधारं विज्ञानं स्यादूष्माभावात् । तस्य पुनः कर्माधारो भविष्यति । न वै लभ्यते

१. MS. वेदयो । २. D. कालान्तरमन्यस्य । ३. MS. तत् । ४. MS. ....मचेतनम् ।

कामचारो यत् क्वचिदेवोष्मा विज्ञानस्याधारो भविष्यति क्वचिदेव कर्मेति। [30a. 4A1. III.] उक्तं चात्र। किमुक्तम्। "मा भूत्सर्वं विज्ञानमामरणाद्विपाक" इति। तस्मादस्त्येव तयोराधारभूतमायुः। नहि नास्तीति ब्रूमो नतु द्रव्यान्तरम्। किं तर्हि। त्रैधातुकेन कर्मणा निकायसभागस्य स्थितिकालावेधः। यावद्धि कर्मणा निकायसभागस्यावेधः कृतो भवत्येतावन्तं कालमवस्थातव्यमिति तावत् सोऽवतिष्ठते तदायुरित्युच्यते। सस्यानां पाककालावेधवत् क्षिप्तेषुस्थितिकालावेधवच्च। यस्तु मन्यते संस्कारो नाम कश्चिद् गुणविशेष इषौ जायते यद्वशाद्गमनमापतनाद् भवतीति। तस्य तदेकत्वात् प्रतिपन्नाभावाच्च[1] देशान्तरैः शीघ्रतरतमप्राप्तिकालभेदा[2]नुपपत्तिः पतनानुपपत्तिश्च। वायुना तत्प्रतिवन्ध इति चेत्। अर्वाक्पतनप्रसङ्गो न वा कदाचिद्वायोरविशेषात्। एवं तु वर्णयन्ति द्रव्यान्तरमेवायुरस्तीति।

अथ किमायुःक्षयादेव मरणं भवत्याहोस्विदन्यथापि। प्रज्ञप्तावुक्तम् "आयुःक्षयान्मरणं[3] न पुण्यक्षयादि"ति[4]। चतुष्कोटिः। प्रथमा कोटिरायुर्विपाकस्य कर्मणः पर्यादानात्। द्वितीया भोगविपाकस्य। तृतीयोभयोः। चतुर्थी विषमापरिहारेण। आयुरुत्सर्गाच्चेति वक्तव्यम्। न वक्तव्यम्। आयुःक्षयादेव तन्मरणम्। प्रथमकोट्यन्तर्ग-[30b. B1. III]मात्। क्षीणे त्वायुषि पुण्यक्षयस्य मरणे नास्ति सामर्थ्यम्। तस्मादुभयक्षये सति मरणमायुःक्षयादित्युक्तम्। ज्ञानप्रस्थानेऽप्युक्तम् "आयुः सन्तत्युपनिबद्धं[5] वर्त्तत इति वक्तव्यम्। सकृदुत्पन्नं तिष्ठतीति वक्तव्यम्। आह। कामावचराणां[6] सत्त्वानामसंज्ञिसमापत्तिं निरोधसमापत्तिं च[7] समापन्नानां सन्तत्युपनिबद्धं वर्त्तत इति वक्तव्यम्। समापन्नानां रूपारूप्यावचराणां च सत्त्वानां सकृदुत्पन्नं तिष्ठतीति वक्तव्यम्"। कोऽस्य[8] भाषितस्यार्थः। यस्याश्रयोपघातादुपाघतस्तत्सन्तत्यधीनत्वात् प्रथमम्। यस्य त्वाश्रयोपघात एव नास्ति तद्यथोत्पन्नावस्थानात् द्वितीयम्। सान्तरायं प्रथमं निरन्तरायं द्वितीयमिति काश्मीराः। तस्मादस्त्यकालमृत्युः। सूत्रे[9] उक्तम् "चत्वार आत्मभावप्रतिलम्भाः। अस्त्यात्मभावप्रतिलम्भो यत्रात्मसंचेतना क्रमते[10] न परसंचेतने"ति। चतुष्कोटिकः। आत्मसंचेतनैव क्रमते[11] कामधातौ क्रीडाप्रमोषकाणां[12] देवानां मनःप्रदूषकाणां[13] च[14]। तेषां हि प्रहर्षमनःप्रदोषाभ्यां तस्मात् स्थानाच्च्युतिर्भवति नान्यथा। बुद्धानां चेति वक्तव्यम्।

१. Y. प्रतिबन्धाभावाच्च। २. MS. ...तदा....। ३. MS. ...क्षयात्मरणं D. अस्त्यायुः...। ४. D. क्षयादिभिः। ५. MS. सन्तति उपनिबद्धं। ६. MS. कामवचराणां...। ७. D. वा। ८. D. कः पुनरस्य। ९. Y. सूत्रेऽप्युक्तम्। १०. D. क्रामति। ११. D. संचेतनामवक्रामति। १२. MS. D. प्रमोषकानां। १३. Y. D. प्रदोषकाणां। १४. D. adds देवानाम्।

स्वयंमृत्युत्वात् । परसंचेतनैव क्रमते[1] गर्भाण्डगतानाम्[2] । उभयमप्येषां कामावचराणां प्रायेण । नोभयं सर्वेषा[3]मन्तराभवि-[31a. 4A$_1$. IV]काणां रूपारूप्यावचराणामनेकजातीयानां कामावचराणां तद्यथा नारकाणा[4]मुत्तरकौरवाणां[5] दर्शनमार्गमैत्रीनिरोधासंज्ञि[6]समापत्तिसमापन्नानां राजर्षिजिनदूतजिनादिष्ट[7]धर्मिलो[8]त्तरगंगिल[9]श्रेष्ठिपुत्रयशःकुमारजीवकादीनां सर्वेषा चरमभविकानां वोधिसत्त्व[10] मातुस्तद्गर्भाया:[11] चक्रवर्त्तिनश्चक्रवर्त्तिमातुश्च तद्गर्भायाः[12] । अथ कस्मात्सूत्र उक्तं कतमे ते भदन्त सत्त्वा येषां नात्मसंचेतना क्रमते न परसंचेतना । नैवसंज्ञानासंज्ञायतनोपगाः शारिपुत्रे"ति ।[13] अन्येषु किल ध्यानरूप्येष्वात्मसंचेतनास्वभूमिक आर्यमार्गः परसंचेतना उत्तरभूमिसामन्तकस्तत्र चोभयं नास्तीति । ननु चैवं तत्रापि परभूमिक आर्यमार्गः परसंचेतना प्राप्नोति । पर्यन्तग्रहणात्तर्हि तदादिसंप्रत्ययः । क्वचिदादिसंप्रत्ययः क्वचिदादिना पर्यन्तोऽपि प्रतीयते । यदाह । "तद्यथा देवा ब्रह्मकायिकाः । इयं प्रथमा सुखोपपत्तिरिति । क्वचित् पर्यन्तेनादिरपि प्रतीयते । यदाह । तद्यथा देवा आभास्वराः । इयं द्वितीया सुखोपपत्तिरि"ति । अयमत्र तद्यथाशब्दो दृष्टान्तवाचक इति युक्त एतस्माच्छेषसंप्रत्ययः । एष हि दृष्टान्तधर्मो यदेकमपि तज्जातीयकं दृश्यते । स चेह [31b. 4B$_1$. IV] तद्यथाशब्दो नास्तीत्यनुपसंहार एषः । यद्ययं तद्यथाशब्दो दृष्टान्तवाचकः स्यादिह न प्राप्नुयात् । सन्ति सत्त्वा नानात्वकाया नानात्वसंज्ञिनस्तद्यथा मनुष्यस्तदेकत्याश्च देवा इति । तस्मादुपदर्शनार्थ एवायं द्रष्टव्य इत्यलमतिप्रसङ्गेन । उक्तं जीवितम् ॥

**लक्षणानि पुनर्जातिर्जरा[14] स्थितिरनित्यता ॥४५॥**

एतानि हि संस्कृतस्य चत्वारि लक्षणानि । यत्रैतानि भवन्ति स धर्मः संस्कृतो लक्ष्यते । विपर्ययादसंस्कृतः । तत्र जातिस्तं धर्मं जनयति स्थितिः स्थापयति जरा जरयति अनित्यता विनाशयति । ननु[15] "त्रीणीमानि संस्कृत[16]लक्षणानी"ति सूत्र उक्तम् । चतुर्थमप्यत्र वक्तव्यं स्यात् । किं चात्र नोक्तम् । आह । स्थितिः । यत्तर्हि "इदं स्थित्यन्यथात्वमि"ति । जराया एष पर्यायस्तद्यथा जातेरुत्पाद इत्यनित्यतायाश्च व्यय इति । ये हि धर्माः संस्काराणामध्वसंचाराय

१. D. क्रामति । २. D. गर्भाण्डागतानाम् । ३. MS. सर्व्वेषां । अन्तरा । ४. MS. नारकाना । ५. MS. कोरवाणां । D. omits उत्तरकौरवाणां and adds च । ६. D omits असंज्ञि । ७. D. प्रभृतीनां in place of धर्म्मिलो ...जीवकादीनां । ८. MS. धर्म्मिलोकोत्तर । Y. (N) धमिल । ९. MS. may be read as गंगिन also । १०. बोधिसत्त्वानां । ११. MS. ...स्तत्गर्भायाः । १२. MS. तत् गर्भयः । १३. MS. शारिरिपुत्रेति । १४. MS. ज्र्जरा । १५. Y. adds च । १६. Y. संस्कृतस्य ।

प्रवृत्तास्त एव सूत्रे लक्षणान्युक्तान्युद्वेजनार्थम् । जातिर्हि या संस्कारानानागतादध्वनः प्रत्युत्पन्नमध्वानं संचारयति । जराऽनित्यते पुनः प्रत्युत्पन्नादतीतं दुर्बलीकृत्य प्रतिघातात् । तद्यथा किल गहनप्रविष्टस्य पुरुषस्य त्रयः शत्रवः । तत एक एनं गहनादाकर्षेत् द्वौ पुनर्जीविताद्व्यपरोपयेतां तद्वदिति । स्थितिस्तु तान् संस्कारा- [32a. $4A_1$. V]नुपगुह्य तिष्ठत्यवियोगमिवेच्छन्ती । अतोऽसौ संस्कृतलक्षणं न व्यवस्थापिता । असंस्कृतस्यापि च स्वलक्षणे[1] स्थितिभावात् । अन्ये पुनः कल्पयन्ति स्थितिं जरां चाभिसमस्य स्थित्यन्यथात्वमित्येकं लक्षणमुक्तं सूत्रे । किं प्रयोजनम् । एषा ह्येषु सङ्गास्पदमतः श्रियमिवैनां कालकर्णीसहितां दर्शयामास तस्यामनासङ्गार्थमिति[2] । अतश्चत्वार्येव संस्कृत[3]लक्षणानि । तेषामपि नाम जात्यादीनां संस्कृतत्वादन्यैर्जात्यादिभिर्भवितव्यम् । भवन्त्येव ।

**जातिजात्यादयस्तेषां**

तेषामपि चत्वार्यनुलक्षणानि भवन्ति । जातिजातिः स्थितिस्थितिः जराजरा अनित्यताऽनित्यता इति । ननु चैकस्यैकस्य[4] चतुर्लक्षणी प्राप्नोति अपर्यवसानदोषश्च । तेषां पुनरन्यजात्यादिप्रसङ्गात् । न प्राप्नोति । यस्मात्

**तेऽष्टधर्मैकवृत्तयः ।**

तेषां जात्यादीनामष्टासु धर्मेषु वृत्तिः । किमिदं वृत्तिरिति । कारित्रं पुरुषकारः । जातिजात्यादीनां चैकत्र धर्मे[5] कथं कृत्वा आत्मना नवमो[6] हि धर्म उत्पद्यते । सार्धं लक्षणानुलक्षणैरष्टाभिः । तत्र जातिरात्मानं विरहय्यान्यानष्टौ धर्मान् जनयति । जातिजातिः पुन[7]स्तामेव जातिम् । तद्यथा किल काचित् कुक्कुटी बह्वन्यपत्यानि प्रजायते काचिदल्पानि । [32b. $4B_1$. V] तद्वत् स्थितिरप्यात्मानं वर्जयित्वाऽन्यानष्टौ[8] धर्मान् स्थापयति स्थितिस्थितिस्तु तामेव स्थितिम् । एवं जराऽनित्यते अपि यथायोग्यं योज्ये । तस्मान्न भवत्यनवस्थाप्रसङ्गः । तदेतदाकाशं पाट्यत इति सौत्रान्तिकाः । नह्येते जात्यादयो धर्मा द्रव्यतः संविद्यन्ते यथाऽभिव्यज्यन्ते[9] । किं कारणम् । प्रमाणाभावात् । नह्येषां द्रव्यतोऽस्तित्वे किंचिदपि प्रमाणमस्ति प्रत्यक्षमनुमानमाप्तागमो वा यथा रूपादीनां धर्माणामिति । यत्तर्हि सूत्र उक्तं "संस्कृतस्योत्पादोऽपि प्रज्ञायते व्ययोऽपि स्थित्यन्यथात्वमपी" ति । ग्रन्थज्ञो देवानां प्रियो नत्वर्थज्ञः । अर्थश्च प्रतिशरण[10]मुक्तं भगवता । कः पुनरस्यार्थः । अविद्यान्धा हि बालाः संस्कारप्रवाहमात्मत आत्मीयतश्चाधिमुक्ता[11] अभिष्वजन्ते । यस्य मिथ्याधिमोक्षस्य व्यावर्त्तनार्थं भगवांस्तस्य

---

१. Y. स्वलक्षण । २. Y. असङ्गार्थम् । ३. MS. संस्कृता । ४. Y. एकैकस्य । ५. Y. एकधर्मे । ६. Y. आत्मनवमो । ७. Y. तु । ८. MS. ष्टौ । ९. विभज्यन्ते । १०. Y. प्रतिसरण । ११. Y. adds कृतरुचयः ।

संस्कारप्रवाहस्य संस्कृतत्वं प्रतीत्यसमुत्पन्नतां[१] द्योतयितुकाम इदमाह "त्रीणीमानि संस्कृतस्य संस्कृतलक्षणानि"। न तु क्षणस्य। नहि क्षणस्योत्पादादयः प्रज्ञायन्ते। नचाप्रज्ञायमाना एते लक्षणं भवितुमर्हन्ति। अत एवात्र सूत्रे "संस्कृतस्योत्पादोऽपि प्रज्ञायत" इत्युक्तम्। पुनः संस्कृतग्रहणं संस्कृतत्वे लक्षणानीति यथा विज्ञाये-[33a. 4A1. VI]त। मैवं विज्ञायि संस्कृतस्य वस्तुनोऽस्तित्वे लक्षणानि जलबलाकावत् साध्वसाधुत्वे वा कन्यालक्षणवदिति। तत्र प्रवाहस्यादिरुत्पादो निवृत्तिर्व्ययः। स एव प्रवाहोऽनुवर्त्तमानः स्थितिः। तस्य[२] पूर्वापरविशेषः स्थित्यन्यथात्वम्।[३] एवं च कृत्वोक्तं "विदिता एव[४] नन्दस्य कुलपुत्रस्य वेदना उत्पद्यन्ते विदिता अव[५]तिष्ठन्ते विदिता[६] अस्तं परिक्षयं पर्यादानं गच्छन्ती"ति। आह चात्र

"जातिरादिः प्रवाहस्य व्ययश्छेदः स्थितिस्तु सः।
स्थित्यन्यथात्वं तस्यैव पूर्वापरविशिष्टता॥"

"जातिरपूर्वो भावः स्थितिः प्रबन्धो व्ययस्तदुच्छेदः।
स्थित्यन्यथात्वमिष्टं प्रबन्धपूर्वापरविशेष" इति॥

"क्षणिकस्य हि धर्मस्य विना स्थित्या व्ययो भवेत्।
न च[७] व्येत्येव तेनास्य वृथा तत्परिकल्पना॥"

तस्मात् प्रवाह एव स्थितिः। एवं च कृत्वाऽयमप्यभिधर्मनिर्देश[८] उपपन्नो भवति। "स्थितिः कतमा। उत्पन्नानां संस्काराणामविनाश" इति। नहि क्षणस्योत्पन्नस्याविनाशोऽस्तीति। यदपि च ज्ञानप्रस्थान उक्तम् "एकस्मिंश्चित्ते क उत्पादः। आह। जातिः। को व्ययो मरणम्। किं स्थित्यन्यथात्वं जरे"ति। तत्रापि निकायसभागचित्तं युज्यते। प्रतिक्षणं चापि संस्कृतस्यैतानि लक्षणा-[3b. 4B1. VI]नि युज्यन्ते विनाऽपि द्रव्यान्तरकल्पनया। कथमिति। प्रतिक्षणमभूत्वाभाव उत्पादः। भूत्वाऽभावो व्ययः। पूर्वस्य पूर्वस्योत्तरक्षणानुबन्धः स्थितिः। तस्याविसदृशत्वं स्थित्यन्यथात्वमिति। यदा तर्हि सदृशा उत्पद्यन्ते। न ते निर्विशेषा भवन्ति। कथमिदं ज्ञायते। क्षिप्ताक्षिप्तबलिदुर्बलक्षिप्तस्य वज्राग्रदेशिचराशुतरपातकालभेदात्तन्महाभूतानां[९] परिणामविशेषसिद्धेः। नातिबहुविशेषभिन्नास्तु संस्काराः सत्यप्यन्यथात्वे सदृशा एव दृश्यन्ते। अन्तिमस्य तर्हि शब्दार्चिःक्षणस्य परिनिर्वाणकाले च षडायतनस्योत्तरक्षणाभावात् स्थित्यन्यथात्वं नास्तीत्यव्यापिनी लक्षणव्यवस्था प्राप्नोति। न वै संस्कृतस्य स्थितिरेवोच्यते।

१. Y. ॰त्पन्नत्वं। २. Y. तस्याः। ३. MS. ...थात्वमेवं। ४. Y.(N.) corrects एव into इव। ५. Y. (N.) corrects अव into इव। ६. Y. (N.) adds इव। ७. Y स च। ८. MS. निर्देशोपपन्नो। ९. Y. तद्भूतानां।

लक्षणमपि तु स्थित्यन्यथात्वम्। अतो यस्यास्ति स्थितिस्तस्यावश्यमन्यथात्वं भवतीति नास्ति लक्षणव्यवस्थाभेदः। समासतस्त्वत्र सूत्रे संस्कृतस्येदं लक्षणमिति द्योतितं भगवता "संस्कृतं नाम यदभूत्वा भवति भूत्वा च पुनर्न भवति यश्चास्य स्थितिसंज्ञकः प्रबन्धः सोऽन्यथा चान्यथा च भवतो"ति। किमत्र द्रव्यान्तरैर्जात्यादिभिः कथमिदानीं स एव धर्मो लक्ष्यस्तस्यैव[1] लक्षणं योक्ष्यते। कथं तावन्महा-[34a. 4A1. VII]पुरुषलक्षणानि महापुरुषान्नान्यानि सास्नालाङ्गूलककुदशफविषाणादीनि च गोत्वलक्षणानि गोर्नान्यानि काठिन्यादीनि च पृथिवीधात्वादीनां लक्षणानि तेभ्यो नान्यानि। यथा चोर्ध्वगमनेन दूराद्धूमस्य धूमत्वं लक्ष्यते नच तत्तस्मादन्यत्। स एवात्र न्यायः स्यात्। नच संस्कृतानां रूपादीनां तावत् संस्कृतत्वं लक्ष्यते। गृह्णतापि स्वभावं यावत् प्रागभावो न ज्ञायते पश्चाच्च सन्ततेश्च विशेषः। तस्मान्न तेनैव तल्लक्षितं भवति नच तेभ्यो द्रव्यान्तराण्येव जात्यादीनि विद्यन्ते। अथापि नाम द्रव्यान्तराण्येव जात्यादीनि भवेयुः। किमयुक्तं स्यात्। एको धर्मः एकस्मिन्नेव काले जातः स्थितो जीर्णो नष्टः स्यादेषां सहभूत्वात्[2]। कारित्रकालभेदात्। अनागता हि जातिः कारित्रं हि करोति। यस्मान्न जातं जन्यते जनिते तु धर्मे वर्त्तमानाः क्षित्यादयः कारित्रं कुर्वन्तीति न यदा जायते तदा तिष्ठति जीर्यति विनश्यति वा। इदं तावदिह संप्रधार्यं भवेत्। किमनागतं द्रव्यतोऽस्ति नास्तीति पश्चाज्जनयति वा नवेति सिध्येत्। सत्यपि तु तस्मिन् जातिः कारित्रं कुर्वती कथमनागता सिध्यतीत्यनागत[3]लक्षणं वक्तव्यम्। उपरतकारित्रा [34b. 4B1. VII] चोत्पन्ना कथं वर्त्तमाना सिध्यतीति वर्त्तमानलक्षणं वक्तव्यम्। स्थित्यादयोऽपि च युगपत् कारित्रे वर्त्तमाना एकक्षण एव धर्मस्य स्थितजीर्णविनष्टतां प्रसज्जेयुः। यदैव[4] ह्येनं स्थितिः स्थापयति तदैव जरा जरयति अनित्यता विनाशयतीति। किमयं तत्र काले तिष्ठत्वाहोस्विज्जीर्यतु विनश्यतु वा योऽपि हि ब्रयात् स्थित्यादीनामपि कारित्रं क्रमेणेति तस्य क्षणिकत्वं बाध्यते। अथाप्येवं ब्रूयात् एष एव हि नः क्षणो यावतैतत् सर्वं समाप्यत इति।[5] एवमपि ताभ्यां सहोत्पन्ना स्थितिस्तावत् स्थापयति न जरा जरयति अनित्यता वा विनाशयतीति। कुत एतत्। स्थितेर्बलीयस्त्वात्। पुनः केनाबलीयस्त्वम्। यदैनां[6] सह धर्मेणानित्यता हन्ति[7]। कृतकृत्या पुनः कर्त्तुं नोत्सहते जातिवत्। स्यातु[8]र्युक्तमनुत्सोढुम्। नहि[9] शक्यं जात्यादिजन्यं वर्त्तमानतामानीतं पुनरानेतुम्। शक्यं तु खलु स्थित्या स्थाप्यमत्यन्तमपि स्थापयितुम्। अतो

१. Y. adds च। २. Y. सहभूतत्वात्। ३. MS. ...नागता। ४. Y. यदैवं। ५. MS. इत्येवमपि। ६. Y. यदेनां। ७. Y. निहन्ति। ८. MS. जातु। ९. MS. नहिन।

न युक्तं यन्नोत्सहते । को वाऽत्र प्रतिवन्धः । ते एव जराऽनित्यते । यदि हि ते वलीयस्यौ स्यातां पूर्वमेव स्याताम् । निवृत्तकारित्रायां खल्वपि स्थितौ ते चापि न तिष्ठतः स चापि धर्म इति कथं कुत्र वा कारित्रं कर्त्तुमुत्सहिष्येते किं वा [35a. 4A1. VIII] पुनस्ताभ्यां कर्त्तव्यम् । स्थितिपरिग्रहाद्धि स धर्म उत्पन्नमात्रो न व्यनश्यत् । स तु तथा व्युपेक्ष्यमाणो[1] नियतं न स्थास्यत्ययमेवास्य विनाशः । स्याच्च तावदेकस्य धर्मस्योत्पन्नस्याविनाशः स्थितिः विनाशोऽनित्यता । [2]जरा तु खलु सर्वथात्वेन न तथा । पूर्वापरविशेषात् विपरिणामाच्च । अतस्तदन्यथात्वेऽन्य एव । उक्तं हि

"तथात्वेन जराऽसिद्धिरन्यथात्वेऽन्य एव सः ।
तस्मान्नैकस्य भावस्य जरा नामोपपद्यते" ॥[2]

योऽप्याह निकायान्तरीयो "विनाश[3]कारणं प्राप्यानित्यता विनाशयती"ति तस्य हरीतकीं प्राप्य देवता विरेचयतीत्यापन्नं भवति किं पुनस्तां कल्पयित्वा । तत एवास्तु विनाशकारणाद्विनाशः चित्तचैत्तानां च क्षणिकत्वाभ्युपगमात्तदनित्यताया विनाशकारणानपेक्षत्वात् स्थित्यनित्यते[4] कारित्रमभिन्नकालं कुर्यातामित्येकस्यैकत्र काले स्थित[5]विनष्टता[6] संप्रसज्येत[7] । तस्मात् प्रवाहं प्रत्येतानि संस्कृतलक्षणान्युक्तानीत्येवमेतत्सूत्रं सुनीतं भवति ।

अपिच यद्यनागता जातिर्जन्यस्य जनिका किमर्थं सर्वमनागतं युगपन्नोत्पद्यते । यस्मात्

**जन्यस्य जनिका जातिर्न हेतुप्रत्ययैर्विना ॥४६॥**

नहि विना हेतुप्रत्ययसामग्र्या जातिर्जनिका भवति । हेतुप्रत्ययानामेव तर्हि सामर्थ्यं पश्यामः । सति सामग्र्ये भावादसति चाभावान्न जातेरिति हेतुप्रत्यया एव जन-[35b. 4B1. VIII]काः सन्तः । किं च भोः सर्वं विद्यमानमुपलभ्यते । सूक्ष्मा अपि[8] धर्मप्रकृतयः संविद्यन्ते । जातमित्येव तु न स्यादसत्यां जातौ षष्ठीवचनं च रूपस्योत्पादः इति यथा रूपस्य रूपमिति । एवं यावदनित्यता यथायोगं वक्तव्या । तेन तर्ह्यनात्मत्वमप्येष्टव्यमनात्मबुद्धिसिद्ध्यर्थम् । संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसत्तादयोऽपि तीर्थंकरपरिकल्पिता अभ्युपगन्तव्या एकद्विमहदणुपृथक्संयुक्तवियुक्त[9]परापरसदादिबुद्धिसिद्ध्यर्थम् । षष्ठीविधानार्थं च रूपस्य संयोग इति । एषा च षष्ठो कथं कल्प्यते । रूपस्य स्वभाव इति । तस्मात् प्रज्ञप्तिमात्रमेवैतदभूत्वाभावज्ञापनार्थं क्रियते जातमिति । स

१ Y. प्युपेक्ष्यमाणो । २.........२. जरा तु...नामोपपद्यते is tentatively reconstructed from Chinese with the help of दीपवृत्ति। MS. reads like :—जरास्तु खलु सर्वथात्वेऽन्य एव सः । तस्मान्नैकस्य भावस्य जरा नामोपपद्यते । ३. MS. विनाशः न ४. MS. स्थित्यनित्यनित्यते । ५. Y. स्थिति । ६. MS. विनष्टतां । ७. Y. संप्रसज्यते । ८. Y. adds हि । ९. Y विभक्त ।

चाभूत्वाभावलक्षण उत्पादो बहुविकल्पः। तस्य विशेषणार्थं रूपस्योत्पाद इति षष्ठीं कुर्वन्ति यथा रूपसंज्ञक एवोत्पादः प्रतीयेत माऽन्यः[१] प्रत्यायीति। तद्यथा चन्दनस्य गन्धादयः शिलापुत्रकस्य शरीरमिति। एवं स्थित्यादयोऽपि यथायोगं वेदितव्याः। यदि जात्या विना जायते कस्मादसंस्कृतमप्याकाशादिकं न जायते। जायत इत्यभूत्वा भवति। असंस्कृतं च नित्यमस्तोति न जायते। यथा च धर्मतया न सर्वं जातिमदिष्यते [36a.5A.I] तथा[२] न सर्वं जायत इत्येष्टव्यम्। यथा च तुल्ये जातिमत्त्वे तदन्ये प्रत्ययास्तदन्यस्योत्पादने न समर्था भवन्त्येवमेवासंस्कृतस्योत्पादने सर्वेऽप्यसमर्थाः स्युः। सिद्धा एव तु द्रव्यभावेन जात्यादय इति वैभाषिकाः। नहि दूषकाः सन्तीत्यागमा अपास्यन्ते नहि मृगाः सन्तीति यवा नोप्यन्ते नहि[३] मक्षिकाः पतन्तीति[४] मोदका न भक्ष्यन्ते। तस्माद्दोषेषु प्रतिविधातव्यं सिद्धान्तश्चानुवर्तितव्यः[५]। उक्तानि लक्षणानि ॥

नामकायादयः कतमे।

**नामकायादयः संज्ञावाक्याक्षरसमुक्तयः[६]।**

आदिग्रहणेन पदव्यञ्जनकायग्रहणम्। तत्र संज्ञाकरणं नाम। तद्यथा रूपं शब्द इत्येवमादिः। वाक्यं पदं यावताऽर्थपरिसमाप्तिस्तद्यथा "अनित्या[७] वत संस्कारा" इत्येवमादि येन क्रियागुणकालसंवन्धविशेषा गम्यन्ते। व्यञ्जनमक्षरं तद्यथा अ आ इत्येवमादि। ननु चाक्षराण्यपि लिप्यवयवानां नामानि। न वै लिप्यवयवानां प्रत्यायनार्थमक्षराणि प्रणीतान्यक्षराणामेव तु प्रत्यायनार्थं लिप्यवयवाः प्रणीताः। कथमश्रूयमाणानि लेख्येन प्रतीयेरन्निति नाक्षराण्येषां नामानि। एषां च संज्ञादीनां समुक्तयो नामादिकायाः। उच समवाये पठन्ति। तस्य समुक्तिरित्येतद् रूपं भवति। योऽर्थः स-[36b. 5B.I]मवाय इति सोऽर्थः समुक्तिरिति। तत्र नामकायस्तद्यथा रूपशब्दगन्धरसस्प्रष्टव्यानीत्येवमादि। पदकायः तद्यथा "सर्वसंस्कारा अनित्याः सर्वधर्मा अनात्मानः शान्तं निर्वाणमि"त्येवमादि। व्यञ्जनकायस्तद्यथा क ख ग घ ङेत्येवमादि। ननु चैते[८] वाक्स्वभावत्वाच्छब्दात्मका इति रूपस्वभावा भवन्ति। कस्माच्चित्तविप्रयुक्ता इत्युच्यन्ते। नैते वाक्स्वभावाः। घोषो हि वाक् नच घोषमात्रेणार्थाः प्रतीयन्ते। किं तर्हि। वाङ्नाम्नि प्रवर्त्तते नामार्थं[९] द्योतयति नैव[१०] घोषमात्रं वाग्येन तु घोषेणार्थः प्रतीयते स घोषो वाक्। केन पुनर्घोषेणार्थः प्रतीयते। योऽर्थेषु कृतावधिर्वक्तृभिस्तद्यथा

---

१. Y. MS. नान्यः। २. Y. adds धर्मतया। ३. Y. omits हि।
४. MS. drops ति। ५. Y. ...नुसर्तव्यः। ६. MS. समुक्तायः। ७. MS. अनित्य।
८. Y. च ते। ९. Y. अर्थत्वं। १०. Y. न वै।

गौरित्येष शब्दो नवस्वर्थेषु कृतावधिः ।

"वाग्दिग्भूरश्मिवज्रेषु पश्वक्षिस्वर्गवारिषु ।
नवस्वर्थेषु मेधावी गोशब्दमुपधारयेदि"ति ।।

योऽपि हि मन्यते नामार्थं द्योतयतीति तेनाप्येतदवश्यमभ्युपगन्तव्यं यदि प्रतीतपदार्थकं भवतीति । तच्चैत[1]च्छब्दमात्रादेव[2] प्रतीतपदार्थकात् सिध्यतीति किमर्थान्तरं नाम कल्पयित्वा । इदं चापि न ज्ञायते कथं वाङ्नाम्नि प्रवर्त्तत इति । किं तावदुत्पादयत्याहोस्वित् प्रकाशयति । यद्युत्पाद-[37a. 5A. II]यति । घोषस्वभावत्वाद्वाचः सर्वं घोषमात्रं नामोत्पादयिष्यति यादृशो वा घोषविशेष इष्यते नाम्न उत्पादकः स एवार्थस्य द्योतको भविष्यति । अथ प्रकाशयति । घोषस्वभावत्वाद्वाचः सर्वं घोषमात्रं नाम प्रकाशयिष्यति यादृशो वा घोषविशेष इष्यते नाम्नः प्रकाशकः स एवार्थस्य द्योतको भविष्यति । न खल्वपि शब्दानां सामग्र्यमस्ति[3] क्षणैकमिलनम् । न चैकस्य भागश[4] उत्पादो युक्त इति कथमुत्पादयन्ती वाङ्नामोत्पादयेत् । कथं तावदतीतापेक्षः पश्चिमो विज्ञप्तिक्षण उत्पादयत्यविज्ञप्तिम् । एवं तर्हि पश्चिम एव शब्दे[5] नाम्न उत्पादाद्योऽपि[6] तमेवैकं शृणोति सोऽप्यर्थं प्रतिपद्येत । अथाप्येवं कल्प्येत वाग्व्यञ्जनं जनयति व्यञ्जनं तु नामेति । अत्रापि स एव प्रसङ्गो व्यञ्जनानां सामग्र्याभावात् । एष एव च[7] प्रसङ्गो नाम्नः प्रकाशकत्वे वाचः । व्यञ्जनं चापि वाग्विशिष्टप्रज्ञा अप्यवहितचेतस्का लक्षणतः परिच्छेत्तुं नोत्सहन्त इति व्यञ्जनस्यापि वाक् नैवोत्पादिका न प्रकाशिका युज्यते । अथाप्यर्थसहजं नाम जात्यादिवदिष्यते[8] । एवं सत्यतीतानागतस्यार्थस्य वर्त्तमानं नाम न स्याद्[9] । अपत्यानां पितृभिर्यथेष्टं नामानि कल्प्यन्त [37b.5B.II] इति कतमन्नाम तत्सहजं स्यात् असंस्कृतानां च धर्माणां केन सहजं नाम[10] स्यादित्यनिष्टिरेवेयम् । यदप्युक्तं भगवता

"नामसंनिश्रिता गाथा गाथानां कविराश्रयः" इति

अत्रार्थेषु[11] कृतावधिः शब्दो नाम नाम्ना[12] च रचनाविशेषो गाथेति नामसंनिश्रिता भवति रचनाविशेषश्च द्रव्यान्तरं नोपपद्यते । पङ्क्तिवच्चित्तानुपूर्व्यवच्च । अस्तु वा व्यञ्जनमात्रस्य द्रव्यान्तरभावपरिकल्पना । तत्समूहा एव नामकायादयो भविष्यन्तीत्यपार्थिका तत्प्रज्ञप्तिः[13] । सन्त्येव तु विप्रयुक्तसंस्कारभावना नामकायादयो द्रव्यत इति वैभाषिकाः । नहि सर्वे[14] धर्मास्तर्कगम्या भवन्तीति ।

१. MS. तच्चेत.... । २. Y. omits एव । ३. MS. समग्रचमस्ति । ४. MS. looks like भागगत । ५. Y. पश्चिमशब्द एव । ६. MS. उत्पाद्योऽपि । ७. Y. तु । ८. Y. इष्येत । ९. स्यादपत्यानां । १०. Y. adds न । ११. Y. तत्रार्थेषु । १२. Y. नाम्नां । १३. Y. प्रक्लृप्तिः । १४. Y. सर्वे ।

अथ किंप्रतिसंयुक्ता एते नामकायादयः सत्त्वाख्या असत्त्वाख्या[१] विपाकजा औपचयिका नैःष्यन्दिकाः कुशला अकुशला अव्याकृता इति वक्तव्यम् । आह

**कामरूपाप्तसत्त्वाख्या निःष्यन्दाव्याकृताः**

कामाप्ता रूपाप्ताश्चेति । आरूप्याप्ता अपि सन्ति ते त्वनभिलाप्या इत्यपरे । सत्त्वाख्या एते[२] । यश्च द्योतयति स तैः समन्वागतो न यो द्योत्यते । नैःष्यन्दिका अनिवृताव्याकृताश्च । यथा चैते नामकायादयः सत्त्वाख्या नैःष्यन्दिका अनिवृताव्याकृताश्च

**तथा ॥४७॥**

**स-[38a. 5A. III]भागता सा तु पुनर्विपाकोऽपि[3]**

न केवलं नैःष्यन्दिको कामरूपारूप्यावचरी

**आप्तयो द्विधा ।**

प्राप्तयो नैःष्यन्दिक्यो विपाकजाश्च ।

**लक्षणानि च**

द्विधेति वर्त्तते प्राप्तिवत्

**निःष्यन्दाः समापत्त्य[४]समन्वयाः ॥४८॥**

द्वे अचित्तसमापत्ती असमन्वागमश्च नैःष्यन्दिका एव । शेषमेषां वक्तव्यमुक्तम्[५] । शेषयोश्चासंज्ञिकजीवितयोरतो न पुनर्भ्रमः । कथं प्राप्त्यादीनां सत्त्वाख्यतोक्ता । कथं लक्षणानां सत्त्वासत्त्वाख्यतोक्ता । सर्वसंस्कृतसहभूत्वात् ॥ उक्ता विप्रयुक्ताः ॥

यत्तूक्तं "जन्यस्य जनिका जातिर्न हेतुप्रत्ययैर्विना" इति क इमे हेतवः के च प्रत्ययाः ।

**कारणं सहभूश्चैव सभागः संप्रयुक्तकः ।**
**सर्वत्रगो विपाकाख्यः षड्विधो हेतुरिष्यते ॥४९॥**

षडिमे हेतवः । कारणहेतुः सहभूहेतुः सभागहेतुः संप्रयुक्तकहेतुः सर्वत्रगहेतुः विपाकहेतुरिति[६] । तत्र

**स्वतोऽन्ये कारणं हेतुः**

संस्कृतस्य हि धर्मस्य स्वभाववर्ज्याः सर्वधर्माः कारणहेतुरुत्पादयति[७] । अविघ्नभावावस्थानात् । ननु च येऽस्याजानत उदपत्स्यन्तास्रवा जानतोऽस्य ते नोत्पद्यन्त इति ज्ञानमेषां विघ्नमुत्पत्तौ करोति

१. Y. सत्त्वाख्यासत्त्वाख्या । २. D. ह्येते । ३. G reads सभागता विपाकोऽपि त्रैधातुक्याप्तयो द्विधा । ४. MS. समापत्त्ये । ५. MS. शेषमेषाम्वक्तमुक्तं । ६. MS. drops हे । ७. Y. उत्पादं प्रति ।

सूर्यप्रभावज्ज्योतिषां[1] दर्शनस्येति कथं स्वभाववर्ज्याः सर्वधर्माः संस्कृतस्य कारणहे- [38b.5B.III] तुर्भवन्ति। उत्पद्यमानस्याविघ्नभावेनावस्थानादिति[2] ज्ञातव्यम्। भवेत्तावदुत्पत्तौ विघ्नकारणे समर्थानामविघ्नकारणाद्धेतुत्वम्। तद्यथा अनुपद्रोतारं भोजकमधिकृत्य ग्रामीणा भवन्ति वक्तारः स्वामिना स्मः सुखिता इति। यस्य पुनर्नास्त्येव शक्तिर्विघ्नयितुं तस्य कथं हेतुभावस्तद्यथा निर्वाणस्यानुत्पत्तिधर्मकाणां[3] च सर्वोत्पत्तौ नारकादीनां चारूप्यसत्त्व[4]स्कन्धोत्पत्तौ। असन्तोऽपि ह्येते तथैव विघ्नं कर्त्तुमसमर्थाः स्युः। असमर्थेऽपि हि भोजके तथा वक्तारो भवन्तीति स एवात्र दृष्टान्तः सामान्येनैव निर्देशः।[5] यस्तु प्रधानः कारणहेतुः स उत्पादनेऽपि समर्थो यथा चक्षूरूपे चक्षुर्विज्ञानस्य आहारः शरीरस्य बीजादयोऽङ्कुरादीनामिति। यस्त्वेवं चोदयति अनावरणभावेन चेत्सर्वं धर्महेतवो भवन्ति कस्मान्न सर्वस्योत्पादो युगपद्भवति प्राणातिपातेन च घातकवत् सर्वे तद्भाजो[6] भवन्तीति। तस्येदम- चोद्यम्[7]। यस्मादनावरणभावेन सर्वधर्माः हेतुः प्रतिज्ञायन्ते न कारकभावेनेति। सर्वस्यैत्र कारणहेतोः सर्वोत्पत्तौ सामर्थ्यमित्यपरे। तद्यथा निर्वाणस्यापि चक्षुर्वि- [39a.5A.IV]ज्ञानम्। कथं कृत्वा। तेन ह्यालम्बनात् मनोविज्ञानमुत्पद्यते कुशलाकुशलं यतः क्रमेण पश्चाच्चक्षुर्विज्ञानमिति कारणपरंपरया तस्यापि प्रत्ययी- भावादस्ति सामर्थ्यम्। एवमन्यस्यापि प्रतिपत्तव्यम्। एषा हि दिक्। उक्तः कारणहेतुः।

**सहभूर्ये मिथःफलाः।**

मिथः पारंपर्येण ये धर्माः परस्परफलास्ते परस्परः सहभूहेतुर्यथा। कथम्।

**भूतवच्चित्तचित्तानुवर्तिलक्षणलक्ष्यवत् ॥५०॥**

चत्वारि महाभूतान्यन्योन्यं सहभूहेतुः। चित्तं चित्तानुवर्त्तिनां धर्माणां तेऽपि तस्य। संस्कृतलक्षणानि लक्ष्यस्य सोऽपि तेषाम्। एवं च कृत्वा सर्वमेव संस्कृतं[8] सहभू- हेतुर्यथायोगम्। विनापि चान्योन्यफलत्वेन धर्मोऽनुलक्षणानां सहभूहेतुर्न तानि तस्येत्युपसंख्यातव्यम् ॥

के पुनरेते चित्तानुवर्त्तिनो धर्माः।

**चैत्ता द्वौ संवरौ तेषां चेतसो लक्षणानि च।**

**चित्तानुवर्त्तिनः**

सर्वे चित्तसंप्रयुक्ताः। ध्यानसंवरोऽनास्रवसंवरस्तेषां च ये जात्यादयश्चित्तस्य च। एते

---

१. Y. ···प्रभा च ज्योतिषां। २. Y उत्पादं प्रत्यविघ्नभावावस्थानादिति। ३. Y. धर्माणां। ४. Y. omits सत्त्व। MS. सत्व। ५ MS. निर्द्देशो यस्तु। ६. MS. भाजो। ७. MS. तस्यैद ··। ८. MS. संस्कृत।

धर्माश्चित्तानुवर्त्तिन उच्यन्ते । कथमेते चित्तमनुपरिवर्त्तन्ते[1] । समासतः

**कालफलादिशुभतादिभिः ॥५१॥**

कालस्तावच्चित्तेनैकोत्पादस्थितिनिरोधतया एकाध्वपतितत्वेन च[2] । फलादिभिरेकफलविपाकनिः-[39b.5B.IV]ष्यन्दतया । पूर्वकस्त्वेकशब्दः सहार्थे वेदितव्यः । शुभतादिभिः कुशलाकुशलाव्याकृतचित्ते कुशलाकुशलाव्याकृततया[3] । एवं दशभिः कारणैश्चित्तानुपरिवर्त्तिन उच्यन्ते । तत्र सर्वाल्प[4]चित्तमष्टपञ्चाशतो धर्माणां सहभूहेतुः । दशानां महाभूमिकानां चत्वारिंशतस्तल्लक्षणानामष्टानां च स्वलक्षणानुलक्षणानाम्[5] । तस्य पुनश्चतुःपञ्चाशद्धर्माः सहभूहेतुः । स्वान्यनुलक्षणानि स्थापयित्वा । चतुर्दशेत्यपरे । दश महाभूमिकाः स्वान्येव च लक्षणानीति । तदेतन्न वर्णयन्ति । प्रकरणग्रन्थो ह्येवं विरुध्येत । "स्याद्दुःखसत्यं सत्कायदृष्टिहेतुकं न सत्कायदृष्टे[6]र्हेतुः । सत्कायदृष्टेस्तत्संप्रयुक्तानां च धर्माणां जातिं जरां स्थितिमनित्यतां च स्थापयित्वा यत्तदन्यत् क्लिष्टं दुःखसत्यं सत्कायदृष्टिहेतुकं न सत्कायदृष्टे[7]र्हेतुः[8] । सत्कायदृष्टेश्च[9] हेतुर्यदेतत्[10] स्थापितमि"ति । ये तर्हि "तत्संप्रयुक्तानां च धर्माणा[11]मि"त्येतन्न पठन्ति तैरप्येतत् पठितव्यम् अर्थतो वैवं बोद्धव्यमिति काश्मीराः । यत्तावत् सहभूहेतुना हेतुः सहभ्वपि तत् । स्यात्तु सहभूर्न सहभूहेतुना हेतुः । धर्मस्यानुलक्षणानि । तानि चान्योन्यम् । [12]अनुपरिवर्त्त्यनुलक्षणानि चैवं[13] चित्तस्य ता-[40a.5A.V]नि चान्योन्यं सप्रतिघं चोपादायरूपमन्योन्यमप्रतिघं च किंचित् सर्वं च भूतैः प्राप्तयश्च सहजाः प्राप्तिमतः सहभुवो न सहभूहेतुरनेकफलविपाक[14]निष्यन्दत्वात् । न चैताः[15] सहचरिष्णवः'पूर्वमप्युत्पत्तेः पश्चादपीति । सर्वमप्येतत् स्यात् । किं तु प्रसिद्धहेतुफलभावानां बीजादीनामेष न्यायो न दृष्ट इति वक्तव्यमेतत् कथं सहोत्पन्नानां धर्माणां हेतुफलभाव इति । तद्यथा प्रदीपप्रभयोरङ्कुरच्छाययोश्च । संप्रधार्यं तावदेतत्किं प्रभायाः प्रदीपो हेतुराहोस्वित् पूर्वोत्पन्नैव सामग्री सप्रभस्य प्रदीपस्य सच्छायस्याङ्कुरस्योत्पत्तौ हेतुरिति । इतस्तर्हि भावाभावयोस्तद्वत्त्वात् । एतद्धि हेतुहेतुमतो लक्षणमाचक्षते हैतुकाः । यस्य भावाभावयोः यस्य भावाभावौ नियमतः स हेतुरितरो हेतुमानिति । सहभुवां च धर्माणामेकस्य भावे सर्वेषां भाव एकस्याभावे

---

१. MS.····वर्त्तते । २. Y चतुर्थेन । ३. MS. ····व्याकृतया । ४. Y. सर्वाल्पं ।
५. MS. drops नां । ६. MS. दृष्टि । ७. MS. दृष्टि । ८. Y. omits न सत्कायदृष्टेर्हेतुः । ९. MS. दृष्टिश्च । १०. MS. हेतुयदेतत् । ११. Y. omits च धर्माणाम् ।
१२. Y. चित्तानु···· । १३. Y. seems to read एव । १४. MS. ··· विपाकः ।
१५. Y. चैत्ताः ।

सर्वेषाभाव इति युक्तो हेतुफलभावः। स्यात्तावत्सहोत्पन्नानां परस्परं तु कथम्। अत एवाह एवं तर्ह्यविनिर्भाविणो[१]ऽप्युपादायरूपस्यान्योन्यमेष प्रसङ्गः[२] भूतैश्च सार्धं चित्तानुलक्षणादीनां च चित्तादिभिः। त्रिदण्डान्योन्यबलावस्थानवर्त्तर्हि सहभुवां हेतुफ-[40b. 5B. V]लभावः सिध्यति। मीमांस्यं तावदेतत्। किमेषां सहोत्पन्नबलेनावस्थानमाहोस्वित् पूर्वसामग्रीवशात्तथैवोत्पाद इति अन्यदपि च तत्र किंचिद्भवति[३] सूत्रकं शङ्कुको वा पृथिवी वा धारिका। एषामपि नामान्येऽपि सभागहेतुत्वादयो भवन्तीति सिद्धः सहभूहेतुः।

सभागहेतुः कतमः।

**सभागहेतुः सदृशाः**

**सदृशा** धर्माः सदृशानां धर्माणां **सभागहेतु**स्तद्यथा कुशलाः पञ्च स्कन्धाः कुशलाना[४]-मन्योन्यं क्लिष्टाः क्लिष्टानामव्याकृता अव्याकृतानां रूपमव्याकृतं पञ्चानाम्। चत्वारस्तु न रूपस्येत्यपरे। न्यूनत्वात्। कललं कललादीनां दशानामवस्थानाम् अर्वुदादयोऽर्वुदादीनामेकैकापह्रासेनैकस्मिन्निकायसभागे[५]। अन्येषु तु[६] समानजातीयेषु दशाप्यवस्था दशानाम्। बाह्येष्वपि यवो यवस्य शालिः शालेरिति विस्तरेण योज्यम्। ये तु रूपं रूपस्य नेच्छन्ति सभागहेतुं तेषामेष ग्रन्थः इच्छाविघाताय संप्रवर्त्तते "अतीतानि महाभूतान्यनागतानां हेतुरधिपति" रिति।

किं पुनः सर्वे सदृशानां सभागहेतुः। नेत्याह। किं तर्हि।

**स्वनिकायभुवः**

**स्वो** निकायो भूश्चैषां त इमे **स्वनिकायभुवः**। पञ्च निकायाः दुःख-[41a. 5A. VI]दर्शनप्रहातव्यो यावत् भावनाप्रहातव्यः। नव भूमयः। कामधातुरष्टौ च ध्यानारूप्याः। तत्र दुःखदर्शनहेयाः दुःखदर्शनहेयानां सभागहेतुर्नान्येषाम्। एवं यावत् भावनाहेया भावनाहेयानाम्। तेऽपि कामावचराः कामावचराणां प्रथमध्यानभूमिकाः प्रथमध्यानभूमिकानां यावत् भवाग्रभूमिकास्तद्भूमिकानामेव[७] नान्येषाम्। तेऽपि न सर्वे। किं तर्हि।

**अग्रजाः।**

पूर्वोत्पन्नाः पश्चिमानामुत्पन्नानुत्पन्नानां सभागहेतुः। अनागता नैव सभागहेतुः। एवमतीते कुत एतत् आह। शास्त्रात्।[८] "सभागहेतुः कतमः। पूर्वोत्पन्नानि कुशल-

---

१. MS. विनिर्भाविनो, अविनाभाविनो। २. MS. प्रसंग। ३. MS. किंचेद्।
४. MS. drops ना। ५. MS. ह्रासो...। ६. Y. omits तु। ७. MS....स्तत्भूमि...। ८. MS. शास्त्रात्सभा...।

मूलानि पश्चादुत्पन्नानां कुशलमूलानां तत्संप्रयुक्तानां च धर्माणां स्वधातौ सभागहेतुना हेतुः। एवमतीतान्यतीतप्रत्युत्पन्नानाम्। अतीतप्रत्युत्पन्नान्यनागतानामिति वक्तव्यम्"। इदमपि शास्त्रं "यो धर्मो यस्य धर्मस्य हेतुः कदाचित्स धर्मस्तस्य न हेतुः। आह। न कदाचिदि"ति। सहभूसंप्रयुक्तकविपाकहेत्वभिसन्धिवचनाददोषः एषः। यस्तु मन्यते अनागतोऽपि स धर्म उत्पद्यमानावस्थायां सभागहेतुत्वे नियतीभूतो भवत्यतस्तां चरमावस्थामभिसंधायोक्तं "न कदाचिन्न हेतुरि"ति। तस्यायमपरिहारो यस्मात्स धर्म उत्पद्य-[41b. 5B. VI]मानावस्थायाः पूर्वं सभागहेतुरभूत्वा पश्चात् भवति। इहापि च प्रश्ने यो धर्मो यस्य धर्मस्य समनन्तरः कदाचित् स धर्मस्तस्य धर्मस्य न समनन्तर इति शक्यमनया कल्पनया वक्तुं स्यान्न कदाचिदिति। कस्मादेवमाह। यदि स धर्मो नोत्पन्नो भवतीति द्विमुखसंदर्शनार्थं यथा तत्र तथेहापि कर्त्तव्यम्। यथा चेह तथा तत्रेति[1]। एवं सति को गुणो लभ्यत इत्यकौशल[2]मेवात्र शास्त्रकारस्यैव संभाव्येत[3]। तस्मात् पूर्वक एवात्र[4] परिहारः साधुः। यत्तर्हीदमुक्तम् "अनागतानां सत्कायदृष्टिं तत्संप्रयुक्तं च दुःखसत्यं स्थापयित्वा यत्तदन्यत् क्लिष्टं[5] दुःखसत्यं तत्सत्कायदृष्टिहेतुकं न सत्कायदृष्टेर्हेतुर्यत्तु स्थापितं तत्सत्कायदृष्टिहेतुकं सत्कायदृष्टेश्च हेतुरि"ति। अनागतसत्कायदृष्टिसंप्रयुक्तं दुःखसत्यं स्थापयित्वेत्येवमेतत् कर्त्तव्यमर्थतोऽपि चैवं[6] बोद्धव्यमिति। इदं तर्हि प्रज्ञप्तिभाष्यं कथं नीयते "सर्वधर्माश्चतुष्के नियता हेतौ फले आश्रये आलम्बने नियता" इति। हेतुरत्र संप्रयुक्तकहेतुः सहभूहेतुश्च। फलं पुरुषकारफलमधिपतिफलं च। आश्रयश्चक्षुरादिरालम्बनं रूपादिकमिति द्रष्टव्यम्। ननु चैवं सति सभागहेतुरभूत्वा हे-[42a. 5A. VII]तुर्भवतीति प्राप्तम्। इष्यत एवावस्थां प्रति न द्रव्यम्। अवस्थाफलं हि सामग्र्यं न द्रव्यफलम्। किं पुनः स्याद्यदि विपाकहेतुवदनागतोऽपि सभागहेतुः स्यात्। शास्त्रे तस्य ग्रहणं स्यात्। स[7] एव हि फलदानग्रहणक्रियासमर्थस्तस्यैव ग्रहणाददोषः। नैतदस्ति। निःष्यन्दफलेन हि सफलः सभागहेतुः। तच्चानागतस्यायुक्तं पूर्वपश्चिमताऽभावात्। न चोत्पन्नमनागतस्य निष्यन्दो युज्यते। यथाऽतीतं वर्त्तमानस्य। मा भूद्धेतोः पूर्वं फलमिति। नास्त्यनागतः सभागहेतुः। विपाकहेतुरपि एवमनागतो न प्राप्नोति। विपाकफलस्य पूर्वं सह चायोगादनागते चाध्वनि पूर्वपश्चिमताऽभावात्। नैतदस्ति। सभागहेतोर्विना पौर्वापर्येण सदृशः सदृशस्य सभागहेतुरित्यन्योन्यहेतुत्वादन्योन्यनिःष्यदन्ता संप्रसज्येत। नचान्योन्यनिःष्यन्दता युक्तिमतीति।

---

१. MS. तथात्रेति। २. MS. कोशल। ३. Y. ...स्यैवं संभाव्यते। ४. Y. एवैष। ५. MS. क्लिष्ट। ६. Y. Omits अपि and reads वैवं। ७. Y. य।

नत्वेव[1] विपाकहेतोर्विना[2] पौर्वापर्येणान्योन्यहेतुफलता संप्रसज्यते[3]। भिन्नलक्षणात्वाद्धेतुफलयोः। तस्मादवस्थाव्यवस्थित एव सभागहेतुर्लक्षणव्यवस्थितस्तु विपाकहेतुरित्यनागतोऽपि न वार्यते।

यदुक्तं स्वभूमिकः सभागहेतुर्भवतीति किमेष नियमः सर्वस्य सास्रवस्यैष नियमः।

**अन्योऽन्यं नवभूमिस्तु मार्गः**

सभागहेतु-[42b.5B.VII]रित्यधिकारः। अनागम्ये ध्यानान्तरिकायां चतुर्षु ध्यानेषु त्रिषु चारूप्येषु मार्गसत्यमन्योऽन्यं सभागहेतुः। किं कारणम्। आगन्तुको ह्यसौ तासु भूमिषु न तद्धातुपतितस्तद्भूमि[4]काभिस्तृष्णाभिरस्वीकृतत्वात्। अतः समानजातीयस्यान्यभूमिकस्यापि सभागहेतुर्भवति। स पुनः

**समविशिष्टयोः ॥५२॥**

न न्यूनस्य हेतुर्भवति। तद्यथा दुःखे धर्मज्ञानक्षान्तिस्तस्या एवानागतायाः सभागहेतुर्विशिष्टस्य च यावदनुत्पादज्ञानस्य। अनुत्पादज्ञानमनुत्पादज्ञानस्यैवान्यविशिष्टस्याभावात्। दर्शनभावना[5]ऽशैक्ष्यमार्गास्त्रिद्व्येकेषाम्। तत्रापि मृद्विन्द्रियमार्गो मृदुतीक्ष्णेन्द्रियमार्गस्य हेतुः। तीक्ष्णेन्द्रियमार्गस्तीक्ष्णेन्द्रियमार्गस्यैव। तद्यथा श्रद्धानुसारिश्रद्धाधिमुक्तसमयविमुक्तमार्गाः षण्णां चतुर्णां द्वयोश्च। धर्मानुसारिदृष्टिप्राप्तासमयविमुक्तमार्गाः[6] त्रयाणां द्वयोरेकस्य। कथं पुनरूर्ध्वंभूमिकस्याधोभूमिको मार्गः समो वा भवति विशिष्टो वा। इन्द्रियतो हेतूपचयतश्च। तत्र दर्शनादिमार्गाणां मृदुमृद्वादीनां चोत्तरोत्तर[7]हेतूपचिततराः। यद्यप्येकसन्ताने श्रद्धाधर्मानुसारिमार्गयोरसंभवः उत्पन्नस्त्वनागतस्य हेतुः। [43a.5A.VIII]

किं पुनः मार्ग एव समविशिष्टयोः सभागहेतुर्भवति। नेत्याह। लौकिका अपि हि

**प्रयोगजास्तयोरेव**

समविशिष्टयोः सभागहेतुर्भवन्ति न न्यूनस्य। यथा कतमे इत्याह

**श्रुतचिन्तामयादिकाः।**

एते हि प्रायोगिकाः श्रुतचिन्ताभावनामया गुणाः समविशिष्टयोरेव हेतुर्न न्यूनानाम्। तद्यथा कामावचराः श्रुतमयाः श्रुतचिन्तामयानां चिन्तामया[8]-श्चिन्तामयानाम्। भावनामयाभावात्। रूपावचराः श्रुतमयाः[9] श्रुतभावनामयानां चिन्तामयाभावात्। भावनामया भावनामयानामेव। आरूप्यावचरा भावनामया भावनामयानामेव। तेषामपि नवप्रकारभेदात् मृदुमृदवः सर्वेषां

१. Y. one reading is त्वेवं। २. Y. ....हेतुर्विना। ३. Y. one reading is संप्रयुज्यते। ४. MS. ...स्तत् भूमि। ५. MS. भावाना। ६. MS. मार्गत्रयाणां। ७. Y. चोत्तरोत्तरे। ८. Y. adds च। ९. Y. MS. ...मया।

मृदुमध्या अष्टानामित्येषा नीतिः। उपपत्तिप्रतिलम्भिकास्तु कुशला धर्माः सर्वे नवप्रकाराः परस्पर[१]सभागहेतुः। क्लिष्टा अप्येवम्। अनिवृताव्याकृतास्तु चतुर्विधाः। विपाकजा ऐर्यापथिकाः शैल्पस्थानिकाः निर्माणचित्तसहजाश्च। ते यथाक्रमं चतुस्त्रिद्व्येकेषां सभागहेतुः निर्माणचित्तमपि कामावचर[२]चतुर्ध्यानफलम्। तत्र नोत्तरध्यानफलमधरध्यानफलस्य। न ह्याभिसंस्कारिकस्य सभागहेतो-[43b.5B.VIII]र्हीयमानं फलं भवति। तद्यथा शालिर्यवादीनां मा भून्निष्फलः प्रयत्न इति। अत एव चाहुः[३] स्यादुत्पन्नोऽनास्रवो[४]ऽनुत्पन्नस्यास्रवस्य[५] न हेतुः स्यात्तद्यथा दुःखे धर्मज्ञानमुत्पन्नमनुत्पन्नानां[६] दुःखे धर्मज्ञानक्षान्तीनाम्। सर्वं च विशिष्टं न्यूनस्य न हेतुः। 'स्यादेकसन्ताननियतः पूर्वप्रतिलब्धोऽनास्रवो[७] धर्मः पश्चादुत्पन्नस्य न[८] हेतुः। स्यादनागताः दुःखे धर्मज्ञानक्षान्तयो दुःखे धर्मज्ञानस्य यस्मान्न पूर्वतरं फलमस्त्यनागतो वा सभागहेतुः। स्यात् पूर्वोत्पन्नोऽनास्रवो[९] धर्मः पश्चादुत्पन्नस्यानास्रवस्य[१०] न हेतुः। स्यादधिमात्रो न्यूनस्य। तद्यथोत्तरफल-परिहीणस्यावर[११]फलसंमुखीभावे दुःखे धर्मज्ञानप्राप्तिश्चोत्तरोत्तर[१२]क्षण[१३]सहोत्पन्नानां दुःखे धर्मज्ञानक्षान्तिप्राप्तीनां न्यूनत्वादिति। उक्तः सभागहेतुः।

**संप्रयुक्तकहेतुस्तु चित्तचैत्ताः**

एवं सति भिन्नकालसन्तानजानाम[१४]प्यन्योन्यसंप्रयुक्तकहेतुत्वप्रसङ्गः। एकाकारा[१५]-लम्बनास्तर्हि। एवमपि स एव प्रसङ्गः। एककालास्तर्हि। एवं तर्हि सति भिन्न-सन्तानजानामपि प्रसङ्गो नवचन्द्रादीनि[१६] पश्यताम्। [44a. 5A1.I] तस्मात्तर्हि

**समाश्रयाः ॥५३॥**

समान आश्रयो येषां ते चित्तचैत्ताः अन्योन्यं संप्रयुक्तकहेतुः। समान इत्यभिन्न-स्तद्यथा य एव चक्षुरिन्द्रियक्षणश्चक्षुर्विज्ञानस्याश्रयः स एव तत्संप्रयुक्तानां वेदना-दीनामेव यावन्मनः। इन्द्रियक्षणो मनोविज्ञानतत्संप्रयुक्तानां वेदितव्यः। यः संप्रयुक्तकहेतुः सहभूहेतुरपि सः। अथ केनार्थेन सहभूहेतुः केन संप्रयुक्तकहेतुः। अन्योन्यफलार्थेन सहभूहेतुः। सहसार्थिका[१७]न्योन्यबलमार्गप्रयाणवत्। पञ्चभिः समताभिः संप्रयोगार्थेन संप्रयुक्तकहेतुः। तेषामेव सार्थिकानां समानान्नपाना[१८]-दिपरिभोगक्रियाप्रयोगवत्। एकेनापि हि विना सर्वेण[१९] न संप्रयुज्यन्त इत्ययमेषां हेतुभावः। उक्तः संप्रयुक्तकहेतुः।

---

१. Y. परस्परं। २. Y. कामावचरं। ३. Y. omits च। ४. MS. ....श्रवो। ५. MS. ... श्रवस्य। ६. Y. अनुत्पत्तिधर्माणां। ७. MS. नाश्रवो। ८. MS. ने। ९. MS. ....नाश्रवो। १०. MS. ...स्यनाश्रवस्य। ११. Y. अधर। १२. Y. omits one उत्तर। १३. MS. लक्षण। १४. MS. ....जानां अप्य। १५. MS. कार। १६. Y. adds हि। १७. MS. सहनसार्थिका। १८. Y. स्नानशयन। १९. Y. सर्वे।

सर्वत्रगहेतुः कतमः ।

**सर्वत्रगाख्यः क्लिष्टानां स्वभूमौ पूर्वसर्वगाः ।**

स्वभूमिकाः पूर्वोत्पन्नाः सर्वत्रगा धर्माः पश्चिमानां क्लिष्टानां धर्माणां सर्वत्रगहेतुः । तान् पुनः पश्चादनुशयनिर्देशस्थान एव व्याख्यास्यामः । क्लिष्टधर्मसामान्यकारणत्वेनायं सभागहेतोः पृथक् व्यवस्थाप्यते । निकायान्तरीयाणामपि हेतुत्वा- [44b. $5B_1$. I]देषां हि प्रभावेणान्यनैकायिका अपि क्लेशा उपजायन्ते । किमार्यपुद्गलस्यापि क्लिष्टा धर्माः सर्वत्रगहेतुकाः । सर्व एव क्लिष्टा धर्मा दर्शनप्रहातव्यहेतुका इति काश्मीराः । तथा प्रकरणेषूक्तं "दर्शनप्रहातव्यहेतुकाः धर्माः कतमे । क्लिष्टा धर्माः यश्च दर्शनप्रहातव्यानां धर्माणां विपाक इति । अव्याकृतहेतुका धर्माः कतमे ।[1] अव्याकृताः संस्कृता धर्मा अकुशलाश्चेति । दुःखसत्यं स्यात् सत्कायदृष्टिहेतुकं न सत्कायदृष्टेर्हेतुरिति विस्तरो यावन्न सत्कायदृष्टेः तेषां च धर्माणां जातिं जरां स्थितिमनित्यतां च स्थापयित्वा यत्तदन्यत् क्लिष्टं दुःखसत्य"मिति । इदं तर्हि प्रज्ञप्तिभाष्यं कथं नीयते "स्याद्धर्मोऽकुशलोऽकुशलहेतुक एव । स्यादार्यपुद्गलः कामवैराग्यात् परिहीयमाणो यां[2] तत्प्रथमतः क्लिष्टां चेतनां संमुखीकरोती"ति[3] । अप्रहीणहेतुमेतत् संधायोक्तम् । दर्शनप्रहातव्यो हि तस्या हेतुः प्रहीणत्वान्नोक्तः । उक्तः सर्वत्रगहेतुः ।

विपाकहेतुः कतमः ।

**विपाकहेतुरशुभाः कुशलाश्चैव सास्रवाः ॥५४॥**

अकुशलाः कुशलसास्रवाश्च धर्मा विपाकहेतुः । विपाकधर्मत्वात् । कस्मादव्याकृता धर्माः विपाकं न निर्वर्त्तयन्ति[4] । दुर्बलत्वात् । पूति[5]बी-[45a. $5A_1$. II]जवत् । कस्मान्नानास्रवाः ।[6] तृष्णानभिष्यन्दितत्वात् । अनभिष्यन्दितसारबीजवत् । अप्रतिसंयुक्ता हि किंप्रतिसंयुक्तं विपाकमभिनिर्वर्त्तयेयुः । शेषास्तूभयविध[7]त्वान्निर्वर्त्तयन्ति । साराभिष्यन्दितबीजवत् । कथमिदं विज्ञातव्यं विपाकस्य हेतुर्विपाकहेतुराहोस्विद्विपाक एव हेतुर्विपाकहेतुः । किं चातः । यदि विपाकस्य हेतुर्विपाकहेतुः "विपाकजं चक्षुरि"ति एतन्न प्राप्नोति । अथ विपाक एव हेतुर्विपाकहेतुः "कर्मणो विपाक" इत्येतन्न प्राप्नोति । नैष दोषः । "उभयथापि योग" इत्युक्तं प्राक् । अथ विपाक इति कोऽर्थः । विसदृशः पाको विपाकः । अन्येषां तु हेतूनां सदृशः पाकः । एकस्यो-

---

१. MS. कतमेऽव्या... । २. Y. यः । One reading is या तत्र प्रथमतः । ३. MS. looks like यम्मुखी.... । ४. MS. निवर्त्तयन्ति । ५. MS. प्रति । ६. ....स्रवास्तृष्णा.... । ७. MS. ....विधि ।

भयथेति वैभाषिकाः। नैव तु तेषां पाको युक्तः। पाको हि नाम सन्ततिपरिणामविशेषजः फलपर्यन्तः। न च सहभूसंप्रयुक्तहेत्वोः सन्ततिपरिणामविशेषजं फलमस्ति। न चापि सभागहेत्वादीनां फलपर्यन्तोऽस्ति। पुनः पुनः कुशलाद्यासंसारफलत्वात्। कामधातावेकस्कन्धको विपाकहेतुरेकफलः प्रत्ययस्तज्जात्यादयश्च। द्विस्कन्धक एकफलः कायवाक्कर्म तज्जात्यादयश्च। चतुस्कन्धक एकफलः कुशलाकुशलाश्चित्तचैत्ताः सह जात्यादिभिः॥ रूप-[45b. 5B₁. II]धातावेकस्कन्धको विपाकहेतुरेकफलः प्राप्तिरसंज्ञिसमापत्तिश्च सह जात्यादिभिः। द्विस्कन्धक एकफलः प्रथमे ध्याने विज्ञप्तिः सह जात्यादिभिः। चतुस्कन्धक एकफलः कुशले चेतस्यसमाहिते। पञ्चस्कन्धक एकफलः समाहिते॥ आरूप्यधातावेकस्कन्धको विपाकहेतुरेकफलः प्राप्तिर्निरोधसमापत्तिश्च सह जात्यादिभिः। चतुस्कन्धकः कुशलाश्चित्तचैत्ताः तज्जात्यादयश्च। अस्ति कर्म यस्यैकमेव धर्मायतनं विपाको विपच्यते जीवितेन्द्रियम्। यस्य मनआयतनं तस्य द्वे मनोधर्मायतने। एवं यस्य स्प्रष्टव्यायतनं यस्य कायायतनं तस्य त्रीणि काय[1]स्प्रष्टव्यधर्मायतनानि। एवं यस्य रूपगन्धरसायतनानि। यस्य चक्षुरायतनं तस्य चत्वारि चक्षुःकायस्प्रष्टव्यधर्मायतनानि। एवं यस्य श्रोत्रघ्राणजिह्वायतनानि। अस्ति तत् कर्म यस्य पञ्च षट् सप्ताष्टौ नव दशैकादशायतनानि विपाको विपच्यते। विचित्राविचित्रफलत्वात् कर्मणो बाह्यबीजवत्। तद्यथा बाह्यानि बीजानि कानिचिद्विचित्रफलानि भवन्ति। तद्यथा पद्मदाडिमन्यग्रोधादीनाम्। कानिचिदविचित्रफलानि। तद्यथा यवगोधूमादीनाम्। एका-[46a. 5A₁. III]ध्विकस्य कर्मणस्त्रैयध्विको विपाको विपच्यते। न तु द्वैयध्विकस्याप्येकाध्विको मा भूदतिन्यूनं हेतोः फलमिति[2]। एकमेकक्षणिकस्य बहुक्षणिको ननु विपर्ययात्। न च कर्मणा सह विपाको विपच्यते नाप्यनन्तरं समनन्तरप्रत्ययाकृष्टत्वात् समनन्तरक्षणस्य। प्रवाहापेक्षो हि विपाकहेतुः।

अथ क एषां हेतूनामध्वनियमः। उक्त[3] एषामर्थतोऽध्वनियमः नतु सूत्रित इत्यतः सूत्र्यते

**सर्वत्रगः सभागश्च द्व्यध्वगौ**

अतीतप्रत्युत्पन्नावेव अनागतौ न स्तः। उक्तं चात्र कारणम्

**त्र्यध्वगा[4]स्त्रयः।**

सहभूसंप्रयुक्तकविपाकहेतव[5]स्त्रिकालाः। कारणहेतुस्तु कालनियमानुपदर्शनात्। सर्वाध्वक[6]श्चाध्वविप्रयुक्तश्च[7] वेदितव्यः। उक्ता हेतवः।

किं पुनस्तत्फलं यस्यैते[8] हेतवः।

---

१. MS. काया। २. MS. मा भूदिति न्यूनहेतोः फलमिति। ३. उक्तम्। ४. Y. त्र्यध्वका। ५. MS. drops व। ६. Y. one reading is सर्वाध्वग। ७. Y. विनिर्मुक्तश्च। ८. MS यस्येते। Y. यस्यैतद्।

संस्कृतं सविसंयोगं[1] फलं

फलं धर्माः। कतमे। "संस्कृता धर्माः प्रतिसंख्यानिरोधश्चे"ति शास्त्रम्। एवं तर्हि फलत्वादसंस्कृतस्य हेतुना भवितव्यं यस्य तत् फलं हेतुत्वाच्च फलेन भवितव्यं यस्य तद्धेतुः। संस्कृतस्यैव धर्मस्य हेतुफले भवतः।

नासंस्कृतस्य ते[2] ॥५५॥

किं कारणम्। षड्विधहेत्वसंभवात् पञ्चविधफलासंभवाच्च। कस्मात् मार्गो[3] विसंयोगस्य कारणहे-[46b.5B1.III]तुर्नेष्यते। यस्मात् स उत्पादाविघ्नभावेन व्यवस्थापितो न चासंस्कृतमुत्पत्तिमत्। कस्येदानीं तत्फलं कथं वा मार्गस्य फलम्। तद्बलेन प्राप्तेः। प्राप्तिरेव तर्हि मार्गस्य फलं प्राप्नोति। तस्यामेव तस्य सामर्थ्यान्न विसंयोगः[4]। अन्यथा ह्यस्य प्राप्तौ सामर्थ्यमन्यथा विसंयोगे। कथमस्य प्राप्तौ सामर्थ्यम्।[5] उत्पादनात्। कथं विसंयोगे। प्रापणात्। तस्मान्न[6] तावदस्य मार्गः कथंचिदपि हेतुः। फलं चास्य विसंयोगः। अथासत्यधिपतिफले कथमसंस्कृतं कारणहेतुः।[7] उत्पत्त्यनावरणभावेन कारणहेतुः। न चास्य फलमस्त्यध्वविनिर्मुक्तस्य फलप्रतिग्रहणदानासमर्थत्वात्। नैव हि क्वचिदसंस्कृतं भगवता हेतुरित्युक्तम्। उक्तं तु पर्यायेण[8] हेतुरिति सौत्रान्तिकाः। कथमुक्तम्।

"ये हेतवो ये प्रत्यया रूपस्योत्पादाय तेऽप्यनित्याः।
अनित्यान् खलु हेतुप्रत्ययान् प्रतीत्योत्पन्नं रूपं कुतो नित्यं भविष्यति"

एवं यावद्धि विज्ञानमिति। एवं तर्हि विज्ञानस्यालम्बनप्रत्ययोऽप्यसंस्कृतं न प्राप्नोति। उत्पादायेत्यवधारणात्। प्राप्नोति।

"ये हेतवो ये प्रत्यया विज्ञानस्योत्पादाय तेऽप्यनित्या"

इत्युक्तं नतूक्तं ये विज्ञानस्य प्रत्ययाः ते-[47a.5A1.IV]प्यनित्या इति। ननु च हेतवोऽपि य उत्पादाय त एवानित्या इति वचनादसंस्कृतस्यानावरणभावमात्रेण कारणहेतुत्वाप्रतिषेधः। उक्त आलम्बनप्रत्ययः सूत्रे न त्वनावरणहेतुरिति न सूत्रे सिध्यत्यसंस्कृतस्य हेतुभावः। यद्यपि नोक्तो नतु प्रतिषिद्धः। सूत्राणि च बहून्यन्तर्हितानीति कथमेतन्निर्धार्यते नोक्त इति।

अथ कोऽयं विसंयोगो नाम। ननु चोक्तं प्राक् "प्रतिसंख्यानिरोध" इति। तदानीं "प्रतिसंख्यानिरोधः कतमो यो विसंयोग" इत्युक्तमिदानीं [9]विसंयोगः

---

१. Y. G. सविसंयोगं। २. MS. looks like तौ। ३. MS. कस्मात्मार्गो। ४. Y. seems to quote a प्रतीक here as तत्रासामर्थ्यात्। ५. MS. ...र्थ्यमुत्पादनात्। ६. Y. adds च। ७. MS. ....हेतुरुत्प...। ८. MS. पर्यायेणा। ९. MS. drops वि।

कतमः। यः प्रतिसंख्यानिरोध इत्युच्यते। तदिदमितरेतराश्रयं व्याख्यानमसमर्थं तत्स्वभावद्योतने। तस्मादन्यथा तत्स्वभावो वक्तव्यः। आर्यैरेव तत्स्वभावः प्रत्यात्मवेद्यः। एतावत्तु शक्यते वक्तुं नित्यं[1] कुशलं चास्ति द्रव्यान्तरम्। तद्वि-संयोगश्चोच्यते प्रतिसंख्यानिरोधश्चेति। सर्वमेवासंस्कृतमद्रव्यमिति सौत्रान्तिकाः। नहि तद्रूपवेदनादिवत् भावान्तरमस्ति। किं तर्हि। स्प्रष्टव्याभावमात्रमाकाशम्। तद्यथा ह्यन्धकारे प्रतिघातमविन्दन्त आकाशमित्याहुः। उत्पन्नानुशयजन्मनिरोधः[2] प्रतिसंख्याबलेनान्यस्यानुत्पादः प्रतिसंख्यानिरो-[47b. 5B1. IV]धः। विनैव प्रतिसंख्यया[3] प्रत्ययवैकल्यादनुत्पादो यः सोऽप्रतिसंख्यानिरोधः। तद्यथा निकाय-सभागशेषस्यान्तरामरणे। निकायान्तरीयाः पुनराहुः। अनुशयानामुत्पत्तौ प्रज्ञायाः सामर्थ्यमतोऽसौ प्रतिसंख्यानिरोधः। यस्तु पुनः दुःखस्यानुत्पादः सः उत्पादकारणा-नुशयवैकल्यादेवेति न तस्मिन्प्रज्ञायाः सामर्थ्यमस्त्यतोऽसावप्रतिसंख्यानिरोध इति। सोऽपि तु नान्तरेण प्रतिसंख्यां सिध्यतीति प्रतिसंख्यानिरोध एवासौ। य एवोत्प-न्नस्य पश्चादभावः स एव स्वरस[4]निरोधादप्रतिसंख्यानिरोध इत्यपरे। अस्यां तु कल्पनायामनित्यो[5]ऽप्रतिसंख्यानिरोधः प्राप्नोत्यविनष्टे तदभावात्। ननु च प्रति-संख्यानिरोधोऽप्यनित्यः प्राप्नोति। प्रतिसंख्यापूर्वकत्वात्। न वै स प्रतिसंख्यापूर्वको नहि पूर्वं प्रतिसंख्या पश्चादनुत्पन्नानामनुत्पादः। किं तर्हि। पूर्वमेव स तेषामनुत्पा-दोऽस्ति। विना तु प्रतिसंख्यया ये धर्मा उत्पत्स्यन्ते[6] तदुत्पन्नायां प्रतिसंख्यायां पुनर्नोपपद्यन्त इति।[7] एतदत्र प्रतिसंख्यायाः सामर्थ्यं यदुताकृतोत्पत्तिप्रति-बन्धानामुत्पत्तिप्रतिबन्धभावः। यदि तर्हि अनुत्पाद एव निर्वाणमिदं सूत्रपदं [48a. 5A1. V] कथं नीयते "पञ्चेमानीन्द्रियाणि आसेवितानि भावितानि बहुलीकृतान्यतीतानागतप्रत्युत्पन्नस्य दुःखस्य प्रहाणाय संवर्त्तन्त" इति। प्रहाणं हि निर्वाणमनागतस्यैव चानुत्पादो नातीतप्रत्युत्पन्नस्येति। अस्त्येतदेवम्। किं तु तदालम्बनक्लेशप्रहाणात् दुःखस्य प्रहाणमुक्तं भगवता "यो रूपे च्छन्दरागस्तं प्रजहीत। च्छन्दरागे प्रहीणे एवं वस्तद्रूपं प्रहीणं भविष्यति परिज्ञातं विस्तरेण यावद् विज्ञानमि"ति।[8] एवं त्रैयध्विकस्यापि दुःखस्य प्रहाणं युज्यते। अथाप्यतीतानागतप्रत्युत्पन्नस्य क्लेशस्य प्रहाणायेत्युच्येत। अत्राप्येष नयः। अथवाऽयमभिप्रायो भवेदतीतः क्लेशः पौर्वजन्मिकः प्रत्युत्पन्नः क्लेश ऐहजन्मिको यथा तृष्णा[9]विचरितेष्वष्टादश तृष्णाविचरितान्यतीतमध्वानमुपादायेत्यतीतं जन्माधिकृत्योक्तमेवं यावत् प्रत्युत्पन्नम्। तेन च क्लेशद्वयेनास्यां सन्ततौ बीजभाव

---

१. MS. वक्तुंन्नित्यं। २. Y. निरोधे। ३. MS. प्रतिसंख्या। ४. Y. स्वरसं। ५. MS. ...नायां। अनित्यो। ६. MS. उत्पत्स्यन्त। ७. MS. इत्येत...। ८. MS. ...मित्येवं। ९. MS. looks like दृष्टा।

आहितोऽनागतस्योत्पत्तये[1]। तस्य प्रहाणात्तदपि प्रहीणं भवति। यथा विपाकक्षयात्कर्मं क्षीणं भवति। अनागतस्य पुनर्दुःखस्य क्लेशस्य वा वीजाभावात् अत्यन्तमनुत्पादः प्रहाणम्। अन्यथा ह्यतीतप्रत्युत्पन्नस्य किं प्रहा-[48b. 5B1. V]-तव्यम्। नहि निरुद्धे निरोधाभिमुखे च यत्नः सार्थको भवतीति। यद्यसंस्कृतं नास्त्येव, यदुक्तं भगवता "ये केचिद्धर्माः संस्कृता वा[2]ऽसंस्कृता वा विरागस्तेषामग्र आख्यायते" इति कथमसतामसन्नग्रो भवितुमर्हति। न वै नास्त्येवासंस्कृतमिति ब्रूमः। एतत्तु तदीदृशं यथाऽस्माभिरुक्तम्। तद्यथा अस्ति शब्दस्य प्रागभावोऽस्ति पश्चादभाव इत्युच्यते। अथ च पुनर्नाभावो भावः सिध्यति। एवमसंस्कृतमपि द्रष्टव्यम्। अभावोऽपि च[3] कश्चित् प्रशस्यतमो भवति यः सकलस्योपद्रवस्यात्यन्तमभाव इत्यन्येषां सोऽग्र इति प्रशंसां लब्धुमर्हति। विनेयानां तस्मिन्नुपचच्छन्दनार्थम्। यद्यप्यसंस्कृतमभावमात्रं स्यान्निरोध आर्यसत्यं न स्यात्। नहि तत् किंचिदस्तीति। कस्तावदयं सत्यार्थः।[4] ननु चाविपरीतार्थः। उभयमपि चैतदविपरीतं दृष्टमार्यैर्यद्दुत दुःखं च दुःखमेवेति दुःखाभावश्चाभाव एवेति कोऽस्यार्यसत्यत्वे विरोधः कथमभावश्च नाम तृतीयं चार्यसत्यं स्यात्। उक्तं यथार्यसत्यं द्वितीयस्यानन्तरं[5] दृष्टमुद्दृष्टं[6] चेति तृतीयं भवति। यद्यसंस्कृतमभावमात्रं स्यादाकाशनिर्वाणालम्वनविज्ञानमसदालम्वनं स्यात्। एतदतीतानागतस्यास्तित्वचिन्तायां चिन्तयिष्यामः। य-[49a. 5A1. VI]दि पुनर्द्रव्यमेवासंस्कृतमिष्येत किं स्यात्। किं च पुनः स्यात्। वैभाषिकपक्षः पालितः स्यात्। देवता एनं पालयिष्यन्ति पालनीयं चेत्[7] मंस्यते। अभूतं तु परिकल्पितं स्यात्। किं कारणम्। नहि तस्य रूपवेदनादिवत् स्वभाव उपलभ्यते नचापि चक्षुरादिवत्कर्म। अमुष्य च वस्तुनोऽयं निरोध इति षष्ठीव्यवस्था कथं प्रकल्प्यते। नहि तस्य तेन सार्धं कश्चित्संवन्धो[8] हेतुफलादिभावासंभवात्। प्रतिषेधमात्रं तु युज्यते अमुष्याभाव इति। भावान्तरत्वेऽपि यस्य क्लेशस्य प्राप्तिविच्छेदाद्यो निरोधः प्राप्यते स तस्येति व्यवदिश्यते। तस्य तर्हि[9] प्राप्तिनियमे को हेतुः। "दृष्टधर्मनिर्वाणप्राप्तौ भिक्षुरि"त्युक्तं सूत्रे। तत्र कथमभावस्य प्राप्तिः स्यात्। प्रतिपक्षलाभेन क्लेशपुनर्भवोत्पादात्यन्तविरुद्धाश्रय[10]लाभात् प्राप्तं निर्वाणमित्युच्यते। आगमश्चाप्यभावमात्रं द्योतयति।[11] एवं ह्याह। "यत् स्वल्पस्य दुःखस्याशेषप्रहाणं प्रतिनिःसर्गो व्यन्तीभावः क्षयो विरागो निरोधो व्युपशमोऽस्तंगमः अन्यस्य च दुःखस्याप्रति-

---

१. Y.·...नागतेऽस्योत्पत्तये। २. MS. चा। ३. Y. omits च। ४. MS. सत्यार्थो ननु। ५. Y. चानन्तरं। ६. Y. उद्दिष्टं। MS. मुद्दिष्ट in the lower margin। ७. MS. चेत्मंस्यते। ८. MS. ...त्सन्वो। ९. Y. तस्यैतर्हि। १०. MS. looks like पूय। ११. MS. ....यत्येवं।

सन्धिरनुत्पादोऽप्रादुर्भावः । एतत्कान्तमेतत्प्रणीतं यदुत सर्वोपाधिप्रतिनिःसर्गस्तृष्णा-क्षयो विरागो निरोधो निर्वाण"मिति । किमेवं नेष्यते [49b. 5B1. VI]नास्मिन् प्रादुर्भवतीत्यतो[1]ऽप्रादुर्भाव इति । असमर्थमितां सप्तमीं पश्यामः । किमुक्तं भवति । नास्मिन्प्रादुर्भवतीति यदि सतीत्यभिसंबध्यते नित्यमेवाप्रादुर्भावप्रसङ्गो निर्वाणस्य नित्यत्वात् । अथ प्राप्त इत्यभिसंबध्यते यत एव तत्प्राप्तिः परिकल्प्यते तस्मिन्नेव संमुखीभूते प्राप्ते वा दुःखस्येष्यतामप्रादुर्भावः । अयं च दृष्टान्त एवं सूपनीतो भवति ।

"प्रद्योतस्येव निर्वाणं विमोक्षस्तस्य चेतस" इति ।

यथा प्रद्योतस्य निर्वाणमभाव एवं भगवतोऽपि चेतसो विमोक्ष इति । अभिधर्मेऽपि चोक्तम् "अवस्तुका धर्माः कतमे । असंस्कृता धर्मा" इति । अवस्तुका अशरीरा अस्वभावा इत्युक्तं भवति । नास्यायमर्थः । कस्तर्हि । पञ्चविधवस्तु। स्वभाववस्तु यथोक्तं "यद्वस्तु प्रतिलब्धं समन्वागतः स तेन वस्तुने"ति । आलम्बनवस्तु। यथोक्तं "सर्वधर्मज्ञेया ज्ञानेन यथावस्त्वि"ति । संयोगवस्तु । यथोक्तं "यस्मिन् वस्तुनि अनुनयः संयोजनेन संप्रयुक्तः प्रतिघसंयोजनेनापि तस्मिन्नि"ति । हेतुवस्तु यथोक्तं "सवस्तुका धर्माः कतमे । संस्कृता धर्मा" इति । परिग्रहवस्तु । यथोक्तं "क्षेत्रवस्तु गृहवस्त्वि"ति । तदत्र हेतुर्वस्तुशब्देनोक्तस्तस्मा-[50a. 5A1. VII]दस्त्येवा-संस्कृतं द्रव्यत इति वैभाषिकाः । तस्य तु हेतुफले न विद्येते इति । गतं तावदेतत् ।

अथैषां फलानां कतमत् फलं कस्य हेतोः ।

**विपाकफलमन्त्यस्य**

विपाकहेतुरन्त्ये[2]ऽभिहितत्वात् अन्त्यः । तस्य **विपाकफलम्** ।

**पूर्वस्याधिपतं[3] फलम् ।**

कारणहेतुः पूर्वमुक्तत्वात् पूर्वः । तस्याधिपजं फलम् । अनावरणभावमात्रेणा-वस्थितस्य किमाधिपत्यम् । एतदेव[4] । अङ्गीभावोऽपि [5]चास्ति कारणहेतोस्तद्यथा "पञ्चसु विज्ञानकायेषु दशानामायतनानां भाजनलोके च कर्मणाम् । श्रोत्रादी-नामप्यस्ति चक्षुर्विज्ञानो[6]त्पत्तौ पारंपर्येणाधिपत्यम । श्रुत्वा द्रष्टुकामतोत्पत्ते" रित्येवमादि योज्यम् ।

**सभाग[7]सर्वत्रगयोर्निष्यन्दः**

सदृशफलत्वादनयोर्निःष्यन्दफलम् ।

---

१. Y. प्रादुर्भाव इत्यतो । २. Y. अन्ते । ३. Y. धिपजं, but he notices one reading as आधिपतं । तस्याधिपजं in the Bhasya । ४. Y. adds आधिपत्यं । ५. Y. वा । ६. Y. ....विज्ञानस्य । ७. MS. सभागः ।

**पौरुषं द्वयोः ॥५६॥**

सहभूसंप्रयुक्तकहेत्वोः पुरुषकारफलम् । पुरुषभावाव्यतिरेकात् पुरुषकारः पुरुष एव । तस्य फलं पौरुषम् । कोऽयं पुरुषकारो नाम । यस्य धर्मस्य यत् कारित्रम् । पुरुषकार इव हि पुरुषकारः । तद्यथा काकजङ्घा ओषधिर्मत्तहस्तो मनुष्य इति । किमन्येषामप्यस्ति पुरुषकारफलमुताहो द्वयोरेव ।[1] अन्येषामप्यस्त्यन्यत्र विपाक-हेतोः । यस्मात्सहोत्प-[50b. $5B_1$. VII]न्नं वा[2] समनन्तरोत्पन्नं वा पुरुषकार-फलं भवति । न चैवं[3] विपाकः । तस्याप्यस्ति विप्रकृष्टपुरुषकारफलम् । यथा कर्षकाणां सस्यमित्यपरे ।

किं पुनरिदं विपाकफलं नाम किं यावदधिपतिफलम् ।

**विपाकोऽव्याकृतो धर्मः**

अनिवृताव्याकृतो हि धर्मः विपाकः । असत्त्वाख्योऽपि स्यादत आह

**सत्त्वाख्यः**

औपचयिकोऽपि स्यात् नैःष्यन्दिकोऽप्यत आह

**व्याकृतोद्भवः ।**

कुशलाकुशलं हि विपाकं प्रति व्याकरणाद्व्याकृतम् । तस्माद्य उत्तरकालं भवति न सह[4] नान्तरं स विपाकः । एतद्विपाकस्य लक्षणम् । कस्मादसत्त्वाख्योऽर्थः कर्मजो न विपाकः । साधारणत्वात् । अन्योऽपि हि तत्तथैव परिभोक्तुं समर्थः । असाधारणस्तु विपाकः । नह्यन्यकृतस्य कर्मणोऽन्यो विपाकं प्रतिसंवेदयते । अधि-पतिफलं कस्मात् प्रतिसंवेदयते । साधारणकर्मसंभूतत्वात् ।

**निःष्यन्दो हेतुसदृशः**

हेतोर्यः सदृशो धर्मः स निष्यन्दफलम् । तद्यथा सभागसर्वत्रगहेत्वोः ।[5] यदि सर्वत्र-गहेतोरपि समानं फलं कस्मान्न सभागहेतोरेवेष्यते । यस्मात् भूमितः क्लिष्टतया चास्य सादृश्यं[6] नतु प्रकारतः । यस्य तु प्रकारतोऽपि सादृ-[51a. $5A_1$. VIII] श्यं[7] सोऽभ्युपगम्यत एव सभागहेतुः । अत एव यो यस्य सभागहेतुः सर्वत्रगहेतुरपि स तस्येति चतुष्कोटिकः क्रियते । प्रथमा कोटिरसर्वत्रगः सभागहेतुः । द्वितीया-ऽन्यनैकायिकः सर्वत्रगहेतुः । तृतीयैकनैकायिकः सर्वत्रगहेतुः । चतुर्थ्येतानाकारान् स्थापयित्वेति ।

---

१. MS. ....रेवान्ये... । २. Y. omits वा । ३. Y. न चैव । ४. Y. युगपद् ।
५. MS. हेत्वोर्यदि । ६. MS. सादृश्य । ७. MS. सादृश्य ।

**विसंयोगः क्षयो धिया ॥५७॥**

क्षयो निरोधः । धीः प्रज्ञा । तेन प्रतिसंख्या[1]निरोधो विसंयोगफलमित्युक्तं भवति ।

**यद्बलाज्जायते यत्तत्फलं पुरुषकारजम् ।**

तद्यथा अधरभूमिकस्य प्रयोगचित्तस्योपरिभूमिकः समाधिः सास्रवस्यानास्रवो ध्यानचित्तस्य निर्माणचित्तमित्येवमादि । प्रतिसंख्यानिरोधस्तु यद्बलात् प्राप्यत इति वक्तव्यम् ।

**अपूर्वः संस्कृतस्यैव संस्कृतोऽधिपतेः फलम् ॥५८॥**

पूर्वोत्पन्नादन्यः संस्कृतो धर्मः संस्कृतस्यैव सर्वस्याधिपतिफलम् । पुरुषाधिपतिफलयोः किं नाना कारणम् । कर्तुः पुरुषकारफलम् । अकर्तुरप्यधिपतिफलम् । तद्यथा शिल्पिनि[2] शिल्पं पुरुषकारफलमधिपतिफलं च । अन्येषामधिपतिफलमेव ।

अथैषां हेतूनां कतमो हेतुः कस्मिन्काले फलं प्रतिगृह्णाति ददाति वा ।

**वर्त्त-[51b. 5B1. VIII]मानाः फलं पञ्च गृह्णन्ति**

नातीताः प्रतिगृहीतत्वान्नाप्यनागता निष्पुरुषकारत्वात् । कारणहेतुरप्येवम् । स तु नावश्यं सफल इति नोच्यते ।

**द्वौ प्रयच्छतः[3] ।**

सहभूसंप्रयुक्तकहेतू वर्त्तमानौ फलं प्रयच्छतः । समानकालमेव ह्यनयोः फलदानग्रहणम् ।

**वर्त्तमानाभ्यतीतौ द्वौ**

फलं प्रयच्छतः सभागसर्वत्रगहेतू । युक्तं तावद्यदतीताविति । अथ कथं वर्त्तमानौ निष्यन्दफलं प्रयच्छतः । समनन्तरनिवर्त्तनात्[4] । निवृत्ते तु फले[5] तौ चाभ्यतीतौ भवतः । फलं चापि दत्तं न पुनस्तदेव दत्तः । अस्ति कुशलः सभागहेतुः फलं प्रतिगृह्णाति न ददातीति चतुष्कोटिकः । प्रथमा कोटिः कुशलमूलानि समुच्छिन्दन् याः प्राप्तीः सर्वपश्चाद्विजहाति । द्वितीया कुशलमूलानि प्रतिसंदधानो याः सर्वप्रथमं प्रतिलभते । एवं तु वक्तव्यम् । स्यात्ता एव प्रतिसंदधानस्य तृतीया असमुच्छिन्नकुशलमूलस्य शेषास्ववस्थासु । चतुर्थ्येतानाकारान् स्थापयित्वा । अकुशलस्य तु प्रथमा कोटिः । कामवैराग्यमनुप्राप्नुवन् याः प्राप्तीः सर्वपश्चाद्विजहाति द्वितीया कामवैराग्यात् परिहीयमाणो याः सर्वप्रथमं प्रतिलभते । एवं तु वक्तव्यम् । स्यात्ता ए-[52a.6A.I]व परिहीयमाणस्य[6] । तृतीया कामावीतरागस्य शेषास्ववस्थासु । चतुर्थ्येता-

१. MS. प्रतिख्या । २. MS. शिल्पिनी । ३. MS. प्रयंचयतः । ४. MS. निवर्त्तमानात् । ५. MS. फल । ६. ...मानस्य ।

नाकारान् स्थापयित्वा। एवं निवृताव्याकृतस्याप्यर्हत्त्वप्राप्तिपरिहाणितो यथायोगं योज्यम्। अनिवृताव्याकृतस्य पश्चात्पादकः[1]। यास्तावत् ददाति प्रतिगृह्णात्यपि सः। स्यात् प्रतिगृह्णाति न ददात्यर्हतश्चरमाः स्कन्धाः। सालम्बननियमेन तु क्षणशः। कुशलः सभागहेतुः फलं प्रतिगृह्णाति न ददातीति। चतुष्कोटिकः। प्रथमा कोटिः कुशलचित्तानन्तरं क्लिष्टमव्याकृतं वा चित्तं संमुखीकरोतीति। द्वितीया विपर्ययात्। तृतीया कुशलचित्तानन्तरं कुशलमेव। चतुर्थ्येतानाकारान् स्थापयित्वा। एवमकुशलादयोऽपि योज्याः। कथं पुनः फलं प्रतिगृहीतं भवति। तस्य बीजभावोपगमात्[2]।

एकोऽतीतः प्रयच्छति ॥५९॥

विाकहेतुरतीत एव फलं प्रयच्छति। यस्मान्न सह वा समनन्तरो वाऽस्ति विपाकः। पुनरन्ये चतुर्विधं फलमाहुः। प्रतिष्ठाफलम्। यथा जलमण्डलं वायुमण्डलस्य यावत्तृणादयः पृथिव्याः। प्रयोगफलम्। यथाऽशुभाया यावदनुत्पादज्ञानम्। सामग्रीफलम्। यथा चक्षुरादीनां चक्षुर्विज्ञानादीनि। भावनाफलम्। यथा रूपावचरस्य चि-[52b. 6B. I]त्तस्य निर्माणम्। एतत्तु[3] पुरुषकाराधिपतिफलयोरन्तर्भूतम्। उक्ता हेतवः फलानि च ॥

तत्र कतमे धर्माः कतिभिः हेतुभिरुत्पद्यन्त इत्याह समासत इमे चतुर्विधा धर्मास्तद्यथा क्लिष्टा धर्मा विपाकजाः प्रथमानास्रवास्तेभ्यश्च शेषाः। के पुनः शेषाः। विपाकवर्ज्याः अव्याकृताः प्रथमानास्रवक्षणवर्ज्याश्च कुशला इति। एते चतुर्विधा धर्माः

**क्लिष्टा विपाकजाः शेषाः प्रथमार्या यथाक्रमम्।**
**विपाकं सर्वगं हित्वा तौ सभागं च शेषजाः ॥६०॥**

क्लिष्टा धर्मा विपाकहेतुं हित्वा शेषेभ्यः पञ्चभ्यो जायन्ते। विपाकजा सर्वत्रगहेतुं हित्वा शेषेभ्यः पञ्चभ्य एव। शेषा धर्मास्तौ विपाकसर्वत्रगहेतू हित्वा शेषेभ्यश्चतुर्भ्यो जायन्ते। प्रथमानास्रवास्तौ च विपाकसर्वत्रगहेतू सभागहेतुं च हित्वा शेषेभ्यः त्रिभ्यो जायन्ते।

कतमे इमे धर्माश्चतुर्विधा निर्दिष्टा इत्याह

**चित्तचैत्ताः**

अथ ये चित्तविप्रयुक्ता रूपिणश्च धर्मास्ते कथमित्याह

**तथाऽन्येऽपि संप्रयुक्तकवर्जिताः।**

संप्रयुक्तकहेतुनैकेन वर्जिताः अन्येऽपि क्लिष्टादयो धर्मास्तथैवोत्पद्यन्ते यथा

१. MS. पश्चादुत्पादकः। २. Y. ....गमनात्। Y. notices that क्वचित् पुस्तके नास्त्येवं पाठः। ३. Y. adds. सर्वं।

चित्तचैत्ताः । तत्र क्लिष्टाश्चतुर्भ्यो विपाकजाश्च । शेषास्त्रिभ्यः प्रथमानास्रवा द्वाभ्याम् । एकहेतुसंभूतो नास्ति धर्मः ॥[53a. 6A. II.] समाप्तो हेतुविस्तरः ॥

प्रत्ययाः कतमे ।

**चत्वारः प्रत्यया उक्ताः**

क्वोक्ताः । सूत्रे । "चतस्रः प्रत्ययताः । हेतुप्रत्ययता समनन्तरप्रत्ययता आलम्बनप्रत्ययता अधिपतिप्रत्ययता चे"ति । प्रत्ययजातिः प्रत्ययता । तत्र

**हेत्वाख्यः पञ्च हेतवः ॥६१॥**

कारणहेतुवर्ज्याः पञ्च[1] हेतवो हेतुप्रत्ययः ।

**चित्तचैत्ता अचरमा उत्पन्नाः समनन्तरः ।**

अर्हतः पश्चिमानपास्योत्पन्नाश्चित्तचैत्ताः समनन्तरप्रत्ययः । समश्चायमनन्तरश्च प्रत्यय इति समनन्तरप्रत्ययः । अत एव रूपं न समनन्तरप्रत्ययो विषमोत्पत्तेः । तथाहि कामावचरस्य रूपस्यानन्तरं कदाचित् कामावचरं रूपावचरं चाविज्ञप्तिरूपमुत्पद्यते कदाचित्कामावचरं चानास्रवं चेति व्याकुलो[2] रूपसंमुखीभावः । अव्याकुलस्तु समनन्तरप्रत्ययः अनिरुद्ध एवैकस्मिन्नौप[3]चयिकरूपसन्ताने द्वितीयोत्पत्ते[4]रिति भदन्तवसुमित्रः । अल्पबहुतरोत्पत्तेरिति भदन्तः । कदाचिद्धि महतो रूपादल्पमुत्पद्यते । तद्यथा पलालराशेर्भस्म । कदाचिदल्पाद्बहूत्पद्यते । तद्यथा वटनिकायाः क्रमेण यावदनेकशाखावरोहो न्यग्रोध इति । ननु चास्ति चैत्तानामप्यल्पबहुतरोत्पत्तिः । कुशलाकुशलाव्या-[53b. 6B. II]कृतेषु चित्तेसु सवितर्कसविचारादौ च समाधित्रये । अस्ति जात्यन्तरं प्रति न स्वजातिम् । नहि[5] कदाचिद्बहुतरा वेदनोत्पद्यते संज्ञादयो वा । किं पुनः स्वजातेरेव समनन्तरप्रत्ययो भवति । नैतदस्ति । सकल एव कलापः सकलस्य कलापान्तरस्य समनन्तरप्रत्ययो नत्वल्पकाद्वेदनादिद्रव्यात् प्रभूतं वेदनादि द्रव्यमुत्पद्यत इत्येतावदेवात्रोक्तम् । सन्तानसभागिकास्तु[6] मन्यन्ते "स्वजातेरेव समनन्तरप्रत्ययः । तद्यथा चित्तं चित्तस्यैव वेदना वेदनाया एवे"ति विस्तरः । यदा त्वक्लिष्टान्तरं क्लिष्टमुत्पद्यते तस्य क्लेशस्य पूर्वनिरुद्धः क्लेशः[7] समनन्तरप्रत्ययस्तद्यथा निरोधसमापत्तिचित्तं व्युत्थानचित्तस्येति । तदेतन्न वर्त्स्यते । प्रथमानास्रवचित्तानुत्पत्तिप्रसङ्गात् चित्तविप्रयुक्ता अपि संस्काराः । अत एव व्याकुलसंमुखीभावान्न समनन्तरप्रत्ययस्त्रैधातुकाप्रतिसंयुक्तानां युगपत् संमुखीभावात् । कस्मादनागतो नेष्यते समनन्तरप्रत्ययः । व्याकुलत्वादनागतस्याध्वनः

१. MS. प्रपंच । २. Y. आकुलो । ३. MS. ···स्मिन्नाप····। ४. MS. ····त्पत्ति । ५. Y. omits हि । ६. Y. सान्तान····। ७. Y. पूर्वनिरुद्धक्लेशः ।

पूर्वोत्तरताऽभावात्[१]। कथं तर्हि भगवान् जानाति अमुष्यानागतस्यानन्तरमिदमनागतं भावीति। [54a. 6A. III] अतीतसांप्रतानुमानात्। अतीतं किलाध्वानं पश्यति भगवानेवंजातीयकात्कर्मणः एवंजातीयको विपाकः उत्पन्नो धर्माद्वा धर्मः। इदं चापि संप्रत्येवंजातीयकं कर्म। तस्मादतोऽप्येवंजातीयको विपाक उत्पत्स्यते धर्माद्वा धर्म इति जानाति। नचान्यत् ज्ञानमानुमानिकं भवति। यस्मादतीतसांप्रतानुमानेन भगवान् विकीर्णान्यनागतानि द्रव्याणि प्रत्यक्षमीक्षित्वा जानात्यनेन पुद्गलेनैवंविधं कर्म कुर्वतेदमनागतं फलं परिगृहीतमिति। एवं तर्हि भगवान् पूर्वान्तमदृष्ट्वाऽपरान्तं न जानीयात्। अन्ये पुनराहुः। फलचिह्नभूतः सत्त्वानां सन्ततौ चित्तविप्रयुक्तः संस्कारविशेषोऽस्ति यं व्यवलोक्य[२] भगवाननागतं जानात्यसंमुखीकृत्वापि[३] ध्यानमभिज्ञां चेति। नैमित्तिको हि नाम भगवान् स्यादेवं सति न पुनः साक्षात्कारी। तस्मात्सर्वमिच्छामात्रेण भगवान् जानातीति सौत्रान्तिकाः। "अचिन्त्यो हि बुद्धानां बुद्धिविषय" इत्युक्तं भगवता। अथ असत्यनागतस्य क्रमनियमावस्थाने कस्मादग्रधर्मानन्तरं दुःखे धर्मज्ञानक्षान्तिरेवोत्पद्यते नान्यो धर्मः। एवं यावद्वज्रो-[54b. 6B.III] पमानन्तरं क्षयज्ञानमेवोत्पद्यते नान्यो धर्म इति। यस्य यत्प्रतिवद्ध उत्पादः स तस्यानन्तरमुत्पद्यते। तद्यथा बीजादीनामङ्कुरादयो विनापि समनन्तरप्रत्ययेनेति। कस्मादर्हतश्चरमाश्चित्तचैत्ता न समनन्तरप्रत्ययः। अन्यचित्तासंवन्धनात्[४]। ननु चैवं समनन्तरनिरुद्धं चित्तं मनो भवतीत्यनन्तरविज्ञानाभावात् मनोऽपि चरमं चित्तं न प्राप्नोति। आश्रयभावप्रतिभावितं मनो न कारित्रप्रभावितमित्यस्त्येवाश्रयभावः। कारणान्तरवैकल्यात्तु विज्ञानान्तरं नोत्पद्यत इति। कारित्रप्रभावितस्तु समनन्तरप्रत्ययस्तेन यो धर्मः फलं प्रतिगृहीतः स सर्वैरपि धर्मैः सर्वप्राणिभिर्वा न शक्यं प्रतिवन्द्धुं यथा नोत्पद्यते[६]। ये धर्माश्चित्तसमनन्तराश्चित्तनिरन्तरा अपि ते। चतुष्कोटिकः। प्रथमा कोटिरचित्तकायाः समापत्तेर्व्युत्थान[७]चित्तं द्वितीयादयश्च समापत्तिक्षणाः। द्वितीया कोटिः[८] प्रथमस्य समापत्तिक्षणस्य सचित्तकायाश्चावस्थाया[९] जात्यादयः। तृतीया कोटिः प्रथमः समापत्तिक्षणः सचित्तिका चावस्था[१०]। चतुर्थी कोटि[११]र्द्वितीयादीनां समापत्तिक्षणानां [55a.6A IV]जात्यादयो व्युत्थानचित्तस्य च[१२]। ये धर्माश्चित्तसमनन्तराः समापत्तिनिरन्तरा अपि ते। चतुष्कोटिकः। ये तृतीयाचतुर्थ्यौ ते प्रथमाद्वितीये ये प्रथमाद्वितीये ते

१. Y. पूर्वोत्तराभावात्। २. MS. व्यवलोक्याः। ३. It should be...कृत्यापि।
३. Y....सम्बन्धात्। ५. MS. ....वात्मनोपि। ६. Y. नोत्पद्येत। ७. Y. समापत्तिव्युत्थान।
८. Y. omits कोटिः। ९. Y. सचित्तिकावस्थायां च। १०. Y. omits च।
११. Y. omits कोटिः। १२. Y. adds जात्यादयः।

तृतीयाचतुर्थ्यौ कर्त्तव्ये[1]। कथमिदानीं दूरान्तरविच्छिन्नं[2] व्युत्थानचित्तं समापत्तिचित्तस्य समनन्तरमित्युच्यते। चित्तान्तराव्यवहितत्वात्॥ उक्तः समनन्तरप्रत्ययः॥

**आलम्बनं सर्वधर्माः**

यथायोगं चक्षुर्विज्ञानस्य ससंप्रयोगस्य रूपम्। श्रोत्रविज्ञानस्य शब्दः। घ्राणविज्ञानस्य गन्धः। जिह्वाविज्ञानस्य रसः। कायविज्ञानस्य स्प्रष्टव्यम्। मनोविज्ञानस्य **सर्वधर्माः**। यो धर्मो यस्य धर्मस्यालम्बनं न कदाचित्स धर्मस्तद्धर्मस्य[3] नालम्बनम्। अनालम्ब्यमानोऽपि तथालक्षणत्वाद्।[4] यथाऽनिध्यमानमपीन्धनमुच्यते काष्ठादिकं तथालक्षणत्वादिति। त एते चित्तचैत्ता धर्मा[5] आयतनद्रव्यलक्षणनियमेनालम्बने यथास्वं नियताः। किमाश्रयनियमेनापि नियताः। ओमित्याह। उत्पन्नास्त्वाश्रयसहिता अनुत्पन्ना ह्यतीता आश्रयविश्लिष्टाः। अतीता अप्याश्रयसहिता इत्यपरे॥ उक्त आलम्बनप्रत्ययः॥

**कारणाख्योऽधिपः स्मृतः॥६२॥**

य एव कारणहेतुः स एवा-[55b. 6B.1V]धिपतिप्रत्ययः। अधिकोऽयं प्रत्यय इत्यधिपतिप्रत्ययः। आलम्बनप्रत्ययोऽपि सर्वधर्माः अधिपतिप्रत्ययोऽपीति[6] किमस्याधिक्यम्[7]। न जातु सहभुवो धर्मा आलम्बनं भवन्ति[8]। भवन्ति त्वधिपतिप्रत्यय इत्यस्यैवाधिक्यम्। अधिकस्य वा प्रत्ययः। सर्वः सर्वस्य संस्कृतस्य स्वभाववर्ज्यस्य। स्याद्धर्मो धर्मस्य चतुर्भिरपि प्रत्ययैर्न प्रत्ययः। स्यात्स्वभावः स्वभावस्य परभावोऽपि। स्यात्संस्कृतमसंस्कृतस्यासंस्कृतं चासंस्कृतस्य।

अथैते प्रत्ययाः कारित्रं कुर्वन्तः किमवस्थे धर्मे कुर्वन्ति। हेतुप्रत्ययस्तावत् पञ्चविध उक्तः। तत्र

**निरुध्यमाने कारित्रं द्वौ हेतू कुरुतः**

निरुध्यमानं नाम वर्त्तमानम्। निरोधाभिमुखत्वात्। तत्र सहभूसंप्रयुक्तकहेतू कारित्रं कुरुतः[9]। सहोत्पन्नेऽपि फले तयोर्व्यापारः[10]।

**त्रयः[11]।**

**जायमाने**

जायमानं नामानागतमुत्पादाभिमुखम्। तत्र सभागसर्वत्रगविपाकहेतवः कारित्रं कुर्वन्ति। एवं तावद्धेतुप्रत्ययः।

---

१. MS. कर्त्तव्यौ। २. MS. विचिन्नं। ३. MS. ....स्तत् धर्म्मस्य। ४. MS. ....त्वाद्यथा। ५. MS. धर्म्मायतन। ६. MS. प्रत्ययापीति। ७. MS. ....धिकां। ८. MS. भवति। ९. MS. कुर्वतः। १०. MS. ....र्व्यापार। ११. MS. त्रयो जायमाने।

**ततोऽन्यौ तु प्रत्ययौ तद्विपर्ययात्[१] ।।६३।।**

येन कारित्रन्यायेन हेतुप्रत्ययौ द्विधा कृत्वोक्तस्तद्विपर्ययात्समन्तरप्रत्ययालम्वन-प्र-[56a. 6A.V]त्ययौ वेदितव्यौ । समन्तरप्रत्ययो जायमाने कारित्रं करोत्यवकाशदानात् । आलम्वनप्रत्ययो निरुध्यमाने । वर्त्तमानैश्चित्तचैत्तै[२]र्ग्रहणात् । अधिपतिप्रत्ययस्तु सर्वस्यामवस्थायामनावरणभावेनावस्थित इत्येतदेवास्य कारित्रम् ।। उक्ताः सकारित्राः प्रत्ययाः ।।

अथ कतमो धर्मः कतिभिः प्रत्ययैरुत्पद्यते ।

**चतुर्भिश्चत्तचैत्ता हि**

तत्र हेतुप्रत्यय एषां सर्वे पञ्च हेतवः । समन्तरप्रत्ययः पूर्वकाश्चित्तचैत्ता अन्यैरव्यवहिताः । आलम्वनप्रत्ययो यथायोगं पञ्च विषयाः सर्वे धर्माश्च । अधिपतिप्रत्ययः स्वभाववर्ज्याः सर्वधर्माः ।

**समापत्तिद्वयं त्रिभिः ।**

निरोधासंज्ञिसमापत्त्यो[३]रालम्वनप्रत्ययो नास्ति । नहि ते आलम्विके । हेतुप्रत्ययस्तु तयोर्द्विविधो हेतुः । सहभूहेतुश्च जात्यादयः सभागहेतुश्च पूर्वोत्पन्ना समानभूमिकाः कुशला धर्माः । समनन्तरप्रत्ययः ससंप्रयोगं समापत्तिचित्तम् । अधिपतिप्रत्ययः पूर्ववत् । चित्ताभिसंस्कारजत्वादेते समापत्ती चित्तसमनन्तरे । चित्तोत्पत्तिविवन्धकत्वात्[४] न समनन्तरप्रत्ययः ।

**द्वाभ्यामन्ये तु जायन्ते**

अन्ये तु विप्रयुक्ता रूपिणश्च धर्मा हेत्वधि-[56b. 6B. V]पतिप्रत्ययाभ्यां जायन्ते यथाविहितमेव ।[५] आह तु "प्रत्ययेभ्यो भावा उपजायन्ते न पुनः सर्वस्यैव जगतः ईश्वरपुरुषप्रधानादिकं कारणमिति । कोऽत्र हेतुः । यदि खलु हेतुकृतां सिद्धि मन्यसे । ननु च अत एवास्य वादस्य व्युदासः प्राप्नोत्येकं कारणमीश्वरादिकं[६]सर्वस्येति । अपिच

**नेश्वरादेः क्रमादिभिः ।।६४।।**

यदि ह्येकमेव कारणमीश्वरः स्यादन्यद्वा युगपत्सर्वेण[७] जगता भवितव्यं स्यात् । दृश्यते च भावानां क्रमसंभवः । स तर्हि च्छन्दवशा[८]दीश्वरस्य स्यादयमिदानीमुत्पद्यतामयं निरुध्यतामयं पश्चादिति । च्छन्दभेदात्तर्हि सिद्धमनेकं[९] कारणं स्यात् । स

१. MS. तत् विपर्ययात् ।　२ Y. adds वर्त्तमान ।　३. MS.....समापत्त्यत्तिराल...। ४. Y. विवन्धनात् । ५. MS.....मेवाहतु । ६. MS.....मिश्वरादिकं । ७. MS. looks like सचैश । ८. MS. वसा । ९. MS. सिद्धमनेनकं ।

चापि च्छन्दभेदो युगपत् स्यात्तद्धेतोरीश्वरस्याभिन्नत्वात् । कारणान्तरभेदापेक्षणे वा[1] नेश्वर एव कारणं स्यात् । तेषामपि च क्रमोत्पत्तौ कारणान्तरभेदापेक्षणादनवस्थाप्रसङ्गः स्यादित्यनन्तरभेदायाः कारणपरंपराया अनादित्वाभ्युपगमादयमीश्वरकारणाधिमुक्तः शाक्यपूर्वीयमेव न्यायं नातिवृत्तः[2] स्यात् । यौगपद्येऽपीश्वरच्छन्दानां जगतो न[3] यौगपद्यम् । यथाच्छन्दमुत्पादनादि[4]ति चेत् । न । तेषां पश्चाद्विशेषाभावात् । कश्च तावदीश्वरस्येयता [57a. 6A. VI] सर्गप्रयासेनार्थः । यदि प्रीतिस्तां तर्हि नान्तरेणोपायं शक्तः[5] कर्त्तुमिति न तस्यामीश्वरः स्यात्तथैव चान्यस्मिन् । यदि चेश्वरो नरकादिषु प्रजां बहुभिश्चेतिभिरुपसृष्टां सृष्ट्वा तेन प्रीयते नमोऽस्तु तस्मै तादृशायेश्वराय[6] । सुगीतश्चायं तमारभ्य श्लोको भवति ।

यन्निर्दहति यत्तीक्ष्णो यदुग्रो यत्प्रतापवान् ।
मांसशोणितमज्जादो यत्ततो रुद्र उच्यत" इति ।

एकं[7] खल्वपि जगतः कारणं परिगृह्णताऽन्येषामर्थानां प्रत्यक्षः पुरुषकारो निह्नुतः स्यात् । सहापि च कारणैः[8] कारक[9]मीश्वरं कल्पयता केवलो भक्तिवादः स्यात् । कारणेभ्योऽन्यस्य तदुत्पत्तौ[10] व्यापारादर्शनात् । [11]सहकारिषु चान्येषु[12]कारणेष्वीश्वरो नेश्वरः स्यात् । अथादिसर्ग ईश्वरहेतुकः । तस्याप्यन्यानपेक्षत्वादीश्वरवदनादित्वप्रसङ्गः । एवं प्रधानेऽपि यथायोगं वाच्यम्[13] । तस्मान्न लोकस्यैकं कारणमस्ति । स्वान्येवैषां कर्माणि तस्यां तस्यां जातौ जनयन्ति । अकृतबुद्धयस्तु वराकाः स्वं स्वं विपाकफलं चानुभवन्त ईश्वरमपरं मिथ्या परिकल्पयन्ति । गतमेतद्यत्तु खलु तदुक्तं "द्वाभ्यामन्ये तु जायन्त" इति ।

अथ कथं भूतानि भूतानां हेतुप्रत्ययः ।

**द्विधा भूतानि तद्धेतुः**

[57b. 6B. VI] भूतहेतुरित्यर्थः । सभागसहभूहेतुभ्यां

**भौतिकस्य तु पञ्चधा ।**

भौतिकस्य तु भूतानि पञ्चप्रकारो हेतुः । कथम् ।

"जननान्निःश्रयात् स्थानादुपस्तम्भोपबृंहणात्"

सोऽयं कारणहेतुरेव पुनः पञ्चधा भिन्नः । जननहेतुस्तेभ्य उत्पत्तेः । निश्रयहेतुर्जातस्य भूतानुविधायित्वात् पुरुषकारफलादाचार्यादिनिःश्रयवत् । प्रतिष्ठाहेतुराधारभावात् । चित्रकृत्यवत् ।

---

१. Y. च । २. Y. नातिक्रान्तः । ३. Y. न जगतो । ४. Y. उत्पादात् । ५. MS. शाक्तः । ६. MS. तादृशायैश्वराय । ७. Y. एवं । ८. MS. कारणै । ९. Y. कारण । १०. Y. omits तदुत्पत्तौ । ११. Y. adds किंच । १२. MS. looks like चान्येषु । १३. Y. योज्यम् ।

उपस्तम्भहेतुरनुच्छेदहेतुत्वात् ।[1] एवमेषां जन्मविकाराधार[2]स्थितिवृद्धिहेतुत्वमाख्यातं भवति ।

त्रिधा भौतिकमन्योन्यं

हेतुसहभूसभागविपाकहेतुभिः कारणहेतुरविशेषवर्त्तित्वात् न सर्वदा गण्यते । तत्र सहभूहेतुरन्योन्यं चित्तानुपरिवर्त्ति कायवाक्कर्म । नान्यदुपादायरूपम् । सभागहेतुः सर्वं पूर्वोत्पन्नं सभागस्य । विपाकहेतुर्यस्य वाक्कर्मणश्चक्षुरादयो विपाकः ।

भूतानामेकधैव[3] तत् ।।६५।।

भूतानां तु तद्भौतिकं रूपं विपाकहेतुरेव यस्य कायवाक्कर्मणो भूतानि विपाकाः[4] ।

अभेदेन चित्तचैत्ताः समनन्तरप्रत्यय उक्ता नियमस्तु नोक्तः कस्य चित्तस्यानन्तरं कस्योत्पत्तिरिति । स इदानीं वक्तव्यः । तत्र तावत् समासेन द्वा-[58a. 6A. VII]दश चित्तानि । किमर्थमित्याह

कुशलाकुशलं कामे निवृतानिवृतं मनः ।

कामधातौ चत्वारि चित्तानि । कुशलमकुशलं निवृताव्याकृतमनिवृताव्याकृतं च ।

रूपारूप्येष्वकुशलादन्यत्र

रूपधातावकुशलं नास्ति । त्रीणि सन्ति । एवमारूप्यधातौ । इत्येतानि सानुस्रवाणि दश चित्तानि भवन्ति ।

अनास्रवं द्विधा ।।६६।।

शैक्षमशैक्षं च । एवमेतानि द्वादश चित्तानि भवन्ति । तत्र

कामे नव शुभाच्चित्ताच्चित्तानि

अनन्तरमिति पश्चाद्वक्ष्यति[5] । कामधातौ यत्कुशलं चित्तं तस्मादनन्तरं नव चित्तान्युत्पद्यन्ते । स्वभूमिकानि चत्वारि । रूपावचरे द्वे । समापत्तिकाले कुशलं[6] प्रतिसन्धिकाले निवृतम् । आरूप्यावचरं निवृतमेव प्रतिसन्धिकाले । अतिविप्रकृष्टत्वात् न कुशलम् । आरूप्या हि कामधातोश्चतसृभिर्दूरताभिर्दूरे । आश्रयाकारालम्बनप्रतिपक्षदूरताभिः । शैक्षमशैक्षं चेति ।

अष्टाभ्य एव तत् ।

तत्र पुनः कामावचरं कुशलं चित्तमष्टाभ्यः समनन्तरमुत्पद्यते । स्वभूमिकेभ्यश्चतुर्भ्यो रूपावचराभ्यां द्वाभ्याम् । कुशलाच्च व्युत्थानकाले । निवृताच्च क्लिष्टसमापत्त्युत्पीडितस्याधारकुशलभूमिसंश्रयणात् । शैक्षाशैक्षाभ्यां च व्युत्थानकाले ।

१. MS. ...त्वादेवं । २. MS. ...धारा । ३. MS. ....कधव । ४. Y. adds पृथक् कलापत्वात् । ५. Y. वक्ष्यते । ६. MS. कुच ।

दशभ्योऽकु-[58b. 6B. VII]शलं

शैक्षाशैक्षे हित्वा कामधातौ हि प्रतिसन्धिमुखतः सर्वेभ्यो रूपारूप्यचित्तेभ्यः समनन्तरमकुशलं चित्तमुत्पद्यते।

तस्माच्चत्वारि

अकुशलाच्चित्तात् समनन्तरं चित्तान्युत्पद्यन्ते स्वभूमिकान्येव। यथाऽकुशलमुक्तं कामधातौ

निवृतं तथा ॥६७॥

दशभ्य एव समनन्तरम्। तस्माच्च पुनश्चत्वार्येव।

पञ्चभ्योऽनिवृतं

काम इति वर्त्तते। अनिवृताव्याकृतं पञ्चभ्यः समनन्तरमुत्पद्यते। स्वभूमिकेभ्यश्चतुर्भ्यो रूपावचराच्च कुशलान्निर्माणचित्तम्।

तस्मात्सप्त चित्तान्यनन्तरम्।

अनिवृताव्याकृतात्कामावचरात्स्वभूमिकानि चत्वारि। रूपावचरे द्वे। कुशलं निर्माणचित्तादनन्तरम्। क्लिष्टं प्रतिसन्धिकाले। आरूप्यावचरं च क्लिष्टं प्रतिसन्धिकाल एव।

रूपे दशैकं च शुभात्

रूपे धातौ यत्कुशलं चित्तं तस्मादनन्तरमेकादश चित्तान्युत्पद्यन्ते। आरूप्यावचरमनिवृताव्याकृतं वर्जयित्वा।

नवभ्यस्तदनन्तरम् ॥६८॥

रूपावचरं तु कुशलं चित्तं नवभ्यः समनन्तरमुत्पद्यते। कामावचरं[1] क्लिष्टद्वयमारूप्यावचरं चानिवृताव्याकृतं हित्वा।

अष्टाभ्यो निवृतं

निवृताव्याकृतं रूपावचरं चित्तमष्टभ्य उत्पद्यते। कामावचरं क्लिष्टद्वयं शैक्षाशैक्षे च स्थापयित्वा।

तस्मात् [59a. 6A. VIII] षट्

रूपावचरान्निवृताव्याकृतादनन्तरं षट्। स्वभूमिकानि त्रीणि कामावचराणि चानिवृताव्याकृतं मुक्त्वा।

त्रिभ्योऽनिवृतं पुनः।

रूपावचरमनिवृताव्याकृतं त्रिभ्यः स्वभूमिकेभ्य एव।

---

१. Y. adds च।

तस्मात् षट्

स्वभूमिकानि त्रीणि । कामावचरे च क्लिष्टे । आरूप्यावचरं च । यथा रूपधातावनिवृताव्याकृतमुक्तम्

एवमारूप्ये तस्य नीतिः

ततस्तदप्यनिवृताव्याकृतं त्रिभ्य एवोत्पद्यते स्वभूमिकेभ्यः । तस्मादपि च षडेवोत्पद्यन्ते । स्वभूमिकानि त्रीणि अधरधातुकानि क्लिष्टानि ।

शुभात्पुनः[1] ॥६९॥

नव चित्तानि

आरूप्यावचरात् कुशलान्नव चित्तान्युत्पद्यन्ते । कामावचरं कुशलं कामरूपावचरे चानिवृताव्याकृते हित्वा ।

तत् षण्णां[2]

आरूप्यावचरं कुशलं स्वेभ्यस्त्रिभ्यो रूपावचरात् कुशलाच्छैक्षाशैक्षाभ्यां च ।

निवृतात्सप्त

आरूप्यावचरान्निवृतात्स्वभूमिकानि त्रीणि रूपावचरं कुशलं निवृतं च कामावचरं क्लिष्टद्वयम् ।

तत्तथा ।

तदपि सप्तभ्य एवोत्पद्यते । कामरूपावचराणि क्लिष्टानि शैक्षाशैक्षे च हित्वा ।

चतुर्भ्यः शैक्षम्[3]

त्रैधातुकेभ्यः कुशलेभ्यः शैक्षाच्च ।

अस्मात्तु पञ्च

तान्येव चत्वार्यशैक्षं च ।

अशैक्षं तु पञ्चकात् ॥७०॥

अ-[59b. 6B. VIII]त एवानन्तरोक्तात् ।

तस्माच्चत्वारि चित्तानि

तस्मात्पुनरशैक्षाच्चित्तात्समनन्तरं चत्वारि चित्तान्युत्पद्यन्ते । त्रैधातुकानि कुशलान्यशैक्षं च ॥ समाप्तानि द्वादश चित्तानि ॥

पुनः क्रियन्ते

१. MS. पुनर्नव । २. G. षट्कान्'.... । MS. शैक्षन्त्रैधातुकेभ्यः ।

**द्वादशैतानि विंशतिः ।**

कथं कृत्वा ।

**प्रायोगिकोपपत्त्याप्तं[1] शुभं भित्त्वा त्रिषु द्विधा ॥७१॥**

त्रिषु धातुषु कुशलं चित्तं द्विधा भिद्यते । प्रायोगिकं चोपपत्तिलाभिकं च

**विपाकजैर्यापथिकशैल्पस्थानिकनैर्मितम् ।**

**चतुर्धाऽव्याकृतं कामे**

भित्त्वेति वर्त्तते । कामावचरमनिवृताव्याकृतं चतुर्धा भिद्यते । विपाकजमैर्यापथिकं शैल्पस्थानिकं निर्माणचित्तं च ।

**रूपे शिल्पविवर्जितम् ॥७२॥**

रूपधातौ त्रिधा भिद्यते शैल्पस्थानिकं वर्जयित्वा । तत्र शिल्पाभावात् । एवमेतानि द्वादश चित्तानि पुनर्विंशतिर्भवन्ति । षोढ़ा कुशलमनिवृताव्याकृतं च सप्तधा भिद्यते[2] । ऐर्यापथिकादीनि चित्तानी[3]र्यापथाद्यभावादारूप्यधातौ न सन्ति । रूपगन्धरसस्प्रष्टव्यान्येषामालम्बनम् । शैल्पस्थानिकस्य तु शब्दोऽपि । एतानि मनोविज्ञानान्येव । पञ्च तु विज्ञानकाया ऐर्यापथिकशैल्पस्थानिकयोः प्रायोगिकाः । ऐर्यापथिकाभिनिर्हृतं मनोविज्ञानमस्ति द्वादशाय-[60a. 6A1. I]तनालम्बननित्यपरे ।

एषां पुनर्विंशतेश्चित्तानां कस्य कतमत्समनन्तरम् । कामावचराणां तावदष्टानां प्रायोगिकानन्तरं दश चित्तान्युत्पद्यन्ते । स्वभूमिकानि सप्ताऽन्यत्राभिज्ञाफलात् । रूपावचरं प्रायोगिकं शैक्षमशैक्षं च । तत् पुनरष्टचित्तानन्तरम् । स्वेभ्यः कुशलक्लिष्टेभ्यः रूपावचराभ्यां प्रायोगिक[4]क्लिष्टाभ्यां शैक्षाशैक्षाभ्यां च । उपपत्तिप्रतिलम्भिकानन्तरं नव । स्वभूमिकानि सप्ताऽन्यत्राभिज्ञाफलाद्रूपारूप्यावचरे च क्लिष्टे । तत् पुनरेकादशानन्तरम् । स्वेभ्यः सप्तभ्यः पूर्ववत् रूपावचराभ्यां प्रायोगिकक्लिष्टाभ्यां शैक्षाशैक्षाभ्यां च । अकुशल[5]निवृताऽव्याकृतानन्तरं सप्त । स्वान्येव पूर्ववत् । ते पुनश्चतुर्दशचित्तानन्तरम् । स्वेभ्यः सप्तभ्यः रूपावचरेभ्यश्चतुर्भ्योऽन्यत्र प्रायोगिकाभिज्ञाफलाभ्याम् । आरूप्यावचरेभ्यस्त्रिभ्योऽन्यत्र प्रायोगिकात् । ऐर्यापथिकविपाकजानन्तरमष्टौ । स्वभूमिकानि षडन्यत्र प्रायोगिकाभिज्ञाफलाभ्यां रूपारूप्यावचरे च क्लिष्टे । ते पुनः सप्तचित्तानन्तरं स्वेभ्य एव पूर्ववत् । शैल्पस्थानिकानन्तरं षट् । स्वान्येवान्यत्र प्रायोगिकाभिज्ञाफलाभ्याम् । तत् पुनः सप्तानन्तरं स्वेभ्य एवान्यत्राभि-[60b. 6B1. I]ज्ञाफलात् ।

१. MS. ....त्याप्त । २. Y. भित्त्वा । २. MS. चित्तादी ....। ४. MS. प्रायगिका... । ५. MS. अकुश ।

अभिज्ञाफलानन्तरं द्वे। स्वं चाभिज्ञाफलमेव। रूपावचरं च प्रायोगिकम्। तदप्यस्मादेव द्वयात्।

रूपावचराणामिदानीं षण्णां वक्षामः। प्रायोगिकानन्तरं द्वादश। कामावचरे[1] कुशले अभिज्ञाफलं च स्वानि षट् आरूप्यावचरं च[2] प्रायोगिकं शैक्षमशैक्षं च। तत् पुनर्दशचित्तानन्तरम्। कामावचराभ्यां प्रायोगिकाभिज्ञाफलाभ्यां स्वेभ्यश्चतुर्भ्योऽन्यत्रैर्यापथिकविपाकजाभ्यामारूप्यावचराभ्यां प्रायोगिकक्लिष्टाभ्यां शैक्षाशैक्षाभ्यां च। उपपत्तिप्रतिलम्भिकानन्तरमष्टौ। कामावचरे क्लिष्टे स्वानि पञ्चान्यत्राभिज्ञाफलात् आरूप्यावचरं क्लिष्टम्। तत् पुनः पञ्चभ्यः स्वेभ्यः एवान्यत्राभिज्ञाफलात्। क्लिष्टानन्तरं नव। कामावचराणि चत्वारि कुशलक्लिष्टानि स्वानि पञ्चान्यत्राभिज्ञाफलात्। तत् पुनरेकादशचित्तानन्तरम्। कामावचरेभ्य उत्पत्तिप्रतिलम्भिकैर्यापथिक[3]विपाकजेभ्यः स्वेभ्यः पञ्चभ्योऽन्यत्राभिज्ञाफलात् आरूप्यावचरेभ्यस्त्रिभ्योऽन्यत्र प्रायोगिकात्। ऐर्यापथिकानन्तरं सप्त। कामावचरे क्लिष्टे स्वानि चत्वार्यन्यत्र प्रायोगिकाभिज्ञाफलाभ्यामारूप्यावचरं च क्लिष्टम्। त-[61a. 6A1. II]त् पुनः पञ्चानन्तरं स्वेभ्य एवान्यत्राभिज्ञाफलात्। एवं विपाकजं वक्तव्यम्। अभिज्ञाफलानन्तरं द्वे। स्वे एव प्रायोगिकाभिज्ञाफले। तदप्याभ्यामेव।

आरूप्यावचराणामिदानीं चतुर्णां वक्ष्यामः। प्रायोगिकानन्तरं सप्त। रूपावचरं प्रायोगिकं स्वानि चत्वारि शैक्षमशैक्षं च[5]। तत् पुनः षट्चित्तानन्तरम्। रूपावचरात् प्रायोगिकात् स्वेभ्यस्त्रिभ्योऽन्यत्र विपाकजात् शैक्षाशैक्षाभ्यां च। उपपत्तिप्रातिलम्भिकानन्तरं[6] सप्त। स्वानि चत्वार्यधरभूमिकानि[7] च क्लिष्टानि। तत् पुनश्चतुर्भ्यः स्वेभ्य एव। क्लिष्टानन्तरमष्टौ। स्वानि चत्वारि रूपावचरे प्रायोगिकक्लिष्टे कामावचरे[8] क्लिष्टे। तत् पुनर्दशानन्तरम्। स्वेभ्यश्चतुर्भ्यः कामावचररूपावचरेभ्यश्चोपपत्तिप्रातिलम्भिकैर्यापथिकविपाकजेभ्यः। विपाकजानन्तरं षट्। स्वानि त्रीण्यन्यत्र[9] प्रायोगिकादधराणि त्रीणि क्लिष्टानि। तत् पुनश्चतुर्भ्यः स्वेभ्य एव। शैक्षानन्तरं षट्। त्रैधातुकानि[10] प्रायोगिकाणि[11] कामावचरमुपपत्तिप्रतिलम्भिकं[12] शैक्षमशैक्षं च। तत् पुनश्चतुर्भ्यः। प्रायोगिकेभ्यः त्रिभ्यः शैक्षाच्च। अशैक्षानन्तरं पञ्च। यथा शैक्षानन्तरं शैक्षमेकं हित्वा। तत् पुनः पञ्चभ्यः। त्रिभ्यः प्रा·[61b. 6B1. II]योगिकेभ्यः शैक्षाशैक्षाभ्यां चेति।

१. Y. कामावचर। २. Y. one reading omits च। Another reading is आरूप्यावचरप्रायोगिकशैक्षाशैक्षाणि। ३. MS. ····पथिका। ४. Y. अपि। ५. Y. शैक्षाशैक्षं च स्वानि चत्वारि। ६. MS. sometimes····प्रातिलम्भिक। ७. Y. ····धातुकानि। ८. Y. adds अपि। ९. MS. त्रीण्यत्र। १०. Y. द्विधातुकानि There seems to be overwriting in the MS.। ११. MS. प्रायोगिकानि। १२. Y. उत्पत्तिलाभिकं।

किं पुनः कारणं प्रायोगिकचित्तानन्तरं विपाकजैर्यापथिकशैल्पस्थानिकानि चित्तान्युत्पद्यन्ते न पुनरेभ्यः प्रायोगिकम्। ईर्यापथशिल्पाभिसंस्करणप्रवृत्तत्वात्[1] दुर्बलानभिसंस्कारवाहित्वाच्चैत्तानि न प्रायोगिकानुकूलानि। निष्क्रमणचित्तं त्वनभिसंस्कारवाहीति युक्तोऽस्य प्रायोगिकचित्तानन्तरमुत्पादः। एवं तर्हि क्लिष्टेभ्योऽपि प्रायोगिकं नोत्पद्यते। विगुणत्वात्। तथापि क्लेशसमुदाचारपरिखिन्नस्य तत्परिज्ञानाद्युक्तः प्रायोगिकसंमुखीभावः। कामावचरमुपपत्तिप्रतिलम्भिकं पटुत्वात् शैक्षाशैक्षाभ्यां रूपावचरप्रायोगिकाच्चानन्तरमुत्पद्यते[2]। अनभिसंस्कारवाहित्वात्तस्मादेतानि नोत्पद्यन्ते। रूपावचरक्लिष्टानन्तरं कामावचरमुपपत्तिप्रतिलम्भिकमुत्पद्यते। पटुत्वात्। आरूप्यावचरक्लिष्टानन्तरं तु रूपावचरमुपपत्तिप्रतिलम्भिकं नोत्पद्यतेऽपटुत्वादिति ॥

त्रयो मनस्काराः। स्वलक्षणमनस्कारः। तद्यथा "रूपणालक्षणं रूप"मित्येवमादि। सामान्यलक्षणमनस्कारः। षोडशाकारसंप्रयुक्तः। अधिमुक्तिमनस्कारः। अशुभाप्रमाणारूप्यविमो-[62a. 6A₁. III]क्षाभिभ्वायतनकृत्स्नायतनादिषु। त्रिविधमनस्कारानन्तरमार्यमार्गं संमुखीकरोति तस्मादपि त्रिविधं मनस्कारम् एवं सति युक्तमिदं भवति "अशुभासहगतं स्मृतिसंबोध्यङ्गं भावयती"ति। सामान्यमनस्कारानन्तरमेवार्यमार्गं संमुखीकरोति। तस्मात्तु त्रिविधमित्यपरे। अशुभया तु चित्तं दमयित्वा सामान्यमनस्कारानन्तरं मार्गं[3] संमुखीकरोति।[4] अतः पारंपर्यमभिसंधायोक्तम् "अशुभासहगतं स्मृतिसंबोध्यङ्गं भावयती"ति। आर्यमार्गानन्तरमपि सामान्यमनस्कारमेवेत्यपरे। स्यात्तावदनागम्यादित्रिभमिसंनिःश्रयेण[5] नियामा[6]वक्रान्तौ तन्मार्गानन्तरं कामावचरं सामान्यमनस्कारं संमुखीकुर्याद्।[7] अथ द्वितीयादिध्यानसंनिःश्रयेण नियामा[8]वक्रान्तौ कथम्। नहि कामावचरः शक्योऽतिविप्रकृष्टत्वात्। नच तद्भूमिकः प्रतिलब्धोऽन्यत्र निर्वेधभागीयात्। नचार्यो निर्वेधभागीयं पुनः संमुखीकरोति। नहि प्राप्तफलस्य तत्प्रयोगसंमुखीभावो युक्त इति अन्योऽप्यस्य तज्जातीयः सामान्यमनस्कारो भावनां गच्छति। तद्यथा "सर्वसंस्कारा अनित्याः सर्वधर्मा अनात्मानः शान्तं निर्वाण"मिति तत्संमुखी-[62b. 6B₁. III]करिष्यति। तदेतन्न वर्णयन्ति। अनागम्यं निश्रित्यार्हत्त्वं प्राप्नुवतः तद्भूमिकं कामावचरं वा व्युत्थानं चित्तम्। आकिंचन्यायतनं निश्रित्य तद्भूमिकं भावाग्रिकं वा। शेषासु[9] स्वभूमिकमेव। कामधातौ त्रयो मनस्काराः श्रुतचिन्तामयोपपत्तिप्रतिलम्भिकाः। भावनामयो नास्ति। रूपधातौ त्रयः श्रुतभावनामयोपपत्तिप्रतिलम्भिकाः। चिन्तामयो नास्ति। यदा चिन्तयितुमारभन्ते तदैषां समाधिरेवोपतिष्ठते। आरूप्यधातौ भावनामयोपपत्तिप्रति-

१. MS. प्रवृत्तत्वा। २. MS. ····च्चानन्तमुत्पद्यते। ३. Y. आर्यमार्गं। ४. MS. करोत्यतः। ५. Y. सन्निश्रयेण। ६. MS. नियमा····। ७. MS. कुर्यादथ। ८. MS. नियमा····। ९. MS. शेषा स्वभूमि····।

लम्भिकौ। तत्र पञ्चविधमनस्कारानन्तरमार्यमार्गसंमुखीभावोऽन्यत्रोपपत्तिप्रतिलम्भिकेभ्यः। प्रयोगप्रतिवद्धत्वात्। मार्गानन्तरं तूपपत्तिप्रतिलम्भिकस्यापि कामावचरस्य संमुखीभावः। पटुत्वादिति ॥

यानि द्वादश चित्तानि उक्तान्येषां कतमस्मिंश्चित्ते कतीनां लाभः।

**क्लिष्टे त्रैधातुके लाभः षण्णां षण्णां द्वयोः**

कामावचरे[1] क्लिष्टे चित्ते संमुखीभूते षण्णां चित्तानां लाभः। तैरसमन्वागतस्य कामावचरस्य कुशलस्य विचिकित्सया कुशलमूलप्रतिसंधानाद्धातुप्रत्यागमनाच्च। अकुशलनिवृताव्याकृतयोः रूपावचरस्य च[2] क्लिष्टस्य धातुप्रत्याग-[63a. 6A₁. IV]मनात् परिहाणितश्च। आरूप्यावचरस्य क्लिष्टस्य परिहाणितः शैक्षस्य च। रूपावचरेऽपि क्लिष्टे षण्णां लाभः। रूपावचराणां त्रयाणां कामावचरस्य चानिवृताव्याकृतस्य धातुप्रत्यागमनात्। आरूप्यावचरस्य क्लिष्टस्य शैक्षस्य च परिहाणितः। आरूप्यावचरे तु क्लिष्टे द्वयोर्लाभः। परिहाणितस्तस्यैव क्लिष्टस्य शैक्षस्य च।

**शुभे।**

**त्रयाणां रूपजे**

रूपावचरे कुशले त्रयाणां चित्तानां लाभस्तस्यैव कुशलस्य कामरूपावचरयोश्चानिवृताव्याकृतयोः।

**शैक्षे चतुर्णां**

तस्यैव शैक्षस्य कामरूपावचरयोश्चानिवृताव्याकृतयोरारूप्यावचरस्य च कुशलस्य। आर्यमार्गेण कामरूपधातुवैराग्ये[3]।

**तस्य शेषिते ॥७३॥**

शेषं कृतं शेषितम्। यत्र चित्ते लाभो न व्याख्यातस्तत्र तस्यैव लाभो द्रष्टव्यो नान्यस्य[4]। अन्ये पुनरभेदेनाहुः[5]।

"क्लिष्टे चित्ते नवानां हि लाभः इत्युच्यते बुधैः।
षण्णां तु कुशले चित्ते तस्यैवा[6]व्याकृते खलु ॥"

तत्र सप्तानां कुशले चित्त इति वक्तव्यम्। कामावचरस्य कुशलस्य[63b.6B₁. IV] सम्यग्दृष्ट्या कुशलमूलप्रतिसंधानात् कामरूपावचरयोरनिवृताव्याकृतयोर्वैराग्यतः

१. Y. adds हि। २. Y. omits च। ३. Y. one reading omits धातु।
४. Y. नान्येषां। ५. MS. drops दे। ६. MS. तस्यैव।

रूपारूप्यावचरयोः कुशलयोस्ततस्त्यसमाधिलाभतः शैक्षाशैक्षस्य च नियामावक्रान्त्यर्हत्त्वयोः[1] शेषमत एव व्याख्यानादवधार्यम् । संग्रहश्लोकः ।

उपपत्तिसमापत्तिवैराग्यपरिहाणिषु ।
कुशलप्रतिसंधौ च चित्तलाभो ह्यतद्वतः ।। इति ।

।। समाप्तः प्रत्ययप्रसङ्गः ।।

अभिधर्मकोशभाष्ये इन्द्रियनिर्देशो नाम
द्वितीयं कोशस्थानं
स मा प्त मि ति ।
श्रीलामावाकस्य

१. MS. हेत्वयोः ।

# तृतीयं कोशस्थानम्

[1b. 6B₁ V] ओं नमो बुद्धाय ।

इदमिदानीं वक्तव्यम् । कामरूपारूप्यनैयम्येन चित्तादीनां कुतो निर्देशः । तत्र कतमे ते कामरूपारूप्यधातव इत्युच्यते

**नरकप्रेततिर्यञ्चो मनुष्याः षड् दिवौकसः ।**
**कामधातुः**

चतस्रो गतयः । षट्[1] च देवनिकायास्तद्यथा चातुर्महाराजकायिका[2]स्त्रायस्त्रिंशा[3] यामास्तुषिता निर्माणरतयः परनिर्मितवशवर्त्तिनश्चेत्येष कामधातुः सह भाजनलोकेन । स एष कति स्थानानीत्याह

**स नरकद्वीपभेदेन विंशतिः ॥१॥**

स्थानानीति वाक्यशेषः संबध्यते । अष्टौ महानरकाः । संजीवः कालसूत्रः संघातो रौरवो महारौरवस्तपनः प्रतापनोऽवीचिश्चेति । चत्वारो द्वीपाः । जम्बूद्वीपः पूर्वविदेहोऽवरगोदानीयः उत्तरकुरुश्च । षट् चानन्तरोक्ता देवनिकायाः प्रेताश्च विंशतिः स्थानानि । कामधातुः परनिर्मितवशवर्तिभ्यो यावदवीचिः सभाजनग्रहणेन तु यावद्वायुमण्डलम् । एतस्माच्च कामधातोः[4]

**ऊर्ध्वं सप्तदशस्थानो रूपधातुः**

कथमित्याह

**पृथक् पृथक् ।**

**ध्यानं त्रिभूमिकं तत्र**

प्रथमद्वितीयतृतीयध्यानानि प्रत्येकं त्रिभूमिकानि ।

**चतुर्थं त्वष्टभूमिकम् ॥२॥**

तत्र प्रथमध्यानं ब्रह्मकायिका ब्रह्मपुरोहिताः महाब्रह्माणः । द्वि-[2a. 6A₁. VI]-तीयं परीत्ताभा[5] अप्रमाणाभा आभास्वराः । तृतीयं परीत्तशुभा अप्रमाणशुभाः शुभकृत्स्नाः । चतुर्थमनभ्रकाः पुण्यप्रसवाः बृहत्फला अबृहा अतपाः सुदृशाः सुदर्शना अकनिष्ठा इत्येतानि सप्तदश स्थानानि रूपधातुः । सह तन्निवासिभिः सत्त्वैः षोडशेति काश्मीराः । ब्रह्मपुरोहितेष्वेव किल स्थानमुत्कृष्टतरं महाब्रह्मणः परिगण इवाभिनिर्वृत्तमेकनायकं नतु भूम्यन्तरमिति ।

---

१. Y. omits च । २. Y. चातुर्महाराजिकाः । ३. Y. त्रयस्त्रिंशा । ४. MS. धातोरूर्ध्वं । ५. MS. परीताभा ।

आरूप्यधातुरस्थानः

नह्यरूपिणां स्थानमस्ति । अतीतानागताविज्ञप्त्यरूपिणो हि धर्मा आदेशस्था इति नियमः । स तु

उपपत्त्या चतुर्विधः ।

उपपत्तिभेदेन चतुर्विध आरूप्यधातुः । यदुत आकाशानन्त्यायतनं विज्ञानानन्त्याय-तनमाकिंचन्यायतनं नैवसंज्ञानासंज्ञायतनमिति । नत्वेषां देशकृतमौत्तराधर्यं भिद्यते । यत्रैव हि देशे तत्समापत्तिलाभिनश्च्यवन्ते तत्रैवोपपद्यन्ते इति । पुनश्च तस्माच्च्य-वमानानां तत्रैवान्तराभवोऽभिनिर्वर्त्तते ।

यथा रूपिणां सत्त्वानां रूपं निश्रित्य प्रवर्त्तते चित्तसंततिरेवमारूप्येषु किं निश्रित्य प्रवर्त्तते ।

निकायं जीवितं चात्र निश्रिता चित्तसन्ततिः ॥३॥

निकायसभागं जीवितेन्द्रियं च [2b. 6B1. VI] निश्रित्येत्याभिधार्मिकाः । रूपिणामपि तर्हि सत्त्वानां किमर्थं न तदेव द्वयं निश्रित्य प्रवर्त्तते चित्तसन्ततिः । दुर्बलत्वात् । तस्याः केन वलवत्त्वम् । समापत्तिविशेषजत्वात् । सा हि समापत्ति-विभूतरूपसंज्ञा । तत एव तर्हि वलवत्त्वात् प्रवर्त्तिष्यते किं पुनर्निश्रयेण । इदं चापि वक्तव्यम् । यथा रूपिणां सत्त्वानां रूपं निश्रित्य प्रवर्त्तते निकायसभागो जीवि-तेन्द्रियं च एवमरूपिणां सत्त्वानां किं निश्रित्य प्रवर्त्तते । तदेव द्वयमन्योऽन्यम् । रूपिणामपि तर्हि किमर्थं न तदेव[1] द्वयमन्योन्यम् । दुर्बलत्वात्तयोः । तत्रेदानीं केन वलवत्त्वम्[2] । समापत्तिविशेषजत्वात् । तदेतच्चित्तसन्ततौ समानं चित्त[3]-चैत्तेषु वा । तस्मान्नास्त्यरूपिणां सत्त्वानां चित्तसन्ततेरन्यं निश्रय इति सौत्रान्तिकाः । अपि तु यस्याश्चित्तसन्ततेराक्षेपहेतुरवीततृष्णो रूपे तस्याः सह रूपेण संभवाद्रूपं निश्रित्य प्रवृत्तिर्यस्यास्तु हेतुर्वीततृष्णो रूपे तस्या अनपेक्ष्य[4] रूपं प्रवृत्तिः । हेतोस्तद्विमुखत्वादिति ।

अथ कस्मादेते कामरूपारूप्यधातव इत्युच्यन्ते । स्वलक्षणधारणाद्धातुः । कामप्रतिसंयुक्तो धातुः कामधातुः । रूपप्रतिसंयुक्तो धातू रूपधातुर्मध्यपदलोपा[5]-[3a. 6A1. VII]द्वज्रवालकवत्[6] मरिचपानकवच्च । नात्र रूपमस्तीत्यरूपः । अरूपस्य भाव आरूप्यम् । रूपणीयो वा रूप्यः । न रूप्योऽरूप्यस्तद्भाव आरूप्यम् । तत्प्रतिसंयुक्तो धातुरारूप्यधातुः । कामानां[7] धातुः कामधातुः

१. Y. तदेतत् । २. MS. बलत्वं । ३. MS. चित्तं । ४. MS. अनपेक्ष । ५. in the lower margin of this leaf i.e. [2b 6B1 VI], there is a line वज्रेण प्रतिसंयुक्तो वालक आंगुलीयकः कटको वा वज्रवालकः । This is explanation of वज्रवालकः and is apparently taken from स्फुटार्था । ६. MS. ...वत्मरि च... । ७. Y. adds वा ।

कामान् यो दधाति । एवं रूपारूप्यधातू वेदितव्यौ । कोऽयं कामो नाम । समासतः कवड़ीकाराहार[1]मैथुनोपसंहितो रागः ।

"न ते कामा यानि चित्राणि लोके संकल्परागः पुरुषस्य कामः ।
तिष्ठन्ति चित्राणि तथैव लोके अथात्र धीरा विनयन्ति काममि"ति[2] ।।

गाथाभिधानात् । आजीवक आर्यशारिपुत्रं प्रत्याह

"न ते कामा यानि चित्राणि लोके संकल्परागं वदसीह कामम् ।
भिक्षुर्भविष्यत्यपि कामभोगी संकल्पयन् सोऽकुशलान् वितर्कान्" ।

आर्यशारिपुत्र आह

"ते चेत्कामा यानि चित्राणि लोके संकल्परागो यदि ते न कामः ।
शास्ताऽपि ते भविता कामभोगी दृष्ट्वैव रूपाणि मनोरमाणि" ।।

किं पुनर्ये केचन धर्माः कामरूपारूप्यधातुषु समुदाचरन्ति सर्वे ते कामरूपारूप्यप्रतिसंयुक्ताः । नेत्याह । किं तर्हि । येषु[3] कामरूपारूप्यरागा अनुशेरते । के पुनरमी कामरूपारूप्यरागाः । ये कामरूपा-[3b. 6B₁. VII]रूप्यधातुष्वनुशेरते । इदमिदानीं तदश्ववन्धीयम् । कस्यायमश्ववन्धो यस्यायमश्वः । कस्यायमश्वः । यस्यायमश्वबन्धः । इत्युभयमपि न ज्ञायते । नेदमश्वबन्धीयम् । कृतनिर्देशानि हि स्थानानि कामधातौ । तेष्ववीतरागस्य यो रागः स कामरागः । यत्रानुशेते सोऽपि धर्मः कामप्रतिसंयुक्तः । एवं रूपारूप्यरागावधोवीतरागस्य यथायोगं वेदितव्यौ । असमाहितभूमिको वा रागः कामरागः । ध्यानारूप्येषु रागो रूपारूप्यरागः । निर्माणचित्ते कथं कामरागः । श्रुत्वा परिहाय च तदास्वादनात् । निर्माणवशेन वा निर्मायक[4]चित्तोऽपि रागः । गन्धरसनिर्माणाद्वा । तस्य कामावचरत्वम् । रूपावचरेण तयोरनिर्माणात् । किं पुनरेकमेव त्रैधातुकम् । त्रैधातुकानामन्तो नास्ति । यावदाकाशं तावन्तो धातवः । अत एव च नास्त्यपूर्वसत्त्वप्रादुर्भावः । प्रतिबुद्धोत्पादं चासंख्येयसत्त्वपरिनिर्वाणेऽपि नास्ति सत्त्वानां परिक्षय आकाशवत् ।

कथमवस्थानं लोकधातूनाम् । तिर्यक्सूत्र उक्तं तद्यथा "ईषाधारे देवे वर्षति नास्ति वीचिर्वा अन्तरिका वा अन्तरीक्षाद्वारिधाराणां प्रपतन्तीनाम् । एवं पूर्वस्यां दिशि नास्ति वीचिर्वा अ-[4a. 6A₁. VIII]न्तरिका वा लोकधातूनां संवर्त्तमानानां विवर्त्तमानां च । यथा पूर्वस्यां दिशि एवं दक्षिणस्यां पश्चिमायामुत्तरस्यामि"ति । नतूक्तमूर्ध्वमधश्चेति ।

१. MS. हारा । २. MS. कन्दमिति । ३. MS. looks like ये ह्य । ४. Y. निर्मापक ।

ऊर्ध्वमप्यधोऽपीत्यपरे। निकायान्तरपाठाद्। अकनिष्ठादूर्ध्वं पुनः कामधातुः। कामधातोश्चाधः पुनरकनिष्ठाः। यश्चैकस्मात् कामधातोर्वीतरागः स सर्वेभ्यः। एवं रूपारूप्येभ्यः। यश्च प्रथमध्यानसंनिश्रयाद्धि उत्पादयति स यत्र लोकधातौ जात उत्पादयति तत्रत्यमेव ब्रह्मलोकमुपागच्छति[1] नान्यम्। य एते त्रयो धातव उक्ताः

**नरकादिस्वनामोक्ता गतयः पञ्च तेषु**

नरकास्तिर्यञ्चः प्रेता देवा मनुष्या इति। स्वैरेव नामभिस्तेषु पञ्च गतयः प्रोक्ताः। कामधातौ चतस्रो गतयः पञ्चम्याश्च प्रदेशः। रूपारूप्यधात्वोरेकस्या देवगतेः प्रदेशः। किं पुनर्गतिनिर्मुक्ताः सन्ति धातवो यत एता धातुष्वित्युच्यन्ते। सन्ति कुशलक्लिष्टभाजनान्तराभवस्वभावा अपि धातवः[2]। यास्तु पञ्च गतयः

**ताः[3]।**

**अक्लिष्टाव्याकृता एव सत्त्वाख्या नान्तराभवः ॥४॥**

अनिवृताव्याकृता एव गतयः। अन्यथा हि गतिसंभेदः स्यात्। सत्त्वाख्या एव च नचान्तराभवस्वभावाः। प्रज्ञप्तिषूक्तं[4] "चतसृभिर्योनिभिः पञ्च गतयः संगृही- [4b. 6B1. VIII]ता नतु पञ्चभिर्गतिभिश्चतस्रो योनयः। किमसंगृहीतम्। अन्तराभव" इति। धर्मस्कन्धेऽपि चोक्तम् "चक्षुर्धातुः कतमः। चत्वारि महाभूतान्युपादाय यो रूपप्रसादश्चक्षुश्चक्षुरिन्द्रियं चक्षुरायतनं चक्षुर्धातुर्नारकस्तैर्यग्योनिकः[5] पैतृविषयिको[6] देव्यो मानुष्यको भावनामयोऽन्तराभविकश्चे"ति। सूत्रेऽपि च बहिष्कृतोऽन्तराभवो गतिभ्यः। कस्मिन् सूत्रे। "सप्त भवा नरकभवस्तिर्यग्भवः प्रेतभवो देवभवो मनुष्यभवः कर्मभवोऽन्तराभव" इति। अत्र हि पञ्च गतयः सहेतुकाः सहागमना[7]श्चोक्ताः। अत एव चानिवृताव्याकृताः सिध्यन्ति। तद्धेतोः कर्मभवस्य ताभ्यो बहिष्करणात्। काश्मीरा[8]श्च सूत्रं पठन्ति। स्थविरशारिपुत्रेणोक्तं "नारकाणामायुष्मन्नास्रवाणां[9] संमुखीभावान्नरकवेदनीयानि कर्माणि करोत्युपचिनोति। तेषामायुष्मन् कायवाङ्मनोवङ्कानां कायवाङ्मनोदोषकषायाणा[10] नरकेषु रूपं संज्ञा वेदना संस्कारो विज्ञानं विपाको विपच्यते। निर्वृत्ते विपाके नारक इति संख्यां गच्छति। तत्रायुष्मन्नारको नोपलभ्यतेऽन्यत्र तेभ्यो धर्मेभ्य"इति। अतोऽप्यनिवृताव्याकृता एव गतयः। प्रकरणग्रन्थस्तर्हि

१. MS. looks like न्तया गच्छति। २. MS. धातवो यास्तु। ३. ता अक्लिष्टा ···। ४. Y. one reading is प्रज्ञप्त्याम्। ५. MS. स्तैर्यक्योनिकः। ६. MS. पेतृ····। ७. Y. सगमनाः। ८. Y. काश्मीरकाः। ९. MS. ···श्रवाणां। १०. MS. ···यानां।

परिहार्यो "गतिषु[ a. 7A. I]सर्वेऽनुशया अनुशेरत" इति। प्रतिसंधिचित्तानि[1] हि गतीनां पञ्चप्रकाराणि सन्त्यतः सप्रवेशगतिग्रहणाददोष एव। ग्रामग्रहणे ग्रामोपचार[2]ग्रहणवत्। कुशलक्लिष्टा अपीत्यपरे। यत्तूक्तं "कर्मभवस्य ताभ्यो बहिष्करणा"दिति। नावश्यं पृथग्वचनाद्बहिष्कृतो भवति। तद्यथा पञ्चसु कषायेषु क्लेशदृष्टिकषायौ पृथगुक्तौ। न च दृष्टयो न क्लेशाः। एवं कर्मभवोऽपि गतिश्च स्यात्। पृथक् चास्य वचनं स्यात् गतिहेतुज्ञापनार्थम्। अन्तराभवेऽप्येष प्रसङ्गः। नायोगात्। गच्छन्ति तामिति गतिः। नचान्तराभवो गन्तव्यश्च्युतिदेश एवोत्पादनात्। आरूप्या अपि गतिर्न भविष्यन्ति। च्युतिदेश[3] एवोत्पादात्। एवं तर्ह्यन्तराभवत्वादेवान्तराभवो न गतिर्गत्यन्तरालत्वात्। यदि हि गतिः स्यादन्तराभव इत्येव न स्यात्। यत्तर्हि स्थविरशारिपुत्रेणोक्तं "निर्वृत्ते विपाके नारक इति संख्यां गच्छती"ति। निर्वृत्ते विपाक इत्युक्तं नतु विपाक एवेति। यत्तर्ह्युक्तं "तत्रायुष्मन्नारको नोपलभ्यतेऽन्यत्र तेभ्यो धर्मेभ्य" इति। गतिगामिनः पुद्गलद्रव्यस्य प्रतिषेधं करोति नान्यत्र स्कन्धेभ्य उपलभ्यते नारक इति न तु स्कन्धान्तरप्रतिषेधम्। अव्याकृता एव तु गतयो [5b. 7B. I]वर्ण्यन्ते वैभाषिकैः। ताश्च विपाकस्वभावा एवेत्येके। औपचयिकस्वभावा अपीत्यपरे।

अत्रैव पञ्चगतिके धातुत्रये यथाक्रमं वेदितव्याः

**नानात्वकायसंज्ञाश्च नानाकायैकसंज्ञिनः।**
**विपर्ययाच्चैककायसंज्ञाश्चारूपिणस्त्रयः॥५॥**
**विज्ञानस्थितयः सप्त**

सूत्रे उक्तं "रूपिणः सन्ति सत्त्वा नानात्वकाया नानात्वसंज्ञिनस्तद्यथा मनुष्यास्तदेकत्याश्च देवाः। इयं प्रथमा विज्ञानस्थितिः। कतमे पुनस्ते तदेकत्या देवाः। कामावचराः प्रथमध्यानभूमिकाश्च[4] प्रथमाभिनिर्वृत्तवर्ज्याः"। नानात्वेन काय एषामिति नानात्वकायाः। अनेकवर्णलिङ्गसंस्थानत्वात्। नानात्वेन संज्ञा नानात्वसंज्ञा। सैषामस्तीति नानात्वसंज्ञिनः। सुखदुःखादुःखासुखसंज्ञित्वात्। रूपिणः सन्ति नानात्वकाया एकत्वसंज्ञिनस्तद्यथा देवा ब्रह्मकायिका ये तत्प्रथमाभिनिर्वृत्ताः। इयं द्वितीया विज्ञानस्थितिः। ते हि प्रथमाभिनिर्वृत्ताः सर्व एकैकसंज्ञिनो भवन्ति अनेन वयं ब्रह्मणा सृष्टा इति। ब्रह्मणोऽप्येवं भवति मयैते सृष्टा इत्यभिन्नाकारसंज्ञानादेकत्वसंज्ञिनः। अन्यथैव तु महाब्रह्मण आरोहपरिणाह आकृतिविग्रहो वाग्भाषा [6a. 7A. II] चीवरधारणं च अन्यथा तत्पर्षद इति नानात्वकायाः। यदिदमुक्तं सूत्रे "तेषामेवं भवति इमं वयं सत्त्वमद्राक्ष्म

१. Y.सन्धिचित्तानि। २. Y.ग्रामोपविचार। ३MS ...देशमेवो....। ४. Y.प्रथमध्यानिकाश्च।

दीर्घायुषं दीर्घमध्वानं तिष्ठन्तं यावदहो वतान्येऽपि सत्त्वा इहोपपद्येरन्मम सभागतायामि"ति । अस्य च सत्त्वस्यैवंचेतसः प्रणिधिर्वयं चेहोपपन्ना[1] इति । कथं तमद्राक्षुः । आभास्वरस्था इत्येके । ततो हि ते प्रच्युताः कथमिदानीमलब्धायां द्वितीयध्यानसमापत्तौ तद्भूमिकं पूर्वनिवासमस्मार्षुः[2] लब्धायां वा[3] कथं महाब्रह्मालम्बनां शीलव्रतपरामर्शदृष्टिं निविष्टाः । अन्तराभवस्था अद्राक्षुरित्यपरे । तत्रापि न दीर्घमध्वानमवस्थातुं संभवः प्रतिबन्धाभावादिति । कथं तेषामेवं[4] भवति स्म "इमं वयं सत्त्वमद्राक्ष्म[5] दीर्घायुषं दीर्घमध्वानं तिष्ठन्तमि"ति । तस्मात्तत्रस्था एव ते तस्य पूर्ववृत्तान्तं समनुस्मरन्त एव दीर्घमध्वानं तिष्ठन्तं[6] दृष्टवन्तो दृष्ट्वा च पश्चादद्राक्ष्मेत्येषां बभूव । रूपिणः सन्ति सत्त्वा एकत्वकाया नानात्वसंज्ञिनस्तद्यथा देवा आभास्वराः । इयं तृतीया विज्ञानस्थितिः । अत्र पुनः पर्यन्तग्रहणात्सकलद्वितीयध्यानग्रहणं वेदितव्यम् । अन्यथा हि परीत्ताभा अप्र- [6b. 7B. II]माणाभाश्च कस्यां विज्ञानस्थितौ व्यवस्थाप्येरन् । तत्राभिन्नवर्णलिङ्गसंस्थानत्वादेकत्वकायाः । सुखसंज्ञित्वाददुःखासुखसंज्ञित्वाच्च नानात्वसंज्ञिनः । ते किल मौल्यां भूमौ सौमनस्येन्द्रियपरिखिन्नाः सामन्तकादुपेक्षेन्द्रियं संमुखीभवन्ति ।[7] सामन्तके चोपेक्षेन्द्रियपरिखिन्नाः पुनर्मौल्या भूमेः सौमनस्येन्द्रियं संमुखीकुर्वन्ति । यथा कामरतिपरिखिन्ना ईश्वरा धर्मरतिं प्रत्यनुभवन्ति धर्मरतिपरिखिन्नाः कामरतिमिति । ननु च शुभकृत्स्नेष्वप्येष प्रसङ्गः । न तेषां तेन सुखेनास्ति परिखेदः । किं कारणम्[8] । शान्तं हि तत्सुखमशान्तं च सौमनस्यं चेतस उत्प्लावकत्वादिति सौत्रान्तिका व्याचक्षते । सूत्र उक्तं "यथा ते नानात्वसंज्ञिनः । तत्र ये सत्त्वा आभास्वरे देवनिकायेऽचिरोपपन्ना भवन्ति नैव संवर्त्तनीकुशला न विवर्त्तनीकुशला अस्य लोकस्य ते तामर्चिषं दृष्ट्वा भीताः सन्त उद्विजन्ते संवेगमापद्यन्ते । सहैवैषार्ऽचिः[9] शून्यं ब्राह्मं विमानं दग्ध्वाऽ[10]र्वागागमिष्यतीति । तत्र ये सत्त्वा आभास्वरे देवनिकाये चिरोपपन्नाः संवर्त्तनीकुशला विवर्त्तनीकुशलाश्चास्य लोकस्य ते तान् सत्त्वान् भीतानाश्वासयन्ति । मा भैष्ट मार्षाः मा भैष्ट मार्षाः । [7a.7A.III]पूर्वमप्येषार्ऽचिः शून्यं ब्राह्मं विमानं दग्ध्वाऽत्रैवान्तर्हिते"ति । अतोऽर्चिष आगमव्यपगमसंज्ञित्वात् भीता[11] भीतसंज्ञित्वाच्च ते नानात्वसंज्ञिनो न सुखादुःखासुखसंज्ञित्वादिति । रूपिणः सन्ति सत्त्वा एकत्वकाया एकत्वसंज्ञिनस्तद्यथा देवाः शुभकृत्स्नाः । इयं चतुर्थी विज्ञानस्थितिः । तत्राभिन्न-

---

१. Y. omits इह । २. Y. अन्वस्मार्षुः । ३. Y. च । ४. MS...मेव । Y. इयं ।
५. MS...मद्राक्ष्यं । ६. MS. तिष्ठन्त । ७. Is it संमुखीकुर्वन्ति ? MS....भवन्ति ।
८. MS. कारण । ९. MS. looks like महैवैषार्चिः । १०. MS. दग्धा ।
११. MS. seems to drop भीता ।

वर्णसंस्थानलिङ्गत्वादेकत्वकायाः । एकत्वसंज्ञिनः सुखसंज्ञित्वात् । तत्र प्रथमे ध्याने क्लिष्टया संज्ञया एकत्वसंज्ञिनः । द्वितीये कुशलया संज्ञया नानात्वसंज्ञिनस्तृतीये विपाकजया संज्ञया एकत्वसंज्ञिनः । आरूप्यास्त्रयो यथासूत्रमित्येताः **सप्त विज्ञानस्थितयः** । काऽत्र विज्ञानस्थितिः । तत्प्रतिसंयुक्ताः पञ्च स्कन्धाश्चत्वारश्च यथायोगम् । शेषं कस्मान्न विज्ञानस्थितिः । यस्मात्

**शेषं तत्परिभेदवत् ।**

किं पुनः शेषम् । दुर्गतयश्चतुर्थं ध्यानं भवाग्रं च । अत्र हि विज्ञानपरिभेदाः सन्त्यत एव न विज्ञानस्थितिः । कः पुनः परिभेदः येन विज्ञानं परिभिद्यते । तत्रापायेषु दुःखा वेदना परिभेद उपघातिकत्वात् । चतुर्थे ध्याने आसंज्ञिकमसंज्ञिसमापत्तिश्च । भवाग्रे निरोधसमापत्तिश्चित्तसंततिच्छेदात् । पुनराह । यत्रेहस्थानां गन्तुकामता तत्रस्थानां चाव्युच्चलितुकामताऽसौ विज्ञानस्थितिरुक्ता । [7b. 7B. III]अपायेषु चोभयं नास्ति । चतुर्थे ध्याने सत्त्वा उच्चलितमानसाः पृथग्जना आसंज्ञिकं प्रवेष्टुकामा आर्याः शुद्धावासान् भवाग्रानपटुप्रचारत्वान्न विज्ञानस्थितिरिति । एताश्च सप्त विज्ञानस्थितयो यथोक्ताः ।

**भवाग्रासंज्ञिसत्त्वाश्च सत्त्वावासा नव स्मृताः ॥६॥**

एषु हि सत्त्वा आवसन्ति स्वेच्छया ।

**अनिच्छावसनान्नान्ये**

के पुनरन्ये । अपायाः । तेषु हि सत्त्वा अकामकाः[1] कर्मराक्षसैरावास्यन्ते । नत्विच्छया वसन्ति । अतस्तेन सत्त्वावासा बन्धनस्थानवत् । अन्यत्र सूत्रे सप्त विज्ञानस्थितय उक्ताः अन्यत्र

**चतस्रः स्थितयः पुनः ।**

कतमाश्चतस्रः । रूपोपगा विज्ञान[2]स्थितिर्वेदनोपगा संज्ञोपगा[3] संस्कारोपगा इति । तासां कः स्वभावः । ता हि यथाक्रमं

**चत्वारः सास्रवाः स्कन्धाः**

ते पुनः

**स्वभूमावेव**

नान्यत्र भूमौ । किं कारणम् । प्रतिष्ठा हि स्थितिः । न च विसभागभूमिकेषु स्कन्धेषु विज्ञानं तृष्णावशात् प्रतितिष्ठतीति । कस्मान्न विज्ञानं विज्ञानस्थितिरुच्यते यथा सप्तसु विज्ञानस्थितिषु पञ्च स्कन्धा इति । स्थातुः परिहारेण[4] स्थितिविधानात् ।

१. MS. अकामकाः । २. MS. विज्ञान विज्ञान··· । ३. MS. संज्ञोपगाः ।
४. MS. परिपरिहारेण । Y. परिवर्जनेन ।

नहि स्थातैव स्थितिरुच्यते। यथा न राजैव राजासनमिति। यांश्च धर्मानभिरुह्य विज्ञानं वाहयति नौनाविकन्यायेन ते धर्मा [8a.7A.IV] विज्ञानस्थितय उक्ताः। नतु विज्ञानं विज्ञानमेवारुह्य[1] वाहयत्यतो नोक्तमिति वैभाषिकाः। यत्तर्हि सूत्र उक्तं "विज्ञाने आहारे अस्ति नन्दी अस्ति राग इति। यत्रास्ति नन्दी अस्ति रागः प्रतिष्ठितं तत्र विज्ञानमविरूढमि"ति। तत्कथम्। "सप्त च विज्ञानस्थितयः पञ्च-स्कन्धसंगृहीता"[2] इति तत्कथम्।[3] एवं तर्ह्यभेदेनोपपत्त्यायतनसंगृहीतेषु स्कन्धेषु साभिरामायां विज्ञानप्रवृत्तौ विज्ञानं विज्ञानस्थितिः। प्रत्येकं तु यथा रूपादयो विज्ञानस्य संक्लेशाय भवन्ति। तस्माच्चतसृषु विज्ञानस्थितिषु

**केवलम् ॥७॥**

**विज्ञानं न स्थितिः[4] प्रोक्तं**

अपि च क्षेत्रभावेन भगवता चतस्रो विज्ञानस्थितयो देशिताः। वीजभावेन च सोपा-दानं विज्ञानं कृत्स्नमेवेति न पुनर्वीजं वीजस्य क्षेत्रभावेन व्यवस्थापयांवभूवेत्यभिप्रायं परिकल्पयामास। ये[5] धर्माः सहवर्त्तिनो विज्ञानस्य तेऽस्य क्षेत्रभावेन साधीयांसो भवन्तीति त एवास्य स्थितय उक्ताः॥

अथ कथं सप्तभिर्विज्ञानस्थितिभिश्चतस्रो विज्ञानस्थितयः संगृहीताश्चतसृभिर्वा सप्त। नैव हि सप्तभिश्चतस्रो नापि चतसृभिः सप्त।

**चतुष्कोटि तु संग्रहे।**

संग्रहे विचार्यमाणे चतुष्कोटिकं वेदितव्यम्। स्यात्सप्तभिः संगृहीतं न चतसृभिरि-त्येवमादि। [8b. 7B. IV] प्रथमा कोटिः सप्तसु यद्विज्ञानम्। द्वितीया अपायेषु चतुर्थे ध्याने भवाग्रे च विज्ञानवर्ज्याः स्कन्धाः। तृतीया सप्तसु चत्वारः स्कन्धा-श्चतुर्थ्येतानाकारान् स्थापयित्वा।

यच्चैतत् गत्यादिभेदभिन्नं त्रैधातुकमुक्तं वेदितव्याः

**चतस्रो योनयस्तत्र[6] सत्त्वानामण्डजादयः ॥८॥**

अण्डजा योनिर्जरायुजा संस्वेदजा उपपादुका योनिः। योनिर्नाम[7] जातिः। युवन्त्यस्यां सत्त्वा मिश्रीभवन्ति प्रसवसाम्यादिति योनिः। अण्डजा योनिः कतमा। ये सत्त्वा अण्डेभ्यो जायन्ते। तद्यथा हंसक्रौञ्चचक्रवाकमयूरशुकशारिकादयः। जरायुजा योनिः कतमा। ये सत्त्वा जरायोर्जायन्ते। तद्यथा हस्त्यश्वगो-महिषखरवराहादयः। संस्वेदजा योनिः कतमा। ये सत्त्वा भूतसंस्वेदा-ज्जायन्ते। तद्यथा कृमिकीटपतङ्गमशकादयः। उपपादुका योनिः कतमा।

१. Y. ...भिरुह्य। २. Y. पञ्चस्कन्धस्वभावाः। ३. MS. ...थमेव...। ४. G. स्थिति। ५. Y. ये च। ६. MS. योनयः। तत्र। ७. MS. योनिनाम।

ये सत्त्वा अविकला अहीनेन्द्रियाः सर्वाङ्गप्रत्यङ्गोपेताः सकृदुपजायन्ते । अत एव उपपदने[1] साधुकारित्वादुपपादुका इत्युच्यन्ते । तद्यथा देवनारकान्तराभविकादयः ।

अथ कस्यां गतौ कति योनयः संविद्यन्त इत्याह

**चतुर्धा नर[2] तिर्यञ्चः[3]**

मनुष्याश्चतुर्विधाः । अण्डजास्तावद्यथा क्रौञ्चीनिर्यातौ शैलोपशैलौ स्थवि-[9a. 7A. V]रौ मृगारमातुश्च[4] द्वात्रिंशत् पुत्राः पञ्चालराजस्य च पञ्च पुत्रशतानि । जरायुजा यथेदानीम् । संस्वेदजास्तद्यथा मान्धातृचारूपचारुकपोतमालिन्याम्रपाल्यादयः । उपपादुकाः पुनः प्राथमकल्पिकाः । एवं तिर्यञ्चोऽपि चतुर्विधाः । त्रिविधा दृश्यन्त एव । उपपादुकास्तु नागसुपर्णि[5]प्रभृतयः ।

**नारका उपपादुकाः ।**

**अन्तराभवदेवाश्च**

सर्वे नारका अन्तराभविकाः देवाश्चोपपादुका एव ।

**प्रेता अपि जरायुजाः ॥९॥**

अपिशब्दादप्युपपादुका इति । आयुष्मते महामौद्गल्यायनाय प्रेती निवेदयते

"पञ्च पुत्रानहं रात्रौ दिवा पञ्च तथा परान् ।
भक्षयामि जनित्वा तान् नास्ति तृप्तिस्तथापि मे ॥"

कतमा योनिः सर्वसाध्वी । उपपादुका । अथ किमर्थं चरमभविको बोधिसत्त्वः प्राप्तोपपत्तिवशित्वेऽपि जरायुजां योनिं भजते । एवं हि क्रियमाणे महान्तमर्थं पश्यति । ज्ञातिसंबन्धेन महतः शाक्यवंशस्य धर्मेऽवतरणार्थं चक्रवर्तिवंश्योऽयमिति चान्येषां बहुमानादरावर्जनार्थं मनुष्यभूता अपि चैनां सिद्धिं गच्छन्तीति विनेयाना[6]मुत्साहार्थम् । इतरथा ह्यप्रज्ञायमानकुलगोत्रः कोऽप्ययं मायापुरुष इत्येवं परिकल्पयेयुर्देवः पिशाच इति वा [9b. 7B. V]यथाऽन्यतीर्थ्या अपभाषन्ते कल्पशतस्यात्ययादेवंविधो मायावी लोके प्रादुर्भूय मायया लोकं भक्षयतीति । अपरे त्वाहुः । शरीरधातूनामवस्थापनार्थं येषु मनुष्या अन्ये च प्रजां विज्ञाय सहस्रशः स्वर्गं च प्राप्ता अपवर्गं चेति उपपादुकानां हि सत्त्वानां बाह्यबीजाभावान्मृतानां कायो नावतिष्ठते निशान्त इव तैलप्रद्योतोऽन्तर्धीयते । आधिष्ठानिकीमृद्धिं भगवत इच्छतां न युक्त एष परिहारः । प्रश्नात्प्रश्नान्तरमुपजायते[7] । यद्यप्यु[8]पपादुकानां

१. Y. उपपादने । २. MS. seems to read नरक and puts क below in the lower margin । ३. MS. तिर्यञ्च । ४. MS. looks like मृशार... । ५. Y. सुपर्णी । ६. MS. drops ना । Y. उत्पद्यते । ८. Y. omits अपि ।

कायनिधनं न प्रज्ञायते कथमुक्तं सूत्रे "उपपादुकः सुपर्णी उपपादुकं नागमुद्धरति भक्षार्थमि"ति। नोक्तं भक्षयतीत्यपि तूद्धरति भक्षार्थमज्ञत्वादित्यदोषः। भक्षयति वा यावन्न मृतो भवति न पुनर्मृतस्यास्य तृप्यतीति।

कतमा योनिः सर्ववह्वी। उपपादुकैव। सा हि द्विगती[1] तिसृणां च प्रदेशः सर्वे चान्तराभविका इति।

कोऽयमन्तराभावो नाम।

**मृत्यूपपत्तिभवयोरन्तरा भवतीह यः।**

मरणभवस्योपपत्तिभवस्य चान्तरा य आत्मभावोऽभिनिर्वर्त्तते देशान्तरोपपत्तिसंप्राप्तये सोऽन्तराभव इत्युच्यते। गत्यन्तरालत्वात्। कथमयं जातश्च नाम नचोपप[10a. 7A. VI]न्नो भवति।

**गम्यदेशानुपेतत्वान्नोपपन्नोऽन्तराभवः ॥१०॥**

उपपत्तिगतो[2] ह्युपपन्न इत्युच्यते। पदेर्गत्यर्थत्वात्। नचायं गम्यदेशमुपगतोऽन्तराभावस्तस्मान्नोपपन्नः। कः पुनरसौ देशो गन्तव्यः। यत्राक्षिप्तस्य विपाकस्याभिव्यक्तिः समाप्तिश्च। विच्छिन्न एवोपपत्तिभवो मरणभवात्संभवतीति निकायान्तरीयाः। तदेन्नेष्यते। किं कारणम्। युक्तितश्च आगमतश्च। तत्र तावत् युक्तिं निश्रित्योच्यते

**व्रीहिसन्तानसाधर्म्यादविच्छिन्नभवोद्भवः।**

सन्तानवर्त्तिनां हि धर्माणामविच्छेदेन देशान्तरेषु प्रादुर्भावो दृष्टस्तद्यथा व्रीहिसन्तानस्य। तस्मादस्यापि सत्त्वसन्तानस्याविच्छेदेन देशान्तरेषु प्रादुर्भावो भविष्णुः। विच्छिन्नोऽपि दृष्टः प्रादुर्भावस्तद्यथा आदर्शादिषु बिम्वात् प्रतिबिम्वस्य[3]। एवं मरणभवादुपपत्तिभवस्य स्यात्।

**प्रतिबिम्बमसिद्धत्वादसाम्याच्चानिदर्शनम् ॥११॥**

प्रतिबिम्बं नामान्यदेवोत्पद्यते धर्मान्तरमित्यसिद्धमेतत्। सिद्धावपि च सत्यामसाम्यादनिदर्शनं भवति। कथं तावत्सिद्धम्।

**सहैकत्र द्वयाभावात्**

तत्रैव हि देशे आदर्शरूपं दृश्यते प्रतिबिम्बं[4] च। न चैकत्र देशे रूपद्वयस्यास्ति सहभात्र आश्रयभूतभेदात्। [10b. 7B. VI] तथा दिग्भेदव्यवस्थिते[5]रेकस्मिन्नप्यम्बुदेशे स्वाभिमुख[6]देशस्थानां[7] रूपाणामन्योऽन्यं प्रतिबिम्वकमुपलभ्यते नत्वेकत्र रूपे द्वयोः पश्यतोः सहदर्शनं न भवतीति न तत्र रूपान्तरोपपत्तिर्युक्ता[8]। छायातपयोश्च द्वयोः सहैकत्रभावो न

---

१. Y. द्वे गती। २. MS. उपपगतो। ३. Y. प्रतिबिम्बं। ४. Y. प्रतिबिम्बकं।
५. Y. स्थितै...। ६. MS. ...मुखा। ७. Y. ....स्थितानां। ८. MS. ...र्युक्ताः।

दृष्टः। उपलभ्यते च छायास्थ आदर्शे सूर्यस्य प्रतिबिम्बकमिति न युक्तोऽस्य तत्र प्रादुर्भावः। अथवा[१] "सहैकत्र द्वयाभावादि"ति कतमस्य द्वयस्य। आदर्शतलस्येन्दुप्रतिबिम्बकस्य च। अन्यत्रैव हि देशे आदर्शतलं भवत्यन्यत्रैवान्तर्गतं चन्द्रप्रतिबिम्बकं दृश्यते कूप इवोदकम्। तच्च तत्रोपपद्यमानं नान्यत्रोपलभ्यते[२]। अतो नास्त्येव तत् किंचित्। सामग्र्यास्तु स तस्यास्तादृशः[३] प्रभावो यत्तथा दर्शनं भवति। अचिन्त्यो हि धर्माणां शक्तिभेदः। एवं तावदसिद्धत्वात्। कथमसाम्यादनिदर्शनं भवति।

## असन्तानाद्

नहि बिम्बस्य प्रतिबिम्बकं सन्तानभूतमादर्शसन्तानसंबद्धत्वात् सहभावाच्च। यथा मरणस्यो[४]पपत्तिभवः। सन्तानं च प्रत्यविच्छेदेन देशान्तरेषु प्रादुर्भाव उदाहृतो नासन्तानमित्यसाम्यं दृष्टान्तस्य प्रतिबिम्बस्य च।

## द्वयोदयात्।

द्वाभ्यां हि कारणाभ्यां प्रतिबिम्बस्योदयो भवति। बिम्बाच्चादर्शा-[11a. 7A.VII]-च्चेति यत् प्रधानं कारणं तदाश्रित्योत्पद्यते। नचैवमुपपत्तिभवस्यापि द्वाभ्यां कारणाभ्यां संभवो मरणभवाच्चान्यतश्च प्रधानभूतादित्यतोऽप्ययमसमानो दृष्टान्तः। न च युक्तमुक्तं बाह्यमेव चेतनं शुक्रशोणितं प्रधानकारणमिति। यत्र चान्धकाण एव प्रादुर्भाव उपपादुकानां तत्र किं परिकल्प्यते। एवं तावद्युक्तितो नेष्यते। न मरणभवाद्विच्छिन्न उपपत्तिभवप्रादुर्भावः। तस्मादस्त्येवान्तराभवः।

## कण्ठोक्तेश्चास्ति

सूत्र उक्तं "सप्त भवाः। नरकभवस्तिर्यग्भवः प्रेतभवो देवभवो मनुष्यभवः कर्मभवोऽन्तराभव इति। नैतत्सूत्रं तैराम्नायते। इतस्तर्हि

## गन्धर्वात्

"त्रयाणां स्थानानां संमुखीभावात् मातुः कुक्षौ गर्भस्यावक्रान्तिर्भवति। माता कल्याऽपि भवति ऋतुमती च। मातापितरौ रक्तौ भवतः[५] संनिपतितौ च। गन्धर्वश्च प्रत्युपस्थितो भवती"ति। अन्तराभवं हित्वा कोऽन्यो गन्धर्वः। एतदपि नैव तैराम्नायते। कथं तर्हि। "स्कन्धभेदश्च प्रत्युपस्थितो भवती"ति। यद्येवमाश्वलायनसूत्रं कथं नीयते। "जानन्त भवन्तो[६] योऽसौ गन्धर्वः प्रत्युपस्थितः। क्षत्रियो वाऽसौ ब्राह्मणो वा वैश्यो वा शूद्रो वा। यदि वा पूर्वस्या दिश

१. MS. looks like अथीवा। २. MS. ''लभ्यते। ३. Y. omits तादृशः। ४. Y. मरणभवस्य। ५. Y. omits भवतः। ६. MS. भवान्तो।

आगतो यदि वा [11b. 7B. VII] दक्षिणस्या पश्चिमाया उत्तरस्या" इति। नहि स्कन्धभेदस्यागमनं युज्यते। अथैतदपि न पठ्यते। इतस्तर्हि

**पञ्चोक्तेः**

"पञ्चानागामिन"[1] इत्युक्तं भगवता। अन्तरापरिनिर्वायी उपपद्यपरिनिर्वायी अनभिसंस्कारपरिनिर्वायी साभिसंस्कारपरिनिर्वायी ऊर्ध्वस्रोता[2]श्चेति। असत्यन्तराभवे कथमन्तरापरिनिर्वायी नाम स्यात्। अन्तरा नाम देवाः सन्तीत्येके। उपपद्यादयोऽपि हि नाम देवा एवं सति प्रसज्यते। तस्मान्नेयं कल्पना साध्वी। इतश्च

**गतिसूत्रतः ॥१२॥**

"सप्त सत्पुरुषगतयः" इत्यत्र सूत्रे। अन्तरापरिनिर्वायिणस्त्रय उक्ताः। कालदेशप्रकर्षभेदेन। तद्यथा परीत्तः सकलिका[3]ग्निरभिनिवर्त्तमान एव परिनिर्वायादेवं प्रथमः। तद्यथाऽयःप्रपाटिका[4] उत्पतन्त्येव निर्वायादेवं द्वितीयः। तद्यथाऽयःप्रपाटिका[4] उत्प्लुत्य पृथिव्यामपतितैव[5] निर्वायादेवं तृतीयः। नचैवमन्तरा नाम देवास्त्रिप्रकाराः कालदेशप्रकर्षभिन्नाः सन्तीति कल्पनैवेयं केवला॥ अन्ये पुनराहुः। आयुप्रमाणान्तरे वा देवसमीपान्तरे वा यः क्लेशान् प्रजहाति सोऽन्तरापरिनिर्वायी। स पुनर्धातुगतो [12a. 7A. VIII] वा परिनिर्वाति संज्ञागतो वा वितर्कगतो वा। तेन त्रिविधो भवतीति। प्रथमो वा रूपधातौ[6] निकायसभागपरिग्रहं कृत्वा परिनिर्वाति। द्वितीयो देवसमृद्धि चानुभूय[7]। तृतीयो देवानां[8] धर्मसंगीतिमनुप्रविश्य[9]। उपपद्यपरिनिर्वायी पुनः प्रकर्षयुक्तां संगीतिमनुप्रविश्य परिनिर्वाति भूयसा वा[10] आयुरुपहत्य नोपपन्नमात्र एवेति त एते सर्वेऽपि शकलिकादिदृष्टान्तैर्न संबध्यन्ते। देशगतिविशेषाभावात्। आरूप्येष्वपि चान्तरापरिनिर्वायी पठ्येतायुःप्रमाणान्तरे परिनिर्वाणात्। न च[11] पठ्यते।

"ध्यानैश्चतस्रो दशिका आरूप्यैः सप्तिकात्रयम्।
संज्ञया षट्टिकां[12] कृत्वा वर्गो भवति समुदितः॥

इत्येतस्यायुर्दानगाथायाम्। तस्मादेतदपि सर्वं कल्पनामात्रम्। अथैतान्यपि सूत्राणि तैर्नाम्नायन्ते। किमिदानीं कुर्मो यच्छास्ता च परिनिर्वृतः शासनं चेदमनायकं बहुधा भिन्नं

१. Y. adds सप्त सत्पुरुषगतयः। २. MS. श्रोता। ३. Y. शकलिका। ४. Y. अयस्प्रपाटिका। ५. Y. अपतित्वैव पृथिव्यां। ६. Y. omits रूपधातौ। ७. Y. adds परिनिर्वाति। ८. Y. omits देवानां। ९. Y. adds परिनिर्वाति। १०. Y. वायु॰। ११. Y. adds एवं। १२. MS. षट्टिका। Y. षट्किका।

भिद्यते चाद्यापि यथेच्छं ग्रन्थतश्चार्थतश्च । येषां तु तावदयमागमः प्रमाणं तेषामागमतोऽपि सिद्धोऽन्तराभवः । यत्तर्हि सूत्र उक्तम् "अथ च पुनर्दूषी मारः स्वशरीरेणावीचौ महानरके प्रपतित" [12b. 7B. VIII] इति । तत् कथमिति । स हि जीवन्नेव नारकीभिर्ज्वालाभिरालिङ्गितः[1] । कालं कृत्वाऽन्तराभवेनावीचिं प्राप्त इत्ययं तत्राभिप्रायः । अत्युदीर्णपरिपूर्णानि हि कर्माणि कायस्य निक्षेपं न प्रतीक्षन्ते । अतोऽस्य दृष्टधर्मवेदनीयं कर्म पूर्वं विपक्वं पश्चादुपपद्यवेदनीयमिति । इदमिदानीं कथं नीयते "पञ्चानन्तर्याणि कर्माणि यानि कृत्वोपचित्य समनन्तरं नरकेषूपपद्यत" इति । अन्यां गतिमगत्वेत्यभिप्रायः । उपपद्यवेदनीयत्वं तत्र कर्मणो द्योतितम् । अथ यथारुतं कल्प्यते[2] । पञ्चैव कृत्वा नैकमिति[3] प्राप्नोति । क्रियानन्तरं च । न कालान्तरं जीवित्वा को वाऽन्तराभवस्योपपद्यमानत्वं नेच्छति । अन्तराभवेनैव ह्यसौ मरणान्तरं[4] नरकेषूपपद्यते । अभिमुखत्वात् । न च ब्रूम उपपन्नो भवतीति । इयं तर्हि गाथा कथं नीयते

"उपनीततया[5] जरातुरः संप्राप्तो हि ममान्तिकं द्विज ।
वासोऽपि हि नास्ति तेऽन्तरा पाथेयं च न विद्यते तवे" ति ॥

अत्रापि मनुष्येष्वन्तरावासो नास्तीत्यभिप्रायः । अथवाऽन्तराभवेऽप्यस्य वासो नास्त्युपपत्तिदेशसंप्राप्तिप्रति[6]गमनाधिष्ठानादि-[13a. 7A1. I]ति । अयमत्राभिप्रायो नायमभिप्राय इति कुत एवैतत्[7] । तुल्य एष भवतोऽप्यनुयोगः । तस्मादुभयस्मिन्नपि पक्षे यथोक्तसूत्राविरोधान्न भवत्येतदन्तराभवस्याभावे ज्ञापकम् । ज्ञापकं हि नामागतिका गतिरिति ।

अथ कां गतिं गमिष्यतः किमाकृतिरन्तराभवोऽभिनिवर्त्तते ।

**एकाक्षेपादसावैष्यत्पूर्वकालभवाकृतिः ।**

येनैव कर्मणा गतिराक्षिप्यते तेनैवान्तराभवस्तत्प्राप्तये । अतो यां गतिं गन्ता भवति तस्यां गतौ य आगमिष्यत्पूर्वकालभवस्तस्यैवास्याकृतिर्भवति । एवं तर्हि शुनीप्रभृतीनामेकस्मिन् कुक्षौ पाञ्चगतिको[8]ऽन्तराभवोऽभिनिर्वर्त्तते इति नारकोऽन्तराभवः कुक्षिं[9] निर्दहेत् । पूर्वकालभवेऽपि तावन्नारका न नित्यं प्रज्वलिता भवन्त्युत्सदेषु भ्रमन्तः किं पुनरन्तराभविकाः । अस्तु वा प्रज्वलितः । स तु यथा न द्रष्टुं शक्यते तथा न स्प्रष्टुमप्यच्छत्वादात्मभावस्येत्यचोद्यमेतत् । अन्तराभवानामप्यन्योन्यं कुक्षावसंश्लेषात्कर्मप्रतिबन्धाच्च न दाहः । प्रमाणं तु यथा पञ्चषड्वर्षस्य

---

१. Y. आलिङ्गितत्वात् । २. Y. (N) कल्पयते । ३. Y. adds एतत् । ४. MS. मरणान्तर । ५. Y. उपनीतवया । ६. Y. omits प्रति । ७. MS. एवेतत् । Y. omits एव । ८. Y. पञ्चगतिकः । ९. Y. मातुः कुक्षिं ।

दारकस्य स तु पट्विन्द्रियो भवति बोधिसत्त्वस्य पुनर्यथा संपूर्णयूनः सलक्षणानुव्यञ्जनश्च । अत एवान्तराभवस्थेन मातुः कुक्षिं प्रविशता कोटीशतश्चातुर्द्वीपिका-[13b. 7B1. I]नामवभासितः[1] । यत्तर्हि माता बोधिसत्त्वस्य स्वप्ने गजपोतं पाण्डरं[2] कुक्षिं प्रविशन्तमद्राक्षीत् । निमित्तमात्रं तत् तिर्यग्योनेश्चिरव्यावृत्तत्वात्[3] । तद्यथा क्रकी राजा दश स्वप्नानद्राक्षीदिति ।

"करिकूपसक्तु[4]चन्दनकलभारामास्तथा कपेरभिषेकः ।
अशुचिकपिः पटकलहाविति दश दृष्टा नृपेण क्रकिणा स्वप्नाः" ।।

नैव चान्तराभविकः कुक्षिं भित्त्वा प्रविशत्यपि तु मातुर्योनिद्वारेण । अतएव यमलयोर्यः[5] पश्चात् प्रजायते स ज्यायानुच्यते यः पूर्वं स कनीयानिति । धर्मसूत्रविभाष्यं कथं नीयते

"वारण त्वमुपगम्य पाण्डरं षड्विषाणरुचिरं चतुष्क्रमम् ।
मातृगर्भशयनं विशेषसंप्रजाननृषिराश्रमं यथे"ति ।।

नैतदवश्यनेतव्यम् । नह्येतत् सूत्रं न विनयः नाभिधर्मः काव्यमेतत् । कवीनां च काव्यं समायोजयतां केचित् भावाः समारोपिता गच्छन्ति । अथवा नेतव्यमेव । यथाऽस्य माता स्वप्ने तं प्रविशन्तमद्राक्षीत्तथा सोऽपि गाथामकार्षीदिति । रूपावचरो[6]ऽप्यन्तराभवः संपूर्णप्रमाणः सवस्त्रश्च प्रादुर्भवति । अपत्राप्योत्सदत्वात् । बोधिसत्त्वस्य सवस्त्रः शुक्लायाश्च भिक्षुण्याः प्रणिधानवशाद्यावन्तमेव परिवेष्टिता निर्दग्धा । अन्यो नग्नः । काम-[14a. 7A1. II]धातोरनपत्राप्योत्सदत्वात् ।

अथ कोऽयं पूर्वकालभवो[7] नाम ।

**स पुनर्मरणात्पूर्व उपपत्तिक्षणात्परः ।।१३।।**

भवो हि नामाविशेषेण पञ्चोपादानस्कन्धाः । स एव चतुर्धा भिद्यते । अन्तराभवो यथोक्तः । उपपत्तिभवो गतिषु प्रतिसन्धिक्षणः । तस्मात् परेण मरणक्षणं पर्युदस्यान्यः सर्वो भवः पूर्वकालभवः । चरमक्षणो मरणभवो यत ऊर्ध्वमन्तराभवो भवति रूपिषु चेत्सत्त्वेषूपपद्यते ।

स चायमन्तराभवः

**सजातिशुद्धदिव्याक्षिदृश्यः**

समानजातीयैरेवान्तराभविकै[8]र्दृश्यते । येषां च दिव्यं चक्षुः सुविशुद्धमभिज्ञामयं त एनं

१. Y. कोटीशतं चातुर्द्वीपकानामिति । यतः पूर्णयून इव बोधिसत्त्वस्यान्तराभवः सलक्षणानुव्यञ्जनश्चातोऽन्तराभवस्थेन तेन मातुः कुक्षिं प्रवेष्टुमिच्छता त्रिसाहस्रमहासाहस्रो लोकधातुः स्वक्षेत्रमिति कृत्वा ऽवभासितः । २. Y. पाण्डरं गजपोतं । ३. व्यावर्तितत्वात् । ४. MS. शक्त । ५. MS. यमलयो यः । ६. MS..... वचरा.... । ७. MS.... भावो । ८....भवै ।

पश्यन्ति । उपपत्तिचक्षुषा तु न दृश्यते । जात्यर्थमच्छत्वात् । देवान्तराभविक:[१] सर्वान् पश्यति । मनुष्यप्रेततिर्यग्नारकान्तराभविकाः पूर्वमपास्येत्यपरे ।

**कर्मर्द्धिवेगवान् ।**

ऋद्धिराकाशगमनम्[२] । कर्मणा ऋद्धिः कर्मर्द्धिः । तस्या वेगः[३] कर्मर्द्धिवेगः शीघ्रता । सोऽस्यास्तीति **कर्मर्द्धिवेगवान्** । येनासौ न[४] शक्यो बुद्धैरपि प्रतिवन्द्धुम्[५] । कर्मणोऽस्य वलीयस्त्वात् ।

**सकलाक्षः**

समग्रपञ्चेन्द्रियः ।

**अप्रतिघवान्**

प्रतिघातः प्रतिघः । सोऽस्यास्तीति प्रतिघवान् । न प्रतिघवानप्रतिघवान् । वज्रा[६]-[14b. 7B1. II]दिभिरप्यनिवार्यत्वात् । तथा हि प्रदीप्तायःपिण्डभेदे तन्मध्यसंभूतः क्रिमिरुपलब्धः श्रूयते । यस्यां च गतौ स उत्पत्स्यमानस्तस्याः सर्वथा

**अनिवर्त्यः**

नहि कदाचिन्मनुष्यान्तराभवोऽन्तर्धाय देवान्तराभवो भवत्यन्यो वा । नियतमनेन यामेव गतिमधिकृत्याभिनिर्वृत्तस्तस्यामेवोपपत्तव्यम् नान्यस्यामिति ।

किं पुनरन्तराभवोऽपि कामावचरः कवड़ीकारमाहारं भुङ्क्ते । ओमित्याह । न त्वौदारिकम् । किं तर्हि ।

**स गन्धभुक् ।।१४।।**

अत एव गन्धर्व इत्युच्यते । धातूनामनेकार्थत्वात् । ह्रस्वत्वं शकन्धुकर्कन्धुवत् । अल्पेशाख्यस्तु दुर्गन्धाहारो महेशाख्यः सुगन्धाहारः। कियन्तं कालमवतिष्ठते। नास्ति नियम इति भदन्तः । यावदुपपत्तिसामग्रीं न लभते नहि तस्यायुषः पृथगेवाक्षेपः । एकनिकायसभागत्वात् । इतरथा हि तस्यायुषः[७] क्षयान्मरणभवः प्रसज्येत[८] । यद्यासुमेरोः स्थलं मांसस्य[९] स्यात्तत् सर्वं वर्षासु

१. Y. (N) ...भविकम् । २. MS. drops रा । ३. MS. वेशः । ३. Y. न seems to be necessary. MS. येनासौ शक्यो । ५. MS. ....बन्धुं । ६. On the top margin of this page there are five letters very faint. They seem to be something like प्रतिघजव or प्रतिघभाव or प्रतिघवत् । ७. Y. तस्याप्यायुषः । ८. Y. प्रसज्येत् । ९. MS. looks like स्थलम्पासस्थ ।

क्रिमीणां पूर्येत। किमिदानीं तत्प्रतीक्षा एव तेषामन्तराभवा आसन् कुतो वा तदा तेभ्यो गता इति वक्तव्यम्। नैतदागतं सूत्रे शास्त्रे वा। एवं तु युज्यते। गन्धरसाभिगृद्धानामल्पायुषां जन्तूनामन्तो नास्ति। ते तं गन्धं घ्रात्वा गन्धरसा-[15a. 7A₁ III]भिगृद्धाः कालं कुर्वन्तः क्रिमिभावसंवर्त्तनीयं[1] कर्म प्रवोध्य[2] तया तृष्णया क्रिमिषूपपद्यन्त[3] इति। अथवा नूनं तत्प्रत्ययप्रचुर एव काले तत्संवर्त्तनीयानि कर्माणि विपाकाभिनिर्वृत्तौ वृत्तिं लभन्ते नान्यत्र। तथाहि चक्रवर्त्तिसंवर्त्तनीये कर्मणि अशीतिवर्षसहस्रायुषि प्रजायां बहुतरायुषि वा चक्रवर्त्तिनो जायन्ते नान्यस्याम्। अत एव चोक्तं भगवता "अचिन्त्यः सत्त्वानां कर्मविपाक" इति। सप्ताहं तिष्ठतीति भदन्तवसुमित्रः। यदि तावता सामग्रीं न लभते तत्रैव पुनश्च्युत्वा जायन्ते। सप्त सप्ताहानीत्यपरे। अल्पं कालमिति वैभाषिकाः। स हि संभवैषित्वात्संधावगत्वा संधिं बध्नातीति यथात्वसमग्राः प्रत्यया भवन्ति। नियतं चानेन तस्मिन् देशे तस्यां जातौ जनितव्यं भवति। तदा कर्माण्येव प्रत्ययानां सामग्रीमावहन्ति। अथानियतं ततोऽन्यत्र देशे तस्यां जातौ जायते सदृश्या[4]मित्यपरे। तद्यथा गवामूष्मसु[5] मैथुनस्य प्राचुर्यं शरदि शुनां ऋक्षाणां हेमन्ते चाश्वानाम्। गवयशृगालखरतरक्षाणां पुनः कालो नास्तीति येनान्यत्र काले गोषूपपत्तव्यं स गवयेषूपपद्यते येन श्वसु स शृगा-[15b. 7B₁. III]लेषु येनाश्वेसु स गर्दभेषु येन ऋक्षेषु स तरक्षेषूपपद्यत इति। न त्वस्य निकायसभागान्तराभवो नान्यत्र निकायसभागे शक्यमुत्पत्तुमेककामा[6]क्षेपादिति वक्तव्यमेतत्।

स खल्वेष गतिदेशसंप्राप्त्यर्थं प्रादुर्भूतोऽन्तराभवः

**विपर्यस्तमतिर्याति गतिदेशं रिरंसया।**

स हि कर्मप्रभावसंभूतेन चक्षुषा सुदूरस्थोऽपि स्वमुपपत्तिदेशं प्रेक्षते। तत्रास्य मातापित्रो[7]स्तां विप्रतिपत्तिं दृष्ट्वा पुंसः सतः पौंस्नो राग उत्पद्यते पितरि। विपर्ययात् प्रतिघः। एवं पठ्यते प्रज्ञप्तौ "गन्धर्वस्य तस्मिन् समये द्वयोश्चित्तयोरन्यतरान्यतरच्चित्तं संमुखीभूतं भवत्यनुनयसहगतं वा प्रतिघसहगतं वेति। स ताभ्यां विपर्यस्तो रन्तुकामतया तं देशमाश्लिष्य तामवस्थामात्मन्यधिमुच्यते। तस्मिंश्चाशुचौ गर्भस्थानसंप्राप्ते जातहर्षोऽभिनिविशते। ततोऽस्य स्कन्धा घनीभवन्त्यन्तराभवस्कन्धाश्चान्तर्धीयन्ते इत्युपपन्नो भवति। स चेत्पुमान् भवति मातुर्दक्षिणकुक्षिमाश्रित्य पृष्ठाभिमुख उत्कुटुकः[8] संभवत्यथ स्त्री ततो वामकुक्षिमाश्रित्योदराभिमुखी।

१. Y. क्रिमिनिकायसभागोत्पादकं। २. Y. विबोध्य। ३. Y. उपजायन्ते। ४. MS. सदृश्य। ५. MS. looks like गवामूपांषु। ६. Y. एककर्मा....। ७. Y. पित्रोः। ८. Y. उत्कुटुकः।

अथेदानीं नपुंसकं तद्येन रागेणाश्लिष्टं तथा तिष्ठति। न चास्त्य-[16a. 17A1. IV]न्तराभवो व्यन्तरः। अतः स्त्रीभूतः पुरुषभूतो वाऽनुप्रविश्य यथास्थानं तिष्ठति पश्चात् गर्भे आप्यायमानो नपुंसकं भवतीति"। इदं विचार्यते। किमस्य शुक्रशोणितमहाभूतान्येवे[1]न्द्रियाश्रयभावमापद्यन्ते कर्मवशादाहोस्वित् भूतान्तराण्येव कर्मभिर्जायन्ते। तान्युपश्रित्येति। तान्येवेत्येके। अनिन्द्रियं हि शुक्रशोणितमन्तराभवेन सार्धं निरुध्यते सेन्द्रियं प्रादुर्भवति। बीजाङ्कुरनिरोधोत्पादन्यायेन यत्तत्कललमित्याख्यायते। एवं च कृत्वेदं[2] सूत्रपदं सूत्रे सुनीतं भवति "मातापित्र[3]-शुचिकललसंभूतस्ये"ति। तथा[4] "दीर्घरात्रं युष्माभिर्भिक्षवः कटसिः[5] संवर्द्धिता रुधिरविन्दुरुपात्त" इति। भूतान्तराण्येवेत्यपरे। तद्यथापर्णक्रिमेः। अशुचिसंनिश्रयोत्पत्त्यभिसंबन्धि[6]वचनात्तु कललस्य सूत्राविरोध इति। एवं तावदण्डजां जरायुजां च योनिं प्रतिपद्यते। अन्यत्र तु यथायोगं वक्तव्यमित्याहुः। तत्र चायं योगो दृश्यते[7]

**गन्धस्थानाभिकामोऽन्यः**

संस्वेदजां योनिं प्रतिपद्यमान उपपत्तिस्थानं गत्वा[8]भिलाषात् गच्छत्यमेध्यं मेध्यं वा यथाक्रमम्। उपपादुकां तु योनिं प्रपद्यमानः स्थानाभिलाषात्। क-[16b. 7B1. IV]थं नरकेषु स्थानाभिलाषः। विपर्यस्तबुद्धित्वात्। स हि शीतवातवर्षाभिषेकैरात्मानं बाध्यमानं पश्यति नरकेषु चाग्निं दीप्यमानम्। तत्र उष्णाभिलाषाद्धावति। पुनस्तप्तवातातपाग्निसंतापैरात्मानं बाध्यमानमनुपश्यन् शैत्यं च नरकेषु शीताभिलाषाद्धावति। यदवस्थस्तदुपपत्तिसंवर्त्तनीयं कर्माकार्षीत् तदवस्थात्मानं ताश्च सत्त्वान् पश्यन् धावतीति पूर्वाचार्याः। तत्र पुनर्देवान्तराभव ऊर्ध्वं गच्छत्या[9]सनादिवोत्तिष्ठन् मनुष्यतिर्यक्प्रेतानां मनुष्यादिवत्।

**ऊर्ध्वपादस्तु[10] नारकः ॥१५॥**

"ते वै पतन्ति नरकादूर्ध्वपादा अवाङ्मुखाः।
ऋषीणामभिवक्तारः[11]संयतानां तपस्विनामि"ति

गाथाभिधानात्।

यदुक्तं "विपर्यस्तमतिर्याती"ति। किमवश्यं सर्वोऽन्तराभवस्तथा मातुः कुक्षिमवक्रामति। नेत्याह। किं तर्हि। चतस्रो गर्भावक्रान्तयः सूत्र उक्ताः। कतमाश्चतस्रः।

---

१. Y. एतान्येव and शुक्रशोणितमहाभूतानि is the explanation of एतान्येव। २. Y. omits इदं। ३. MS. ....पितृ...। ४. MS. तदाथा। ५. Y. one reading is कटसी। ६. Y. ...भिसन्धि। ७. Y. दृश्येत। ८. It seems to be गन्धा...। ९. MS. गच्छन्त्या... १०. MS. ऊर्ध्वपादुकस्तु। ११. Y. ...मतिवक्तारः।

**संप्रजानन् विशत्येक:**

तिष्ठति निष्क्रामति सा संप्रजानन् ।

**तिष्ठत्यप्यपर:**

संप्रजानन्निति वर्त्तते । प्रविशत्यपीत्यपिशब्दात् ।

**अपर: ।**

**निष्क्रामत्यपि**

संप्रजानन् प्रविशति तिष्ठत्यपि ।

**सर्वाणि मूढोऽन्य:**

कश्चित् पुन: सर्वाण्येवासंप्रजानन् करो·[17a. 7A₁. V]ति प्रविशत्यसंप्रजानन् तिष्ठति निष्क्रामत्यपि। एताश्चतस्रो गर्भावक्रान्तय: प्रतिलोमं निर्दिष्टा: । श्लोकवन्धानुगुण्यत:[1] ।

**नित्यमण्डज: ।।१६।।**

**अण्डज:** सत्त्वो नित्यं मूढ एव सर्वाणि करोति । कथमण्डाज्जातो गर्भं प्रविशति । योऽपि जनिष्यते सोऽप्यण्डज: । अथवा भाविन्यापि संज्ञया निर्देशा: क्रियन्ते[2] । तद्यथा "संस्कृतमभिसंस्करोती"ति सूत्रे ओदनं पचतीति सक्तुं पिनष्टीति लोके । तस्मान्नैष दोष: ।

कथं पुनरसंप्रजानन् मातु: कुक्षिं प्रविशति यावन्निष्क्रामति वा संप्रजानन् । अल्पेशाख्यस्य तावत्सत्त्वस्य मातु: कुक्षिं प्रविशत: एवं विपरीतौ संज्ञाधिमोक्षौ प्रवर्त्तेते[3] । वातो वाति देवो वर्षति । शीतं दुर्दिनं महतो वा जनकायस्य कोलाहलं हन्त तृणगहनं वा प्रविशामि वनगहनं वा तृणकुटीं वा पर्णकुटीं वा वृक्षमूलं वा सर्पामि[4] कुड्यमूलं वेति[5] । तिष्ठतोऽप्येषु[6] तिष्ठामीति निष्क्रामतोऽप्येभ्यो निर्यामीति । महेशाख्यस्य तु सत्त्वस्यारामं वा प्रविशाम्युद्यानं वा[7]प्रासादं वाऽभिरोहामि कूटागारं वा पर्यङ्कं वेति । तथा तिष्ठामि निर्यामीति । एवं तावदसंप्रजानन् प्रविशति[8] याव-[17b. 7B₁. V]न्निष्क्रामति । संप्रजानंस्तु सम्यक् प्रजानाति मातु: कुक्षिं प्रविशाम्यत्रैव तिष्ठामि अत एव निर्यामीति । नास्य विपरीतौ संज्ञाधिमोक्षौ प्रवर्त्तेते । अत्र पुनरपदिश्यते

**गर्भावक्रान्तयस्तिस्रश्चक्रवर्त्तिस्वयंभुवाम् ।**

चक्रवर्त्तिनश्च स्वयंभुवोश्च प्रत्येकबुद्धसंवुद्धयोश्च । **यथाक्रममित्यन्ते** वक्ष्यति । तत्र प्रथमा चक्रवर्त्तिन: । स हि प्रविशत्येव संप्रजानन् न तिष्ठति नापि निष्क्रामति । प्रत्येकबुद्धस्तिष्ठत्यपि । बुद्धो निष्क्रामत्यपि । अत्रापि भाविन्या संज्ञया निर्देश: ।

१. MS....गुण्यत्त । २. Y. निर्देश:.क्रियते । ३. MS. प्रवर्त्तते । ४. Y. चोपसर्पामि । ५. Y. चेति । ६. MS.....प्येष । ७. Y. च । ८. MS. प्रतिशति ।

**कर्मज्ञानोभयेषां वा विशदत्वाद्[1] यथाक्रमम् ॥१७॥**

विशदकर्मणामुदार[2]पुण्यक्रियाणां प्रथमा। विशदज्ञानानां वाहुश्रुत्यकृतप्रविचयानां द्वितीया। विशद[3]पुण्यकर्मज्ञानानां तृतीया। त एव त्वेते चक्रवर्त्यादय एवंभूता यथाक्रमम्। शेषाणां चतुर्थीति सिद्धं भवति।

अत्रेदानीं बाह्यका आत्मवादं परिगृह्योत्तिष्ठन्ते। यदि सत्त्वो लोकान्तरं संचरति प्रतिज्ञायते सिद्ध आत्मा भवतीति। स एष प्रतिषिध्यते

**नात्मास्ति**

की दृश आत्मा य इमान् निक्षिपत्यन्यांश्च स्कन्धान् प्रतिसंदधातीति परिकल्प्यते। स तादृशो नास्त्यन्तर्व्यापारपुरुषः। एवं तूक्तं भगवता "अस्ति कर्मास्ति विपाकः कारकस्तु नोपलभ्यते य इमांश्च स्कन्धान्निक्षिपति अन्यांश्च स्कन्धान् प्रतिसंदधात्यन्यत्र धर्मसंकेतात्। तत्रायं धर्मसंके-[18a. 7A1. VI]तो यदुतास्मिन् सतीदं भवतीति विस्तरेण प्रतीत्यसमुत्पादः"। कीदृशस्तर्ह्यात्मा न प्रतिषिध्यते।

**स्कन्धमात्रं तु**

यदि तु स्कन्धमात्रमेवात्मेति उपचर्यते[4] तस्याप्रतिषेधः। एवं तर्हि स्कन्धा एव लोकान्तरं संचरन्तीति प्राप्तं स्कन्धमात्रं तु नात्र संचरतीति।

**क्लेशकर्माभिसंस्कृतम्।**

**अन्तराभवसंतत्या कुक्षिमेति प्रदीपवत् ॥१८॥**

क्षणिका हि स्कन्धास्तेषां संचरितुं नास्ति शक्तिः। क्लेशैस्तु परिभावितं कर्मभिश्च क्लेशमात्रमन्तराभवसंज्ञिकया संतत्या मातुः कुक्षिमायाति। तद्यथा प्रदीपः क्षणिकोऽपि संतत्या देशान्तरमिति नास्त्येष दोषः। तस्मात्सिद्धमेतदसत्यप्यात्मनि क्लेशकर्माभिसंस्कृतः स्कन्धानां संतानो मातुः कुक्षिमापद्यत इति। स पुनः

**यथाक्षेपं क्रमाद्वृद्धः सन्तानः क्लेशकर्मभिः।**
**परलोकं पुनर्याति**

नहि सर्वस्य स्कन्धसन्तानस्याक्षेपस्तुल्यो भवत्यायुष्यस्य कर्मणो भेदात्। अतो यस्य यावानाक्षेपस्तस्य तावती वृद्धिः क्रमेण भवति। केन क्रमेण।

---

१. MS. ···भयथाम्वा विशदत्वा। २. MS. ··दारं। ३. MS. विषद। ४. MS. seems to correct उच्यते into उपचर्यते।

"कललं प्रथमं भवति कललाज्जायतेऽर्बुदः ।
अर्बुदाज्जायते पेशी पेशीतो जायते घनः ।।
घनात् प्रशाखा जायन्ते केशरोमनखादयः ।
इन्द्रियाणि च रूपीणि व्यञ्जनान्यनुपूर्वशः ।।

इत्यार्षाः[1] । [18b. 7B₁. VI] एताः पञ्च गर्भावस्थाः कललार्बुदपेशीघनप्रशाखावस्थाः । तस्य खलु कालान्तरेण परिपाकप्राप्तस्य गर्भशल्यस्याभ्यन्तरात् मातुः[2] कुक्षौ कर्मविपाकजा वायवो वान्ति ये तं गर्भशल्यं संपरिवर्त्य मातुः कायावक्षरद्वाराभिमुखमवस्थापयन्ति । स क्रूरपुरीषपिण्ड इवातिमात्रं स्थानात् प्रच्युतो दुःखं संपरिवर्त्यते । यदि पुनः कदाचिन्मातुराहारविहारक्रियापचारेण च पूर्वकर्मापराधेन गर्भ एव व्यापादं प्राप्नोति तत एनं तज्ज्ञास्त्रियः कुमारभृत्यका वा सुखोष्णेन सर्पिस्तैलेन[3] सुपिष्टेन शाल्मलीकल्केनान्येन वा हस्तमभ्यज्य तीक्ष्णं तनुकं चात्र शस्त्रकमुपनिवध्य तस्मि[4]न्वर्चस्कूप इवोग्रदुर्गन्धान्धकारसमलपल्वले सुबहुक्रिमिकुलसहस्रावासे नित्यस्राविणि सततप्रतिक्रिये शुक्रशोणितलसिकामलसंक्लिन्नविक्लिन्नक्वथितपिच्छिले परमबीभत्सदर्शने छिद्रतनुचर्मविच्छादिते पूर्वकर्मविपाकजे महति[5] काम[6]नाडीव्रणे हस्तं[7] प्रवेश्या[8]ङ्गमङ्गं निकृत्याध्याहरन्ति । स चाप्यपरपर्यायवेदनीयेन कर्मणा पूर्वकेण[9] कामपि गतिं नीयते । अथ पुनः स्वस्ति प्रजायते तत एनं माता पुत्राभिलाषिणी त-[19a. 7A₁. VII]त्परिकारा वा स्त्रियः सद्योजातकं तरुणव्रणायमानात्मानं शस्त्रक्षारा[10] यमाणसंस्पर्शाभ्यां पाणिभ्यां परिगृह्य स्नापयन्ति स्तन्येन सर्पिषा वाप्याययन्ति औदारिकं चाहारमाहर्तुं क्रमेणाभ्यासयन्ति । तस्य वृद्धेरन्वयादिन्द्रियाणां परिपाकान्पुनरपि क्लेशाः समुदाचरन्ति कर्मणि चोपचयं गच्छन्ति । सः तैः कायस्य भेदादन्तराभवसंतत्या पूर्ववत् परलोकं पुनर्याति ।

इत्यनादिभवचक्रकम् ।।१९।।

एतेन प्रकारेण क्लेशकर्महेतुकं जन्म तद्धेतुकानि पुनः क्लेशकर्माणि तेभ्यः पुनर्जन्मेत्यनादिभवचक्रकं वेदितव्यम् । आदौ हि परिकल्प्यमाने तस्याहेतुकत्वमेतेषु[11] सज्येत सति चाहेतुकत्वे सर्वमेवेदमहेतुकं प्रादुःस्यात् । दृष्टं चाङ्कुरादिषु बीजादीनां सामर्थ्यं देशकालप्रतिनियमादग्न्यादीनां च[12] पाकजादिष्विति नास्ति निर्हेतुकः प्रादुर्भावः । नित्यकारणास्तित्ववादश्च[13]

---

१. MS. इत्यार्या । २. MS. ....न्तरात्मातुः । ३. MS. ....स्तैलेन । ४. Y. (N) यस्मिन् । ५. Y. तस्मिन् । ६. Y. काय । ७. Y. हस्तौ । ८. Y. संप्रवेश्या ..। ९. MS. पूर्वकेन । १०. MS. क्षरा...। ११. MS. ...कत्वं । एतेषु । १२. Y. वा । १३. Y. omits च ।

प्रागेव पर्युदस्तः। तस्मान्नास्त्येव संसारस्यादिः। अन्तस्तु हेतुक्षयात् युक्तः। हेत्वधीनत्वाज्जन्मनो बीजक्षयादिवाङ्कुरस्येति।

य एष स्कन्धसंतानो जन्मत्रयावस्थ उपदिष्टः

**स प्रतीत्यसमुत्पादो द्वादशाङ्गस्त्रिकाण्डकः।**

तत्र द्वादशाङ्गानि [19b. 7B1. VII] अविद्या संस्कारा विज्ञानं नामरूपं षडायतनं स्पर्शो वेदना तृष्णा उपादानं भवो जातिर्जरामरणं च। त्रीणि काण्डानि पूर्वापरान्तमध्यान्यतीतानागतप्रत्युत्पन्नानि जन्मानि। कथमेषु[1] त्रिकाण्डेषु द्वादशाङ्गानि व्यवस्थाप्यन्ते।

**पूर्वापरान्तयोर्द्वे द्वे मध्येऽष्टौ**

अविद्या संस्काराश्च पूर्वान्ते जातिर्जरामरणं चापरान्ते। शेषाण्यष्टौ मध्ये। किं पुनरेतान्यष्टाङ्गानि सर्वस्यां जातौ भवन्ति। नेत्याह। कस्य तर्हि।

**परिपूरिणः ॥२०॥**

परिपूरोऽस्यास्तीति परिपूरी य एतानि सर्वाण्येवावस्थान्तराणि स्पृशति सोऽत्र पुद्गलोऽभिप्रेतो न तु योऽन्तराल एव म्रियते। नापि रूपारूप्यावचरः। तथा हि महानिदानपर्याये[2] कामावचर एव पुद्गलो निर्दिष्टः। "विज्ञानं चेदानन्द मातुः कुक्षिं नावक्रामेदि"ति वचनात्। यदा तु द्विविधः प्रतीत्यसमुत्पाद उच्यते पौर्वान्तिकश्चापरान्तिकश्चेति तदा सप्ताङ्गानि पौर्वान्तिको यावद्वेदनान्तः पञ्चापरान्तिकः। सफलहेतुकयोः पूर्वापरान्तयोर्ग्रहणात्।

अथ क इमेऽविद्यादयः।

**पूर्वक्लेशा दशाऽविद्या**

या पूर्वके जन्मनि क्लेशावस्था सेहाविद्येत्युच्यते। साहचर्यात्तद्वशेन ते-[29a. 7A1. VIII]षां समुदाचाराच्च। राजागमनवचने तदनुयात्रिका[3]गमनसिद्धवत्।

**संस्काराः पूर्वकर्मणः।**

दशेति वर्त्तते। पूर्वजन्मन्येव या पुण्यादिकर्मावस्था सेव[4] संस्कारा इत्युच्यन्ते यस्य कर्मण इह विपाकः।

**संधिस्कन्धास्तु विज्ञानं**

मातुः कुक्षौ प्रतिसंधिक्षणे पञ्च स्कन्धा विज्ञानम्।

१. MS. कथेमेषु। २. Y. ···पर्ययसूत्रे। ३. Y.····यातृका। ४. MS. looks like त्सह।

**नामरूपमतः परम् ॥२१॥**

**प्राक् षडायतनोत्पादात्**

संधिचित्तात् परेण यावत् षडायतनं नोत्पद्यते साऽवस्था **नामरूपं** तावत् षडायतनमित्युच्यते। प्राक्चतुरायतनोत्पादादिति वक्तव्ये षडायतनवचनं तदा तद्व्यवस्थापनात्।

**तत्पूर्वं त्रिकसंगमात्।**

उत्पन्ने षडायतने सावस्था तावत् षडायतनमित्युच्यते यावदिन्द्रियविषयविज्ञानत्रिकसंनिपातः[1]।

**स्पर्शः प्राक्सुखदुःखादिकारणज्ञानशक्तितः ॥२२॥**

त्रयाणां संनिपातात् स्पर्शो भवति। स यावद्वेदनात्रयकारणपरिच्छेदेन समर्थो भवति साऽवस्था स्पर्श इत्युच्यते। परिच्छेदसामर्थ्ये सति

**वित्तिः प्राक् मैथुनात्**[2]

वेदनावस्था यावन्मैथुनरागो न समुदाचरति।

**तृष्णा भोगमैथुनरागिणः।**

कामगुणमैथुनरागसमुदाचारावस्था तृष्णेत्युच्यते यावन्न तद्विषयपर्येष्टिमापद्यते।

**उपादानं तु[3] भोगानां प्राप्तये** [20b.7B1.VIII] **परिधावतः[4] ॥२३॥**

यस्यामवस्थायां विषयप्राप्तये पर्येष्टिमापन्नः सर्वतो धावत्यसाववस्था **उपादान**मित्युच्यते। तथा च परिधावन्

**स भविष्यत् भवफलं कुरुते कर्म तत् भवः।**

स विषयाणां प्राप्तिहेतोः परिधावन् पौनर्भविकं कर्मोपचिनोति **सोऽस्य भवः**। तेन हि कर्मणा पुनरितः प्रच्युतस्यायत्यां प्रतिसंधिर्भवति। योऽसौ

**प्रतिसंधिः पुनर्जातिः**

यदेवेह विज्ञानाङ्गं तदेवास्यान्यत्र जन्मनि जातिः। तत ऊर्ध्वं

**जरामरणमा विदः ॥२४॥**

जातेः परेण यावद्वेदनावस्था **जरामरणम्**। यान्येवेह चत्वार्यङ्गानि नामरूपषडायतनस्पर्शवेदनास्तान्येवान्यत्र जरामरणमित्येतानि द्वादशाङ्गानि। स चैष प्रतीत्यसमुत्पादश्चतुर्विध उच्यते।

१. MS. ....त्रिकस्पर्शसन्निपातः। २. MS. मेथुनात्। ३. MS. उपादानान्तु। ४. MS. धा परिधावतः।

क्षणिकः प्राकर्षिकः सांबन्धिकः आवस्थिकश्च । कथं क्षणिकः । एकस्मिन् खल्वपि क्षणे द्वादशाङ्गानि भवन्ति । तद्यथा लोभवशेन प्राणिनं जीविताद् व्यपरोपयेत् । यो मोहः साऽविद्या । या चेतना ते संस्काराः । वस्तुप्रतिविज्ञप्तिर्विज्ञानम् । विज्ञानसहभुवश्चत्वारः स्कन्धा नामरूपम् । नामरूपे व्यवस्थापितानि[1] इन्द्रियाणि षडायतनम् । षडायतनाभिनिपातः स्पर्शः । स्पर्शानुभवनं वेदना । यो लोभः स तृष्णा । [21a. 8A. I]तत्संप्रयुक्तानि पर्यवस्थानानि उपादानम् । तत्समुत्थितं[2] कायवाक्कर्म भवः । तेषां धर्माणामुत्सर्जनं जातिः[3] परिपाको जरा भङ्गो मरणमिति । पुनराहुः । क्षणिकः सांबन्धिकश्च यथा प्रकरणेषु "प्रतीत्यसमुत्पादः कतमः । सर्वे संस्कृता धर्मा" इति । आवस्थिको[4] द्वादश पञ्चस्कन्धिका अवस्था निरन्तरजन्मत्रयसंबद्धाः । स एव प्राकर्षिकः । एषां कतमोऽयमभिप्रेतो भगवतः ।

**आवस्थिकः क्लिष्टोऽयं[5]**

यद्यङ्गमङ्गं पञ्च स्कन्धाः किं कारणमविद्यादीनेव धर्मान् कीर्त्तयति स्म ।

**प्राधान्या[6]त्त्वङ्गकीर्तनम् ।**

अविद्याप्रधानामवस्थामविद्यां जगाद संस्कारप्रधानां संस्कारान्यावज्जरामरणमित्यदोषः । किं पुनः कारणं सूत्रे द्वादशाङ्ग उक्तः प्रकरणेऽन्यथा "प्रतीत्यसमुत्पादः कतमः । सर्वे संस्कृता धर्मा" इति । अभिप्रायिकः सूत्रे लाक्षणिकोऽभिधर्मः[7] । तथावस्थिकः क्षणिकः प्राकर्षिकः सांबन्धिकः सत्त्वाख्योऽसत्त्वाख्यश्चेति भेदः । किमर्थं पुनः सूत्रे सत्त्वाख्य एव ।

**पूर्वापरान्तमध्येषु[8] संमोहविनिवृत्तये[9] ।।२५।।**

अत एव च त्रिकाण्डः । तत्र पूर्वान्तसंमोहो यत इयं विचिकित्सा किं न्व[10]हमभूवमतीतेऽध्वनि [21b. 8B. I]आहोस्विन्नाभूवं को न्वहमभूवं कथं न्वहमभूवमिति । अपरान्तसंमोहो[11] यत इयं विचिचित्सा किं नु भविष्याम्यनागतेऽध्वनीति विस्तरः । मध्यसंमोहो यत इयं विचिकित्सा किंस्विदिदं[12] के सन्तः के भविष्याम इति । एतस्य त्रिविधस्य संमोहस्य व्यावर्त्तनार्थं सत्त्वाख्य एव त्रिकाण्डश्च प्रतीत्यसमुत्पाद उपदिष्टः सूत्रे यथाक्रममविद्या संस्काराश्च जातिर्जरामरणं च विज्ञानं यावत् भवश्च । तथाहि सूत्र एवोक्तं "यतश्च भिक्षवो भिक्षुणा

१. Y.नामरूपव्यवस्थितानि । २. Y.तत्समुत्थं । ३. Y.उन्मज्जनमुत्पादः । ४. Y.अवस्थिको । ५. MS. क्लिष्टोयं । ६. MS. प्राधान्य । ७. Y. ....भिधर्मे । ८. MS. ....मध्येष । ९. MS. विनिवर्त्तये । १०. MS. किं त्व । ११. MS . ...समोहो । १२. Y. adds कथं स्विदिदं ।

प्रतीत्यसमुत्पादश्च प्रतीत्यसमुत्पन्नाश्च धर्मा एवं यथाभूतं सम्यक् प्रज्ञया[1] दृष्टा भवन्ति। स न पूर्वान्तं प्रतिसरति किं न्वंहमभूवमतीतेऽध्वनी"ति विस्तरः। तृष्णोपादानभवा अप्यपरान्तसंमोहव्यावर्तनार्थमित्यपरे। तस्यैव ह्येते हेतव इति स पुनरेष द्वादशाङ्गः प्रतीत्यसमुत्पादस्त्रिस्वभावो वेदितव्यः।

क्लेशकर्मवस्तूनि। तत्र

**क्लेशास्त्रीणि**

त्रीण्यङ्गानि क्लेशस्वभावान्यविद्यातृष्णोपादानानि।

**द्वयं कर्म**

अङ्गद्वयं कर्मस्वभावं संस्कारा भवश्च।

**सप्त वस्तु**

सप्ताङ्गानि वस्तुस्वभावानि विज्ञाननामरूपषडायतनस्पर्शवेदनाजातिजरामरणानि। क्लेशकर्माश्रयत्वात्। यथा च वस्तु सप्ताङ्गानि

**फलं तथा।**

सप्तैवाङ्गानि फलभूतानि। शेषाणि पञ्च हेतुभूतानि। कर्मक्लेशस्वभावभूतत्वात्[2]। किं पुनः कारणं मध्ये फल-[22a. 8A. II]हेतू विशालितौ। वस्तुनः पञ्चधा भेदात्। क्लेशस्य[3] द्विधा। अनागतेऽध्वनि फलं संक्षिप्तं द्विधा भेदात्। अतीतेऽध्वनि हेतु[4]रेकमुखक्लेशोपदेशादिति।

**फलहेत्वभिसंक्षेपो द्वयोर्मध्यानुमानतः ॥२६॥**

मध्येनैव हि पूर्वान्तापरान्तयोरपि हेतुफलविस्तरः शक्योऽनुमातुमिति नोक्तः। पुनरपरात्मकं हि यत्नं मा कार्यमिति। यदि खलु द्वादशाङ्ग एव प्रतीत्यसमुत्पाद एवं सत्यविद्याया अनुपदिष्टहेतुकत्वादादिमान् संसारः प्राप्नोति जरामरणस्य चानुपदिष्टफलत्वादन्तवान्[5]। अङ्गान्तरं वा पुनरुपसंख्यातव्यं तस्याप्यन्यस्मादित्य[6]नवस्थाप्रसङ्गः। नोपसंख्यातव्यम्। यस्मादुपदर्शितोऽत्र भगवता

**क्लेशात् क्लेशः क्रिया चैव ततो वस्तु ततः पुनः।**
**वस्तु[7]क्लेशाश्च जायन्ते भवाङ्गानामयं नयः ॥२७॥**

क्लेशात् क्लेशो जायते तृष्णाया उपादानम्। क्लेशात् कर्म। उपादानात्[8]भवोऽविद्या-

---

१. MS. प्रज्ञाया। २. Y. omits भूत। ३. Y. adds च। ४. Y. adds संक्षिप्तः। ५. MS. drops न्। ६. MS....प्यन्यादित्य....। ७. MS. वस्तू। ८. MS. उपादात्।

याश्च संस्काराः। कर्मवस्तुसंस्कारेभ्यो विज्ञानं भवाच्च जातिः। वस्तुनो वस्तुविज्ञानान्नामरूपं यावत् स्पर्शाद्वेदना जातेश्च जरामरणम्। वस्तुनः क्लेशो वेदनायास्तृष्णेति। यस्मादेष नयो व्यवस्थितो भवाङ्गानां [22b.8B.II] तस्मादविद्याऽपि क्लेशस्वभावा वस्तुनः क्लेशाद्वेति ज्ञापितं भवति। वेदनावशाच्च जरामरणवस्तुनः पुनः क्लेशो भावीति नात्र पुनः किंचिदुपसंख्येयम्।[1] "एवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवती" वचनात्। अन्यथा हि किमस्य सामर्थ्यं स्यात्। अयोनिशोमनस्कारहेतुकाऽविद्योक्ता सूत्रान्तरे। अविद्याहेतुकश्चायोनिशोमनस्कारः। स चेहाप्युपादानान्तर्भूतत्वादुक्तो भवतीति अपरे। कथमयोनिशोमनस्कारस्योपादानेऽन्तर्भावः। यदि संप्रयोगतः। तृष्णाऽविद्ययोरपि तस्यान्तर्भावप्रसङ्गः[2]। सत्यपि चान्तर्भावे कथमत्रेदं ज्ञापितं भवत्ययोनिशोमनस्कारहेतुका अविद्येति[3]। यदि तर्ह्यन्तर्भावेनैव हेतुफलभावो विज्ञायते तृष्णाऽविद्ययोरपि तर्हि तत्रान्तर्भावादङ्गान्तरत्वं शक्यमकर्त्तुम्। अन्यः पुनराह। अयोनिशो मनस्कारो हेतुरविद्याया उक्तः सूत्रान्तरे। स चापि स्पर्शकाले निर्दिष्टः। "चक्षुः प्रतीत्य रूपाणि चोत्पद्यते आविलो मनस्कारो मोहज" इति। वेदनाकाले चावश्यमविद्यया भवितव्यम्। "अविद्यासंस्पर्शजं वेदितं प्रतीत्योत्पन्ना तृष्णे"ति सू-[23a. 8A. III]त्रान्तरात्। अतः[4] स्पर्शकाले भवन्नयोनिशोमनस्कारो वेदनासहवर्त्तिन्या अविद्यायाः प्रत्ययभावेन सिद्ध इति नास्त्यहेतुकत्वमविद्याया न चाङ्गान्तरमुपसंख्येयम्। नचाप्यनवस्थाप्रसङ्गः। तस्याप्ययोनिशोमनस्कारस्य पुनर्मोहजवचनादाविलो मनस्कारो मोहज इति। तत्तर्ह्येतदन्यत्रोक्तमिह पुनर्वक्तव्यम्[5]। न वक्तव्यम्। कथमनुच्यमानं गम्यते। युक्तितः। कया युक्त्या। नहि निरवद्या वेदना तृष्णायाः प्रत्ययीभवत्यर्हतां न चाविपरीतः स्पर्शः क्लिष्टाया वेदनायाः। नच पुनर्निरवद्यस्यार्हतः स्पर्शो विपरीत[6] इत्यनया युक्त्या। अतिप्रसङ्ग एवं प्राप्नोति। यावत् युक्त्या संभवति तावदनुक्तं गम्यत इति। तस्मान्न भवत्ययं परिहारः। अचोद्यमेव त्वेतद्।[7] अविद्याजरामरणयोः परेणाङ्गान्तरानभिधाना[8]त्संसारस्याद्यन्तवत्त्वप्रसङ्गः। नचापरिपूर्णो निर्देश इति। किं कारणम्। प्रवृत्तिसंमूढेभ्यो विनेयेभ्यः[9] कथं परलोकादिहलोक इहलोकाच्च पुनः परलोकः संबध्यत इत्येतावतोऽत्रार्थस्य[10] विवक्षितत्वात्। एतस्य च[11] पूर्वमेवोक्तत्वात्।

---

१. MS. ....ख्येयमेव। २. Y. ....न्तर्भावः प्राप्नोति। ३. Y. कथमयोनिशोमनस्कारो हेतुरविद्याया इति विज्ञापितं भवति। It seems to be paraphrasing. ४. Y. तदेवं। ५. MS. पुनवर्त्तव्यं। ६. Y. विपरीतः स्पर्शः। ७. MS. त्वेतदविद्या...। ८. MS. ...न्तरानाभिधाना...। ९. MS. विनयेभ्यः। १०. Y. ...र्थस्यात्र। ११. Y. adds अर्थस्य।

"पूर्वापरान्तमध्येषु संमोह[1]विनिवृत्त-[3b. 8B. III][2]ये"[3] ।

उक्तं भगवता "प्रतीत्यसमुत्पादं वो भिक्षवो देशयिष्यामि प्रतीत्यसमुत्पन्नांश्च धर्मानित्यथ क[4] एषां विशेषः। शास्त्रतस्तावन्न कश्चित्। उभयं हि सर्वे संस्कृता धर्मा इति। कथमिदानीमनुत्पन्ना एवानागताः प्रतीत्यसमुत्पन्ना इत्युच्यन्ते। कथं तावदकृता एवानागताः संस्कृता उच्यन्ते। आभिसंस्कारिकया चेतनया चेतितत्वात्। अनास्रवाः कथम्। तेऽपि चेतिताः कुशलया चेतनया प्राप्तिं प्रति। निर्वाणेऽपि प्रसङ्गः। तज्जातीयत्वात्तत्रैवातिदेशो यथा नच तावद्रूप्यते रूपं चोच्यते तज्जातीयत्वादित्यदोषः। सूत्राभिप्रायस्त्वयमुच्यते।

**हेतुरत्र समुत्पादः समुत्पन्नं[5] फलं मतम् ।**

हेतुभूतमङ्ग प्रतीत्यसमुत्पादः समुत्पद्यतेऽस्मादिति कृत्वा फलभूतमङ्ग प्रतीत्यसमुत्पन्नम्। एवं सर्वाण्यङ्गान्युभययथा सिध्यन्ति। हेतुफलभवात्। न चैवं सत्यव्यवस्था[6] भवन्त्यपेक्षाभेदात्[7]। यदपेक्ष्य प्रतीत्यसमुत्पादो न तदेवापेक्ष्य प्रतीत्यसमुत्पन्नं हेतुफलवत् पितृपुत्रवच्च[8]। स्थविरपूर्णाशः किलाह स्यात् प्रतीत्यसमुत्पादो न प्रतीत्यसमुत्पन्ना धर्मा इति। चतुष्कोटिकः। [24a. 8A. IV] प्रथमा कोटिरनागता धर्माः। द्वितीयाऽर्हतश्चरमाः। तृतीया तदन्येऽतीतप्रत्युपन्ना धर्माः। चतुर्थ्य[9]संस्कृता धर्मा इति। अत्र तु सौत्रान्तिका विज्ञापयन्ति। किं खल्वेता इष्टय उच्यन्ते या यस्येष्टिराहोस्वित्सूत्रार्थः। सूत्रार्थ इत्याह। यदि सूत्रार्थो नैष सूत्रार्थः। कथं कृत्वा। यत्तावदुक्तमा"वस्थिक एष प्रतीत्यसमुत्पादो द्वादश पञ्चस्कन्धिका अवस्था द्वादशाङ्गानी"त्येतदुत्सूत्रम्। सूत्रेऽन्यथा[10]निर्देशाद्।[11] "अविद्या कतमा। यत्तत् पूर्वान्तेऽज्ञानमि"ति विस्तरेण। यच्च नीतार्थं न तत् पुनर्नेयं भवतीति नैष सूत्रार्थः। न वै सर्वं निर्देशतो नीतार्थं भवति। यथाप्रधानं चापि निर्देशाः क्रियन्ते। तद्यथा हस्तिपदोपमे "पृथिवीधातुः कतमः" इत्यधिकृत्याह "केशा रोमाणी"ति। सन्ति च तत्रान्येऽपि रूपादयः। एवमत्रापि यथाप्रधानं निर्देशः स्यात्। अनुपसंहार एषः। नहि तत्र केशादयः पृथिवीधातुना निर्दिश्यन्ते। यत एषामपरिपूर्णो निर्देशः स्यादपि तु केशादिभिरेव पृथिवीधातुः तत्र[12] निर्दिश्यते। न च केशादीनभ्यतीत्याप्यस्ति पृथिवीधातुरिति संपूर्ण एवास्य निर्देशः। एवमिहाप्यविद्यादीनां

---

१. MS. संमोहे। २. This page is blurred in the photo any many letters are indistinct. At the begining a few letters are so indistinct that it is very difficult to make out anything out of it. ३. Y. One reading is विनिवर्तये as before (see 21a). ४. MS. के। ५. MS. समुत्पन्न। ६. Y. ...व्यवस्थानं भवति। ७. Y. भिन्नापेक्षत्वात्। ८. Y. ....वद्वा। ९. MS. looks like चतुर्थी। १०. MS. ...न्येथा। ११. MS.....शादविद्या। १२. Y. omits तत्र।

प-[24b. 8B.IV]रिपूर्ण एव निर्देशो न सावशेषः। ननु चाभ्यतीत्यापि केशादीनश्रुखेट[१]शिङ्घाणका[२]दिष्वस्ति पृथिवीधातुः। सोऽपि निर्दिष्ट एवेति। यद्वा "पुनरन्यदप्यस्मिन् काये खक्खटं खरगतमि" वचनात् भवतु वा तथैवाविद्यावशेषो[३] यदि शक्यते दर्शयितुम्। जात्यन्तरस्य त्वविद्यायां[४] किंकृतः प्रक्षेपः। यद्यपि च तास्ववस्थासु पञ्च स्कन्धा विद्यन्ते यस्य तु भावाभावयोर्यस्य भावाभावनियमः तदेवाङ्गं व्यवस्थापयितुम्। सत्यपि च पञ्चस्कन्धकेऽर्हतः[५] संस्कारा न भवन्ति पञ्चस्कन्धहेतुकाः। किं तर्हि। अविद्याहेतुका एव। तथा पुण्यापुण्यानेञ्ज्योपगं च विज्ञानं तृष्णा[६]दयश्चेति। यथानिर्देशमेव[७] सूत्रार्थः। यदप्युक्तं "हेतुरत्र समुत्पादः समुत्पन्नं फलं यावच्चतुष्कोटिक" इति। एतदप्युत्सूत्रम्। सूत्रेऽन्यथा निर्देशात्। "प्रतीत्यसमुत्पादः कतमः। यदुतास्मिन् सतीदं भवतीति विस्तरेणोक्त्वा इति याऽत्र धर्मता धर्मस्थितिता यावदविपर्यस्तता अयमुच्यते प्रतीत्यसमुत्पाद" इति। धर्मता च नाम धर्मजातिः धर्माणां शैलिः। अतो येयं धर्मता य एष नियमः। अविद्यायामेवसत्यां संस्कारा भवन्ति नोन्यथा। एष प्र-[25a. 8A. V]तीत्यसमुत्पादो न हेतुरेव। यदपि चतुष्कोटिकमुक्तं तत्र यद्यनागताः धर्मा न प्रतीत्यसमुत्पन्नाः सूत्रं विरुध्यते। "प्रतीत्यसमुत्पन्ना धर्माः कतमे। अविद्या यावज्जातिः जरामरणम्।" तयो[८]रनागताध्वव्यवस्थानं नैष्टव्यमिति त्रिकाण्डव्यवस्था भिद्यते। असंस्कृतः प्रतीत्यसमुत्पाद इति निकायान्तरीयाः। "उत्पादाद्वा[९] तथागतानामनुत्पादाद्वा[१०] स्थितैवेयं धर्मते"ति वचनात्। तदेतदभिप्रायवशादेवं च न[११] चैवम्। कथं तावदेवं कथं वा नैवम्। यद्ययमभिप्राय उत्पादाद्वा तथागतानामनुत्पादाद्वा नित्यमविद्यादीन् प्रतीत्य संस्कारादीनामनुत्पादो न कदाचिदप्रतीत्यान्यद्वा प्रतीत्यातो नित्य इति एवमेतदिति प्रतिग्राह्यम्। अथायमभिप्रायः प्रतीत्यसमुत्पादो नाम किंचित् भावान्तरं नित्यमस्तीति। नैतदेवमिति प्रतिषेद्धव्यम्। किं कारणम्। उत्पादस्य संस्कृतलक्षणत्वात्। न च नित्यं भावान्तरमनित्यस्य लक्षणं युज्यते। उत्पादश्च नामोत्पत्तुर्भवतीति कोऽस्याविद्यादिभिरभिसंबन्धो[१२]यतस्तेषां प्रतीत्यसमुत्पाद इत्युच्येत। पदार्थश्चासमर्थो[१३]भवतीति नित्यश्च नाम प्रतीत्यसमुत्पादश्चेति।

---

१. Y. omits खेट। २. Y. सिंघाणिका। ३. Y. ....वशेषमस्तु। ४. MS. त्वविद्यायाः। ५. Y. omits अर्हतः। ६. Y. adds उपादान। ७. Y. यथानिर्देश एव। ८. MS. यावज्जातिः। जरामरणांगयोः। Y. यावज्जातिजरामरणम्। तयोः। Or is one जरामरणं dropped between यावज्जातिः and जरामरणाङ्गयोः? ९. MS. drops दा। १०. Y. adds तथागतानां। ११. MS. looks like ने। १२. MS. ...सम्बद्धो। १३. Y. ....श्चासम्बन्धो।

अथ प्रतीत्यसमुत्पाद इति कः पदा-[25b. 8B. V]र्थः। प्रतिः प्राप्त्यर्थं एति गत्यर्थः। उपसर्गवशेन धात्वर्थपरिणामात् प्राप्येति योऽर्थः प्रतीत्येति। पदिः सत्तार्थः[1] समुत्पूर्वः प्रादुर्भावार्थः। तेन प्रत्ययं प्राप्य समुद्भवः[2] प्रतीत्य-समुत्पादः। न युक्त एष पदार्थः। किं कारणम्। एकस्य हि कर्त्तुर्द्वयोः क्रिययोः पूर्वकालायां क्रियायां क्त्वाविधि[3]र्भवति। तद्यथा स्नात्वा भुङ्क्त इति। नचासौ पूर्वमुत्पादात् कश्चिदस्ति यः पूर्वं प्रतीत्योत्तरकालमुत्पद्यते। नचाप्यकर्तृकास्ति क्रियेति। आह चात्र

प्रत्येति पूर्वमुत्पादाद्यद्यसत्त्वान्न[4] युज्यते।
सह चेत् क्त्वा न सिद्धोऽत्र पूर्वकालविधानत इति॥

नैष दोषः। इदं तावदयं प्रष्टव्यः शाब्दिकः। किमवस्थो धर्मः उत्पद्यते वर्त्तमान उताहोऽनागत इति। किं चातः। यदि वर्त्तमान उत्पद्यते। कथं वर्त्तमानो यदि नोत्पन्नः। उत्पन्नस्य वा पुनरुत्पत्तावनवस्थाप्रसङ्गः। अथानागत उत्पद्यते कथमसतः कर्तृत्वं सिद्धत्यकर्तृका वा क्रियेति। अतो यदवस्थ उत्पद्यते तदवस्थ एव प्रत्येति। किमवस्थश्चोत्पद्यते। उत्पादाभिमुखोऽनागतः। तदवस्थ एव प्रत्ययं प्रत्येतीत्युच्यते। अनिष्पन्नं चेदं यदुत शाब्दिकीयं[5] कर्तृक्रिया[6]व्यवस्थानं भवतीत्येष कर्त्ता [26a. 8A. VI] भूतिरित्येषा क्रिया। न चात्र भवितुरर्थात् भूतिमन्यां क्रियां पश्यामः। तस्मादच्छलं व्यवहारेषु। एष तु वाक्यार्थः। अस्मिन् सत्यस्य भावः अस्योत्पादादिदमुत्पद्यत इति योऽर्थः सोऽर्थः प्रतीत्यसमुत्पाद इति। आह चात्र

"असन्नुत्पद्यते यद्वत् प्रत्येत्यपि तथाऽथ[7] सन्।
उत्पन्न उत्पद्यत इत्यनिष्ठाऽसन् पुराऽपि वा॥
सहकाले[8]ऽपि च क्त्वाऽस्ति दीपं प्राप्य तमो गतम्।
आस्यं व्यादाय शेते च[9] पश्चाच्चेत्किं न संवृते॥"

अन्ये पुनरस्य चोदचस्य परिहारार्थमन्यथा परिकल्पयन्ति। प्रतिर्वी-प्सार्थः[10]। इतौ साधव इत्या अनवस्थायिनः। उत्पूर्वः पदिः[11] प्रादुर्भावार्थः। तां तां कारण[12]सामग्रीं[13] प्रति इत्यानां समवायेनोत्पादः[14] प्रतीत्य-समुत्पाद इति। एषा तु कल्पनाऽत्रैव कल्प्यते[15]। इह कथं भविष्यति "चक्षुः प्रतीत्य रूपाणि चोत्पद्यते चक्षुर्विज्ञानमिति"ति। किमर्थं पुनर्भगवान्

१. MS. सत्त्वार्थः। २. MS. समुत् भवः। ३. Y. क्त्वाविधेः। ४. MS. ····सत्वेन्न। ५. Y. one reading is शाब्दकीयम्। ६. Y. कर्तुः क्रियायाश्च। ७. MS. तथासन्। ८. Y. सहभावे। ९. Y. वा। १०. MS. ····र्व्वीत्सार्थः। ११. MS. पदि। १२. Y. omits कारण। १३. MS. सामग्री। १४. MS. समवायोनोत्पादः। १५. Y. युज्यते।

पर्यायद्वयमाह "अस्मिन् सतीदं भवति अस्योत्पादादिदमुत्पद्यते" इति । अवधारणार्थम् । यथाऽन्यत्राह "अविद्यायां सत्यां संस्कारा भवन्ति नान्यत्राविद्यायाः संस्कारा" इति । अङ्गपरंपरां वा दर्शयितुम् । अस्मिन्नङ्गे सतीदं भवति अस्य पुनरङ्गस्योत्पादादिदमुत्पद्यत इति । जन्मपरंपरां वा । पूर्वान्ते सति मध्यान्तो भवति मध्यान्तस्योत्पादादपरान्त उत्पद्यत इति । साक्षात् पारंपर्येण[1] प्रत्ययभावं दर्शयति । कदाचिद्धि समनन्तरमविद्यायाः संस्कारा भवन्ति कदाचित् पारंपर्येणेति ।

अहेतुनित्यहेतुवादप्रतिषेधार्थमित्यपरे । नासति हेतौ भावो भवति न चानुत्पत्तिमतो नित्यात् प्रकृतिपुरुषादिकात्किंचिदुत्पद्यत इति । अस्यां तु कल्पनायां पूर्वपदस्य ग्रहणमनर्थकं प्राप्नोति । अस्योत्पादादिमुत्पद्यत इत्यनेनैवोभयवादप्रतिषेधसिद्धेः । सन्ति तर्हि केचिद्य आत्मनि[2] सत्याश्रयभूते संस्कारादीनां भावं परिकल्पयन्ति[3] अविद्यादीनां चोत्पादात्तदुत्पत्तिम् । अतस्तां कल्पनां पर्युदासयितु[4]मिदं निर्धारयांबभूव यस्यैवोत्पादाद्यदुत्पद्यते तस्मिन्नेव सति तत् भवति नान्यस्मिन् । यदुता"विद्याप्रत्ययाः संस्काराः यावदेवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवती"ति । अप्रहीणोत्पत्तिज्ञापनार्थमित्याचार्याः । अविद्यायामप्रहीणायां संस्कारा[5] न प्रहीयन्ते ।

तस्या एवोत्पादादुत्पद्यन्त [27a. 8A. VII] इति विस्तरः । स्थित्युत्पत्तिसंदर्शनार्थमित्यपरे । यावत् कारणस्रोत[6]स्तावत् कार्यस्रोतो[7] भवति । कारणस्यैव चो[8]त्पादात् कार्यमुत्पद्यत इति । उत्पादे त्वधिकृते कः प्रसङ्गः स्थितिवचनस्य भिन्नक्रमं च भगवान् किमर्थमाचक्षीत प्राक् स्थितिं पश्चादुत्पादम् । पुनराह "अस्मिन् सतीदं भवती"ति "कार्ये सति कारणस्य विनाशो भवती"ति । स्यान्मतमहेतुकं तर्हि कार्यमुत्पद्यत इत्यत आह नाहेतुकम्[9] । यस्मादस्योत्पादादिमुत्पद्यत इति । एष चेत्सूत्रार्थोऽभविष्यदस्मिन् सतीदं न भवतीत्येवाचक्षत[10] । पूर्वं च तावत्[11] कार्यस्योत्पादाने[12]वाचक्षत पश्चादस्मिन् सतीदं न भवतीति । एवं हि साधुः क्रमो भवति । इतरथा तु प्रतीत्यसमुत्पादः कतम इत्यादे[13]रर्थे कः प्रक्रमो विनाशवचनस्य । तस्मान्नैवेष सूत्रार्थः । कथं पुन"रविद्याप्रत्ययाः संस्कारा यावत् जातिप्रत्ययं[14] जरामरणमि"ति ।[15] अभिसंबन्धमात्रं दर्शयिष्यामः । बालो हि प्रतीत्यसमुत्पन्नं संस्कारमात्रमिदमित्यप्रजानन् आत्मदृष्टचस्मिमानाभिनिविष्ट आत्मनः सुखार्थमदुःखार्थं वा कायादिभिस्त्रिविधं कर्मारभते आयति सुखार्थं पुण्यं

---

१. Y. adds च । २. MS. आत्मानि । ३. Y. कल्पयन्ति । ४. MS. पर्युदाशयितु.... । ५. Y. adds भवन्ति । ६. MS. श्रोत । ७. MS. ...श्रोतो । ८ Y. omits च । ९. MS. न हेतुकं । १०. MS. ....चक्षते । Y. ....चक्ष्येत्....वक्ष्यत् । ११. Y. omits तावत् । १२. Y. ....त्पादमेवा... । १३. MS. not clear । १४. MS. प्रत्यय । १५. MS. ....मित्यभि... ।

सुखादुःखासुखार्थमानैञ्ज[1]मेहि-[27. 8B. VII]कसुखार्थमपुण्यं तस्या[2]विद्याप्रत्ययाः संस्काराः कर्माक्षेपवशाच्च विज्ञानसंततिस्तां तां गतिं गच्छति। ज्वालागमनयोगेनान्तरा[3]भवसंबन्धात्। तदन्यसंस्काराप्रत्ययं विज्ञानम्। एवं च कृत्वा तदुपपन्नं भवति विज्ञानाङ्गनिर्देशे "विज्ञानं कतमत्। षड्विज्ञानकाया" इति। विज्ञानपूर्वकं पुनस्तस्यां तस्यां गतौ नामरूपं जायते पञ्चस्कन्धकं कृत्स्नजन्मानुगतम्। विभङ्गे महानिदानपर्याये चैवं निर्देशात्। "तथा नामरूपपरिपाकात्क्रमेण षडायतनम्। ततो विषयसंप्राप्तौ सत्यां विज्ञानसंभव" इति। त्रयाणां संनिपातः स्पर्शः सुखादिवेदनीयः। ततस्त्रिविधा वेदना। ततस्तृष्णा। दुःखोत्पीडितस्य सुखायां वेदनायां कामतृष्णा। सुखायामदुःखासुखायां च रूपतृष्णा। अदुःखासुखायामारूप्यतृष्णा। तत इष्टवेदनातृष्णायाः कामादीनामुत्पादनम्। तत्र कामाः पञ्च कामगुणाः। दृष्टयो द्वाषष्टिर्यथा ब्रह्मजालसूत्रे। शीलं दौःशील्यविरतिः। व्रतं कुक्कुरगोव्रतादीनि। यथा च निर्ग्रन्थादीनां नग्नो भवत्यचेलक इति विस्तरः। ब्राह्मण[4]पाशुपतपरिव्राजकादीनां च दण्डाजिन[5]भस्मजटात्रिदण्डमौण्ड्यादिसमादानम्। आत्मवादः पुन-[28a. 8A. VIII]रात्मभावः। आत्मेति वादोऽस्मिन्नित्यात्मवादः। आत्मदृष्ट्यस्मिमानावित्यपरे। कथमनयोरात्मवादत्वम्। "आभ्यात्मे"ति वचनात्। आत्मनो ह्यसत्त्वादात्मवादोपादानमित्युच्यते। प्रज्ञप्तिमात्रकस्योपादानात्। यथोक्त"मात्मा आत्मेति भिक्षवो बालोऽश्रुतवान् पृथग्जनः प्रज्ञप्तिमनुपतितो नत्वत्रात्मा वा आत्मीयं वा" इति। तेषामुपादानं तेषु यश्छन्दरागः[6]। एवं हि भगवता सर्वत्राख्यातम् "उपादानं कतमत्। योऽत्रच्छन्दराग" इति। उपादानप्रत्ययं पुनः पौनर्भविकं कर्मोपचीयते। तद्भवः। "यदप्यानन्द कर्मायत्यां पुनर्भवाभिनिवर्तकमिदमत्र भवस्ये"ति सूत्रात्। भवप्रत्ययं पुनर्विज्ञानावक्रान्तियोगेन। अनागतं जन्म जातिः पञ्चस्कन्धिका। जातौ सत्यां जरामरणं यथा निर्दिष्टं सूत्रे। "एवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवती"ति। केवलस्येत्यात्मीयरहितस्य[7]। महतो दुःखस्कन्धस्येत्यनाद्यनन्तस्य दुःखसमूहस्य। समुदयो भवतीति प्रादुर्भावः। स एव तु वैभाषिकन्यायो यः पूर्वमुक्तः।

अथाविद्येति कोऽर्थः। या न विद्या। चक्षुरादिष्वपि प्रसङ्गः। विद्याया अभावस्तर्हि। एवं सति न किंचित् स्यात्। न [28b. 8B. VIII] चैतत् युक्तम्। तस्मात्

१. Y. आनिञ्ज्य or आनेञ्ज्यं। २. MS. तेस्यां। ३. MS. योगेनानन्तरा...। ४. MS. ब्राह्म। ५. MS. जिनाभस्म। ६. MS. यच्छन्दरागः। ७. Y. आत्मरहितस्य।

**विद्याविपक्षो धर्मोऽन्योऽविद्याऽमित्रानृतादिवत् ।।२८।।**

यथा मित्रविपर्ययेण तद्विपक्षभूतः[1] कश्चिदमित्रो भवति न तु यः कश्चिदन्यो मित्रान्नापि मित्राभावः। ऋतं[2] चोच्यते सत्यम्। तद्विपक्षभूतं वाक्यमनृतं भवति। अधर्मानर्थाकार्यादयश्च धर्मादिप्रतिद्वन्द्वभूताः। एवमविद्याऽपि विद्यायाः प्रतिद्वन्द्वभूतधर्मान्तरमिति द्रष्टव्यम्। कुत एतत्। प्रत्ययभावेनोपदेशात्। अपि च

**संयोजनादिवचनात्**

संयोजनं बन्धनमनुशय ओघो योगश्चाविद्योच्यते सूत्रेषु। न चाभावमात्रं तथा भवितुमर्हति। न चापि चक्षुरादयः। तस्माद्धर्मान्तरमेवाविद्या। यथा तर्हि कुभार्या अभार्येत्युच्यते कुपुत्रश्चापुत्रः। एवमविद्याऽप्यस्तु।

**कुप्रज्ञा चेन्न दर्शनात्।**

कुत्सिता हि प्रज्ञा क्लिष्टा। सा च दृष्टिस्वभावा इति नाविद्या युज्यते। या तर्हि न दृष्टिः सा भविष्यति। साऽपि भवितुं नार्हति। किं कारणम्।

**दृष्टेस्तत्संप्रयुक्तत्वात्**

अविद्या चेत् प्रज्ञाऽभविष्यन्न दृष्टिस्तया युज्यते संप्रायोक्ष्यत। द्वयोः प्रज्ञाद्रव्ययोरसंप्रयोगात्। इतश्च

**प्रज्ञोपक्लेशदेशनात् ।।२९।।**

"रागोपक्लिष्टं चित्तं नावमुच्यते अविद्योपक्लिष्टा प्रज्ञा न विशुध्यतो"त्युक्तं सूत्रे। न च सैव प्रज्ञा त-[29a. 8A1. I]स्याः प्रज्ञाया उपक्लेशो युक्त इति। यथा चित्तस्यान्यो भिन्नजातीय उपक्लेशो राग एवं प्रज्ञाया अविद्या। किं पुनरेवं नेष्यते। क्लिष्टया प्रज्ञया कुशला प्रज्ञा[3] व्यवकीर्यमाणा न विशुध्यति। अतोऽसौ तस्या उपक्लेश इति। यद्वापि रागोपक्लिष्टं चित्तं न विमुच्यते। किं तदवश्यं रागपर्यवस्थितं भवति। उपहतं तु तत्तथा रागेण भवति यन्न विमुच्यते। तां पुन[4]र्भावनां[5] व्यावर्तयतो विमुच्यते[6]। एवमविद्योपक्लिष्टा[7] प्रज्ञा न विशुध्यती[8]त्यविद्योपहतां परिकल्पयामः। को हि परिकल्पयन् वार्यते। जात्यन्तरमेव त्वविद्यां वर्णयन्ति। **योऽपि मन्यते "सर्वक्लेशा अविद्ये"ति तस्याप्यत एव व्युदासः। सर्वक्लेशस्वभावाऽपि**[9]

---

१. Y. omits भूतः। २. MS. रूतं। ३. MS. प्र is damaged। ४. Y. omits पुनः। ५. Y. one reading is वासनां। ६. MS. धिमुच्यते। ७. Y. अविद्योपहता क्लिष्टा। ८. Y. शुध्यति। ९. Y. हि।

सती संयोजनादिषु पृथग्नोच्येत दृष्टचा च न संप्रयुज्येत। अन्येन वा क्लेशेन दृष्टचादीनां परंपरासंप्रयोगात् चित्तमपि चाविद्योपक्लिष्टमेवोक्तं भवेत्। अथ मतं विशेषणार्थं तथोक्तमिति। प्रज्ञायामप्यविद्याविशेषणं[1] कर्त्तव्यं भवेत्[2]। भवत्वविद्या धर्मान्तरं[3] कस्तु तस्याः स्वभावः। सत्यवन्न कर्मफलानामसंप्रख्यानम्। एतच्चैव न ज्ञायते किमिदमसंप्रख्यानं नामेति। यदि यन्न संप्रख्यानं संप्रख्यानाभावेऽपि [29b. 8B1. I] तथैव दोषो यथा अविद्यायाम्। अथ संप्रख्यान[4]विपक्षभूतं धर्मान्तरम्। तदिदं तथैव न ज्ञायते किं तदिति। एवंजातीयकोऽपि धर्माणां निर्देशो भवति[5]। तद्यथा "चक्षुः कतमत्। यो रूपप्रसादश्चक्षुर्विज्ञानस्याश्रय" इति। अस्मीति सत्त्वमयताऽविद्येति भदन्तधर्मत्रातः। का पुनरस्मिमानादन्या[6] मयता। याऽसौ सूत्र उक्ता "सोऽहमेवं ज्ञात्वा एवं दृष्ट्वा सर्वासां तृष्णानां सर्वासां दृष्टीनां सर्वासां मयतानां सर्वेषामहंकारममकारास्मिमानाभिनि[7]वेशानुशयानां प्रहाणात् परिज्ञानान्निश्छायो निवृत" इति। अस्त्येषा मयता। सा त्वियमविद्येति कुत एतत्। यत एषा नान्यः क्लेशः शक्यते[8] वक्तुम्। ननु चान्यो मान एव स्यात्। अत्र[9] पुनर्विचार्यमाणे वहु वक्तव्यं जायते। तस्मात्तिष्ठत्वेतत्।

अथ नामरूपमिति कोऽर्थः। रूपं विस्तरेण[10] यथोक्तम्[11]।

**नाम त्वरूपिणः स्कन्धाः**

किं कारणम्। नामेन्द्रियार्थवशेनार्थेषु नमतीति नाम। कतमस्य नाम्नो वशेन। यदिदं लोके प्रतीतं तेषां तेषामर्थानां प्रत्यायकं गौरश्वो रूपं रस[12] इत्येवमादि। एतस्य पुनः केन नामत्वम्। तेषु तेष्वर्थेषु तस्य नाम्नो नमनात्। इह निक्षिप्ते [30a. 8A1. II] काय उपपत्त्य[13]न्तरे नमनान्नामरूपिणः स्कन्धा इत्यपरे॥ षडायतनमुक्तम्।

स्पर्शो वक्तव्यः।

**स्पर्शाः षट्**

चक्षुःसंस्पर्शो यावन्मनःसंस्पर्श इति। ते पुनः

१. MS. The letter in the margin seems to be द्या and वि of विशेषण is missing. Y. प्रज्ञायामपि विशेषणम्। २. Y. स्यात्। ३. MS. धर्मान्तर। ४. MS. असंप्रख्यान...। ५. MS. ति is damaged in the photo. On this page the last letter of each line is damaged in the photo. ६. MS. ....मानोदन्या। ७. MS. ति is damaged in photo. ८. श is damaged. ९. Y. adds तु। १० MS. वि is damaged. ११. Y. omits यथा। १२. Y. रूपरस। १३. MS. उपपद्य।

**संनिपातजाः ।**

त्रयाणां संनिपाताज्जाता इन्द्रियार्थविज्ञानानाम् । युक्तं तावत् पञ्चानामिन्द्रियाणामर्थविज्ञानाभ्यां संनिपातः । सहजत्वात् । मनइन्द्रियस्य पुनर्निरुद्धस्यानागतवर्त्तमानाभ्यां धर्ममनोविज्ञानाभ्यां कथं संनिपातः । अयमेव तेषां संनिपातो यः कार्यकारणभावः । एककार्यार्थो वा संनिपातार्थः । सर्वे च ते त्रयोऽपि स्पर्शोत्पत्तौ प्रगुणा भवन्तीति । अत्र पुनराचार्याणां भेदं गता बुद्धयः । केचिद्धि सक्कन्निपातमेव स्पर्शं व्याचक्षते सूत्रं चात्र ज्ञापकमानयन्ति "इति य एषां त्रयाणां धर्माणां संगतिः संनिपातः समवायः स स्पर्शः" इति । केचित्पुनश्चित्तसंप्रयुक्तं धर्मान्तरमेव स्पर्शं व्याचक्षते सूत्रं चात्र ज्ञापकमानयन्ति "षट्षट्को धर्मपर्यायः कतमः । षडाध्यात्मिकान्यायतनानि । षट् वाह्यान्यायतनानि । षट् विज्ञानकायाः । षट् स्पर्शकायाः । षट् वेदनाकायाः । षट् तृष्णाकाया" इति । अत्र हीन्द्रियार्थविज्ञानेभ्यः स्पर्शका-[30b. 8B1. II]याः पृथग् देशिताः । तत्र ये संनिपातमेव स्पर्शमाहुस्त एवं परिहारमाहुः । न वै पृथग्निर्देशात् पृथग्भावो भवति । मा भूद्धर्मायतनाद्वेदनातृष्णयोः[1] पृथग्भाव इति । नैष दोषस्तद्व्यतिरिक्तस्यापि धर्मायतनस्य भावात् । न चैवं स्पर्शभूतात्त्रयादन्यत्त्रयमस्ति यस्य शेषस्यात्र ग्रहणं स्यात् । यद्यपि[2] हीन्द्रियार्थौ[3] स्यातामविज्ञानकौ न तु पुनर्विज्ञानमनिन्द्रियार्थकम् । तस्मात्त्रिषु निर्दिष्टेषु पुनः स्पर्शस्य[4] ग्रहणमनर्थकं प्राप्नोति । न[5] खलु सर्वे चक्षूरूपे सर्वस्य चक्षुर्विज्ञानस्य कारणं नापि सर्वं चक्षुर्विज्ञानं सर्वयोश्चक्षूरूपयोः कार्यम् । अतो येषां कार्यकारणभावस्ते स्पर्शभावे[6] व्यवस्थापिता[7] इत्येके । ये पुनः संनिपातादन्यं स्पर्शमाहुस्त एतत्सूत्रं कथं परिहरन्ति "इति य एषां त्रयाणां संगतिः संनिपातः समवायः स स्पर्श" इति । न वा एवं पठन्ति । किं तर्हि । संगतेः संनिपातात् समवायादिति पठन्ति कारणे वा कार्योपचारोऽयमिति ब्रुवन्ति । अतिवहुविस्तर[8]प्रसारिणी त्वेषा कथेत्यलं प्रसङ्गेन । अन्यमेव स्पर्शं वर्णयन्त्याभिधार्मिकाः । तेषां पुनः षण्णां स्पर्शानां

**पञ्चप्रतिघसंस्पर्शः[9] षष्ठोऽधिवच-**[31a. 8A1. III]**नाह्वय ॥३०॥**

चक्षुःश्रोत्रघ्राणजिह्वाकायसंस्पर्शाः **पञ्च प्रतिघ[10]संस्पर्श** इत्युच्यते । सप्रतिघेन्द्रिया-

१. MS. ष्ण is damaged in the photo. On this page also, the last letter of each line is damaged. २. MS. य is damaged. ३. Y. omits हि । ४. Y. omits स्य। ५ MS. न is missing in the photo. ६. MS. स्प is damaged. Y. ··भावेन । ७ Y. व्यवस्थिता । ८. Y. adds प्रकार । ९. G. ····संस्पर्शाः । १०. MS. drops घ ।

श्रयत्वात्। मनःसंस्पर्शः षष्ठः सोऽधिवचनस्पर्श इत्युच्यते। किं कारणं अधिवचनमुच्यते नाम। तत्किलास्याधिकमालम्बनमयोऽधिवचन[1]संस्पर्श इति। यथोक्तं "चक्षुर्विज्ञानेन नीलं विजानाति नो तु नीलं मनोविज्ञानेन नीलं विजानाति नीलमिति च विजानाती"ति। एक आश्रयप्रभावितो द्वितीय आलम्बनप्रभावितः। अपरे पुनराहुः। वचनमधिकृत्यार्थेषु मनोविज्ञानस्य प्रवृत्ति[2]र्न पञ्चानाम्। अतस्तदेवाधिवचनम्। तेन संप्रयुक्तः स्पर्शोऽधिवचनसंस्पर्श इत्येक आश्रयप्रभावितो द्वितीयः संप्रयोगप्रभावितः। पुनस्त एव षट् स्पर्शास्त्रयो भवन्ति।

**विद्याविद्येतरस्पर्शाः**

विद्यासंस्पर्शोऽविद्यासंस्पर्शः। ताभ्यां चान्यो नैवविद्यानाविद्यासंस्पर्श इति। एते पुनर्यथाक्रमं वेदितव्याः

**अमलक्लिष्टशेषिताः।**

अनास्रवः स्पर्शो विद्यासंस्पर्शः क्लिष्टोऽविद्यासंस्पर्शो विद्याऽविद्याभ्यां संप्रयुक्तत्वात्। शेषो नैवविद्यानाविद्यासंस्पर्श उभा[3]भ्यामसंप्रयोगात्। कः पुन शेषः। कुशलसास्रवोऽनिवृताव्याकृतश्च[4]। पुनरविद्या-[3Ib. 8B. III][5]संस्पर्शस्याभीक्ष्णसमुदाचारिण एकदेशस्य ग्रहणात् द्वौ स्पर्शौ भवतः।

**व्यापादानुनयस्पर्शौ**

व्यापादानुनयाभ्यां संप्रयोगात्। पुनः सर्वसंग्रहेण

**सुखवेद्यादयस्त्रयः ॥३१॥**

सुखवेदनीयः स्पर्शो दुःखवेदनीयोऽदुःखासुखवेदनीयश्च। सुखवेदनादिहितत्वात्। अथवा वेद्यते तद्वेदयितुं वा शक्यमिति वेदनीयम्। किं तत्। वेदितम्। सुखं वेदनीयमस्मिन्निति सुखवेदनीयः स्पर्शो यत्र सुखं वेदितमस्ति। एवं दुःखा[6]दुःखासुखवेदनीयावपि योज्यौ। त एते षोडश स्पर्शा भवन्ति। उक्तः स्पर्शः॥

वेदना वक्तव्या। तत्र यः पूर्वं षड्विधः स्पर्श उक्तः

**तज्जाः षड्वेदनाः**

चक्षुःसंस्पर्शजा वेदना श्रोत्रघ्राणजिह्वाकायमनःसंस्पर्शजा वेदनाः। तासां पुनः

---

१. Y. अधिवचनं। २. MS. प्रवृत्ति। ३. MS. looks like भूता। ४. MS. ··· व्याकृतास्च। ५. The right end of this page also is damaged in the photo. ६. MS. drops दुःखा।

पञ्च कायिकी चैतसी परा।

चक्षुःश्रोत्रघ्राणजिह्वाकायसंस्पर्शजाः पञ्च वेदनाः कायिकी वेदनेत्युच्यते। रूपीन्द्रियाश्रितत्वात्। मनःसंस्पर्शजा पुनर्वेदना चैतसिकी[1]त्युच्यते। चित्तमात्राश्रितत्वात्। अथ किं स्पर्शादुत्तरकालं वेदना भवत्याहोस्वित् समानकालम्। समानकालमिति वैभाषिकाः। अन्योन्यं सहभूहेतुत्वात्। कथं सहोत्पन्नयो-[32a. 8A1. IV]र्जन्यजनकभावः सिध्यति। कथं च न सिध्यति। असामर्थ्यात्। जाते[2] धर्मे धर्मस्य नास्ति सामर्थ्यं प्रतिज्ञाऽविशिष्टम्। यदेव हीदं सहोत्पन्नयोर्जन्यजनकभावो नास्तीति तदेवेदं जाते धर्मे धर्मस्य नास्तीति। अन्योन्यजनकप्रसङ्गात्तर्हि। इष्टत्वाददोषः। इष्टमेव हि सहभूहेतोरन्योन्यफलत्वम्। इष्टमिदं सूत्रे त्वनिष्टं स्पर्शवेदनयोरन्योन्यफलत्वम्। "चक्षुःसंस्पर्शं[3] प्रतीत्य उत्पद्यते चक्षुःसंस्पर्शजा वेदना न तु चक्षुःसंस्पर्शजां वेदनां[4] प्रतीत्योत्पद्यते चक्षुःसंस्पर्शं" इति वचनात्। जनकधर्मातिक्रमाच्चायुक्तम्। यो हि धर्मो यस्य धर्मस्य जनकः प्रसिद्धः स तस्मात् भिन्नकालः प्रसिद्धः। तद्यथा पूर्वं बीजं पश्चादङ्कुरः पूर्वं क्षीरं पश्चाद्दधि पूर्वमभिघातः पश्चाच्छब्दः पूर्वं मनः पश्चात्[5] मनोविज्ञानमित्येवमादि। अन्यथा परंपरापेक्षत्वात् कार्यकारणयोः सर्वं वा युगपदुत्पद्यते न वा कदाचित् पश्चाद्विशेषाभावात्। नहि न सिद्धः कार्यकारणयोः पूर्वापरभावः। सहभावोऽपि तु सिद्धः। तद्यथा चक्षुर्विज्ञानादीनां चक्षूरूपादिभिर्भूतभौतिकानां च तत्रापि पूर्वमिन्द्रियार्थौ[6] पश्चाद्वि-[32b. 8B1. IV]ज्ञानम्। पूर्वकाच्च भूतभौतिकसमुदायादुत्तर उत्पद्यत इतीष्यमाणे कः प्रतिषेधः। यथा तर्हि च्छायाङ्कुरयोरेवं स्पर्शवेदनयो[7]रिति वैभाषिकाः। स्पर्शादुत्तरकालं वेदनेत्यपरे। इंद्रियार्थौ हि पूर्वान्तो विज्ञानम्। सोऽसौ त्रयाणां संनिपातः स्पर्शः स्पर्शप्रत्ययात्पश्चाद्वेदना तृतीय[8]क्षण इति। एवं तर्हि न सर्वत्र विज्ञाने वेदना प्राप्नोति न च सर्वं विज्ञानं[9] स्पर्शः। नैष दोषः। पूर्वस्पर्शहेतुका ह्युत्तरत्र स्पर्शे[10]वेदना सर्वे च स्पर्शाः सर्ववेदनकाः[11] सर्वं च विज्ञानं स्पर्श इति। इदमयुक्तं[12] वर्त्तते। किमत्रायुक्तम्। यदुत भिन्नालम्बनयोरपि स्पर्शयोः पूर्वस्पर्शहेतुकोत्तरस्य[13] वेदनेति। कथं नामान्यजातीयालम्बनस्पर्शसंभूता वेदनाऽन्यालम्बना भविष्यति येन वा चित्तेन संप्रयुक्ता ततो भिन्नालम्बनेति। अस्तु तर्हि

---

१. MS. चेतसिकी। २ Y. adds हि। ३. MS. संस्पर्श। ४. MS.....संस्पर्शजा वेदना। ५. MS. पश्चात्मनो...। ६ MS. ....न्द्रियार्थो। ७. Y. adds अपि। ८. Y. तृतीये। ९. Y. सर्वविज्ञानं। १०. MS. स्पर्शवेदना। ११. Y. संवेदनकाः। १२. MS. इदमुक्तं। १३. Y. उत्तरत्र।

तस्मिन्काले स्पर्शभूतं विज्ञानमवेदनकम्। तस्माच्च यत् पूर्वं विज्ञानं सवेदनकं तन्न स्पर्शः। प्रत्ययवैधुर्यादित्येवं सति को दोषः। महाभूमिकनियमो भिद्यते। "सर्वत्र चित्ते दशमहाभूमिका" इति। क्व चैष नियमः सिद्धः। शास्त्रे। सूत्रप्रमाणका वयं न शास्त्रप्रमा-[33a. 8A₁. V]णकाः। उक्तं हि भगवता "सूत्रान्तप्रतिशरणैर्भवितव्यमि" ति। न वा एष महाभूमिकार्थः सर्वत्र चित्ते दश महाभूमिकाः संभवन्तीति। कस्तर्हि महाभूमिकार्थः। तिस्रो भूमयः। सवितर्का सविचारा भूमिः अवितर्का विचारमात्रा अवितर्काऽविचारा भूमिः। पुनस्तिस्रः। कुशला भूमिः अकुशलाऽव्याकृता भूमिः। पुनस्तिस्रः। शैक्षी भूमिरशैक्षी नैवशैक्षी भूमिः। तद्य एतस्यां सर्वस्यां भूमौ भवन्ति ते महाभूमिकाः। ये कुशलायामेव[1] ते कुशलमहाभूमिकाः। ये क्लिष्टायामेव ते क्लेशमहाभूमिकाः। ते पुनर्यथासंभवं पर्यायेण नतु सर्वे युगपदित्यपरे। अकुशलमहाभूमिकास्तु पाठप्रसङ्ग नासञ्जिताः[2]। इदानीं पूर्वं न पठ्यन्ते स्म। यदि तर्हि स्पर्शादुत्तरकालं वेदना सूत्रं परिहार्यं "चक्षुः प्रतीत्य रूपाणि चोत्पद्यते चक्षुर्विज्ञानं त्रयाणां संनिपातः स्पर्शः सहजाता वेदना संज्ञा चेतने"ति। सहजाता इत्युच्यते न स्पर्शसहजाता इति किमत्र परिहार्यम्। समनन्तरेऽपि चायं सहशब्दो दृष्टस्तद्यथा "मैत्रीसहगतं स्मृतिसंबोध्यङ्गं भावयती" त्यज्ञापकमेतत्। यत्तर्हि सूत्र उक्तं "या च वेदना या च संज्ञा या च चेत-[33b. 8B₁. V]ना[3] यच्च विज्ञानं संसृष्टा इमे धर्मा नासंसृष्टा[4]" इत्यतो नास्ति वेदनाभिरसंसृष्टं विज्ञानम्। संप्रधार्यं तावदेतत् क एष संसृष्टार्थः। तत्र हि सूत्र एवमुक्तं "तद्वेदयते तच्चेतयते यच्चेतयते तत्संप्रजानीते यत्संप्रजानीते तद्विजानाती"ति। तन्न विज्ञायते किं तावदयमेषामालम्बन[5]नियम उक्त उताहो क्षणनियम इति। आयुरूष्मणोः साहभाव्ये[6] संसृष्टवचनात् सिद्धः क्षणनियमः। यच्चापि सूत्र उक्तं "त्रयाणां संनिपातः स्पर्शः" इति। तत् कथं विज्ञानं चास्ति न च त्रयाणां संनिपातो न च स्पर्श इति। तस्मादवश्यं सर्वत्र विज्ञाने स्पर्शः स्पर्शसहजा च वेदनैष्टव्या। अलमतिप्रसङ्गिन्या कथया। प्रकृतमेवानुक्रम्यताम्[7]॥ उक्ता समासेन चैतसिकी वेदना॥

## पुनश्चाष्टादशविधा सा मनोपविचारतः[8] ॥३२॥

सैव चैतसिकी वेदना पुनराष्टदश मनोपविचारव्यवस्थानादष्टादधा[9] भिद्यते। पुनः संधिकरणं चात्र द्रष्टव्यम्। अष्टादशमनोपविचाराः कतमे। षट् सौमनस्योपविचाराः षट्

१. Y. adds भूमौ। २. Y....नासंहिताः। ३. Y. या च चेतना या च संज्ञा। ४. MS. न संसृष्टा। ५. MS. ...लम्बल। ६. Y. सहभाव्ये। ७. MS. प्रकृतामवानु...। ८. MS. मानोप...। ९. MS. ...दस्टादशधा।

दौर्मनस्योपविचाराः षडुपेक्षोपविचाराः[१]। कथमेषां व्यवस्थानम्। यदि स्वभावतः। त्रयो भवि-[34a. 8A.1 VI]ष्यन्ति। सौमनस्यदौर्मनस्योपेक्षाविचाराः। अथ संप्रयोगतः। एको भविष्यति। सर्वेषां मनःसंप्रयुक्तत्वात्। अथालम्बनतः। षट् भविष्यन्ति। रूपादिषड्विषयालम्बनत्वात्। त्रिभिरपि स्थापना। तेषां पञ्चदश रूपाद्युपविचारा असंभिन्नालम्बनाः प्रतिनियतरूपाद्यालम्बनत्वात्। त्रयो धर्मोपविचारा उभयथा[२]। मनोपविचारा इति कोऽर्थः। मनः किल प्रतीत्यैते सौमनस्यादयो विषयानुपविचरन्तीति। विषयेषु वा मन उपविचारयन्तीत्यपरे। वेदनावशेन मनसो विषयेषु पुनः पुनर्विचरणात्[३]। कस्मात् कायिकी वेदना न मनोपविचारः। नैव ह्यसौ मन एवाश्रिता नाप्युपविचारिकाऽविकल्पकत्वादित्ययोगः। तृतीयध्यानसुखस्य कस्मान्मनोपविचारेष्वग्रहणम्। आदितः किल कामधातौ मनोभूमिकसुखेन्द्रियाभावात्तत्प्रतिद्वंद्वेन दुःखोपविचाराभावाच्चेति। यदि मनोभूमिका एवैते। यर्त्तार्ह सूत्र उक्तं "चक्षुषा रूपाणि दृष्ट्वा सौमनस्यस्थानीयानि रूपाण्युपविचरन्तीत्येवमादिः। कथम्। पञ्चविज्ञानकायाभिनिर्हृतत्वमभिसंधायैतदुक्तं "मनोभूमिका ह्येते[४]। तद्यथाऽशुभा चक्षुर्वि-[34b. 8B1 VI]ज्ञानाभिनिर्हृता च मनोभूमिका चे"ति। अपि तु "दृष्ट्वा यावत् स्पृष्ट्वे"ति वचनात्। अचोद्यमेवैतत्[५]। येऽप्य[६]दृष्ट्वा[७] यावदस्पृष्ट्वोपविचरन्ति[८] तेऽपि मनोपविचाराः। इतरथा हि कामधातौ रूपधात्वालम्बना रूपाद्युपविचारा न स्युः कामधात्वालम्बनाश्च रूपधातौ गन्धरसस्प्रष्टव्योपविचाराः। यथा तु व्यक्ततरं तथोक्तं योऽपि रूपाणि दृष्ट्वा शब्दानुपविचरति सोऽपि मनोपविचारः। यथा त्वनाकुलं तथोक्तमिन्द्रियार्थस्य[९] व्यवच्छेदतः। किमस्ति रूपं यत्सौमनस्यस्थानीयमेव स्यात् यावदुपेक्षास्थानीयमेव। अस्ति संतानं नियमय्य[१०] न त्वालम्बनम्॥

अथैषां मनोपविचाराणां कति कामप्रतिसंयुक्तास्तेषां च कति किमालम्बना एवं यावदारूप्यप्रतिसंयुक्ता वक्तव्याः। आह

**कामे स्वालम्बनाः[११] सर्वे**

कामधातौ सर्वेऽष्टादश सन्ति स[१२] च तेषां सर्वेषामालम्बनम्। तेषामेव

---

१. MS. षडुपेक्षो''। २. MS. उदाभयथा। ३. Y. विचारणात्। ४. Y. ''''स्त्वेते। ५. Y. omits एव। ६. Y. योऽपि। ७. MS.'''दृष्ट्वो। ८. Y. उपविचरति। ९. Y. omits ःय। १०. Y. नियम्य। N.D. notes Mss नियपममय्येति। Probably it is नियमय्येति। ११. MS. कामेष्वाल''''। १२. Y. adds एव।

**रूपो द्वादशगोचरः ।**

रूप[1]धातुर्द्वादशानामालम्बनं षट् गन्धरसोपविचारानपास्य । तत्र तयोरभावात् ।

**त्रयाणामुत्तरः**

गोचर इति वर्तते । आरूप्यधातुस्त्रयाणां धर्मोपविचाराणामालम्बनम् । तत्र रूपाद्यभावात् ।। उक्ताः [35a. 8A1. VII] कामप्रतिसंयुक्ताः ।

रूपप्रतिसंयुक्ता वक्तव्याः । तत्र तावत्

**ध्यानद्वये द्वादश**

दौर्मनस्योपविचारानपास्य । ते च द्वादश

**कामगाः ।।३३।।**

कामान् गच्छन्तीति कामगाः । कामधातुमालम्बन्त इत्यर्थः । दृष्टो हि विषयाणां[2] ग्रहणार्थे गमिप्रयोगः । कथमेतत् गम्यते । एवमेतत् गम्यत इति ।

**स्वोऽष्टालम्बनम्**

स एव रूपधातुस्तेषां स्वः। स्वोऽष्टानां मनोपविचाराणामालम्बनं गन्धरसोपविचारांश्चतुरो हित्वा ।

**आरूप्यो[3] द्वयोः**

धर्मोपविचारयोरालम्बनम् ।

**ध्यानद्वये तु षट् ।**

तृतीयचतुर्थयोर्ध्यानयोः षडुपेक्षोपविचारा[4] एव सन्ति नान्ये । तेषां पुनरालम्बनं

**कामाः षण्णां**

कामधातुः षण्णामप्यालम्बनम् ।

**चतुर्णां स्वः**

रूपधातुश्चतुर्णां तत्र गन्धरसाभावात् ।

**एकस्यालम्बनं परः ।।३४।।**

आरूप्यधातुरेकस्यैव धर्मोपविचारस्यालम्बनम् । उक्ता रूपप्रतिसंयुक्ताः ।

---

१. Y. रूपी । १. MS. त्रिपयानां । ३. Y. आरूप्या । N.D. adopts आरूप्यं ।
४. MS. षड़पेक्षो...।

आरूप्यप्रतिसंयुक्ता इदानीमुच्यन्ते ।

**चत्वारोऽरूपिसामन्ते**

आकाशानन्त्यायतनसामन्तकमत्रारूपिसामन्तकम् । तत्र चत्वारो रूपशब्दस्प्रष्टव्य-धर्मोपविचाराः । ते च

**रूपगाः**

चतुर्थं हि ध्यानमेषामालम्बनम् । येषां तत् व्यवच्छिन्नालम्बनमस्ति येषां पुनः परिपिण्डि-[35 b.8B1. VII]तालम्बनं तेषां तत्रैक एव संभिन्नालम्बनो[1] धर्मोपविचारः ।

**एक ऊर्ध्वगः ।**

एक एव धर्मोपविचारस्तत्रारूप्यधात्वालम्बनः ।

**एको मौले**

मौले पुनरारूप्ये धर्मोपविचार एवैकोऽस्ति नान्यः । स चापि

**स्वविषयः**

आरूप्यधात्वालम्बन एव । नहि मौलानामारूप्याणामधरो धातुरालम्बनमिति पश्चात् प्रतिवेदयिष्यामः । एते च मनोपविचाराः

**सर्वेऽष्टादश सास्रवाः ॥३५॥**

नास्ति कश्चिदनास्रवः । कः कतिभिः समन्वागतः । कामधातूपपन्नो रूपावचरस्य कुशलस्य चित्तस्यालाभी कामावचरैः सर्वैः प्रथमद्वितीयध्यानभूमिकैरष्टाभिः तृतीयचतुर्थध्यानभूमिकैश्चतुर्भिः क्लिष्टैर्गन्धरसालम्बनान् पर्युदस्य आरूप्यावचरेणैकेन क्लिष्टेनैवालाभी रूपावचरस्य कुशलस्य चित्तस्या[2]वीतरागः सर्वैः कामावचरैः प्रथमध्यानभूमिकैर्दशभिः । चतुर्भिः सौमनस्योपविचारैः क्लिष्टैर्गन्धरसालम्बनौ व्युदस्य[3] षड्भिरुपेक्षोपविचारैरनागम्यभूमिकैः । द्वितीयध्यानभूमिकैरष्टाभिः ।[4] तृतीयचतुर्थध्यानारूप्यभूमिकैः[5] पूर्ववत् । अनया वर्त्तन्या शेषमनुगन्तव्यम् । ध्यानोपपन्नस्तु [36a. 8A1. VIII] कामावचरेणैकेनोपेक्षाधर्मोपविचारेण निर्माण-चित्तसंप्रयुक्तेन समन्वागतो वेदितव्यः । अपर आह । अस्त्येवं मनोपविचाराणां

---

१. Y. संमिश्रा... । २. MS. seems to drop चित्तस्या । All support the reading of चित्तस्यावीतरागः । ३. Y. ...लम्बनावपास्य । ४. Y. omits ध्यान-भूमिकैरष्टाभिः and reads द्वितीयतृतीय... । ५. Y. ....रूप्यजैः ।

वैभाषिकीयोऽर्थः। सूत्रार्थस्त्वन्यथा दृश्यते। नहि यो यस्माद्वीतरागः स तदालम्वनमुपविचरतीति[1] युक्तम्। अतः सास्रवा अपि न सर्वे सौमनस्यादयो मनोपविचाराः। किं तर्हि। सांक्लेशिका यैर्मनो विषयानुपविचरतीति। कथं चो[2]पविचरति[3]। अनुनीयते च[4] प्रतिहन्यते चा[5]प्रतिसंख्याय चो[6]पेक्षते येषां प्रतिपक्षेण षट् सातता विहारा भवन्ति। चक्षुषा रूपाणि दृष्ट्वा नैव सुमना भवति न दुर्मना उपेक्षको विहरति[7] स्मृतिमान् संप्रजानन् एवं यावन्मनसा धर्मान् विज्ञायेति[8]। नह्यर्हतो लौकिकं[9] नास्ति कुशलं धर्मालम्वनं सौमनस्यं यत्तु तत्सांक्लेशिकं मनस उपविचारभूतं तस्यैव प्रतिषेधो[10] लक्ष्यत इति। पुनस्त एव सौमनस्यादयः षट्त्रिंशच्छास्तृपदानि[11] भवन्ति। गर्धनैष्क्रम्याश्रितभेदेन[12]। तद्भेदस्य शास्त्रा गमितत्वात्[13]। तत्र गर्धाश्रिताः[14] क्लिष्टा नैष्क्रम्याश्रिताः कुशलाः। एवमेतद्वेदनाख्यं भवाङ्गमनेकप्रकारभेदं वेदितव्यम्। शेषाण्यङ्गानि पुन-[30b. 8B1. VIII]र्नोच्यन्ते। किं कारणम्। यस्मात्

**उक्तं च वक्ष्यते चान्यत्**

किंचिदत्राङ्गमुक्तं किंचित् पश्चाद्वक्ष्यते। तत्र विज्ञानं तावदुक्तं

"विज्ञानं प्रतिविज्ञप्तिर्मनआयतनं च तदि"ति।

षडायतनमप्युक्तं

"तद्विज्ञानाश्रया रूपप्रसादाश्चक्षुरादय" इति।

संस्कारा भवश्च कर्मकोशस्थाने व्याख्यास्यन्ते। तृष्णोपादानि क्लेशकोशस्थाने। स चैष प्रतीत्यसमुत्पादः समासतः क्लेशकर्मवस्तूनीति प्राक् ज्ञापितम्।[15]

**अत्र तु क्लेश इष्यते।**

**बीजवन्नागवन्मूलवृक्षवत्तुषवत्तथा॥३६॥**

किमस्य बीजादिभिः साधर्म्यम्। तद्यथा बीजादङ्कुरकाण्डपत्रादीनां प्रभवो भवत्येवं क्लेशात् क्लेशकर्मवस्तूनाम्। यथा नागाधिष्ठितं सरो न शुष्यत्येवं

---

१. MS. drops वि। २. Y. omits च। ३. Y. adds तत्र। ४. Y. वा। ५. Y. वा। ६. Y. वा। ७. Y. भवति। ८. MS. विज्ञायते। ९. MS. लौकिकं। १०. MS. प्रतिषेधो न लक्ष्यते, but न seems to be mistake. ११. MS. पादानि। १२. Y. changes the order and reads गर्धाश्रितनैष्क्रम्याश्रितभेदेन षट्त्रिंशच्छास्तृपदानि। १३. MS. शास्त्राभित्वात्। १४. MS. श्रिता। १५. Y. प्रज्ञापितं in place of प्राक्ज्ञापितम्।

क्लेशनागाधिष्ठितं जन्मसरः। यथा चानपोद्धृतमूला वनस्पतयश्छिन्नाश्छिन्नाः पुनरपि प्ररोहन्त्येवमनपोद्धृतक्लेशमूला गतयः। यथा च वृक्षाः कालेन कालं पुष्पफलानां प्रसोतारो भवन्त्येवं क्लेशा अप्यसकृत् क्लेशकर्मवस्तूनां हेतुर्भवन्ति। यथा च तुषावनद्धास्तण्डुलाः प्ररोहणसमर्था भवन्ति न केवला एवं क्लेशप्राप्ततुषावनद्धं कर्म जन्मान्तरविरोहणे[1] समर्थं [37a.9A1.I] न केवलमित्येवं तावत् क्लेशो बीजादिवद्वेदितव्यः।

तुषितण्डुलवत् कर्म तथैवौषधि[2]पुष्पवत्।

तुषोऽस्यास्तीति तुषी। तुषस्थानीयः[3] क्लेश उक्तः। इदानीं तुषितण्डुलस्थानीयं कर्मोच्यते। सन्त्योषधयः फलपाकान्ता एवं कर्माणि विपच्य पुनर्विपाकानभिनिर्वर्तयन्ते[4]। यथा च पुष्पं[5] फलोत्पत्तावासन्नं कारणमेवं कर्माणि विपाकोत्पत्तौ वेदितव्यानि।

सिद्धान्नपानवद्वस्तु

यथा सिद्धमन्नं पानं च केवलं परिभोगाय कल्प्यते न पुनर्विरोहाय एवं विपाकाख्यं वस्तु। नहि पुनर्विपाकाद्विपाकान्तरं जन्मान्तरेषु प्रवर्धते। यदि हि प्रवर्धेत[6] मोक्षो न स्यात्। न खल्वेष जन्मसंतान एवं प्रतीत्यसमुत्पद्यमानो भवचतुष्टयं नातिक्रामति। यदुतान्तराभवमुपपत्तिभवं पूर्वकालभवं मरणभवं च। ते च व्याख्याताः।

तस्मिन् भवचतुष्टये ॥३७॥

उपपत्तिभवः क्लिष्टः

एकान्तेन। कतमेन क्लेशेन।

सर्वक्लेशैः स्वभूमिकैः।

यद्भूमिक[7] उपपत्तिभवस्तद्भूमिकैरेव[8] सर्वक्लेशैः। नहि स क्लेशोऽस्ति येन प्रतिसंधिबन्धः प्रतिविद्यत इत्याभिधार्मिकाः। क्लेशैरेव तु न पर्यवस्थानैः स्वतन्त्रैः। [37b. 9B. I] यद्यपि साऽवस्था मन्दिका[9] यस्तु यत्राभीक्ष्णं[10] चरित आसन्नश्च तस्य तदानीं स एव क्लेश उपतिष्ठते। पूर्वविधात्। अन्तराभवप्रतिसंधिरप्येवमवश्यं क्लिष्टो वेदितव्यः।

त्रिधाऽन्ये

अन्ये त्रयो भवा[11]स्त्रिप्रकाराः अन्तरभवादयः कुशलक्लिष्टाव्याकृताः।

---

१. MS. जन्मान्तविरोहणे। २. MS. ....वोषधि....। ३. MS. ..:.स्थालीयः। ४. MS. ....त्तयात। ५. MS. पुष्प। ६. MS. प्रवद्धर्येत। ७. MS. यत्....। ८. MS. तत्....। ९. MS. looks like सावस्थानद्रिका। १०. MS. ....भिक्षणं। ११. MS. भावाः।

अथैषां भवानां कतमः किंप्रतिसंयुक्तः ।[1]

त्रय आरूप्ये[2]

अन्तराभवं वर्जयित्वा । नह्यारूप्यधातुः स्थानान्तरपरिच्छिन्नो यस्य प्राप्त्यर्थमन्तराभवोऽभिनिर्वर्तेत । कामरूपधात्वोरपरिसंख्यानात्[3] सर्व एव चत्वारो भवाः सन्तीत्यनुज्ञापितं भवति । उक्तो यथा सत्त्वानां प्रतीत्यसमुत्पादो विस्तरेण ।

अथ कथं सत्त्वानां स्थितिर्भवतीत्याह

आहारस्थितिकं जगत् ।।३८।।

एको धर्मो भगवता स्वयमभिज्ञायाभिसंबध्याख्यातो "यदुत सर्वसत्त्वा आहारस्थितिका" इति सूत्रपदम् । के पुनराहाराः । चत्वार[4] आहाराः । कवडीकाराहारः प्रथमः । औदारिकः सूक्ष्मश्च । सूक्ष्मोऽन्तराभविकानां गन्धाहारत्वात् । देवानां प्राथमकल्पिकानां च निःष्यन्दाभावात् । तैलस्येव[5] सिकतास्वङ्गे[6]ष्वनुप्रवेशात् । सूक्ष्माणां वा सूक्ष्मो बालक[7]संस्वेदजन्तुकादीनाम् । स्पर्शो द्वितीयः । मनःसंचेतना[8] तृ-[38a. 9A. II] तीयः । विज्ञानमाहारश्चतुर्थः । तत्र पुनः

कवडीकार आहारः कामे

न रूपारूप्यधात्वोस्तद्वीतरागस्य[9] तत्रोपपत्तेः । स च

त्र्यायतनात्मकः ।

कामावचराणि गन्धरसस्प्रष्टव्यायतनानि सर्वाण्येव कवडीकार आहारः । कवडीकृत्याभ्यवहरणात् । मुखनासिकाग्रासव्यवच्छेदतः । च्छायातपज्वालाप्रभासु तेषां कथमाहारत्वम् । बाहुल्येन किलैष निर्देशः । यान्यपि तु नाभ्यवह्रियन्ते स्थितिं चाहरन्ति[10] तान्यपि सूक्ष्म आहारः । स्नानाभ्यङ्गवदिति । कस्मान्न रूपायतनमाहारः । तदपि कवडीकृत्याभ्यवह्रियते ।

न रूपायतनं तेन स्वाक्षमुक्तानननुग्रहात् ।।३९।।

आहारो हि नाम य इन्द्रियमहाभूतानामनुग्रहाय संवर्त्तते । रूपायतनं चाभ्यवहरण[11]काले स्वमिन्द्रियं तन्महाभूतानि वा[12] नानुगृह्णाति । कुत एवान्यान्यविषत्वात् ।

---

१. MS. ...संयुक्तस्त्रय । २. Y. आरूप्येष्वाहार.... । ३. MS. ....रापरि.... । ४. MS. चत्वारा । ५. MS. तैलस्यैव । ६. MS. ....स्वंगोष्व.... । ७. MS. बालकं । ८. MS. सचेतना । ९. Y. तद्वीतरागाणां । १०. Y. adds यापनां चाहरन्ति । ११. Y. चाभ्यवहार । १२. Y. च ।

यदापि च दृश्यमाने[1] सुखसौमनस्ये आदधाति तदापि तदालम्बनः सुखवेदनीयः स्पर्श आहारो भवति[2] न रूपम्। मुक्तानामनागाम्यर्हतां सुमनोज्ञमप्याहारं पश्यतामनुग्रहाभावात्।

**स्पर्शसंचेतनाविज्ञा आहाराः सास्रवास्त्रिषु।**

स्पर्शस्त्रिकसंनिपातजः। चेतना मनस्कर्म विज्ञानं च सास्रवाण्येवा-[38b. 9B. II] हाराः त्रिष्वपि धातुषु संविद्यन्ते। किमर्थं नानास्रवाणि। यस्मात् भवापोषणार्थ आहारार्थः। तानि च भवक्षयायोत्थितानीति वैभाषिकाः। अपि तु सूत्र उक्तं "चत्वार इमे आहारा भूतानां सत्त्वानां स्थितये यापनायै संभवैषिणां चानुग्रहाये"-ति। न चैवमनास्रवा धर्मा इति नाहाराः।

भूता हि तावत्सत्त्वा उपपन्ना इति विज्ञायन्ते। अथ संभवैषिणः कतमे।

**मनोमयः संभवैषी गन्धर्वश्चान्तराभवः ॥४०॥**

**निर्वृत्तिश्च**

अन्तराभवो ह्येभिरभिधानैरुक्तो भगवता। स एव मनोनिर्जातत्वात् मनोमय उक्तः। शुक्रशोणितादिकं किंचिद्वाह्यमनुपादाय भावात्। संभवैषणशीलत्वात् संभवैषी। गन्धर्वणात् गन्धर्वः। उपपत्त्यभि[3]मुखत्वादभिनिर्वृत्तिः। "अव्यावा[4]-धमात्मभावमभिनिर्वर्त्य सव्यावाधे लोके उपपद्यत" इति सूत्रपदात्। "तथास्ति पुद्गलो यस्यभिनिर्वृत्तिसंयोजनं प्रहीणं नोपपत्तिसंयोजनमि"ति सूत्रे चतुःकोटि-कात्। प्रथमा कोटिर्द्विधातुवीतरागस्योर्ध्वंस्रोतसोऽनागामिनः। द्वितीयान्तरापरि-निर्वायिणः। तृतीयाऽर्हताम्[5]। चतुर्थ्येतानाकारान् स्थापयित्वा। भूतावाऽर्हन्तः संभवैषिणः सतृ-[39a. 9A. III] ष्णाः।

अथ कत्याहाराः सत्त्वानां स्थितये कति संभवैषिणामनुग्रहाय। सर्वेऽप्युभयथेति वैभाषिकाः। कवडीकाराहारोऽपि हि तद्रागिणां पुनर्भवाय संवर्तते। उक्तं हि। भगवता "चत्वार इमे आहारा[6] रोगस्य मूलं गण्डस्य शल्यस्य जरामरणस्य प्रत्यय" इति। मनःसंचेतनाऽपि चेह स्थितये दृश्यते। एवं हि वर्णयन्ति दुर्भिक्षाभ्याहतेन किल पित्रा पुत्रकौ सक्तव[7] इति भस्मना[8] भस्त्रां परिपूर्य कीलके आसज्याश्वासितौ[9]। तौ च तां परिकल्पयन्तौ चिरमप्यासितौ केनापि चोद्घाटितायां भस्मेति नैराश्यमापन्नौ व्यापन्नाविति। पुनश्च महासमुद्रे

१. MS. दृश्यमानं। २. Y. omits भवति। ३. MS. उपपत्त्याभि....। ४. MS. drops वा। ५. Y....र्हंतः। ६. MS. आहारो। ७. MS. शक्तव। ८. MS. भस्मेनो। ९. MS. स्वासितौ।

भग्नयानपात्राः पुरुषाः स्थलमिति महान्तं फेनपिण्डं[1] प्रद्रुताः आमृश्य चैनं निराशा उपरेमुरिति । संगीतिपर्याये चोक्तं महासमुद्रादौदारिकाः प्राणिनो जलात् स्थलमभिरुह्य सिकतास्थलेऽण्डानि स्थापयित्वा सिकताभिरवष्टभ्य पुनरपि महासमुद्रेऽवतरन्ति । तत्र यासां मातॄणामण्डान्यारभ्य स्मृतिर्न मुष्यते तान्यण्डानि न पूतीभवन्ति[2] यासां तु मुष्यते तानि पूतीभवन्ति[3] । तदेतन्न वर्णयन्ति सौत्रान्तिकाः । मा भूत् परकीयेणाहारेणाहार[4] इति । एवं तु वर्णयन्ति । येषामण्डानां मातरमारभ्य स्मृतिर्न मुष्यते तानि न पूतीभवन्ति । येषां तु मुष्यते तानि [39b. 9B. III] पूतीभवन्ति । तस्याः स्पर्शावस्थायाः स्मरन्तीति ।

अथ कस्माच्चत्वार एवाहाराः । ननु च सर्व एव सास्रवा धर्मा भवानां पोषकाः । यद्यप्येतदेवं तथापि प्राधान्येनोक्तम्

**इह पुष्ट्यर्थमाश्रयाश्रितयोर्द्वयम् ।**

**द्वयमन्यभवाक्षेपनिवृत्त्यर्थं यथाक्रमम् ॥४१॥**

आश्रयो हि सेन्द्रियः कायः । तस्य पुष्टये कवडीकाराहाराः । आश्रिताश्चित्तचैत्तास्तेषां पुष्टये स्पर्शः । अनयोस्तावदिहोत्पन्नस्य भवस्य पोषणे प्राधान्यम् । मनःसंचेतनया पुनर्भवस्याक्षेपः आक्षिप्तस्य पुनः कर्मपरिभाविताद्विज्ञानबीजादभिनिर्वृत्तिरित्यनयोरनुत्पन्नस्य भवस्याकरणे प्राधान्यम् । अतश्चत्वार उक्ताः । पूर्वकौ हि द्वौ धात्रीस्थानीयौ जातस्य पोषकत्वात् । उत्तरौ मातृस्थानीयौ जनकत्वादिति । यः कश्चित्[5] कवडीकारः सर्वः स आहारः । स्यात् कवडीकारो नाहार इति चतुष्कोटिकम् । प्रथमा कोटिर्यं कवडीकारं प्रतीत्येन्द्रियाणामपचयो भवति महाभूतानां च परिभेदः । द्वितीया कोटिस्त्रय आहाराः । तृतीया यं कवडीकारं प्रतीत्येन्द्रियाणामुपचयो भवति महाभूतानां च वृद्धिः । चतुर्थ्येतानाकारान् स्थापयित्वा । एवं [40a. 9A. IV] स्पर्शादिभिरपि यथायोगं चतुःकोटिकानि कर्त्तव्यानि । स्यात् स्पर्शादीन् प्रतीत्येन्द्रियाणामुपचयो महाभूतानां च वृद्धिर्न च त आहाराः । स्यादन्यभूमिकाननास्रवांश्च । योऽपि हि परिभुक्तो भोक्तुर्बाधामादधाति सोऽप्याहार एव[6] । आपातेऽनुग्रहात् । द्वयोर्हि कालयोराहार आहारकृत्यं करोति परिभुज्यमानो जीर्यंश्चेति वैभाषिकाः । अथ कस्यां गतौ कत्याहाराः[7] । सर्वासु सर्वे । एवं योनिष्वपि । यथं नरकेषु कवडीकार आहारः । प्रदीप्तायस्पिण्डाः क्वथितं च ताम्रम् । यद्युपघातकोऽप्याहारो भवति चतुःकोटिकं

---

१. MS. फेण । २. MS. पूतिभवन्ति । ३. MS. पूतिभवन्ति । ४. MS. णा आहार । ५. Y. omits कश्चित् । ६. Y. omits एव । ७. MS. हारः ।

बाध्यते प्रकरणग्रन्थश्च "कवड़ीकार आहारः कतमः। यं कवड़ीकारं प्रतीत्येन्द्रियाणामुपचयो भवति महाभूतानां च वृद्धिर्यापना[1]ऽनुयापनेति[2] विस्तरेण यावद्विज्ञानम्।" उपचयाहाराभिसंधिवचनादविरोधः। अपचयाहारस्तु नरकेषु[3] लक्षणप्राप्तत्वात्। सोऽपि हि जिघत्सां पिपासां[4] हन्तुं[5] समर्थं इति। अपितु प्रत्येकनरकेषु मनुष्यवत् कवड़ीकाराहारसद्भावाद्युक्तं पाञ्चगतिकत्वम्। उक्तं भगवता "यश्च वाह्यकानामृषीणां कामेभ्यो वीतरागाणां शतं भोजयेद्यश्चै·[40b. 9B. IV]कं जम्बू[6]षण्डगतं पृथग्जनम्। अतो दानादिदं दानं महाफलतरमि"ति। कोऽयं जम्बूषण्डगतो नाम पृथग्जनः। जम्बूद्वीपनिवासिनः कुक्षिमन्त इत्येके। तदेतन्न[7] युक्तमेकमिति वचनात्। कश्चात्र विशेषः। स्याद्यदि भूयसः पृथग्जनान् भोजयित्वा भूयः पुण्यं स्यात् नाल्पीयसो वीतरागानिति। संनिकृष्टो बोधिसत्त्व इत्यपरे। तदेतन्न वर्णयन्ति "वहुतरं हि तस्मै दत्त्वा पुण्यं नार्हत्कोटिभ्य" इति। अतो निर्वेधभागीयंलाभी पृथग्जन एषोऽभिप्रेतः इति वैभाषिकाः। नत्वियमन्वर्था संज्ञा नापि क्वचि[8]त्परिभाषिता सूत्रे शास्त्रे वा। जम्बूषण्डगतो निर्वेधभागीयलाभीति परिकल्प एवायं केवलः। वोधिसत्त्व एव [9]त्वेषु जम्बूद्वीपषण्डेषु निषण्णो[9] युज्यते। स हि पृथग्जन[10]कामवैराग्यसम्बन्धेन तदानीं तेभ्यो विशिष्यमाण उक्त इति। अनन्तेभ्योऽपि हि स तेभ्यो विशिष्यमाणः। शतग्रहणं तु पूर्वाधिकारात्। इत्थं चैतदेवं[11] यदेवं पर्युदस्य[12] वाह्यकेभ्य एव स्रोतापत्ति[13]फलप्रतिपन्नकं विशेषयांवभूव। अन्यथा हि जम्बूषण्डगतादेव व्यशेषयिष्यत्। उक्तो यथा सत्त्वानां प्रतीत्यसमुत्पादो यथा· [41a. 9A. V]वस्थितिश्च्युतिरप्युक्ता यथायुःक्षयादिभिः।

इदमिदानीं वक्तव्यम्। कतमस्मिन् विज्ञाने वर्त्तमाने च्युत्युपपत्ती भवत इत्याह

**छेदसंधान[14]वैराग्यहानिच्युत्युपपत्तयः।**

**मनोविज्ञान एवेष्टाः**

कुशलमूलसमुच्छेदः कुशलमूलप्रतिसंधानं धातुभूमिवैराग्यं परिहाणिश्च्युतिरुपपत्तिश्च। एते षट् धर्मा मनोविज्ञान एवेष्यन्ते नान्यत्र। उपपत्तिवचनादन्तराभवप्रतिसंधिरिप्युक्तरूपो वेदितव्यः। वेदनायां तु

---

१. MS. यापना। २. Y. omits महाभूतानां...यापनेति। ३. Y. adds. आहार। ४. Y. adds च। ५. Y. प्रतिहन्तुं। ६. MS. यंबू। ७. Y. तदेतदयुक्तम्। ८. Y. omits क्वचित्। ९...९. Y. त्वेष जंबूषण्डगतो। १०. Y. पृथग्जनः। ११ Y. यदेनं। १२. अपास्य। १३. MS. श्रोतापत्ति। Y. स्रोत आपत्ति। १४. MS. सन्तान।

**उपेक्षायां च्युतोद्भवौ ॥४२॥**

च्युतिरेव च्युतमुपपत्तिरुद्भवः । एतावदुःखासुखायां[1] वेदनायां भवतस्तस्या अपटुत्वात् । इतरे हि वेदने पट्वचौ । न च पटुविज्ञाने च्युत्युपपत्ती युज्येते । तत्रापि च मनोविज्ञानेऽपि

**नैकाग्राचित्तयोरेतौ**

च्युतोद्भवाविति वर्तते । नहि समाहितचित्तस्यास्ति च्युतिरुपपत्तिर्वा । विसभागभूमिकत्वादभिसंस्कारिकत्वा[2]दनुग्राहकत्वाच्च । नाप्यचित्तस्य[3] सा नह्यचित्तक उपक्रमितुं[4] शक्येत । यदा चास्याश्रयो विपरिणन्तुमारभते तदा[5]वश्यमस्य तदाश्रयप्रतिबद्धं चित्तं संमुखीभूय पश्चात् प्रच्यवेत नान्यथा । उपपत्तौ च[6] चित्तच्छेदहेत्वभावाद्विना च क्लेशेनानुपपत्तेरयुक्तमचित्तकत्वम्[7] ।

मरणभ-[41b. 9B. V]वस्त्रिप्रकार इत्युक्तम् । अर्हंस्तु

**निर्वात्यव्याकृतद्वये ।**

ऐर्यापथिके[8] विपाकचित्ते वा । अस्ति चेत्कामधातौ विपाक उपेक्षा । नास्ति चेदैर्यापथिक एव । किमर्थमव्याकृत एव नान्यस्मिन् । तद्धि चित्तच्छेदानुकूलं दुर्बलत्वात् ।

अथ म्रियमाणस्य कस्मिन् शरीरप्रदेशे विज्ञानं निरुध्यते । सकृन्मरणे समनस्कं कायेन्द्रियं सहसाऽन्तर्धीयते । यदि तु क्रमेण च्यवते ततः

**क्रमच्युतौ पादनाभिहृदयेषु मनश्च्युतिः ॥४३॥**

**अधोनृसुरगाजानां**

अधो गच्छन्तीत्यधोगा अपायगामिनः । नॄन् गच्छन्तीति नृगा मनुष्यगामिनः । सुरान् गच्छन्तीति सुरगा देवगामिनः । तेषां यथासंख्यं पादयोर्नाभ्यां हृदये च विज्ञानं संनिरुध्यते । न पुनर्जायन्त इत्यजा अर्हन्तः । तेषामपि हृदये विज्ञानं निरुध्यते । मूर्ध्नीत्यपरे । कायेन्द्रियस्य तेषु निरोधात् कायेन्द्रियं हि म्रियमाणस्य तप्त इवोपले जलं निष्ठ्यूतं संकोचमापद्यमानं पादादिष्वन्तर्धीयत इति । एवं च पुनः क्रमेण मरणम् । प्राणिनां प्रायेण मर्मच्छेदवेदनाभ्यां हतानां जायते

**मर्मच्छेदस्त्वबादिभिः ।**

शरीरप्रदेशाः केचिदुपहन्यमाना मरणमानयन्ति । ते ह्येतदुच्य-[42a. 9A. VI]न्ते

१. MS. drops सुखा । २. Y. आभिसंस्कारिकत्वात् । ३. Y. अचित्तकस्य । ४. Y. उपक्रन्तुं । ५. Y. तदानीम् । ६. Y. one reading is तु । ७. Y. one reading is अचित्तकत्वात् । ८. MS. looks like....पथिकै ।

मर्माणीति । तानि चाप्तेजोवायुधातूनामन्यतमेनातिप्रायं[1] गतेन निशितशस्त्र-संपातस्पर्धि[2]नाड़ीतीव्राभिर्वेदनाभिः छिद्यन्त इव न च[3] पुनस्तानि काष्ठादि-वच्छिद्यन्ते[4] छिन्नवद्वा पुनर्न[5] चेष्टन्त इति च्छिन्नान्यु[6]च्यन्ते । कस्मान्न पृथिवी-धातुना । चतुर्थदोषाभावात् । वातपित्तश्लेष्माणो हि त्रयो दोषाः । ये चाप्तेजो-वायुधातुप्रधाना यथायोगमिति । भाजनलोकसंवर्त्तनीसाधर्म्यैणेत्यपरे । देवेषु नास्ति मर्मच्छेदः । किं तु च्यवनधर्मणो देवपुत्रस्य पञ्चोपनिमित्तानि प्रादुर्भवन्ति । वस्त्राणामाभ[7]रणानां च मनोज्ञः शब्दो निश्चरति शरीरप्रभा मन्दीभवति स्नातस्योदविन्दवः काये संतिष्ठन्ते चपलात्मनाऽप्येकत्र विषये बुद्धिरवतिष्ठते उन्मेषनिमेषौ चाक्ष्णोः संभवतः । एतानि तु व्यभिचारीणि । पञ्च पुर्ननिमित्तानि मरणं नातिवर्त्तन्ते[8] । वासांसि क्लिश्यन्ति[9] माला म्लायन्ति कक्षाभ्यां स्वेदो मुच्यते दौर्गन्ध्यं कायेऽवक्रामति स्वे चासने देवपुत्रो नाभिरमते । सोऽयं सत्त्वलोक एवमुत्पद्यमानस्तिष्ठन् च्यवमानश्च त्रिषु राशिषु स्थापितो भगवता । त्रयो राशयः । सम्यक्त्वनियतो राशिर्मिथ्यात्वनियतो राशिरनि-[42b. 9B. VI] यतो राशिरिति । तत्र पुनः

सम्यङ्मिथ्यात्वनियता आर्यानन्तर्यकारिणः ।।४४।।

"सम्यक्त्वं कतमत् । यत्तत्पर्यादाय रागप्रहाणं पर्यादाय द्वेषप्रहाणं पर्यादाय मोह-प्रहाणं पर्यादाय सर्वक्लेशप्रहाणमिदमुच्यते सम्यक्त्व"मिति सूत्रम् । आर्याः कतमे । येषामनास्रवो मार्ग उत्पन्नः । आराद्याताः पापकेभ्यो धर्मेभ्य इत्यार्याः । आत्यन्ति-कविसंयोगप्राप्तिलाभात् । एते हि क्लेशक्षये नियतत्वात् सम्यक्त्वनियताः मोक्षभागीयलाभिनोऽप्यवश्यं परिनिर्वाणधर्माण इति । कस्मान्न सम्यक्त्वे नियताः । ते हि मिथ्यात्वेऽपि नियता भवेयुः । न च ते कालनियमेन सम्यक्त्वे नियता यथा सप्तकृत्वः[10]परमादयः । मिथ्यात्वं कतमत् । नरकाः प्रेतास्तिर्यञ्च इदमुच्यते मिथ्यात्वम् । तत्रानन्तर्यकारिणो नरके नियत[11]त्वान्मिथ्यात्वनियताः । नियते-भ्योऽन्येऽनियता इति सिद्धम् । प्रत्ययापेक्षं हि तेषामुभयभाक्त्वमनुभयभाक्त्वं च । उक्तः सत्त्वलोको भाजनलोक इदानीं वक्तव्यः ।

तत्र भाजनलोकस्य संनिवेशमुशन्त्यधः ।

लक्षषोडशकोद्वेधमसंख्यं वायुमण्डलम् ।।४५।।

---

१. MS. प्रयं । २. MS. may be read स्पर्द्धि । ३. Y. न तु । ४. Y. काष्ठानीव.... । काष्ठवत् । ५. Y. न पुनः । ६. Y. adds इति । ७. MS. drops भ । ८. MS. drops न्ते । ९. MS. क्लिश्यन्ते । १०. MS.....कृत्व । ११. MS. drops त ।

त्रिसाहस्रमहासाहस्रलोकधातोरेवं संनिवेशमिच्छन्ति। यदुताकाशप्रतिष्ठमधस्ताद्वायुमण्डलमभिनि-[43a. 9A. VII] र्वृत्तं सर्वसत्त्वानाम्। कर्माधिपत्येन तस्य योजनलक्षाणां षोडशकमुद्वेधः परिणाहेनासंख्यं तथा च दृढं यन्महानग्नोऽपि वज्रेण भेत्तुमशक्तः। तस्योपरिष्टात्

**अपामेकादशोद्वेधं सहस्राणि च विंशतिः।**

मण्डलमिति वर्त्तते। तस्मिन् वायुमण्डले सत्त्वानां कर्मभिर्मेघाः संभूयाक्षमात्राभिर्धाराभिरभिवर्षन्ति। तत् भवत्यपां मण्डलम्। तस्य योजनानामेकादशलक्षाण्यूर्ध्वेऽधो विंशतिश्च सहस्राणि। कथं ता आपो न तिर्यग्विस्रवन्ति[1]। सत्त्वानां कर्माधिपत्येन। यथा हि[2] भुक्तं पीतम[3]न्नं पानं च नापक्वं पक्वाशयमापतती[4]त्येके। कुसूलन्यायेन वायुना संधार्यन्त इति निकायान्तरीयाः। ताश्च पुनरापः सत्त्वानां कर्मप्रभावसंभूतैर्वायुभिरावर्त्यमाना उपरिष्टात्काञ्चनीभवन्ति पक्वक्षीरी[5]शरीभावयोगेन। तत् भवत्यपां मण्डलम्।

**अष्टलक्षोच्छ्रयं पश्चाच्छेषं भवति काञ्चनम्॥४६॥**

किं च शेषम्। त्रयो लक्षाः सहस्राणि च विंशतिः। सा काञ्चनमयी मही भवत्यपामुपरिष्टात् उक्तो जलकाञ्चनमण्डलोच्छ्रायः।

**तिर्यक् त्रीणि सहस्राणि सार्धं शतचतुष्टयम्।**
**लक्षद्वादशकं चैव जलकाञ्चनमण्डलम्॥४७॥**

समानं ह्येतदुभयं ]43b. 9B. VII] विस्तारतः।

**समन्ततस्तु त्रिगुणं**

समन्ततः परिक्षेपेण तु परिगण्यमानं त्रिगुणं जायते षट्त्रिंशल्लक्षा दशसहस्राणि सार्धानि[6] च त्रीणि शतानि योजनानाम्। यच्च तत्काञ्चनमयं महीमण्डलमपामुपरिष्टात् संनिविष्टं

**तत्र मेरुर्युगन्धरः[7]।**
**ईशाधारः[8]खदिरकः सुदर्शनगिरिस्तथा॥४८॥**

---

१. MS. विश्रमन्ति। २. Y. omits हि। ३. Y. adds च। ४. MS. drops प। Y. पतति। ५. Y. क्षीर। ६. MS. सार्द्धाणि। ७. MS. drops : (विसर्ग)। ८. G. ईषाधरः।

अश्वकर्णो विनितको[1] निमिन्धरगिरिः

इतीमे काञ्चनमण्डलप्रतिष्ठा अष्टौ महापर्वताः। मध्ये सुमेरुः। शेषाः सुमेरुपरिचायावस्थिताः। तस्यान्यसप्तपर्वतप्राकारपरिक्षिप्तस्य यो बाह्यः पर्वते निमिन्धरगिरिः।

ततः[2]।

द्वीपाः

ततो बहिश्चत्वारो द्वीपाः। तेभ्यः पुनः[3]

बहिश्चक्रवाड़ः

तेन चातु[4]र्द्वीपकश्चक्रीकृतः। तेषां तु

सप्त हैमाः स आयसः ॥४९॥

युगन्धरादयः सप्त पर्वताः सौवर्णाश्चक्रवाड़ः शस्त्रकः[5]।

चतूरत्नमयो मेरुः

सुवर्णमयो रूप्यमयो वैदूर्यमयः[6] स्फटिकमयश्च यथासंख्यं चतुर्षु पार्श्वेषु। यच्च यन्मयं पार्श्वं सुमेरोस्तस्यानुभावेन तद्वर्णं तस्यां दिशि नभो दृश्यते। जाम्बूद्वीपकमस्य पार्श्वं वैदूर्यमयं वर्णयन्ति। तस्येह प्रभानुरागेण वैदूर्यमयं नभो दृश्यत इति।

अथ कथं तेषां संभवः। का-(44a. 9A. VIII)ञ्चनमय्यां पृथिव्यां पुनर्वारिधारा अतिपतन्ति। ता ह्यापो नानाविधबीजगर्भा बहुविधप्रभाव[7]-भिन्नैर्वायुभिर्मथ्यमानास्तां तां जातिं परिणमयन्ति। एवं च पुनः परिणमयन्ति[8] यद्भिन्नजातीयस्य कार्यविशेषोत्पत्तावसमवधानेन[9] प्रत्ययीभवन्ति। न तु खलु यथा <u>सांख्यानां</u>[10]परिणामः। कथं च <u>सांख्यानां</u>[10] परिणामः। अवस्थितस्य द्रव्यस्य धर्मान्तरनिवृत्तौ धर्मान्तरप्रादुर्भाव इति। कश्चात्र दोषः। स एव हि[11] धर्मी न संविद्यते यस्यावस्थितस्य धर्माणां परिणामः कल्प्येत। कश्चैवमाह धर्मेभ्योऽन्यो धर्मीति। तस्यैव तु द्रव्यस्यान्यथीभावमात्रं परिणामः। एवमप्ययुक्तम्। किमत्रायुक्तम्। तदेव चेदं न चेदं तथेति अपूर्वैषा वायो युक्तिः। एवं च पुनः संभूताः सुवर्णादयः कर्मप्रभावात् प्रेरितैर्वायुभिः समाहृत्य राशीक्रियन्ते। त एते पर्वताश्च भवन्ति द्वीपाश्च। ते पुनः सुमेर्वादयश्चक्रवाड़पर्यन्ताः पर्वताः

---

१. G. विनतको। २. MS. ततो। ३. MS. पुनर्बहि...। ४. Y. चतु....। ५. Y. शस्त्रकम्। ६. MS. बैदूर्यः। ७. Y. प्रकार। ८. MS. परिणमंयति। ९. Y. असमाधानेन। १०. MS. शांख्यानां। ११. Y. omits हि।

**जलेऽशीतिसहस्रके ।**

**मग्नाः**

काञ्चनमय्याः पृथिव्या उपर्यशीतियोजनसहस्राण्युदकं तत्र ते मग्नाः ।

**ऊर्ध्वं जलात् मेरुर्भूयोऽशीतिसहस्रकः ॥५०॥**

इति हि मेरोः षष्टि[1] योजनशतसहस्रं समुच्छ्रयः[2] ।

**अर्धार्ध-[44b. 9B. VIII] हानिरष्टासु**

जलादूर्ध्वं यावान्सुमेरुस्ततोऽर्धेन युगन्धरश्चत्वारिंशद्योजनसहस्राणि । ततोऽर्धेन ईशाधर इत्येवमन्येष्वप्यर्धार्धहानिर्वेदितव्या यावन्निमिन्धरार्धेनार्धत्रयोदशोत्तराणि त्रीणि योजनशतानि चक्रवाड़ः ।

**समोच्छ्रायघनाश्च ते ।**

यावानेव चैषां जलादूर्ध्वं समुच्छ्रायस्तावानेव घनो विस्तार इत्यर्थः ।

**शीताः सप्तान्तराण्येषां**

एषां च निमिन्धरान्तानां पर्वतानां सप्तान्तराणि सप्त शीता उच्यन्ते पूर्णा अष्टाङ्गोपेतस्य[3] पानीयस्य । तद्धि पानीयं शीतलं च स्वादु च लघु च[4] मृदु चाच्छं च[5] निष्प्रतिकं च पिवतश्च कण्ठं न क्षिणोति पीतं च कुक्षि न व्यावाधते । तासां च पुनः

**आद्याशीतिसहस्रिका ॥५१॥**

सुमेरुयुगन्धरान्तरं प्रथमा शीता । अशीतिर्योजनसहस्राणि वैपुल्येन ।

**आभ्यन्तरः समुद्रोऽसौ**

द्वौ हि समुद्रावाभ्यन्तरो वाह्यश्च । तदाऽसौ शीताऽभ्यन्तरः समुद्रः

**त्रिगुणः स तु पार्श्वतः ।**

अशीतिर्योजनसहस्राण्यस्य वैपुल्यमुक्तम् । पार्श्वत[6]स्त्रिगुणो भवति युगन्धरतीरेण गण्यमानः चत्वारिंशत् सहस्राणि लक्षद्वयं च ।

---

१. MS. षष्ठ । २. Y. ....सहस्रसमुच्छ्रायः । ३. MS. पूर्णाष्टांगो...। ४. MS. चा । ५. MS. चाम्च । ६. Y. adds तु ।

**अर्धार्धेनापराः शीताः**[1]

युगन्धरस्येषाधारस्य चान्तरं द्वितीया शीता अर्धेन प्रथमाया[2]श्चत्वारिंशत् [45a. 9A.₁ I] योजनसहस्राणि। ततोऽर्धेन पुनस्तृतीयेत्येवमर्धार्धेनापराः शीताः भवन्ति। यावदर्धत्रयोदशशतानि सप्तमी शीता। दैर्घ्यं तु तासां न परिसंख्यातमतिवहुप्रकर्षविसर्पणात्।

**शेषं बाह्यो महोदधेः ॥५२॥**

किं शेषम्। निमिन्धरचक्रवाड़योरन्तरम्। तद्धि बाह्यो महासमुद्रो लवणः पूर्णः क्षारोदकस्य। स खलु विस्तारेण योजनानां

**लक्षत्रयं सहस्राणि विंशतिर्द्वे च**

तत्र चत्वारो द्वीपाश्चतुर्षु सुमेरुपार्श्वेषु।

**तत्र तु**[3]।

**जम्बूद्वीपो द्विसाहस्रस्त्रिपार्श्वः शकटाकृतिः ॥५३॥**

द्विसाहस्राणि त्रीणि पार्श्वान्यस्य शकटस्येवाकृतिः। तस्य च मध्ये काञ्चनमय्यां पृथिव्यां वज्रासनमभिनिर्वृत्तं यस्मिन्निषद्य सर्वे वोधिसत्त्वा वज्रोपमं समाधिमुत्पादयन्ति। नहि तमन्य आश्रयः प्रदेशो वा सोढुं समर्थः।

**सार्धत्रियोजनं त्वेकं**

चतुर्थमस्य पार्श्वं सार्धानि त्रीणि योजनानि। अत एव ह्यसौ शकटाकृतिः।

**प्राग्विदेहोऽर्धचन्द्रवत्।**

इतः पूर्वेण सुमेरुपार्श्वे पूर्वं विदेहो द्वीपः। सोऽर्धचन्द्र इवाभिनिर्वृत्तः। परिमाणतस्तु[4]

**पार्श्वत्रयं तथाऽस्य**

यथा जम्बूद्वीपस्य द्वे द्वे योजनसहस्रे।

**एकं सार्धं त्रिशतयोजनम् ॥५४॥**

चतुर्थं पार्श्वं सार्धानि त्रीणि योजनशतानि।

**गो-[45b. 9B₁. I] दानीयः सहस्राणि सप्त सार्धानि मण्डलः।**

---

१. G. सीताः। २. MS. प्रथामाया। ३. MS. drops तु। ४. MS. परिमाणदस्तु।
५. G. सार्धत्रि....।

इतः पश्चिमेन सुमेरुपार्श्वेऽपरगोदानीयो द्वीपः सार्धानि सप्त योजनसहस्राणि साकल्येन। मण्डलश्चासौ पूर्णचन्द्रवत्।

**सार्धे द्वे मध्यमस्य**

मध्यमस्यार्धतृतीये योजनसहस्रे।

**अष्टौ चतुरस्रः कुरुः समः ॥५५॥**

इह उत्तरेण सुमेरुपार्श्वे उत्तरकुरुद्वीपः। सोऽष्टौ योजनसहस्राणि साकल्येन चतुरस्रः। कृत्यापीठिकावत्। सर्वेषु च पार्श्वेषु समो यथैकं पार्श्वं द्वियोजनसहस्रे। तथाऽन्यानि स्तोकमपि नाधिकम्। यश्च द्वीपो यदाकृतिस्तदाकृतीन्येव तत्र मनुष्याणां मुखानि।

तेषां खलु द्वीपानामन्तरालेऽन्तरद्वीपा अभिनिर्वृत्ताः। के पुनस्ते कति चेत्याह

**देहा विदेहाः[1] कुरवः कौरवाश्चामरावराः।**
**अष्टौ तदन्तरद्वीपा गाठा[2] उत्तरमन्त्रिणः ॥५६॥**

तत्र देहविदेहौ पूर्वविदेहपरिवारौ[3]। कुरुकौरवौ उत्तरकुरोः। गाठोत्तरमन्त्रिणावपरगोदानीयस्य। चामरावरौ जम्बूद्वीपस्य। सर्वे मनुष्यैरावासिताः। एको राक्षसैरित्यपरे।

**इहोत्तरेण कीटाद्रि[4]नवकाद्धिमवान्**

इहैव जम्बूद्वीपे उत्तरेणास्य जम्बूद्वीपस्य कृष्णपर्वतास्त्रयस्तानतिक्रम्यापरे त्रयः [46a. 9A1. II] पुनश्च त्रय इति नवभ्यः कीटपर्वतेभ्यः परेण हिमवान् पर्वतः।

**ततः।**

**पञ्चाशद्विस्तृतायामं सरोऽर्वाग्गन्धमादनात्[5] ॥५७॥**

तस्माद्धिमवतः परेणानवतप्तं नाम सरो गन्धमादनादर्वाक् यतश्चतस्रो नद्यः स्रवन्ति गङ्गा सिन्धुः शीता वक्षुश्च। तस्य पञ्चाशद्योजनानि विस्तारः। पञ्चाशदायामः। पूर्णमष्टाङ्गस्याङ्गोपेतस्याम्भसः। दुर्गमं च मनुष्याणामनृद्धिमताम्। तस्यैव चान्तिके जम्बूरभिनिर्वृत्ता मधुरस्वादूनि यस्याः फलानि। तस्या अधिकारेणायं[6] जम्बूद्वीप इति ख्यातः। तत्फलाधिकारेण वा[7] जम्बूद्वीप इति।

नरकाः कस्मिन्नवकाशे कियत्प्रमाणाश्च।

---

१. MS विदेहा। २. G. शाठा। ३. MS.···पूरिवारौ। ४. MS. कीटद्रि। ५. MS. मादानात्। ६. MS. तस्याधिकारेण। ७. MS. has no वा।

**अधः सहस्रैर्विंशत्या तन्मात्रोऽवीचिरस्य[1] हि ।**

अस्यैव जम्बूद्वीपस्याधो विंशत्या योजनसहस्रैरवीचिर्महानरको विंशतिसहस्रप्रमाण एवोद्वेधविस्ताराभ्यामेवमस्याधस्तलमितश्चत्वारिंशता योजनसहस्रैर्भवति । दुःख-निरन्तरत्वादवीचिः । अन्येषु सान्तरं दुःखम् तद्यथा संजीवे च्छिन्नावभिन्नसंपिष्ट-शरीराणां शीतला वायवो वान्ति पुनरपि तान् सत्त्वान् संजीवयन्ति । अत एव संजीवः । नास्मिन् सुखवीचिरस्तीत्यवीचिरित्यपरे । अन्येष्वपि सुखा वेदना विपाको नास्ति । नैः-[46b. 9B₁II]ष्यन्दिकी न वार्यते ।

**तदूर्ध्वं सप्त नरकाः**

तस्मादवीचेरूर्ध्वं सप्त नरकाः उपर्युपरि संनिविष्टाः । प्रतापनस्तापनो महारौरवो रौरवः संघातः कालसूत्रः संजीवश्च । अवीचिपार्श्वेष्वित्यपरे । ते पुनः

**सर्वेऽष्टौ षोडशोत्सदाः ॥५८॥**

उक्तं हि भगवता

"इत्येते नरका अष्टावाख्याता दुरतिक्रमाः ।
रौद्रकर्मभिराकीर्णाः प्रत्येकं षोडशोत्सदाः ॥
चतुस्कन्धाश्चतुर्द्वारा विभक्ता भागशोऽसिताः ।
अयःप्राकारपर्यन्ता अयसा प्रतिवर्जिताः[2] ॥
तप्ता चैवायसी भूमिर्ज्वलिता तेजसा युता ।
अनेकयोजनशता स्फुटा तिष्ठति अर्चिचषे" ति ।

षोडशोत्सदाः कतमे ।

**कुकूलं कुणपं चाथ क्षुरमार्गादिकं नदी ।**
**तेषां चतुर्दिशं**

द्वारे द्वारे तेषां चत्वार उत्सदाः । कुकूलं जानुमात्रम् । यत्र तेषां सत्त्वानां निक्षिप्ते संशीर्यते त्वङ्मांसशोणितमुत्क्षिप्ते पादे पुनरपि संजायते त्वङ्मांसशोणितम् । कुणपं गूथमृत्तिका यत्र न्यङ्कुटा नाम प्राणिनः प्रतिवसन्ति सर्वश्वेताः कृष्णशिरसः सूचिमुखास्तेषां[3] सत्त्वानां यावदस्थीनि भिन्दन्ति । क्षुरधाराचितो महापथः यत्र तेषां सत्त्वाना[4] [47a. 9A₁ III] मन्वाक्रामतां निक्षिप्ते पादे संछिद्यते त्वङ्-

---

१. MS. तन्मात्रोरवीचि... ।　२. MS. प्रतिव्रज्जिताः Y. प्रतिकुब्जिताः ।　३. ....मुखाः स्तेषां । ४. MS. सत्त्वानां ।

मांसशोणितमिति पूर्ववत् । असिपत्रवनं यत्र तेषां सत्त्वानां तीक्ष्णा असयः संनिपतन्ति[1] अङ्गप्रत्यङ्गान्यवकृन्तन्ति[2] श्याम[3]शबलाश्च श्वानो भक्षयन्ति । अयः-शाल्मलीवनं तीक्ष्णषोडशाङ्गुलकण्टकम् । तेषां सत्त्वानामभिरोहतां कण्टका अवाङ्मुखीभवन्तः कायं भिन्दन्ति अवतरतां चोर्ध्वीभवन्तः । अयस्तुण्डाश्च वायसा अक्षीण्युत्पाटयोत्पाटय भक्षयन्ति । तदेतत् क्षुरमार्गादिकं त्रयं शस्त्राभिनिपातं सामान्यादेकीक्रियन्ते । चतुर्थं उत्सदो नदी[4] वैतरणी पूर्णा तप्तस्य क्षारोदकस्य[5] यस्यां ते[6] सत्त्वा असिशक्तिप्रासहस्तैः पुरुषैरुभाभ्यां तीराभ्यां प्रतिवार्यमाणा[7] ऊर्ध्वमपि गच्छन्तः स्विद्यन्ते पच्यन्ते अधस्तिर्यगपि गच्छन्तः स्विद्यन्ते पच्यन्ते । तद्यथा वहूदकायां स्थाल्यामग्ना[8]वधिश्रितायां तिलतण्डुलादयः[9] । सा हि महानरकस्य परिखेवोत्पन्ना । त एते चत्वार उत्सदा दिग्भेदेन षोडशोच्यन्ते । अधिकयातनास्थानित्वादुत्सदाः[10] इत्युच्यन्ते । नरकेषु हि पतिता एतेषु पुनर्यात्यन्ते । नरका[11]वरोधादूर्ध्वमेतेषु[12] सीदन्त्युत्सदा इत्यपरे ।

प्रश्नात्प्रश्नान्तरमुपजायते । किं ते [47b. 9B1. III] नरकपालाः सत्त्वसंख्याता उताहो नेति । नेत्येके । कथमिदानीं चेष्टन्ते । सत्त्वानां कर्मभिर्विवर्त्तनीवायुवीजवत्[13] । यर्त्तहि भदन्तधर्मसुभूतिनोक्तं

"क्रोधनाः क्रूरकर्माणः पापाभिरुचयश्च ये ।
दुःखितेषु च नन्दन्ति जायन्ते यमराक्षसा" इति ॥

ये ते यमेनानुशिष्टाः सत्त्वान् नरकेषु[14] प्रक्षिपन्ति त एते यमराक्षसा उक्ता न तु ये कारणाः कारयन्तीति । सत्त्वसंख्याता इत्येके । तस्येदानीं कर्मणः क्व विपाकः । तेष्वेव नरकेषु हि आनन्तर्यकारिणां[15] विपाकावकाशस्तत्र[16] तेषां को विप्रतिबन्धः । कथमग्निना न दह्यन्ते । अग्नेर्नूनं कर्मभिः कृतावधित्वात् । भूतविशेषनिवृत्तेर्वा[17] ।

इमे तावदुष्णा अष्टौ महानरका उच्यन्ते ।

**शीता अन्येऽष्टावर्वुदादयः ॥५९॥**

अन्ये शीतनरका अष्टौ । तद्यथा अर्वुदो निरर्वुदः अटटो[18]हहवः हुहवः उत्पलः

---

१. MS. ....पतन्ते । २. MS. ....कृतन्ति । ३ Y. श्यामल । ४. Y. omits नदी । ५. Y. omits पूर्णा तप्तस्य क्षारोदकस्य । ६. Y. (N.D) omits ते । ७. Y.... वार्यमाणादूर्ध्वं.... । ८. MS. स्थाल्यां मग्ना... । ९. MS. ...तण्डुलादयसा । १०. Y. ....स्थानत्वा... । ११. Y. आनरका... । १२. Y. एषु । १३. Y. omits बीज । १४. Y. नरकस्थानेषु : १५. MS. आन्तर्य... । १६. Y. तेषु । १७. Y. ....निर्वृत्तेर्वा । १८. Y. अळठो ।

पद्मो महापद्मश्च । तेषां सत्त्वानां तीव्रशीताभिहतानां कायशब्दविकारानुरूपाण्येतानि नामानि । तेऽप्यस्यैव जम्बूद्वीपस्याधस्तात् महानरकाणां तिर्यक् । कुत इयतो जम्बूद्वीपस्याधस्तादवोच्यादीनामवकाशः । धान्यराशिवदधो विशाला [48a 9A1. IV.] हि द्वीपाः । अत एव महासमुद्रोऽनुपूर्वनिम्नः । इतीमे षोडश नरकाः सर्वे सत्त्वकर्माधिपत्यनिर्वृत्ताः । प्रत्येकं नरकास्तु स्वैः स्वैः कर्मभिरभिनिर्वृत्ताः । वहूनां सत्त्वानां द्वयोरेकस्य वा । तेषामनेकप्रकल्पो भेदः स्थानं[1] चानियतं नदीपर्वतमरुप्रदेशेष्वन्येषु वाऽधश्च भावात् । एष तावन्नरकभाजनानां संनिवेशः । तिर्यञ्चः स्थलजलाकाशगोचराः । तेषां किल मूलं स्थानं महासमुद्रस्ततोऽन्यत्र विसृता इति । प्रेतानां यमो राजा । तस्य जम्बूद्वीपस्याधस्तात् पञ्चयोजनशतान्तरपरिच्छिन्ना राजधानी तेषां मूलस्थानं ततोऽन्यत्र[2] विसृताः । केचित् प्रेता महर्द्धिका दैवीमिव[3] श्रियमुद्वहन्ति । शेषा यथा प्रेतावदाने ।

अथेमौ चन्द्रार्कौ कस्मिन् प्रतिष्ठितौ । वायौ । वायवोऽन्तरीक्षे सर्वसत्त्वसाधारणकर्माधिपत्यनिर्वृत्ता आवर्तवत् सुमेरुं परिवर्तन्ते । चन्द्रार्कताराणां वोर्ध्वचारः[4] । कियद्विप्रकृष्टावितश्चन्द्रार्कौ ।

**अर्धेन मेरोश्चन्द्रार्कौ**

युगन्धरगिरेर्मूर्ध्ना समं वहतः । किं प्रमाणौ । यथाक्रमं

**पञ्चाशत्सैकयोजनौ ।**

पञ्चाशत् योजनानि चन्द्रमण्डलस्य प्रमाणम् । सैकानि पञ्चाशत् सूर्यमण्डलस्य प्रमाणम् । एकपञ्चाशदित्यर्थः । तारकाविमाना-[48b. 9B1. IV] नां यस्याल्पप्रमाणं प्रमाणं तस्य क्रोशः । सूर्यविमानस्याधस्तात् बहिः स्फटिकमण्डलं तैजसमभिनिर्वृत्तं तापनं[5] प्रकाशनं च । चन्द्रविमानस्याधस्तादाप्यं शीतलं भास्वरं च । प्राणिनां कर्मभिर्दृष्टिशरीरफलपुष्पसस्योषधीनामनुग्रहार्थमुपघातकार्थं[6] यथासंभवम् । चतुर्द्वीपके एकश्चन्द्रमाः कृत्यं करोत्येकः[7] सूर्यः । किं पुनश्चतुर्द्वीपेषु सूर्यो युगपत् कृत्यं करोति । नेत्याह । किं तर्हि । तेषु

**अर्धरात्रो[8]ऽस्तंगमनं मध्याह्न उदयः सकृत् ॥६०॥**

यदोत्तरकुरावर्धरात्रं तदा पूर्वविदेहे सूर्यस्यास्तंगमनं जम्बूद्वीपे मध्याह्नो गोदानीये उदयः । एवमन्येष्वपि योज्यम् । सूर्यस्येह गतिभेदेन रात्रिदिवानां वृद्धिह्रासौ । तत्र पुनः

---

१. MS. स्थानां । २. MS. ततोऽन्य । ३. MS. देवीमिव । ४. MS. वोचारः । ५. MS. तापन । ६. Y. adds च । ७. MS. ...त्येकं । ८. MS. ....रात्रौस्त... ।

**प्रावृण्मासे द्वितीयेऽन्त्यनवम्यां वर्धते निशा ।**

वर्षाणां द्वितीये मासे भाद्रपदे द्वितीयस्य पक्षस्य नवम्यां वर्धते रात्रिः ।

**हेमन्तानां चतुर्थे तु हीयते**

सैव हेमन्तानां चतुर्थे मासे पुनर्हीयते । अन्त्यनवम्यामिति वर्त्तते । फाल्गुन[1]मासस्य द्वितीयपक्षनवम्याम् ।

**अहर्विपर्ययात्[2] ।।६१।।**

यदा रात्रिर्वर्धते तदा दिवसो हीयते । यदा रात्रिर्हीयते तदा दिवसो वर्धते । कियत्या [49a.9A1. V] मात्रया वर्धते ।

**लवशो रात्र्यहर्वृद्धी**

लवं लवं रात्रिर्वर्धते दिवसो वा । ते च हानिवृद्धी यथाक्रमं

**दक्षिणोत्तरगे रवौ ।**

जम्बूद्वीपस्य दक्षिणं पार्श्वं गच्छति भास्करे रात्रिवृद्धिः उत्तरं गच्छत्यहर्वृद्धिः । शुक्लपक्षस्यादौ चन्द्रमसो विकलं मण्डलं दृश्यते । किं तत्र कारणम् ।

**स्वच्छाययाऽर्कसामीप्याद्विकलेन्दुसमीक्षणम् ।।६२।।**

यदा हि सौरस्य विमानस्यासन्ने चान्द्रमसं विमानं वहति तदा किल सौर्यो भासस्तस्मिन् विमाने पतन्ति । ततोऽपरपार्श्वे छाया पतन्ती विकलं[3] मण्डलं दर्शयतीति प्राज्ञप्तिको निर्देशः । वाह्ययोगः स तादृशो भवति यत्कदाचिद्विमान-स्यार्धं दृश्यत इति पूर्वाचार्याः । अथैतानि सूर्यादिविमानानि कतमे सत्त्वा अध्यावसन्ति[4] । देवाश्चातुर्महाराजकायिकाः । किमेतान्येव तेषां स्थानानि । विमानवासिनामेतानि । भूमिनिवासिनां पुनः सुमेरुपरिषण्डादीनि[5] । कति चास्य परिषण्डाः कियत्यो वा ।

**परिषण्डाश्चतस्रोऽस्य दशसाहस्रिकान्तराः ।**

दशयोजनसहस्राण्युद्गम्यैका । एवं यावच्चतुर्थी । ताभिः सुमेरोरर्धमाक्षिप्तम् । ताश्च ततो यथासंख्यं

---

१. MS. फाल्गुण । २. MS. अर्हवि....। ३. Y. विकलमण्डलं । ४. MS. अध्यावसते । It may be अध्यासते also. ५. MS. ....परिषण्डानि ।

**षोडशाष्टौ सहस्राणि चत्वारि द्वे च निर्गताः ॥६३॥**

प्रथमा परिषण्डा षोडश सहस्राणि [49b. 9B1. V] योजनानां सुमेरोर्निर्गता। द्वितीयाऽष्टौ तृतीया चत्वारि चतुर्थी द्वे।

**करोटपाणयस्तासु मालाधारास्सदामदाः।**
**महाराजिकदेवाश्च**

प्रथमायां परिषण्डायां करोटपाणयो नाम यक्षाः प्रतिवसन्ति। द्वितीयायां मालाधारास्तृतीयायां सदामदाः सदामत्ताः। सर्वे एते चतुर्महाराजकायिकाः। चतुर्थ्यां तु[1] चत्वारो महाराजाः स्वयं प्रतिवसन्ति[2] तत्परिचाराश्च। अतस्तस्यां महाराजकायिका देवा इत्युक्तम्। यथा परिषण्डासु चतुर्महाराजकायिका देवा एवं

**पर्वतेष्वपि सप्तसु ॥६४॥**

युगन्धरादिषु पर्वतेषु तेषां ग्रामनिगमाः। अत एवैष देवनिकायः सर्वेषां महिष्ठः।

**मेरुमूर्ध्नि त्रयस्त्रिंशाः**

अथ कियान्मेरुमूर्धा।

**स चाशीतिसहस्रदिक्।**

एकैकपार्श्वमशीतिसहस्राणि यथैवाधस्तात्। अन्ये पुनराहुः। स विंशतिसहस्रदिक्। चत्वारि पार्श्वान्यस्य चतस्रो दिशः। एकैकं पार्श्वं विंशतिर्योजनसहस्राणि समन्तात् परिक्षेपेणाशीतिरिति। तस्य च

**विदिक्षु कूटाश्चत्वार[3] उषिता वज्रपाणिभिः ॥६५॥**

सूमेरुमूर्ध्नो विदिशः कोणाः। तासु पञ्चयोजनशतप्रमाणाश्चत्वारः कूटा अभ्युद्गता येषु वज्रपाणयो नाम यक्षाः [50a. 9A1. VI] प्रतिवसन्ति। तस्य च मेरुमूर्ध्नः

**मध्ये सार्धद्विसाहस्रपार्श्वमध्यर्धयोजनम्।**
**पुरं सुदर्शनं नाम हैमं चित्रतलं मृदु ॥६६॥**

सुमेरुतलस्य मध्ये मध्ये सुदर्शनं नाम नगरं[4] दैर्घ्ये सार्धतृतीययोजनसहस्रे एकैकं पार्श्वमुच्छ्रायेणाध्यर्धयोजनम्। प्राकारः सौवर्ण एकोत्तरेण धातुशतेनास्य भूमिश्चित्रिता। तच्च भूमितलं तूलपिचुवत् मृदुसंस्पर्शं पादक्षेपोत्क्षेपाभ्यां नतोन्नतं शक्रस्य देवानामिंद्रस्य राजधानी।

१. MS. चतुर्थीन्तु। २. MS. प्रविसन्ति। ३. MS. कूटागारश्चत्वारः। ४. MS. नगरं नगरं।

**सार्धद्विशतपार्श्वोऽत्र वैजयन्तः**

शक्रस्य देवानामिन्द्रस्य वैजयन्तो नाम प्रासादो नगरस्य मध्ये नानारत्नस्थानविधानसंपदा सर्वान्यभवनश्रीमहिम्ना ह्लेपणो दैर्घ्येणार्धतृतीये योजनशते पार्श्वं पार्श्वम् । इयं तावन्नगरस्याभिरामता ।

**बहिः पुनः ।**

**तच्चैत्ररथपारुष्यमिश्रनन्दनभूषितम्[१] ॥६७॥**

तस्य हि नगरस्य बहिश्चतुर्षु पार्श्वेषु चत्वार्युद्यानादीनि देवानां क्रीडाभूमयः । चैत्ररथमुद्यानं पारुष्यकं मिश्रकावणं नन्दनवनं च । तैस्तन्नगरं वहिरलंकृतम् ।

**विंशत्यन्तरितान्येषां सुभूमीनि चतुर्दिशम् ।**

एषां चोद्यानानां चतुर्दिशं चत्वारि सुभूमीनि विंशतियोजनान्तरितानि[२] क्रीडास्थानान्येव देवानां परस्प-[70b. 9B1. VI]रस्पर्धयेव शोभां वितन्वन्ति[३] । वहिरेव नगरस्य पार्श्वे

**पूर्वोत्तरे पारिजातः सुधर्मा दक्षिणावरे ॥६८॥**

पारिजातो नाम कोविदारस्त्रायस्त्रिंशानां देवानां कामरतिप्रकर्षाश्रयः[४] । तस्य पञ्च योजनानि मूलाभिनिवेशो योजनशतमुच्छ्रायः । पञ्चाशत् योजनानि शाखापत्रपलाशं स्फरित्वा तिष्ठति । तस्य खलु सर्वपरिफुल्लस्य योजनशतमनुवातं गन्धो वाति पञ्चाशद्योजन[५] योजनानि प्रतिवातम् । युक्तं तावदनुवातम् । प्रतिवातं तु कथम् । वृक्षानतिक्रमं संधायोक्तमित्येके । नहि नाम सप्रतिवातं[६] वातो वाति । तस्यैव तु सा गन्धस्य तादृशी प्रभावसंपदेष्टव्या यत् प्रतिबाध्यमानोऽपि दिव्यैर्मृदुमारुतैर्गन्धान्तरं संतनोति । मन्दतरतमसमारम्भात्तु[७] संतान आश्वेव समुच्छिद्यते यतो[८] न तथा विप्रकृष्टमध्वानं प्रसर्पति । किं पुनः स्वभूताश्रित एवमपुष्पगन्धसंतानो वर्तते उताहो वायुरधिवासितो जायते । नात्र नियमः । उभयथापि[९] ह्याचार्येष्टिः । यत्तर्हि भगवतोक्तं

"न पुष्पगन्धः प्रतिवातमेति न मौलिकस्तागरश्चान्दनो वा ।
सतां तु गन्धः प्रतिवातमेति सर्वा दिशः सत्पुरुषः प्रवाती"ति ।

१. MS. ....नन्दनवनं च भूषितं । २. Y. ...योजनान्यतिक्रम्य । ३. MS. वितति । ४. ...प्रकर्षालयः । ५. Y. omits योजन । ६. Y. omits. स । ७, MS. ...समारंभातु । ८. Y. अतो । ९. MS. उभयस्थापि ।

मानुष्यकं पुष्पगन्धं [51a. 9A1. VII] संघायोक्तम् । तद्धि प्रतीतं लोके । न च तस्य तादृशी शक्तिः महीसासकास्तु पठन्ति "योजनशतमनुवातं गन्धो वाति पञ्चाशद्योजनानि प्रतिवातमिति । सुधर्मा नाम देवसभा दक्षिणपश्चिमे दिग्भागे यस्यां निषद्य देवाः कृत्याकृत्यं समर्थयन्ति[1] । एष तावत्त्रिदशानां भाजनसंनिवेशः ।

**तत[2] ऊर्ध्वं विमानेषु देवाः**

त्रिदशेभ्य ऊर्ध्वं देवा विमानेषु प्रतिष्ठिताः । ते पुनर्यामास्तुषिता निर्माणरतयः परनिर्मितवशवर्तिनश्च ब्रह्मकायिकादयश्च पूर्वोक्ताः षोडशस्थानान्तर[3]गताः । इत्येते द्वाविंशतिदेवनिकायाः समासेन येषां भाजनं प्रज्ञायते ।

**कामभुजस्तु षट् ।**

तेषां तु षट् कामावचरा देवनिकायाः कामान् परिभुञ्जते न शेषाः । तद्यथा चतुर्महाराजकायिका यावत् परनिर्मितवशवर्तिनः । ते पुनः

**द्वंद्वालिङ्गनपाण्याप्तिवसितेक्षितमैथुनाः ॥६९॥**

द्वंद्वेन मैथुनं भूमिसंवद्धवासिनाम् । चातुर्महाराजकायिकानां[4] त्रायस्त्रिशानां यथा मनुष्याणाम् । तेषां तु वायुनिर्मोक्षात् दाहविगमः शुक्राभावात् । आलिङ्गनेन मैथुनं यामानामालिङ्गनमात्रेण दाहविगमात् । पाणिसंप्राप्त्या तुषितानां हसितेन निर्माणर-[51b. 9B1. VII]तीनां प्रेक्षितेन परनिर्मितवशवर्तिनाम् । स्ववर्तिनां सर्वेषां द्वंद्वसमापत्त्या । कालपरिमाणं तु प्रज्ञप्तावुक्तमिति वैभाषिकाः । यावद्याव-द्विषयाणां तीव्रतरता तावत्तावद्रागोऽपि तीव्रतरः । यस्य देवस्य देव्या वा उत्सङ्गे देवकुमारो देवकन्या वा जायते स तयोः पुत्रो भवति सा च दुहिता । कियत्प्रमाणो जायते ।

**पञ्चवर्षोपमो यावत् दशवर्षोपमः शिशुः ।**

**संभवत्येषु**

यथासंख्यं षट्सु देवनिकायेषु । ते तु क्षिप्रमेवाभिवर्धन्ते ।

**संपूर्णाः सवस्त्राश्चैव[5] रूपिणः ॥७०॥**

---

१. Y. समर्थयन्ते । २. MS. तदूर्ध्वं । ३. MS. not clear. ४. MS....कायिका त्राय....। ५. MS. सवस्त्रश्चैव ।

रूपावचरा देवाः संपूर्णकायाः वस्त्रेण संवीता उपपद्यन्ते । सर्वे देवा आर्यभाषाभाषिणः । तदत्र कामधातौ वेदितव्याः

**कामोपपत्तयस्तिस्रः कामदेवाः समानुषाः ।**

कथं कृत्वा । सन्ति सत्त्वाः प्रत्युपस्थितकामाः प्रत्युपस्थितेषु कामेष्वैश्वर्यं वशे[1] वर्तयन्ति । तद्यथा मनुष्यास्तदेकत्याश्च देवाः । ते पुनश्चत्वारो देवनिकायाः । सन्ति सत्त्वा निर्मितकामा निर्माय कामानैश्वर्यं वशे वर्तयन्ति । तद्यथा देवा निर्माणरतयः । सन्ति सत्त्वाः परनिर्मितकामाः परनिर्मितेषु कामेष्वैश्वर्यं वशे वर्त्तयन्ति । तद्यथा देवाः परनिर्मितवशवर्त्तिनः । ता एता यथोत्[52a. 9A1. VIII] पन्नपरिभोगित्वात् यथेच्छात्मनिर्मितपरिभोगित्वाद्यथेच्छात्मपर[2]निर्मितपरिभोगित्वाच्च तिस्रः कामोपपत्तय इत्युच्यन्ते । रूपधातौ तु

**सुखोपपत्तयस्तिस्रो नवत्रिध्यानभूमयः ॥७१॥**

त्रिषु ध्यानेषु या नव भूमयः तास्तिस्रः सुखोपपत्तयः । ते हि देवा विवेकजेन समाधिजेन च प्रीतिसुखेन च निष्प्रीतिकेन च सुखेन सुखं विहरन्तो दीर्घमध्वानं तिष्ठन्ति । अत एता निर्दुःखदीर्घसुखत्वात्सुखा उपपत्तयः सुखोपपत्तयः । ध्यानान्तरोत्पत्तौ तु प्रीतिसुखाभावात्सुखोपपत्तित्वं विचार्यम् ।

यान्येतानि देवानां द्वाविंशतिस्थानान्युक्तानि तेषामधरादुत्तरं कियद्विप्रकृष्टम् । नैतत् सर्वं योजनपरिसंख्यया सुकरं परिसंख्यातुम् । अपि तु

**स्थानात् स्थानादधो यावत्तावदूर्ध्वं ततस्ततः ।**

जम्बूद्वीपात् प्रभृति यदुत्तरं स्थानं तस्माद्यावदधो जम्बूद्वीपस्तावत् पुनस्तस्मादूर्ध्वं स्थानान्तरम् । तद्यथा चतुर्थी परिषण्डा चतुर्णां महाराजानां मूलस्थानमितश्चत्वारिंशद्योजनसहस्राणि । तस्माद्यावदधो जम्बूद्वीपस्तावदूर्ध्वं त्रिदशानां स्थानम् तस्मादपि यावदधो जम्बूद्वीपस्तावदूर्ध्वं [52b. 9B1. VIII] यामानां स्थानम् । ततोऽपि यावदधो जम्बूद्वीपस्तावदूर्ध्वं तुषितानां स्थानमिति । एवं विस्तरेण सर्वमनुक्रम्य सुदर्शनेभ्यो यावदधो जम्बूद्वीपस्तावदूर्ध्वमकनिष्ठानां स्थानम् । तस्मादूर्ध्वं न पुनः स्थानमस्ति । अत एव ज्येष्ठभूत्वादकनिष्ठा उच्यन्ते । अघनिष्ठा इत्यपरे । अघं किल चित्तस्थं रूपं तन्मात्रनिष्ठेति ।

किं पुनरधरस्थानोपपन्ना ऊर्ध्वानि विमानानि गत्वा पश्यन्ति ।

---

१. MS. वश । २. MS. यथेच्छापर.... । Y. यथेच्छात्मपर... । One reading is यथेच्छपर ।

**नोर्ध्वं दर्शनमस्त्येषामन्यत्रर्द्धिपराश्रयात् ॥७२॥**

ऋद्ध्या वा त्रायस्त्रिंशा यामान् । गच्छेयुः । पराश्रयेण वा यद्यृद्धिमता नीयेरन् देवेन वा तत्रत्येन । एवं शेषाः । आगतं तूर्ध्वोपपन्नं पश्येन्नतूर्ध्वधातुकं नोर्ध्व-भूमिकम् । यथा स्प्रष्टव्यं न स्पृशेदविषयत्वात् । अत एव तेनास्वेन कायेना-गच्छन्ति । किं तर्हि निर्मितेनाधरभूमिकेन तदिच्छया पश्येदिहत्यमिवेति निकायान्तरीयाः ।

अथैषां यामादिविमानानां कियत् प्रमाणम् । चतुर्णां तावद्यावत्सुमेरुमूर्ध्नः इत्येके । द्विगुणोत्तरमित्यपरे । प्रथमं तु ध्यानं यावांश्चातुर्द्वीपकः । द्वितीयं यावान् साहस्रश्चूड़िको लोकधातुः । तृतीयं यावान् द्विसाहस्रः । चतुर्थं यावांस्त्रिसा-[53a. 10A. I]हस्र इत्येके । प्रथमादीनि साहस्रादिपरिमाणानि । चतुर्थं त्वपरिमाणमित्यपरे ।

अथ कोऽयं साहस्रश्चूड़िको लोकधातुः को द्विसाहस्रस्त्रिसाहस्रो वा ।

**चतुर्द्वीपकचन्द्रार्कमेरुकामदिवौकसाम् ।**
**ब्रह्मलोकसहस्रं च साहस्रश्चूड़िको मतः ॥७३॥**

सहस्रं जम्बूद्वीपानां पूर्वविदेहानामपरगोदानीयानामुत्तरकुरूणां सहस्रं सूर्याणां चन्द्राणां सुमेरूणां सहस्रं चातुर्महाराजकायिकानां[1] देवानां यावत् परनिर्मितवशवर्तिनां सहस्रं ब्रह्मलोकानामयमुच्यते साहस्रश्चूड़िको लोकधातुः ।

**तत्सहस्रं द्विसाहस्रो लोकधातुस्तु मध्यमः ।**

तेषां चूड़िकानां लोकधातूनां सहस्रं द्विसाहस्रो मध्यमो लोकधातुः ।

**तत्सहस्रं त्रिसाहस्रः**

तेषां द्विसाहस्राणां लोकधातूनां सहस्रं त्रिसाहस्रमहासाहस्रो लोकधातुः । एष हि कृत्स्नः

**समसंवर्तसंभवः ॥७४॥**

समं संवर्तते समं विवर्तते । संभवो हि विवर्तः इत्युत्तरत्र व्याख्यास्यते[2] ।

किं खलु यथा भाजनानां प्रमाणभेद एवं तद्वासिनामपि सत्त्वानां प्रमाण-भेदोऽस्ति । अस्तीत्याह । तत्र तावत्

**जाम्बूद्वीपाः प्रमाणेन चतुःसार्धत्रिहस्तकाः ।**

जम्बूद्वीपका मनुष्याः प्रमाणा-[53b. 10B. I]र्धचतुर्हस्तकाः केचित्तु चतुर्हस्तकाः

१. MS. ....कायिकाणां । २. Y. व्याख्यास्यामः ।

**द्विगुणोत्तरवृद्धया तु पूर्वगोदोत्तराह्वयाः ॥७५॥**

पूर्वविदेहका गोदानीका[1] उत्तरकौरवाश्च[2] मनुष्या अष्टषोडशद्वात्रिंशद्धस्तका[3] यथाक्रमम् ।

**पादवृद्धया तनुर्याव[4]त्सार्धक्रोशो दिवौकसाम् ।**
**कामिनां**

पादः क्रोशस्य चतुर्थो भागः । तन्मात्रं शरीरं चातुर्महाराजकायिकानां द्वौ पादौ त्रायस्त्रिंशानां त्रयो यामानां चत्वारस्तुषितानां पञ्च निर्माणरतीनां अध्यर्धः क्रोशः परनिर्मितवशवर्तिनाम् ।

**रूपिणां त्वादौ योजनार्धं**

रूपिणां देवानां प्रथमे स्थाने ब्रह्मकायिकानामर्धयोजनमात्रं शरीरम् ।

**ततः परम्[5] ॥७६॥**
**अर्धार्धवृद्धिः**

त्रिषु स्थानेषु ब्रह्मपुरोहितानां योजनं महाब्रह्मणोऽध्यर्धं परीत्ताभानां द्वे योजने ।

**ऊर्ध्वं तु परीत्ताभेभ्य आश्रयः ।**
**द्विगुणद्विगुणा[6] हित्वाऽनभ्रकेभ्य[7] स्त्रियोजनम् ॥७७॥**

अप्रमाणाभानां चत्वारि योजनानि । आभास्वराणामष्टौ । एवं द्विगुणवृद्धया यावच्छुभकृत्स्नानां चतुःषष्टिः । अनभ्रकाणां ततो योजनत्रयेण हीनं द्विगुणं पञ्चविंशतियोजन[8]शतम् । तस्मात् परेण पुनः पुण्यप्रसवानां द्विगुणं द्विगुणं यावदकनिष्ठानां [54a. 10A. II] षोडशयोजनसहस्राणि शरीरम् ।

एवं प्रमाणभिन्नानां किमायुषोऽप्यस्ति भेदः । अस्तीत्याह ।

**सहस्रमायुः कुरुषु**

वर्षाणाम् ।

**द्वयोरर्धार्धवर्जितम् ।**

द्वयोर्द्वीपयोरर्धार्धं वर्जयित्वा पञ्च वर्षशतानि गोदानीयानाम् । अर्धतृतीये वर्षशते पूर्वविदेहानाम् ।

---

१. Y. गोदानीयाः । २. Y. औत्तर... । ३. MS. ....त्रिंशत् हस्तका । ४. MS. यावत् । ५. MS. परमर्धार्धं । ६. G. द्विगुणो । ७. MS. नभ्रकेभ्यः स्त्रि.... । ८. MS. पंचविंशद्योजनं ।

इहानियतम्

जम्बूद्वीपे नास्त्यायुषो नियमः कदाचित् भूयो भवति कदाचिदल्पीयः ।

अन्ते तु दशाब्दाः[१]

अब्दः संवत्सरः । अन्ते हीयमानं[२] दश वर्षाण्यायुर्भवति ।

आदितोऽमितम् ।।७८।।

आदितः प्राथमकल्पिकानां मनुष्याणामपरिमाणमायुर्भवति । सहस्रादिसंख्यया परिमातुं न शक्यते ।

उक्तं मनुष्याणां देवानां वक्तव्यम् । तच्चाहोरात्रं व्यवस्थाप्य शक्यं वक्तुमिति स एव चैषां व्यवस्थाप्यते ।

नृणां वर्षाणि पञ्चाशदहोरात्रो दिवौकसाम् ।

कामेऽधराणां

यानि मनुष्याणां पञ्चाशद्वर्षाणि तानि कामधातावधराणां देवानां चातुर्महाराजकायिकानामेकं रात्रिदिवम् ।

तेनायुः पञ्चवर्षशतानि तु ।।७९।।

तेन ततस्तेनाहोरात्रेण तेषां त्रिंशद्रात्रकेण मासेन द्वादशमासकेन संवत्सरेण दिव्यानि पञ्चवर्षशतान्यायुःप्रमाणम् ।

द्विगुणो-[54b. 10B. II]त्तरमूर्ध्वानामुभयं

ऊर्ध्वानां देवानामुभयं द्विगुणोत्तरमहोरात्रश्चायुश्च । कथं कृत्वा । यन्मनुष्याणां वर्षशतं तत्त्रायस्त्रिंशानां देवानामेकं रात्रिदिवम् । तेन रात्रिदिवेन दिव्यं वर्षसहस्रमायुः । एवं यामादीनां यथाक्रमम् । मानुष्यकाणि द्वे चत्वार्यष्टौ षोडश वर्षशतान्येकं रात्रिदिवम् । तेन रात्रिदिवेन द्वे चत्वार्यष्टौ षोडश दिव्यानि वर्षसहस्राण्यायुषः प्रमाणम् । युगन्धरादूर्ध्वं सूर्याचन्द्रमसोरभावात् । कथं देवानामहोरात्रव्यवस्थानमालोककृत्यं वा । पुष्पाणां संकोचविकासात्कुमुदवन्धु[३]वत् शकुनीनां[४] कूजनाकूजनात् मिद्धापगमागमाच्च[५] आलोककृत्यं स्वयंप्रभत्वात् । उक्तमायुः कामिनाम् ।

१. G. अन्त्ये तु दशाब्दान् । २. MS. हीयमाणं । ३. Y. कुमुदपद्म । ४. Y. adds च । ५. Y. मिद्धापगमोपमाच्च ।

**रूपिणां पुनः ।**

**नास्त्यहोरात्रमायुस्तु कल्पैः स्वाश्रयसंमितैः ॥८०॥**

येषां रूपिणामर्धयोजनमाश्रयः तेषामर्धकल्पमायुः । येषां योजनं तेषां कल्पम् । एवं यस्य यावद्योजनमाश्रयस्तस्य तावत्कल्पमायुर्यावदकनिष्ठानां षोडशकल्पसहस्राण्यायुः प्रमाणम् ।

**आरूप्ये विंशतिः कल्पसहस्राण्य[1]धिकाधिकम् ।**

आकाशानन्त्यायतने विंशतिकल्पसहस्राण्यायुषः प्रमाणम् । [55a. 10A. III] विज्ञानानन्त्यायतने तस्मादधिकं विंशतिः सहस्राणि । आकिंचन्यायतने तस्मादधिकं विंशतिः । भवाग्रे तस्मादधिकं विंशतिः । एवं तेषां यथाक्रमं विंशति[2]श्चत्वारिंशत् षष्टिरशीतिः कल्पसहस्राण्यायुःप्रमाणम् ।

कतमोऽत्र कल्पो वेदितव्यः किमन्तरकल्पोऽथ संवर्तकल्पोऽथ विवर्त्तकल्पोऽथ महाकल्पः ।

**महाकल्पः[3] परीत्ताभात् प्रभृत्यर्धमधस्ततः ॥८१॥**

**परीत्ताभादेव** निकायात् **प्रभृति** महाकल्पेनायुः वेदितव्यम् । तस्माद**धो** महाकल्पस्या**र्धं** कल्पीकृत्य महाब्रह्मादीनामायुर्व्यवस्थापितम् । कथं कृत्वा । यच्च लोको विंशतिमन्तरकल्पान् विवर्तते यच्च लोको विंशतिमन्तरकल्पान्विवर्त आस्ते यच्च विंशतिमन्तरकल्पान्संवर्तते इमे षष्टिरन्तरकल्पा महाब्रह्मणोऽध्यर्धः कल्पः । एवं च कृत्वा महाकल्पस्यार्धं चत्वारिंशदन्तरकल्पान् कल्पीकृत्य तेषामायुःप्रमाणमुक्तम् । उक्तं सुगतावायुःप्रमाणम् ।

दुर्गताविदानीं वक्तव्यम् । तत्र तावत्

**कामदेवायुषा तुल्या अहोरात्रा यथाक्रमम् ।**

**संजीवादिषु षट्सु**

यावत् षण्णां कामावचराणां देवनिकायानामायुरुक्तं तेन **तुल्या अहोरात्राः षट्सु** नरकेषु **यथाक्रमं** वेदितव्याः[4] । संजीवे कालसूत्रे संघाते [55b. 10B. III] रौरवे महारौरवे तापने च ।

**आयुस्तैस्तेषां कामदेववत्[5] ॥८२॥**

**तैरि**दानीं स्वैरहोरात्रै**स्तेषां** यथा षण्णां कामावचराणां देवानामायुस्तथैव यथाक्रमं वेदितव्यम् । कथं कृत्वा । यद्धि चातुर्महाराजकायिकानामायुः प्रमाणं तत्संजीवने महानरके एकं रात्रिंदिवम् । तेन यावत् द्वादशमासकेन

१. MS. drops ण्य । २. Y. omits विंशतिः । ३. MS. महाकल्प । ४. MS. वेदितव्यः । ५. MS. कामदेववतः ।

संवत्सरेण तत्रत्यानि पञ्चवर्षशतान्यायुः। यत्राथस्त्रिशानामायुः प्रमाणं तत् कालसूत्रे महानरके एकं रात्रिदिवम्। तेन रात्रिदिवेन तस्मिन्वर्षसहस्राण्यायुः-प्रमाणम्। एवमन्येष्वपि यथायोगं योज्यं यावत् परनिर्मितवशवर्तिनामायुःप्रमाणं तत्तुल्येनाहोरात्रेण तापने षोडश वर्षसहस्राण्यायुःप्रमाणम्।

**अर्धं प्रतापने**

प्रतापने महानरकेऽन्तरकल्पस्यार्धमायुःप्रमाणम्।

**अवीचावन्तःकल्पं**

तिरश्चां तु नियमो नास्ति।

**परं पुनः**

**कल्पं तिरश्चां**

परमायुस्तिरश्चामन्तरकल्पं तत् पुनर्नागानां नन्दोपनन्दाश्वतलीप्रभृतीनाम्। उक्तं हि भगवता "अष्टाविमे भिक्षवो नागा महानागाः कल्पस्था धरणिधरा" इति विस्तरः।

**प्रेतानां मासाह्ना शतपञ्चकम् ॥८३॥**

यो मनुष्याणां मासः स प्रेतानाम-[59a. 10A. VI] होरात्रः। तेनाहोरात्रेण[1] पञ्च वर्षशतान्यायुः। शीतनरकेष्वायुषः किं प्रमाणम्।

**वाहाद्वर्षशतेनैकतिलोद्धारक्षयायुषः।**
**अर्वुदा[2]द्विंशतिगुणप्रतिवृद्धयायुषः परे ॥८४॥**

उपमानमात्रेण तेष्वायुराख्यातं भगवता "तद्यथा भिक्षवः इह स्याद्विंशतिखारीको मागधकस्तिलवाहः पूर्णस्तिलानां चूड़िकावद्धः। ततः कश्चिदेव वर्षशतस्यात्ययादेकं तिलमपनयते क्षिप्रतरं भिक्षवः सविंशतिखारीको मागधस्तिलवाहोऽनेनोपक्रमेण परिक्षयं पर्यादानं गच्छेत्। न त्वेवाहमर्वुदोपपन्नानामायुषः पर्यन्तं वदामि। यथा खलु भिक्षवो विंशति र्खुदा एवमेको[3] निरर्वुदो विस्तरेण यथा खलु भिक्षवो विंशतिः पद्मा एवमेको महापद्म" इति।

एवमेषामायुष्मतां सत्त्वानां किमस्त्यपरिपूर्णायुषामन्तरा मृत्युराहोस्विन्न। सर्वत्रास्ति[4]

---

१. MS- drops रा। २. G. अर्वदा विंशति। ३. MS. एव-ेको। ४. MS. सर्व्वीत्रास्ति।

**कुरुबाह्यो[1]ऽन्तरामृत्युः**

उत्तरकुरुषु नियतायुषः सत्त्वा अवश्यं कृत्स्नमायुर्जीवन्ति । अन्येषु नावश्यम् । पुद्गलानां तु बहूनां नास्त्यन्तरेण कालक्रियया । तुषितस्थस्यैकजाति बद्धस्य[2] बोधिसत्त्वस्य चरमभविकसत्त्वस्य[3] जिनादिष्टस्य जिनभूतस्य श्रद्धाधर्मानुसारिणो[4] बोधिसत्त्वचक्र[5]वर्त्ति-[56b. 10B. IV] मात्रोश्च तद्गर्भयो[6]रित्येवमादीनाम् ।

योजनप्रमाणेन स्थानानि शरीराणि चोक्तानि वर्षप्रमाणेनायुरुक्तं[7] तयोश्च प्रमाणं नोक्तमिति वक्तव्यं नाना च सर्वेषां व्यवस्थानमतस्तस्यापि पर्यन्तो वक्तव्यः । तेषां समानाख्यानार्थमादिप्रक्रम आरभ्यते ।

**परमाण्वक्षरक्षणाः[8] ।**

**रूपनामाध्वपर्यन्ताः**

रूपस्यापचीयमानस्य पर्यन्तः परमाणुः । कालस्य पर्यन्तः क्षणो नाम्नः पर्यन्तोऽक्षरं तद्यथा गौरिति । क्षणस्य पुनः किं प्रमाणम् । समग्रेषु प्रत्ययेषु यावता धर्मस्यात्मलाभः गच्छन्वा[9] धर्मो यावता परमाणोः परमाण्वन्तरं गच्छति । बल[10]वत्पुरुषाच्छटामात्रेण पञ्चषष्टिः क्षणा अतिक्रामन्तीत्याभिधार्मिकाः ।

**परमाणुरणुस्तथा ॥८५॥**

**लोहाप्शशा[11]विगोच्छिद्ररजोलिक्षास्तदुद्भवाः[12] ।**
**यवस्तथाङ्गुलीपर्व[13] ज्ञेयं सप्तगुणोत्तरम् ॥८६॥**

एतत्परमाण्वादिकं सप्तगुणोत्तरं वेदितव्यम् । सप्त परमाणवोऽणुः । सप्ताणवो लोहरजः । तानि सप्ताब्रजस्तानि सप्त[14] शशरजस्तानि सप्तैडकरजः । तानि सप्त वातायनच्छिद्ररजः । तानि सप्त लिक्षास्तदुद्भवा यूकेत्यर्थः । सप्त यूका यवः । सप्त यवा[15] अङ्गुलीपर्व त्रीणि पर्वाण्यङ्गुरीति[16] प्रसि-[57a. 10A. V] द्धमेवेति नोक्तम् । पार्श्वीकृतास्तु

---

१. G. कुरुवर्ज्यो । २. Y. प्रतिबद्धस्य । ३. MS. ""सत्त्वस्या । ४. Y. श्रद्धानुसारिधर्मानुसारिणोः । ५. MS.""सत्त्वश्चक्र"" । ६. MS. तत् गर्भ"" । ७. MS. प्रमाणेनायुक्तं । ८. MS. ""क्षणा रूप । ९. MS. गच्छन्ता । १०. MS. बेल"" । ११. G. लोहाप्छशा । १२. G. लिक्षातदु"" । १३. MS. पर्व्वं । १४. MS. drops. नि सप्त । १५. MS. यवाङ्गली १६. MS. पर्व्वागुरीति ।

**चतुर्विंशतिरङ्गुल्यो[1] हस्तो हस्तचतुष्टयम् ।**

**धनुः**

न्यासेनेत्यर्थः[2] ।

**पञ्चशतान्येषां क्रोशो रण्यं च तन्मतम् ॥८७॥**

धनुषां[3] पञ्च शतानि क्रोशः । क्रोशमात्रं च ग्रामादि रण्यमिष्टम् ।

**तेऽष्टौ योजनमित्याहुः**

उक्तं योजनस्य प्रमाणम् । वर्षस्येदानीमुच्यते ।

**विंशं क्षणशतं पुनः ।**

**तत्क्षणः**

क्षणानां विंशं शतमेकस्तत्क्षणः ।

**ते पुनः षष्टिर्लवः**

तत्क्षणाः षष्टिर्लवं इत्युच्यते ।

**त्रिंशद्[4] गुणोत्तराः ॥८८॥**

**त्रयो मुहूर्ताहोरात्रमासाः**

त्रिंशल्लवा मुहूर्तस्त्रिंशन्मुहूर्ता अहोरात्रः । कदाचित्तु रात्रिरधिका भवति कदाचिदूना कदाचित्समा[5] । त्रिदशाहोरात्रा मासः ।

**द्वादशमासकः ।**

**संवत्सरः सोनरात्रः**

चत्वारो मासा हेमन्तानां चत्वारो ग्रीष्माणां चत्वारो वर्षाणामित्येते द्वादश मासा संवत्सरः सार्धमूनरात्रैः । संवत्सरेण हि षडूनरात्रा निपात्यन्ते । कथं कृत्वा ।

"हेमन्तग्रीष्मवर्षाणामध्यर्धे मासि निर्गते ।
शेषेऽर्धमासे विद्वद्भिरूनरात्रो[6] निपात्यते ॥"

उक्तं वर्षप्रमाणम् ।

---

१. MS.....रंगुल्या । २. MS. व्यासेत्यर्थः । ३. MS. धनुष । ४. MS. त्रिंशत् ।
५. MS. समाः । ६.....रुणरात्रो ।

कल्पस्येदानीं वक्तव्यम् ।

**कल्पो बहुविधः स्मृतः ॥८९॥**

अन्तरकल्पो संवर्त्तकल्पो महाकल्प-[57b. 10B. V] श्चेति । तत्र तावत्

**संवर्त्तकल्पो नरकासंभवात् भाजनक्षयः ।**

नरकेषु हि सत्त्वासंभवात् प्रभृति यावत् भाजनसंक्षयः । द्वे हि संवर्त्तन्यौ । गति-संवर्तनी धातुसंवर्तनी च । पुनर्द्वे संवर्तन्यौ । सत्त्वसंवर्तनी भाजनसंवर्तनी च । भवति स कालो यन्नरकेषु सत्त्वाश्च्यवन्ते नोपपद्यन्ते । स आरम्भः संवर्तकल्पस्य । यदयं लोको विंशत्यन्तरकल्पान्[1] विवृत्तोऽस्थात्[2] तन्निर्यातं वक्तव्यम् । यद्विंशति-मन्तरकल्पान् संवर्तिष्यते तत् प्रतिपन्नं वक्तव्यम् । यदा नरकेष्वेकसत्त्वो नावशिष्टो भवति इयताऽयं लोकः संवृत्तो भवति । यदुत नरकसंवर्त्तन्या यस्य तदानीं नियतं नरकवेदनीयं कर्म ध्रियते स लोकधात्वन्तरनरकेषु क्षिप्यते । एवं तिर्यक्संवर्त्तनी प्रेतसंवर्त्तनी च वक्तव्या । महासमुद्रगतास्तिर्यञ्चः पूर्वं[3] संवर्तन्ते । मनुष्यसहचरिष्ण-वस्तु तैरेव सार्धं भवन्ति[4] । स कालो यन्मनुष्येष्वन्यतमः सत्त्वः स्वयमना-चार्यकं धर्मताप्रातिलम्भिकं प्रथमं ध्यानं समापद्यते स तस्मात् व्युत्थाय वाचं भाषते सुखं बत विवेकजं प्रीतिसुखं शान्तं बत विवेकजं प्रीतिसुखमिति । तं च शब्दं श्रुत्वा अन्येऽपि सत्त्वाः समा-[58a. 10A. VI] पद्यन्ते । कालं कृत्वा ब्रह्मलोक उपपद्यन्ते । यदा जम्बूद्वीप एकसत्त्वोऽपि नावशिष्टो भवति इयताऽयं लोकः संवृत्तो भवति यदुत जम्बूद्वीपसंवर्तन्या । एवं पूर्वविदेहगोदानीयोत्तरकुरुसंवर्तन्यो वक्तव्याः । यदा मनुष्येष्वेकसत्त्वोऽपि नावशिष्टो भवति इयताऽयं लोकः संवृत्तो भवति यदुत मनुष्यगतिसंवर्त्तन्या । औत्तरकौरवास्तु कालं कृत्वा कामावचरेषु देवेषूपपद्यन्ते । तत्र वैराग्याभावात् । एवं चातुर्महाराज-कायिकेष्वपि देवेषु प्रथमं ध्यानं समापद्य ब्रह्मलोक उपपद्यन्ते । यदा तत्रैकसत्त्वोऽपि नावशिष्टो भवति इयताऽयं लोकः संवृत्तो भवति यदुत चातुर्महाराजकायिकसंवर्त्तन्या । एवं यावत् परनिर्मितवशवर्तिसंवर्त्तन्यो वक्तव्याः । यदेकसत्त्वोऽपि कामावचरेषु देवेषु नावशिष्टो भवति इयताऽयं लोकः संवृत्तो भवति यदुत कामधातुसंवर्तन्या । ब्रह्मलोकेऽप्यन्यतमः सत्त्वो धर्मताप्रातिलम्भिकं द्वितीयं ध्यानं समापद्योत्थाय वाचं भाषते सुखं बत समाधिजं प्रीतिसुखं शान्तं बत समाधिजं प्रीतिसुखमिति । तं शब्दं श्रुत्वाऽन्येऽपि सत्त्वाः समापद्यन्ते कालं च कृत्वा आभास्वरेषु

१. विंशतिमन्तरकल्पान् । २. Y. जातः । ३ MS. पूर्वः । ४. MS. भवति ।

[58b. 10B. VI] देवेषूपपद्यन्ते । यदा[१] ब्रह्मलोक एकसत्त्वोऽपि नावशिष्टो भवति इयताऽयं लोकः संवृत्तो भवति यदुत सत्त्वसंवर्तन्या । ततः शून्ये भाजने इत एव सामन्तकात् सत्त्वानां तदाक्षेपके कर्मणि परिक्षीणे सप्त सूर्याः प्रादुर्भूय क्रमेण यावत् पृथिवीं सुमेरुं च निःशेषं दहन्ति । तस्मादेवं[२] प्रज्वलितादर्चिर्वायुना क्षिप्तं शून्यं ब्राह्मं विमानं निर्दहत् परैति[३] । तच्च तद्भूमिकमेवार्चिर्वेदितव्यम् । नहि विसभागा अपक्षालाः क्रमन्ते । तत्संवद्धसंभूतत्वात्तस्मात्तदित्युक्तम् । कामावचरो ह्यग्नी रूपावचरमग्निं संवध्नातीति । एवमन्यस्यामपि संवर्तन्यां यथायोगं[४] वेदितव्यमिति । नरकेषु सत्त्वानां च्युत्यनुत्पादात् प्रभृति यावत् भाजनानां संक्षय एष कालः ।

**विवर्तकल्पः प्राग्वायोर्यावन्नरक[५]संभवः ।।९०।।**

प्रथमाद्वायोः प्रभृति यावन्नरकेषु सत्त्वसंभवः एष कालो विवर्तकल्प इत्युच्यते । तथा संवृत्ते हि[६] लोक आकाशमात्रावशेषश्चिरं कालं तिष्ठति यावत् पुनरपि सत्त्वानां कर्माधिपत्येन भाजनानां पूर्वनिमित्तभूता आकाशे मन्दमन्दा वायवः स्यन्दन्ते । तदा[७] यदयं लोको विंशति- [59a. 10A. VII]मन्तरकल्पान् संवृत्तोऽस्थात्तन्निर्यातं वक्तव्यम् । यद्विंशतिमन्तरकल्पान् विवर्तिष्यते तदुपयातं[८] वक्तव्यम् । ततस्ते वायवो वर्धमाना यथोक्तं वायुमण्डलं जायते । ततः शनैर्यथोक्तक्रमविधानं सर्वं जायते अप्मण्डलं काञ्चनमयी महापृथिवी[९] द्वीपाः[१०] सुमेर्वादयश्च । प्रथमं तु ब्राह्म[११]विमानमुत्पद्यते । ततो यावत् यामीयं ततो वायुमण्डलादीनि । इयताऽयं लोको विवृत्तो भवति यदुत भाजनविवर्तन्या । अथान्यतरः सत्त्व आभास्वरेभ्यश्च्युत्वा शून्ये ब्राह्मे विमान उत्पद्यते । अन्येऽपि[१२] सत्त्वास्ततश्च्युत्वा ब्रह्मपुरोहितेषूपपद्यन्ते । ततो ब्रह्मकायिकेषु परनिर्मितवशवर्तिषु । क्रमेण यावदुत्तरकुरौ गोदानीये पूर्वविदेहे जम्बूद्वीपे प्रेतेषु तिर्यक्षु नरकेषूपपद्यन्ते । धर्मता ह्येषा यत् पश्चात् संवर्तते तत् पूर्वं विवर्तते । यदा नरकेष्वेकः सत्त्वोऽपि प्रादुर्भूतो भवति तदा यदयं लोको विंशतिमन्तरकल्पान् विवर्तते तन्निर्यातं भवति । यद्विंशतिमन्तरकल्पान् विवर्तः स्थास्यति तदुपयातं भवति ।

**अन्तःकल्पोऽमितात् यावद्दशवर्षायुषः**

विवर्तमाने लोके एकान्न[१३]विंशति-[59b. 10B. VII]रन्तरकल्पा अपरिमिता-

१ MS. यद । २. Y. seems to be तस्मादेव च । ३. Y. परेति । ४. Y. यथासंभवं । ५. G. नारक... । ६. Y. तथा हि संवृत्तो । ७. Y. adds प्रभृति । ८. MS. तदुपजातम्वक्तव्यम् । ९. Y. omits महा । १०. Y. omits द्वीपाः । ११. Y. ब्राह्मं । १२. Y. adds च । १३. Y. one reading is एकोन....।

युषां मनुष्याणामतिक्रामन्ति[1]। अपरिमितायुषामेव क्रमतां[1] यावद्दशवर्षायुषो भवन्ति। सोऽसौ विवृत्तानां तिष्ठतां प्रथमोऽन्तरकल्पः।

ततः।

**उत्कर्षा अपकर्षाश्च[3] कल्पा अष्टा[4]दशापरे ॥९१॥**

तस्मादपरेऽष्टादशोत्कर्षा अपकर्षाश्चाष्टादशान्तरकल्पा भवन्ति। कथं कृत्वा। तेभ्यो हि दशवर्षायुष्केभ्य उत्कर्षं गच्छन्तः क्रमेणाशीतिवर्षसहस्रायुषो भवन्ति। पुनश्चापकर्षं गच्छन्तो दशवर्षायुषो भवन्ति। एवं द्वितीयोऽन्तरकल्पः। एवं यावदष्टादश।

**उत्कर्ष एकः**

एकोऽन्तरकल्पो विंशतितम उत्कर्ष एवमपकर्षः[5]। दशवर्षायुष्केभ्यो यावदशीतिवर्षायुषां मनुष्याणामिति वर्त्तते। अथैते उत्कर्षाः कियन्तं प्रकर्षं गच्छन्ति।

**तेऽशीतिसहस्राद्यावदायुषः।**

नातः परेण वर्धन्ते यावानेव चान्येषामन्तरकल्पानामुत्कर्षापकर्षकालस्तावानेव प्रथमस्यापकर्षकालः पश्चिमस्य चोत्कर्षकाल इति समानकालाः सर्वे भवन्ति।

**इति लोको विवृत्तोऽयं कल्पाँस्तिष्ठति विंशतिम् ॥९२॥**

इत्यनेनान्तरकल्पन्यायेनायं विंशतिमन्तरकल्पान्विवृत्तस्तिष्ठति। यावन्तं कालं विवृत्तस्तिष्ठति तावन्तमे-[60a. 10A. VIII]व कालं

**विवर्ततेऽथ संवृत्त आस्ते संवर्तते समम्।**

विंशतिमेवान्तरकल्पान् विवर्तते विंशतिं संवर्तते विंशतिं संवृत्त आस्ते। यद्यपि तदानीमुत्कर्षा अपकर्षाश्च न प्रवर्तन्ते कालस्तु समानः परिसंख्यायते। तत्रैकेनान्तरकल्पेन भाजनान्यभिनिवर्तन्ते एकान्नविंशत्यान्तरकल्पैरावास्यन्ते एकेनान्तरकल्पेन भाजनानि विध्वस्यन्ते एकान्नविंशत्या शून्यी[6]भवन्ति। ता एता अन्तरकल्पानां चतस्रो विंशत्योऽशीतिर्भवन्ति।

**ते ह्यशीतिर्महाकल्पः**

एतन्महाकल्पस्य प्रमाणम्। कल्पः किंस्वभावः। पञ्चस्कन्धस्वभावः। यदुच्यते

---

१. MS. ....क्रमति। २. Y. ह्र ःतां। ३. MS. उत्कर्षापकर्षाश्च। ४. MS. अष्ट। ५. MS. एवमापकर्षः। ६. MS. शून्या। It may be शुन्यानि also।

"त्रिभिरसंख्येयैः कल्पानां बुद्धत्वं प्राप्यत" इति। तत् कतमेषां कल्पानाम्। य एव महाकल्पो निर्दिष्टः

तदसंख्यत्रयोद्भवम् ॥९३॥

बुद्धत्वम्

असंख्येयानां कल्पानां त्रयेण। कथमसंख्येयस्यासति संख्येयावसाने पुनस्त्रित्व-मुच्यते। नैतदेवं वेदितव्यम्। किं तर्हि। "षष्टिः स्थानान्तराण्यसंख्येयमि"ति मुक्तकसूत्रं पठ्यते। कतमानि षष्टिः। एको ह्यद्वितीयः प्रथमं स्थानान्तरम्। एककानां दशको द्वितीयम्। दश दशकानि शतं तृतीयम्। दश शतानि सहस्रम्। दश सहस्राणि प्रभे-[60b. 10B. VIII] दः। दश प्रभेदा लक्षम्[१]। दश लक्षा अतिलक्षः। दशातिलक्षाः कोटिः। दश कोट्यो मध्यः। दश मध्या अयुतम्। दशायुता महायुतम्। दश महायुता नियुतम्। दश नियुता महानियुतम्। दश महानियुताः प्रयुतम्। दश प्रयुता महाप्रयुतः। दश महाप्रयुताः कङ्करः। दश कङ्करा महाकङ्करः। दश महाकङ्करा विस्व[रः]। दश विस्वरा महाविस्वरः। दश महाविस्वरा अक्षोभ्यः। दशाक्षोभ्या महाक्षोभ्यः। दश महाक्षोभ्या विवाहः। दश विवाहा महाविवाहः। दश महाविवाहा उत्सङ्गः। दशोत्सङ्गा महोत्सङ्गः। दश महोत्सङ्गा वाहनम्। दश वाहनानि महावाहनम्। दश महावाहनानि तिटिभः। दश तिटिभा महातिटिभः। दश महातिटिभा हेतुः। दश हेतवो महाहेतुः। दश महाहेतवः[२]करभः। दश करभा महाकरभः। दश महाकरभा इन्द्रः। दशेन्द्रा महेन्द्रः। दश महेन्द्राः[३] समाप्तम्। दश समाप्तानि महासमाप्तम्। दश महासमाप्तानि गतिः। दश गतयो महागतिः। दश महागतयो निम्बरजः। दश निम्बरजांसि महानिम्बरजः। दश महानिम्बरजांसि मुद्रा। दश मुद्रा महामुद्रा। दश महामुद्राः [61a. 10A1. I] बलम्। दश बलानि महाबलम्। दश महाबलानि संज्ञा। दश संज्ञा महासंज्ञा। दश महासंज्ञा विभूतः। दश विभूता महाविभूतः। दश महाविभूता बलाक्षम्। [४]दश बलाक्षा महाबलाक्षम्[४]। दश महाबलाक्षाण्यसंख्यम्। अष्टकं मध्याद्विस्मृतम्[५]। इत्येतेषां षष्टिस्थानान्तरगतां संख्यामनुप्राप्ताः कल्पा

---

१. Here we get the combination of both neuter and masculine genders, such as लक्षं लक्षाः, अयुतम् अयुताः and the like. MS. लक्ष्यं, लक्ष्या। २. MS. हेतवो। ३. MS. महेन्द्रा। ४...४. MS. seems to drop दश बलाक्षा महाबलाक्षम्। ५. Y. विस्मृतम्।

असंख्येयानीत्युच्यन्ते । ततो व्यावृत्य पुनर्गण्यन्ते । एवं त्रीणि असंख्येयानी[१]त्युच्यन्ते । न तु नैव परिसंख्यातुं शक्यन्त इति ।

किन्नु खलु कालप्रकर्षेणैव कृतप्रणिधाना वोधिसत्त्वा वोधिमभिसंबुध्यन्ते । किमेतदेव भविष्यति । महतां हि पुण्यज्ञानसंभारेण षड्भिः पारमिताभिः वहुभिर्दुष्करशतसहस्रैस्त्रिभिः कल्पासंख्येयैरनुत्तरां सम्यक्संवोधिमभिसंबुध्यन्ते वोधिसत्त्वाः । यद्यप्यन्यथाऽप्यस्ति मोक्षावकाशः किमर्थं त इयन्तं यत्नमारभन्ते । परार्थं त इयन्तं यत्नमारभन्ते कथं परानपि महतो दुःखौघात्[२] परित्रातुं शक्नुयामिति । क एषां परार्थेन स्वार्थः । एष एव तेषां स्वार्थो यः परार्थस्तस्याभिमतत्वात् । इदानीमेतच्छ्रद्धास्यते । सत्यं दुःश्रद्धानमेतदात्मंभरिभिर्निष्करुणैः । कारुणिकैस्तु श्रद्धितमेवैतत् यथा चेह केचिदभ्यस्त-[61b. 10B1. I] नैर्घृण्या असत्यपि स्वार्थे परव्यसनाभिरता उपलभ्यन्ते । तथा पुनरभ्यस्तकारुण्या असत्यपि स्वार्थे परहितक्रियाभिरामाः सन्तीति संभाव्यम् । यथैव चाभ्यासवशादनात्मभूतेषु संस्कारेषु संस्कृतलक्षणानभिज्ञा आत्मस्नेहं निवेश्य तद्धेतोर्दुःखान्युद्वहन्ति एवं पुनरभ्यासवशादात्मस्नेहं तेभ्यो निवर्त्य परेष्वपेक्षां वर्धयित्वा तद्धेतोर्दुःखान्युद्वहन्तीत्ति संभाव्यम् । गोत्रान्तरमेव हि तत्तथाजातीयं निर्वर्तते यत् परेषां दुःखेन दुःखायते सुखेन सुखायते नात्मन[३] इति । न ते पुनः स्वार्थमन्यं[४] पश्यन्ति । आह चात्र

"हीनः प्रार्थयते[५] स्वसंततिगतं यैस्तैरुपायैः सुखं
मध्यो दुःखनिवृत्तिमेव न सुखं दुःखास्पदं तद्यतः ।
श्रेष्ठः प्रार्थयते स्वसंततिगतैर्दुःखैः परेषां सुखं
दुःखात्यन्तनिवृत्तिमेव च यत[६]स्तद्दुःखदुःख्येव सः ।।"

किं पुनरुत्कर्षा बुद्धा उत्पद्यन्ते[७]आहोस्विदपकर्षाः ।

**अपकर्षे हि[७] शताद्यावत्तदुद्भवः ।**

अशीतिवर्षशतायुषि प्रजायामपकर्षे आरब्धे यावद्वर्षशतायुषो मनुष्या भवन्त्येतस्मिन्नन्तरे बुद्धा उत्पद्यन्ते । कस्मान्नोत्कर्षकाले । तदा हि दुःसमुद्वेजाः[८] सत्त्वा भवन्ति ।

१. MS. संख्येयानि....। २. MS.दुःखोघात् । ३. MS. नात्मान । ४. MS. स्वार्थमन्यं। ५. MS. प्रार्थते । ६. MS. यतः । ७....७. MS. आहोस्विदपकर्षा हि । G. Y. तु in place of हि । ८. MS. दुःसद्वेयाजाः ।

कस्मा-[62a. 10A1 II] न्न शतात्[1]। तदा हि पञ्च[2] कषाया अभ्युत्सदा भवन्ति। तद्यथाऽयुष्कषायः कल्पकषायः क्लेशकषायः दृष्टिकषायः सत्त्वकषायश्च। अपकर्षस्याधस्तात् प्रत्यवरा[3] आयुरादयः किट[4]भूतत्वात् कषाया उच्यन्ते। द्वाभ्यां हि जीवितोपकरणविपत्ती यथाक्रमम्। द्वाभ्यां कुशलपक्षविपत्तिः। कामसुखल्लिकाऽत्मक्लमथानुयोगाधिकारात् गृहिप्रव्रजितपक्षयोर्वा। एकेनात्मभावविपत्तिः। प्रमाणरूपारोग्यबलवृद्धिस्मृतिवीर्यधैर्यभ्रंसात्।

अथ प्रत्येकबुद्धानां कस्मिन् काले उत्पादः।

**द्वयोः प्रत्येकबुद्धानां**

उत्कर्षेऽप्यपकर्षेऽपि। द्विविधा हि प्रत्येकबुद्धा वर्गचारिणः खड्गविषाणकल्पाश्च। तत्र वर्गचारिणः श्रावकपूर्विणः प्रत्येकजिना उच्यन्ते। पृथग्जनपूर्विणोऽपि सन्तीत्यपरे। येऽन्यत्रोत्पादितनिर्वेधभागीया इह स्वयं मार्गमभिसंबुध्यन्ते। तथाहि पूर्वयोगं पठन्ति "पर्वते किल पञ्चशतानि[5] तापसानां कष्टानि तपांसि तप्यन्ते स्म यावत् प्रत्येकबुद्धसहोषितेन[6] मर्कटेनागम्य तदीर्यापथसंदर्शनात् प्रत्येकबोधिमभिसंबंद्धा" इति। नचार्याः सन्तः कष्टानि तपांसि तप्येरन्। खड्गविषाणकल्पाः पुनरेकविहारिणः[7]। तेषां प्रत्येकबुद्धानां

**खड्गः कल्पशतान्वयः ॥९४॥**

महाकल्पानां [62b. 10A1.II] शतं बोधिसंभारेषु चरितः खड्गं विषाणकल्पो भवति। विनोपदेशेनात्मानमेकं प्रतिबुद्धा इति प्रत्येकबुद्धाः। ते ह्येकमात्मानं दमयन्ति नान्यान्। किं पुनरत्र कारणम्। नहि तावदशक्ता धर्मं देशयितुं प्रतिसंवित्प्राप्तत्वात्। शक्यं च तैः पूर्वबुद्धानां शासनम[8]नुस्मृत्यापि धर्मं[9] देशयितुम्। नापि निष्करुणाः। सत्त्वानुग्रहार्थमृद्धेराविष्करणात्। नापि हि सत्त्वानामभव्यत्वात्। तथा हि लोकिकमार्ग[10]वीतरागाः[11] संविद्यन्ते। किं तर्हि। पूर्वाभ्यासवशेनाल्पोत्सुकताऽधिमुक्तत्वात् नोत्सहन्ते गम्भीरधर्मग्रहणाय परेषां व्यापर्तुम्। अनुस्रोतो[12]गामिनीनां हि प्रजानां दुष्करं प्रतिस्रोतो[12] नयनम्। गणपरिकर्षणप्रसङ्गपरिहारार्थं च व्याक्षेपसंसर्गभीरुत्वात्।

१. MS. न्नाता only and just above between these two letters, there is a letter which is not clear. It may be read ग or श। २. MS. पै। ३. MS. प्रत्यरा। ४. Y. किट्ट। ५. MS. पञ्चश तापसानां। ६. MS. प्रत्येकसहोषितेन। ७. Y. असंसृष्टविहारिणः। ८. MS. शासनान····Y. अनुशासनम्। ९. Y. धर्मो। १०. Y. omits मार्ग। ११. Y. adds. तदानीम्। १२. MS. श्रोतो।

अथ चक्रवर्त्तिनः कदोत्पद्यन्ते ।

**चक्रवर्तिसमुत्पत्तिर्नाधोऽशीतिसहस्रकात् ।**

अमिते चायुषि मनुष्याणां यावदशीतिसहस्रके चोत्पत्तिश्चक्रवर्त्तिनां नाधः । तस्याः सस्यसंपदस्तदूनायुषामभाजनत्वात् । राज्यं चक्रेण वर्तयितुं शीलमेषामिति चक्रवर्त्तिनः । ते पुनश्चतुर्विधाः ।

**सुवर्णरूप्यताम्रायश्चक्रिणः**

सुवर्णरूप्यताम्रायश्चक्राणि तेषां सन्ति । प्रथम [63a. 10A₁. III] एषामुत्तमो द्वितीय उपोत्तमः तृतीयो मध्यमश्चतुर्थोऽधमः ।

**तेऽधरक्रमात् ।।९५।।**

**एकद्वित्रिचतुर्द्वीपाः**

यस्यायसं चक्रं स एकद्वीपाधिपतिः । यस्य ताम्रमयं स द्वयोः । यस्य रूप्यमयं स त्रयाणाम् । यस्य सुवर्णमयं स चतुर्द्वीपाधिपतिः । एष प्राज्ञप्तिको[1] निर्देशः । सूत्रे तु प्रधानग्रहणादेकमेव सौवर्णं चक्रम् । "यस्य राज्ञः क्षत्रियस्य मूर्धाभिषिक्तस्य तदेव पोषधे पञ्चदश्यां शिरःस्नातस्योपोषधो[2]पोषितस्योपरिप्रासादतलगतस्यामात्यगणपरिवृतस्य पूर्वस्यां दिशि चक्ररत्नं प्रादुर्भवति सहस्रारं सनाभिकं सनेमिकं सर्वाकारपरिपूर्णं शुभकर्मारकृतं दिव्यं सर्वसौवर्णं स राजा भवति चक्रवर्ती"ति । एवं चैते चक्रवर्तिन उत्पद्यन्ते ।

**न च द्वौ सह बुद्धवत् ।**

सूत्र उक्त"मस्थानमनवकाशो यदपूर्वाचरमौ द्वौ तथागतावर्हन्तौ सम्यक्संबुद्धौ लोक उत्पद्येयातां नेदं स्थानं विद्यते स्थानमेतद्विद्यते यदैकस्तथागतः । यथा तथागत एवं चक्रवर्त्तिनावि"ति । इदमत्र संप्रधार्यम् । किमत्र त्रिसाहस्रमहासाहस्रो लोकधातुर्लोक इष्ट उताहो सर्वलोकधातव इति । नान्यत्र बुद्धा उत्पद्यन्ते इत्येके । किं कारणम् । मा भूत् भगव-[63b. 10A. III]तः शक्तिव्याघातः इति । एक एव हि भगवान् सर्वत्र शक्तः । यत्र बुद्ध एको न शक्तः स्याद् विनेयान् विनेतुं तत्राऽन्योऽपि न शक्त इति । उक्तं च सूत्रे "स चेत्त्वां शारिपुत्र कश्चिदुपसंक्रम्यैवं[3] पृच्छेत् अस्ति कश्चिदेतर्हि श्रमणो[4] वा ब्राह्मणो वा समसमः श्रमणेन गौतमेन यदुताभिसंबोधाय । एवं च पृष्टः किं व्याकुर्याः । स चेन्मां भदन्त कश्चिदुपसंक्रम्यैवं[5] पृच्छेत्तस्याहं पृष्ट एवं व्याकुर्यां नास्ति कश्चिदेतर्हि श्रमणो वा ब्राह्मणो वा समसमो भगवता

१. MS. प्राज्ञपतिको । २. ····स्योषधो··। ३. MS. ···क्रम्यैवं । ४. MS. श्रवणो । ५. MS. ····क्रम्येवं ।

यदुताभिसंबोधाय। तत्कस्य हेतोः। संमुखं मे भगवतोऽन्तिकाच्छ्रुतं संमुखमुद्गृहीतं[1] अस्थानमनवकाशो यदपूर्वाचरमौ[2] तथागतौ लोक उत्पद्येयातां नेदं स्थानं विद्यत" इति। यत्तर्हि भगवतोक्तं ब्रह्मसूत्रे "यावत्त्रिसाहस्रमहासाहस्रको[3] लोको वशे[4] मेऽत्र वर्तत" इति। आभिप्रायिक एष निर्देशः। कोऽत्राभिप्रायः तावतोऽनभिसंस्कारेण व्यवलोकनात्। अभिसंस्कारेण त्वनन्तो बुद्धानां चक्षुर्विषयः। सन्त्येवान्यलोकधातुषु बुद्धा इति निकायान्तरीयाः। किं कारणम्। बहवो हि समं संभारेषु प्रवर्तमाना दृश्यन्ते। न चैकत्र बहूनां बुद्धानां युगपत् योग उत्पत्तुं न चास्ति तदुत्-[64a. 10A.1 IV] पत्तौ कश्चित् प्रतिबन्धः इति नियतं लोकधात्वन्तरेषूत्पद्यन्ते। अनन्ता लोकधातव इति न शक्यं भगवता कल्पमप्यायुर्बिभ्रता यथेह तथाऽन्येष्वपि अनन्तेषु व्यापर्तुं किं पुनः पुरुषायुषम्। कथं चेह बुद्धो व्याप्रियते। अस्य पुद्गलस्येदमिन्द्रियम् इयता कालेनामुष्मिन् देशे अमुं पुद्गलमागम्यास्य दोषस्य परिहारादस्याङ्गस्योपसंहारादनेन प्रयोगेणा[5]नुत्पन्नं वोत्पत्स्यते अपरिपूर्णं वा परिपूरयिष्यतीति। यत्त्विदं सूत्रमत्रो[6]पनीत"मस्थानमनवकाशो यदपूर्वाचरमौ द्वौ तथागतावेकत्र लोक उत्पद्येयाताऽमि"ति तदेवेदं संप्रधार्यते किमिदमेकं[7] लोकधातुमधिकृत्योक्तमाहोस्वित् सर्वानिति। चक्रवर्तिनोऽपि चास्य लोकधातौ न स्याद्गुत्पादः। सहोत्पत्तिप्रतिषेधात् बुद्धवत्। अथैतत् क्षम्यते इदं तु कस्मान्न क्षम्यते "पुण्यस्तु बुद्धानां लोक उत्पाद" इति। यदि बहूनां बहुषु स्यान्न दोषः स्यात्। भूयसां लोकानामभ्युदयेन योगः स्यान्निःश्रेयसेन च। अथैकस्मिन्नपि कस्मात् द्वौ तथागतौ न सहोत्पद्येते। प्रयोजनाभावात् प्रणिधानवशाच्च। एवं हि बोधिसत्त्वाः प्रणिधानं कुर्वन्ति अहो बताहमन्धे लोकेऽपरिणायके[8] [64b. 10B1. IV] बुद्धो लोक उत्पद्येयमनाथानां नाथ इति। आदराभित्वरार्थं च। एकस्मिन्हि बुद्धे सुतरामाद्रियन्ते दुर्लभ ईदृशोऽन्य इति मन्यमानाः सुतरां चाभित्वरन्ते शासनप्रतिपत्तौ माऽस्मिन् गते परिनिर्वृते वाऽनाथा भूमेति।

अथैते चक्रवर्तिनः सुवर्णादिमयैश्चक्रैः पृथिवीं जयन्तः कथं जयन्ति। यथाक्रमं

**प्रत्युद्यानस्वयंयान[9] कलहास्त्रजितः**

यस्य सौवर्णं चक्रं भवति तं कोटराजानः स्वयं प्रत्युद्गच्छन्ति[10]। इमे देवस्य

१. MS. मुत् गृहीतं। २. MS. चरमो। ३. MS. साहस्रके। ४. MS. वशो। ५. MS. प्रयोगेना। ६. MS. सूत्रमात्रो....। ७. MS. कमिद....। ८. MS. Here one बु seems to be extra। ९. MS. जान। १०. MS. प्रत्युत् गच्छन्ति।

जनपदाः ऋद्धाश्च स्फीताश्च क्षेमाश्च सुभिक्षाश्चाकीर्णबहुजनमनुष्याश्च । तान् देवः समनुशास्तु । वयं देवस्यानुयात्रिका भविष्याम इति । यस्य रूप्यमयं स स्वयमेव तेषामन्तिकं याति पश्चादस्य प्रह्वीभवन्ति । यस्य ताम्रमयं स तेषामन्तिकं गत्वा कलहायते पश्चात् प्रह्वीभवन्ति । यस्य शस्त्रमयं स तेषामन्तिकं गच्छति अन्योन्यं शस्त्राण्यावहन्ति पश्चान्नमन्ति । सर्वे तु चक्रवर्तिनः

अवधाः ॥९६॥

शस्त्रेणापि जयतां वधो न प्रवर्तते निर्जित्य च सत्त्वान् दशसु कुशलेषु कर्मपथेषु प्रतिष्ठापयन्ति । अत एव ते नियतं देवेषूत्पद्यन्ते । सूत्र उक्तं "राज्ञश्चक्रवर्तिनो लोके प्रादुर्भावात्सप्तानां रत्नानां लोके प्रा-[65a. 10A1. V]दुर्भावो भवति । तद्यथा चक्ररत्नस्य हस्तिरत्नस्याश्वरत्नस्य मणिरत्नस्य स्त्रीरत्नस्य गृहपतिरत्नस्य[1] परिणायकरत्नस्ये"ति । कथं सत्त्वसंख्याता हस्त्यादयः परकीयेण कर्मणोत्पद्यन्ते । न वै कश्चित् परकीयेणोत्पद्यते । येन तु सत्त्वेन तत्संवन्ध[2]संवर्तनीयं[3] कर्मोपचितं तस्मिन्नुत्पन्ने स्वान्येवैनं कर्माण्युत्पादयन्ति । किमेष एवान्यराजभ्यश्चक्रवर्तिनां विशेषः । अन्योऽपि विशेषोऽस्ति । तद्यथा द्वात्रिंशन्महापुरुषलक्षणान्येषां भवन्ति तद्यथा बुद्धानाम् । तत्र तु

देशस्थोत्तप्तपूर्णत्वैर्लक्षणातिशयो मुनेः ।

देशस्थतराणि बुद्धानां लक्षणानि । उत्तप्ततराणि संपूर्णतराणि चेत्येष तेषां विशेषः ।

किं खलु प्राथमकल्पिका अपि मनुष्याः सराजका आसन् । नेत्याह । किं तर्हि ।

प्रागासन्रूपिवत् सत्त्वाः

प्राथमकल्पिका मनुष्या रूपावचरा इवासन् । सूत्र उक्तं "ते भवन्ति रूपिणो मनोमयाः सर्वाङ्गप्रत्यङ्गोपेता अविकला अहीनेन्द्रियाः शुभा वर्णस्थायिनः स्वयंप्रभा विहायसंगमाः प्रीतिभक्षाः प्रीत्याहारा दीर्घायुषो दीर्घमध्वानं तिष्ठन्ती"ति ।

रसरागात्ततः शनैः ॥९७॥

आलस्यात्संनिधिं कृत्वा साग्रहैः क्षेत्रपो भृतः ।

तेषां तथाभूतानां भूमिरसः [65b. 10B1. V] प्रादुर्भूतो मधुस्वादुरसः । तस्यान्यतमो

१. MS. drops गृहपतिरत्नस्य । २. Y. one reading seems to be संबद्ध । ३. Y. quotes तत्संबद्धजातीयमिति but explains तत्संबद्ध...or तत्संबन्धसंवर्त्तनीयमिति ।

लोलुपजातीयः सत्त्वो गन्धं घ्रात्वा रसं स्वादितवान् भक्षितवांश्च। तथाऽन्येऽपि सत्त्वास्तथैवाकार्षुः। स आरम्भः कवडीकाराहारस्य[1]। तेषां तदाहाराभ्यासात् खरत्वं गुरुत्वं च कायेऽवक्रान्तं प्रभावा[2] अन्तर्हिताः। ततोऽन्धकार उत्पन्ने सूर्याचन्द्रमसौ प्रादुर्भूतौ। सोऽप्येषां भूमिरस[3] अस्वादगृद्धानां क्रमेणान्तर्हितो भूमिपर्पटकं[4] प्रादुर्भूतम्। तत्रापि गृद्धास्तदप्यन्तर्हितम्। वनलता प्रादुर्भूता। तत्रापि गृद्धाः साऽप्यन्तर्हिता। अकृष्टोप्तः शालिरुत्पन्नस्तं प्रभुक्ताः[5]। तस्येदानीमौदारिकत्वान्निःष्यन्दनिर्वाहार्थं सत्त्वानां मूत्रपुरीषमार्गौ सह स्त्रीपुरुषेन्द्रियाभ्यां प्रादुर्भूतौ संस्थानं च भिन्नम्। तेषामन्योन्यं पश्यतां पूर्वाभ्यासवशादयोनिशोमनस्कारग्राहग्रासतां गतानां कामराग उदीर्णो यतो विप्रतिपन्नाः। एष आरम्भः कमिनां कामभूतग्रहावेशस्य। ते च खलु तं शालिं सायं च सायमाशार्थं[6] प्रातश्च प्रातराशार्थं[7] प्रवेशयन्ति स्म। अथान्यतमः सत्त्वोऽलसजातीयः संनिधिकारमकार्षीत्। अन्येऽपि च सत्त्वाः संनिधिकारमकार्षुः। तेषां तत्र ममकार उत्पन्ने स शालिर्लूनो लूनो न पुनर्जायते स्म। [66a. 10A1. VI] ततः क्षेत्राणिप्रविभज्य[8] स्वेष्वाग्रहं कृत्वा परकीयं हर्तुमारब्धाः। प्रथम आरम्भश्चौर्यस्य। तैस्तेषामङ्कुशार्थं समेत्यान्यतमः पुरुषविशेषः क्षेत्राणि पालयितुं षष्ठभागेन भृतः। तस्य क्षेत्राणामधिपतिः क्षत्रियः क्षत्रिय इति संज्ञोत्पन्ना। महाजनकायस्य संमतः प्रजां च रञ्जयतीति महासंमतो राजेति संज्ञोत्पन्ना। एष आरम्भो राजपरंपरायाः। तत्र ये गृहेभ्यो बहिर्मनसः संवृत्तास्तेषां ब्राह्मणा इति संज्ञोत्पन्ना। अथान्यतमस्य राज्ञो लोभात् संविभागमकुर्वन्तः सत्त्वानां तास्कर्यं प्राचुर्यमापन्नं स तान् शस्त्रेणोपसंक्रमते स्म। ततोऽन्ये नैवंकारकाः स्म इति मृषा वाचं वक्तुमारब्धाः इति

**ततः कर्मपथाधिक्यादपह्रासे दशायुषः ॥९८॥**

तत एवं कर्मपथानां वृद्धौ सत्यां क्रमेण ह्रसतां मनुष्याणां दशवर्षायुषो मनुष्याः संभवन्ति। अतोऽस्य कृत्स्नस्यानर्थौघस्य द्वौ धर्मौ मूलयोनिः रसराग आलस्यं च। दशवर्षायुषां मनुष्याणामन्तरकल्पस्य निर्याणं भवति। कथं भवतीत्याह

**कल्पस्य[9] शस्त्ररोगाभ्यां दुर्भिक्षेण च निर्गमः।**

त्रिभिरन्तरकल्पस्य निर्याणं भवति। शस्त्रेण रोगेण दुर्भिक्षेण च। अन्तरकल्पस्य

---

१. MS. कवड़ीकार अहारस्य। २. MS. प्रभावान्तर्हिताः ३. MS. भूमिरसास्वाद...। ४. MS. seems to be पर्यटकं। ५. MS. प्रभुक्तः। ६. MS. सायमासार्थं। ७. Y. प्रातराशायार्थं। ८. Y. विभज्य। ९. MS. drops स्य।

निर्याणकाले दशवर्षायु-[66b. 10B₁ VI]षो मनुष्याः अधर्मरागरक्ता भवन्ति विषमलोभाभिभूता मिथ्याधर्मपरीताः[१]। तेषां व्यापाद उत्कर्षं गतोऽन्योन्यं सत्त्वं दृष्ट्वा तीव्रमाघातचित्तं वधकचित्तं च प्रत्युपस्थितं भवति। तद्यथेदानीं मृगलुब्धकस्यारण्यकं मृगं दृष्ट्वा ते यद्यदेव गृह्णन्ति काष्ठं वा लोष्टं वा तत्तेषां तीक्ष्णं शस्त्रं प्रादुर्भवति। तेऽन्योन्यं सत्त्वं जीविताद्व्यपरोपयन्ति। पुनः कल्पस्य निर्याणकाले दशवर्षायुषां मनुष्याणां तैरेव दोषैरमनुष्या ईति[२]मनुत्सृजन्ति। तेषामसाध्या व्याध्यादयः प्रादुर्भवन्ति यतो म्रियन्ते। पुनर्दशवर्षायुषां तैरेव दोषैर्देवा[३] वर्षं नोत्सृजन्ति यतो दुर्भिक्षं जायते चञ्चः श्वेतास्थि[४] शलाकावृत्तिः[५]। कथं च चञ्चः। द्वाभ्यां कारणाभ्याम्। य इदानीं समवायः स तदानीं चञ्च इत्युच्यते। समुद्गोऽपि चञ्चः। ते च मनुष्या जिघत्सादौर्बल्यपरीताः[६] समेत्य कालं कुर्वन्ति समुद्गेषु चानागतजनतानुग्रहार्थं बीजान्यवस्थापयन्ति। अतस्तद्दुर्भिक्षं चञ्चमित्युच्यते। कथं श्वेतास्थि। द्वाभ्यां कारणाभ्याम्। तेषां हि शुष्करुक्षकायानां कालं कुर्वतामाश्वेवास्थीनि श्वेतानि भवन्ति बुभुक्षाहताश्च श्वेतान्यस्थीनि संहृत्य क्वाथयित्वा पिबन्ति। कथं शलाकावृत्तिः। द्वाभ्यां कारणा-[67a. 10A₁. VII]भ्याम्। ते हि सत्त्वाः शलाकोद्देशिकया गृहेष्वामिषं संविभजन्ते अद्य गृहस्वामी भोक्ष्यते श्वो गृहस्वामिनीत्येवमादि धान्यस्थानविवरेभ्यश्च शलाकया धान्यफलानि निष्कृष्य बहुलोदकेन क्वाथयित्वा पिबन्ति। एवं वर्णयन्ति। येनैकाहमपि प्राणातिपातविरतिः संरक्षिता भवति एकहरीतकी वा संघायैकपिण्डपातो वा सत्कृत्यानुप्रदत्तो भवति स तेषु शस्त्ररोगदुर्भिक्षान्तरकल्पेषु नोत्पद्यत इति।

अथ कियन्तं कालमेतानि शस्त्राघातरोगदुर्भिक्षाणि तेषां सत्त्वानां भवन्ति

**दिवसान् सप्त मासांश्च वर्षाणि च यथाक्रमम् ॥९९॥**

शस्त्रकः प्राणातिपातः सप्त दिवसान् भवति। रोगः सप्त मासांश्च दिवसांश्च। दुर्भिक्षं सप्तवर्षाणि च मासांश्च दिवसांश्चेति समुच्चयार्थश्चकारः। तदा च द्वयोर्द्वीपयोस्तेषां प्रतिरूपकाणि भवन्ति। व्यापाद उद्रेकप्राप्तो भवति वैवस्त्र्यदौर्बल्ये जिघत्सापिपासे च। यदुक्तमेवमन्यस्यामपि संवर्तन्यां वेदितव्यं यथायोगमिति।

अथ कतीमाः संवर्तन्यः।

---

१. Y. seems to add here अमातृज्ञा अपितृज्ञाः। २. MS. इति। ३. MS. ... देवो। ४. MS. स्वेतास्थि। ५. MS. सकाला...। ६. MS. ....परीत्ताः।

**संवर्तन्यः पुनस्तिस्रो भवन्त्यग्न्यम्बुवायुभिः ।**

एकत्र ध्याने सत्त्वाः समं संवर्तन्ते एतस्यामिति संवर्तनी । सप्तभिः सूर्यैस्तेजःसंव-[67b. 10B₁. VII]र्तनी भवति वर्षोदकेनाप्संवर्तनी वायुप्रकोपाद्वायुसंवर्तनी । ताभिश्च भाजनानां सूक्ष्मोऽप्यवयवो नावशिष्यते । अत्र तु केचित्तीर्थंकरा इच्छन्ति । परमाणवो नित्यास्ते तदानीं शिष्यन्त इति । कस्मात्त एवमिच्छन्ति । मा भूदवीजकः स्थूलानां प्रादुर्भाव इति । ननु च सत्त्वानां कर्मजः प्रभावविशिष्टो वायुर्वीजमुक्तम् । संवर्तनीशीर्षवायुर्वा तस्य निमित्तं भविष्यति । "वायुना लोकान्तरेभ्यो वीजान्याह्रियन्त" इति महीशासकाः सूत्रे पठन्ति । एवमपि न ते वीजादिभ्योऽङ्कुरादीनामुत्पत्तिमिच्छन्ति । किं तर्हि । स्वेभ्य एवावयवेभ्य-स्तेषामपि स्वेभ्यः । एवं यावत् परमाणुभ्यः । किमिदं वीजादीनामङ्कुरादिषु सामर्थ्यम् । न किंचिदन्यत्र तत्परमाणूपसर्पणात्[1] । किं पुनः कारणं त एव-मिच्छन्ति । नहि विजातीयात्संभवो युक्त इति । कस्मान्न युक्तः । अनियमो हि स्यात् । शक्तिनियमान्नैवं भविष्यति । शब्दपाकजोत्पत्तिवत् । चित्रो हि गुण-धर्मो द्रव्यं तु[2] नैवम् । समानजातीयेभ्यः एव हि द्रव्येभ्यः समानजातीयानां दृष्ट उत्पादस्तद्यथा वीरणेभ्यः कटस्य तन्तुभ्यः पटस्येति । इदमयुक्तं वर्तते । किमत्रा-युक्तम् य-[68a. 10A₁. VIII]दसिद्धं साधनायोदाह्रियते । किमत्रासिद्धम् । अन्यो वीरणेभ्यः कटोऽन्यश्च तन्तुभ्यः पट इति । त एव हि ते यथासंनिविष्टास्तां तां संज्ञां लभन्ते । पिपीलिकापङ्क्तिवत् । कथं गम्येत । एकतन्तुसंयोगे पटस्यानुप-लम्भात् । को हि तदा सतः पटस्योपलब्धौ प्रतिवन्धः । अकृत्स्नवृत्तौ पटभागोऽत्र स्यान्न पटः । समूहमात्रं च पटः स्यात् । कश्च तन्तुभ्योऽन्यः पटभागः । अनेका-श्रयसंयोगापेक्षणे[3] दशामात्रसंयोगे[4] पटोपलब्धिः स्यान्न वा कदाचित् । मध्य-परभागानामिन्द्रियेणासंनिकर्षात् । क्रमसंनिकर्षे चावयवानां चक्षुःस्पर्शनाभ्यामव-यवविज्ञानं न स्यात् । तस्मात्क्रमेण संनिकर्षादवयविव्यवसायादवयवेष्वेव तद्-वुद्धिरलातचक्रवत् । भिन्नरूपजातिक्रियेषु तन्तुषु पटस्य रूपाद्यसंभवात् । चित्र-रूपादित्वे विजातीयारम्भोऽपि स्यात् अचित्रे[5] च पार्श्वान्तरे पटस्यादर्शनं[6] चित्र[7]-दर्शनं वा । क्रियाऽपि चित्रेत्यतिचित्रम् । तापप्रकाशभेदे वा[8]ऽग्निप्रभाया आदि-मध्यान्ते[9] तद्रूपस्पर्शयोरनुपपत्तिः । परमाण्वतीन्द्रियत्वेऽपि समस्तानां प्रत्यक्षत्वं

---

१. Y. omits तत् । २. MS. द्रव्यस्तु । ३. Y.""पेक्षायां । ४. Y. "संघाते । ५. MS. अचित्ते । Y. अविचित्रे । ६. Y. adds. स्यात् । ७. MS. चित्त"। Y. चित्ररूप""। ८. Y. च । ९. Y. "'मध्यान्तेषु ।

यथा तेषां कार्यारम्भकत्वं चक्षुरादीनां च [68b. 10B1. VIII] तैमिरिकाणां च विकीर्णकेशोपलब्धिः। तेषां परमाणुवदेकः केशोऽतीन्द्रियः। रूपादिष्वेव च परमाणुसंज्ञानिवेशा[1]त्तद्विनाशे सिद्धः परमाणुविनाशः। द्रव्यं हि परमाणुरन्यच्च रूपादिभ्यो द्रव्यमिति न तेषां विनाशे तद्विनाशः सिद्ध्यति। अयुक्तमस्यान्यत्वं यावता न निर्धार्यते केनचित् इमानि पृथिव्यप्तेजांसि इम एषां रूपादय इति। चक्षुःस्पर्शनग्राह्याणि च प्रज्ञायन्ते[2] दग्धेषु चोर्णाकर्पासकुसुम्भकुङ्कुमादिषु तद्बुद्ध्यभावाद्रूपादिभेदेष्वेव[3] तद्बुद्धिः। पाकजोत्पत्तौ घटपरिज्ञानं संस्थानसामान्यात् पङ्क्तिवत्[4]। चिह्नमपश्यतः परिज्ञानाभावात्[5]; को वा बालप्रलापेष्वादरः इति तिष्ठतु तावदेवाप्रतिषेधः।

अथ कस्याः संवर्तन्याः कतमच्छीर्षं भवति।

**ध्यानत्रयं द्वितीयादि शीर्षं तासां यथाक्रमम् ॥१००॥**

त्रीणि संवर्तनीशीर्षाणि। तेजःसंवर्तन्या द्वितीयं ध्यानं शीर्षं भवत्यधो दह्यते। अप्संवर्तन्यास्तृतीयं ध्यानं शीर्षं भवत्यधः क्लिद्यते। वायुसंवर्त्तन्याश्चतुर्थं ध्यानं शीर्षं भवत्यधो विकीर्यते। यद्धि संवर्तन्या उपरिष्टात्तच्छीर्षमित्युच्यते। किं पुनः कारणं [69a. 11A. I] प्रथमद्वितीयतृतीयध्यानानि तेजोजलवायुभिर्ध्वंस्यन्ते[6]।

**तदपक्षालसाधर्म्यात्**

प्रथमे हि ध्याने वितर्कविचारा अपक्षालाः। ते च मनसः परिदाहकत्वादग्निकल्पाः। द्वितीये प्रीतिरपक्षालः सा च प्रस्रब्धियोगेनाश्रयमृदूकरणादप्कल्पाः[7]। अत एव[8]तस्मिन् कृत्स्नकायक्रौर्या[9]पगमात् दुःखेन्द्रियस्य[10]निरोध उक्तः सूत्रे। तृतीये ध्याने आश्वासप्रश्वासाः। ते च वायव एव। इति यस्यां ध्यानसमापत्तौ यथाभूत आध्यात्मिकोऽपक्षालस्तस्यां ध्यानोपपत्तौ तथाभूतो बाह्य इति। कस्मात् पृथिवीसंवर्तनी न भवति। पृथिव्येव हि भाजनाख्या तस्यां तेजोजलवायुभिर्विरोधो न पृथिव्येति। अथ चतुर्थध्याने कथं न संवर्तनी।

**न चतुर्थेऽस्त्यनिञ्जनात्।**

चतुर्थं[11] ध्यानमाध्यात्मिकापक्षालरहितत्वादानेञ्ज[12]मुक्तं भगवता। अतोऽत्र बाह्योऽपक्षालो न प्रवर्तत इति नास्त्यत्र संवर्तनी। शुद्धावासप्रभावादित्यपरे। नहि[13]

१. Y. विनिवेशात्। २. Y. प्रतिज्ञायन्ते। ३. Y. omits भेद। ४. MS. पंक्ति...। ५. Y. अपरिज्ञानात्। ६. MS. ... र्द्धस्यंते। ७. Y. मृदु। ८. Y. adds च। ९. MS. क्रौर्या। Y. स्थैर्य। (N) notes MSS. कायकाये। १०. Y. omits स्य। (N) notes MSS. दुःखनिरोध। ११. MS. चतुर्थ्यं। १२. Y. आनेज्यम्। १३. Y. omits हि।

तैः शक्यमारूप्यान् प्रवेष्टुं नाप्यन्यत्र गन्तुमिति । नित्यं तर्हि चतुर्थध्यानभाजनं प्राप्नोति ।

**न नित्यं सह सत्त्वेन तद्विमानोदयव्ययात् ॥१०१॥**

नहि चतुर्थं ध्यानमेकभूमिसंवद्धम् । किं तर्हि । विच्छिन्नस्थानान्तरं ता-[69b. 11B. II]-रकावत् । तत्राप्ययं[1] सत्त्व उपपद्येत च्यवेत वा । स सार्धं विमानेनेति नास्त्यस्य नित्यत्वम् । केन पुनः क्रमेणैताः संवर्तन्यो भवन्ति । निरन्तरं तावत्

**सप्ताग्निना**

सप्त संवर्तन्यस्तेजसा भवन्ति । ततः[2]

**अद्भिरेका**

सप्तानां तेजःसंवर्तनीनामनन्तरमद्भिः संवर्तनी भवति ।

**एवं गतेऽद्भिः सप्तके पुनः ।**

**तेजसा सप्तकः**

एतेन[3] क्रमेणाप्संवर्तनीनां गते सप्तके पुनः तेजःसंवर्तनीनां सप्तको भवति ।

**पश्चाद्वायुसंवर्तनी ततः ॥१०२॥**

पश्चादेका वायुसंवर्तनी भवति । किं कारणम् । यथैव हि तेषां सत्त्वानां समापत्तिविशेषादात्मभावानां स्थितिविशेषस्तथा भाजनानामपीमिति ता एता भवन्ति[4] षट्पञ्चाशत्तेजःसंवर्तन्यः सप्ताप्संवर्त्तन्यः एका वायुसंवर्त्तनी । एवं च प्रज्ञप्तिभाष्यं सुनीतं भवति "चतुःषष्टि[5] कल्पाः शुभकृत्स्नानां देवाना[6]मायुःप्रमाणमि"ति ।

"ये धर्मा हेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत् ।
तेषां च यो निरोध एवंवादी महाश्रमण" ॥ इति ।

अभिधर्मकोशभाष्ये लोकनिर्देशो नाम
तृतीयं कोशस्थानम्
स मा प्त मि ति ।



श्रीलामावाकस्य
यदत्र पुण्यम् ।

---

१. MS. ....प्ययः । २. MS. तत अद्भि... । ३. MS. एते । ४. Y. एवं च कृत्वा । ५. Y. चतुःषष्टिः । ६. Y. omits देवानाम् ।

# चतुर्थं कोशस्थानम्

[1b. 11B. II] ओं नमो बुद्धाय ।

अथ यदेतत्सत्त्वभाजनलोकस्य वहुधा वैचित्र्यमुक्तं तत् केन कृतम् । न खलु केनचिद्बुद्धिपूर्वकं कृतम् । किं तर्हि । सत्त्वानां

**कर्मजं लोकवैचित्र्यं**

यदि **कर्मजं** कस्मात्सत्त्वानां कर्मभिः कुङ्कुमचन्दनादयो रम्यतरा जायन्ते न तेषां शरीराणि । कर्माण्येव तान्येवंजातीयानि व्यामिश्रकारिणां सत्त्वानां यदाश्रयाश्च व्रणभूता जायन्ते भोगाश्च रम्यास्तत्प्रतीकारभूताः । अव्याभिश्रकारिणां तु देवानामुभयेऽपि रम्याः । किं पुनस्तत्कर्मेत्याह

**चेतना तत्कृतं च तत् ।**

सूत्र उक्तं "द्वे कर्मणी चेतना कर्म चेतयित्वा चे"ति । यत्तच्चेतयित्वा चेतनाकृतं च तत् । ते एते द्वे कर्मणी त्रीणि भवन्ति । कायवाङ्मनस्कर्माणि । कथमेषां कर्मणां व्यवस्थानम् । किमाश्रयतः आहोस्वित् स्वभावतः समुत्थानतो वा । आश्रयतश्चेदेकं कायकर्म प्राप्नोति । सर्वेषां कायाश्रितत्वात् स्वभावतश्चेद्वाक्कर्मैकं प्राप्नोति । वचसः कर्मस्वभावत्वात् । समुत्थानतश्चेन्मनस्कर्मैकं प्राप्नोति । सर्वेषां मनःसमुत्थितत्वात् । यथाक्रमं त्रिभिः कारणैस्त्रयाणामिति वैभाषिकाः । तत्र पुनः

**चेतना मानसं कर्म**

चेतना मनस्कर्मे [2a. 11A. III] ति वेदितव्यम् ।

**तज्जं वाक्कायकर्मणी ।।१।।**

यत्तच्चेतनाजनितं चेतयित्वा कर्मेत्युक्तं कायवाक्कर्मणी ते वेदितव्ये ।

**ते तु विज्ञप्त्यविज्ञप्ती**

ते तु कायवाक्कर्मणी प्रत्येकं[1] विज्ञप्त्यविज्ञप्तिस्वभावे वेदितव्ये । तत्र तु

**कायविज्ञप्तिरिष्यते ।**

**संस्थानं**

चित्तवशेन कायस्य तथा तथा संस्थानं कायविज्ञप्तिः । गतिरित्यपरे । प्रस्यन्दमानस्य हि कायकर्म नोऽप्रस्यन्दमानस्येति । त उच्यन्ते

---

१. MS. प्रत्येक ।

न गतिर्यस्मात्संस्कृतं क्षणिकं

कोऽयं क्षणो नाम। आत्मलाभोऽनन्तरविनाशी। सोऽस्यास्तीति क्षणिकम्[1]। दण्डिकवत्। सर्वं हि संस्कृतमात्मलाभा[2]दूर्ध्वं न भवतीति यत्रैव जातं तत्रैव ध्वस्यते। तस्यायुक्ता देशान्तरसंक्रान्तिः। तस्मान्न गतिः कायकर्म। स्यादेतदेव यदि सर्वस्य क्षणिकत्वं सिध्येत्। सिद्धमेवैतत् विद्धि। कुतः। संस्कृतस्यावश्यं

व्ययात् ॥२॥

आकस्मिको हि भावानां विनाशः। किं कारणम्। कार्यस्य हि कारणं भवति। विनाशश्चाभावः। यश्चाभावस्तस्य किं कर्तव्यम्। सोऽसावाकस्मिको विनाशो यदि भावस्योत्पन्नमात्रस्य न स्यात् पश्चादपि न स्याद्भावस्य तुल्यत्वात्। अथान्यथीभूतः। न युक्तं तस्यैवान्यथात्वम्। न हि स एव तस्माद्विलक्षणो युज्यते। दृष्टो वै काष्ठादीनाम-[2b. 11B. III]ग्न्यादिसंयोगाद्विनाशः। न च दृष्टाद्गरिष्ठं प्रमाणमस्तीति। न च सर्वस्याकस्मिको विनाशः कथं तावत् भवान् काष्ठादीनामग्न्यादिसंयोगाद्विनाशं पश्यामीति मन्यते। तेषां पुनरदर्शनात्। संप्रधार्यं तावदेतत्। किमग्निसंयोगात्काष्ठादयो विनष्टा अतो न दृश्यन्ते उताहो स्वयं विनष्टा अन्ये च पुनर्नोत्पन्ना अतो न दृश्यन्ते। यथा वायुसंयोगात्प्रदीपः पाणिसंयोगाद्घण्टाशब्द[3] इति। तस्मादनुमानसाध्योऽयमर्थः। किं पुनरत्रानुमानम्। उक्तं तावत् अकार्यत्वादभावस्येति। पुनः

न कस्यचिदहेतोः[4] स्यात्

यदि विनाशो हेतुसामान्यान्न कस्यचिदहेतुकः स्यादुत्पादवत्। क्षणिकानां च बुद्धिशब्दार्चिषां दृष्ट आकस्मिको विनाश इति नायं हेतुमपेक्षते। यस्तु मन्यते बुद्ध्यन्तराद्बुद्धेर्विनाशः शब्दान्तराच्छब्दस्येति। तदयुक्तम्। बुद्ध्योरसमवधानात्। न हि संशयनिश्चयज्ञानयोर्युक्तं समवधानं[5] सुखदुःखयो रागद्वेषयोर्वा। यदा च पटुबुद्धिशब्दानन्तरमपटुबुद्धिशब्दावुत्पद्येते तदा कथमपटुः समानजातीयो धर्मः पटीयांसं हिंस्यात्[6]। अन्त्ययोश्च कथं योऽप्यर्चिषामवस्थानहेत्वभावाद्धर्माधर्मवशाद्वा विनाशं [3a. 11A. VI] मन्यते तदप्ययुक्तम्[7]। न ह्यभावः कारणं भवितुमर्हति। न चाप्युत्पादविनाशहेत्वोर्धर्माधर्मयोः क्षणे क्षणे वृत्तिलाभप्रतिबन्धौ[8] भवितुमर्हतः। शक्यश्चैष कारण[9] परिकल्पः सर्वत्र संस्कृते कर्तुमित्यलं विवादेन।

---

१. Y. क्षणिकः। २. MS. लाभो....। MS. प्राणि ..। ४ MS. ...दिहहेतोः।
५. Y. युक्तसमवधानम्। एवं। MS. हिस्यात्। ७. Y. स चायुक्तः। ८. ....प्रतिबन्धो।
९. MS. कारणः।

यदि च काष्ठादीनामग्न्यादिसंयोगहेतुको विनाशः स्यादेवं सति पाकजानां गुणानां पक्वतरतमोत्पत्तौ

**हेतुः स्याच्च विनाशकः ।**

हेतुरेव च विनाशकः स्यात् । कथं कृत्वा । घासा[१]द्यग्निसंबन्धा गुणाः पाकजा उत्पन्नास्तत एव तादृशाद्वा पुनः पक्वतरतमोत्पत्तौ तेषां विनाश इति हेतुरेव तेषां विनाशकः स्याद्धेत्वविशिष्टो वा । न च युक्तं यत एव तादृशाद्वा तेषां भावस्तत एव तादृशाच्च तेषां पुनरभाव इति । ज्वालान्तरेषु[२] तावद्धेतुभेद-कल्पनां[३] परिकल्पेयुः । क्षारहिमशुक्तसूर्योदकभूमिसंबन्धात्तु पाकजविशेषोत्पत्तौ कां कल्पनां कल्पयेयुः । यत्तर्ह्यापः क्वाथ्यमानाः क्षीयन्ते किं तत्राग्निसंयोगाः कुर्वन्ति । तेजोधातुं प्रभावतो वर्धयन्ति यस्य प्रभावादपां संघातः[४] क्षाम-क्षामो जायते यावदतिक्षामतां गतोऽन्ते न पुनः संतानं संतनोति । इदमत्राग्नि-संयोगाः कुर्वन्ति । तस्मान्नास्ति भा-[3b. 11B. IV] वानां विनाशहेतुः स्वयमेव तु भङ्गुरत्वाद्विनश्यन्त उत्पन्नमात्रा[५] विनश्यन्तीति सिद्ध एषां क्षणभङ्गः क्षण-भङ्गाच्च गत्यभावः । गत्यभिमानस्तु देशान्तरेषु निरन्तरोत्पत्तौ तृणज्वालावत् । गत्यभावे च "संस्थानं कायविज्ञप्ति"रिति सिद्धम् । नास्ति संस्थानं द्रव्यत इति सौत्रान्तिकाः । एकदिङ्मुखे हि भूयसि वर्ण उत्पन्ने दीर्घं रूपमिति प्रज्ञप्यते । तमे-वापेक्ष्याल्पीयसि ह्रस्वमिति । चतुर्दिशं भूयसि चतुरस्रमिति । सर्वत्र समे वृत्तमिति । एवं सर्वम् । तद्यथाऽलातमेकस्यां दिशि देशान्तरेष्वनन्तरेषु निरन्तरमाशु दृश्यमानं दीर्घमिति प्रतीयते सर्वतो दृश्यमानं मण्डलमिति । न तु खलु जात्यन्तरमस्ति संस्थानम्[६] । यदि हि स्यात्

**द्विग्राह्यं स्यात्**

चक्षुषा हि दृष्ट्वा दीर्घमित्यवसीयते कायेन्द्रियेणापि स्पृष्ट्वेति द्वाभ्यामस्य ग्रहणं प्राप्नुयात् । न च रूपायतनस्य द्वाभ्यां ग्रहणमस्ति । यथा वा स्प्रष्टव्ये दीर्घादिग्रहणं तथा वर्णे[७] संभाव्यताम् । स्मृतिमात्रं तत्र स्प्रष्टव्य[८]साहचर्यात् भवति । स[९] तु साहचर्यात् भवति न तु साक्षात् ग्रहणम् । यथाऽग्निरूपं दृष्ट्वा तस्योष्णतायां स्मृतिर्भवति पुष्पगन्धं च घ्रात्वा तद्वर्णं इति । युक्तमत्राव्यभिचारत्वादन्येना-[4a. 11A. V]न्यस्य[१०] स्मरणं नतु किंचित् स्प्रष्टव्यं[११] क्वचित् संस्थाने

१. MS घाता । २ Y. adds च । ३. Y.....भेदेऽपि परिकल्पनां । ४. Y. संह्रातः । ५. Y. उत्पन्नमात्राद् । ६. Y. न[द्रव्यसत् संस्थानम् । ७. Y. adds अपि । ८. Y. स्पर्श... । ९. MS. looks like न तु । १०. Y. अन्य । ११. MS. प्रष्टव्यं ।

नियतं यतस्तत्र[१] स्मरणं नियमेन स्यात्। अथा[२]सत्यपि साहचर्यनियमे संस्थान-[३] स्मरणं नियमेन स्यात्। वर्णोऽपि स्यात् वर्णवद्वा संस्थानेऽप्यनियमेन स्यात्। नचैवं भवति। अयुक्तमस्य स्प्रष्टव्यात्स्मरणम्। चित्रास्तरणे[४]वाऽनेकवर्णसंस्थाने दर्शनाद्बहूनामेकदेश्यं[५] प्राप्नुयात्। तच्चायुक्तं वर्णवत्। तस्मान्नास्ति द्रव्यतः संस्थानम्।

यच्चापि किंचित् सप्रतिघं रूपमस्ति तदवश्यं परमाणौ विद्यते।

**न चाणौ तत्**

न च संस्थानं परमाणौ विद्यते दीर्घादि। तस्माद्बहुष्वेव तथा संनिविष्टेषु दीर्घादि-प्रज्ञप्तिः। अथ मतं संस्थानपरमाणव एव तथा संनिविष्टा दीर्घादिसंज्ञां लभन्त[६] इति। सोऽयं केवलः पक्षपातस्तेषामसिद्धत्वात्। सिद्धस्वलक्षणानां हि तेषां संचयो युज्यते। न च संस्थानावयवानां वर्णादिवत् स्वभावः सिद्ध इति कुत एषां संचयः। यर्त्ताहि वर्णश्चाभिन्नो[७] भवति संस्थानं च भिन्नं दृश्यते मृद्भाजनानाम्। ननु चोक्तं यथा कृत्वा वर्णे[८] दीर्घादिसंज्ञा प्रज्ञप्यते तथा च पिपीलिकादीनामभेदे पङ्क्ति-चक्रादीनां भेदः प्रज्ञायते तथा संस्थानस्यापि। यर्त्ताहि तमपि दूराद्वा वर्णम-[4b. 11B. V]पश्यन्तः स्थाण्वादीनां दैर्घ्यादीनि पश्यन्ति वर्णमेव ते तत्राव्यक्तं दृष्ट्वा दीर्घादिपरिकल्पं कुर्वन्ति। पङ्क्तिसेनापरिकल्पवत्। इत्थं चैतदेवम्। यत्कदाचिदनिर्धार्यमाणपरिच्छेदं संघातमात्रमव्यक्तं दृश्यते किमप्येतदिति। अथेदानीं कायस्य गतिं निराकृत्य संस्थानं च तत्र भवन्तः सौत्रान्तिकाः कां काय-विज्ञप्तिं प्रज्ञपयन्ति। संस्थानमेव हि ते कायविज्ञप्तिं प्रज्ञपयन्ति। नतु पुनर्द्रव्यतः। तां च प्रज्ञपयन्तः कथं कायकर्म प्रज्ञपयन्ति। कायाधिष्ठानं कर्म कायकर्म या चेतना कायस्य तत्र तत्र प्रणेत्री। एवं वाङ्मनस्कर्मणी अपि यथायोगं वेदितव्ये। यर्त्ताहि "चेतना कर्म चेतयित्वा चे"त्युक्तं संकल्पचेतना पूर्वं भवत्येवं चैवं च करिष्यामीति। तथा चेतयित्वा पश्चात् क्रिया चेतनोत्पद्यते। यया कायः प्रेर्यते साऽसौ चेतयित्वा कर्मेत्युच्यते। एवं तर्हि विज्ञप्त्यभावादविज्ञप्तिरपि कामावचरी नास्तीति[९] महान्तो दोषा अनुषज्यन्ते। अनुषङ्गानां पुनः प्रत्यनुषङ्गा भविष्यन्ति। यदि तस्मादेव कायकर्मसंशब्दिताच्चेतनाविशेषादविज्ञप्तिः स्यात्। चित्तानुपरिवर्तिनी स्यात्समाहितविज्ञप्तिवत् नै-[5a. 11A. VI]वं भविष्यति। चेतनाविशेषेण तदाक्षेपविशेषात्। साऽपि च विज्ञप्तिः सती

---

१. Y. अत्र। २. Y. तथा। ३. Y. संस्थाने। ४. Y, चित्रान्तरेण। ५. Y. एकदेश्य। ६. Y. दीर्घादिसंज्ञा भवन्ति। ७. Y. वर्णत्वाभिन्नः। ८. Y. reads संनिविष्टवर्णे and gives in note कृत्वा वर्णे MS.। ९. Y. न स्यात्।

तदाक्षेपे[1] चेतनाया बलं निभालयते। जड़त्वात्[2]। द्रव्यमेव तु संस्थानं वैभाषिका वर्णयन्ति संस्थानात्मिकां तु कायविज्ञप्तिम्।

**वाग्विज्ञप्तिस्तु वाग्ध्वनिः ॥३॥**

वाक्स्वभावो यः शब्दः सैव वाग्विज्ञप्तिः। अविज्ञप्तिः पूर्वमेवोक्ता। साऽपि द्रव्यतो नास्तीति सौत्रान्तिकाः। अभ्युपेत्याकरणमात्रत्वात्। अतीतान्यपि महाभूतान्युपादाय प्रज्ञप्तेस्तेषां चाविद्यमानस्वभावत्वाद्रूपलक्षणाभावाच्च। अस्तीति वैभाषिकाः। कथं ज्ञायते।

**त्रिविधामलरूपोक्तिवृद्ध्यकुर्वत्पथादिभिः।**

त्रिविधं रूपमुक्तं सूत्रे। "त्रिभिः स्थानै रूपस्य रूपसंग्रहो भवति। अस्ति रूपं सनिदर्शनं सप्रतिघम्। अस्ति रूप[3]मनिदर्शनं सप्रतिघम्। अस्ति रूपमनिदर्शनमप्रतिघमि"ति। अनास्रवं च भगवता रूपमुक्तम्। "अनास्रवाः[4] धर्माः कतमे। यस्मिन् रूपेऽतीतानागतप्रत्युत्पन्नो नोत्पद्यतेऽनुनयो वा प्रतिघो वा यावद्यस्मिन्विज्ञाने। इम उच्यन्तेऽनास्रवा धर्मा" इति। न चा[5]विज्ञप्तिं विरह्य्यास्ति रूपमनिदर्शनमप्रतिघं नाप्य ास्रवम्। वृद्धिरपि चोक्ता। "एभिः सप्तभिरौपधिकैः पुण्यक्रियावस्तुभिः समन्वाग-[5b. 11B. VI] तस्य श्राद्धस्य कुलपुत्रस्य[6] कुलदुहितुर्वा चरतो वा स्वपतो वा तिष्ठतो वा जाग्रतो वा सततसमितमभिवर्धत एव पुण्यमुपजायत एव पुण्यम्। एवं निरौपधिकैरि"ति। न चाविज्ञप्तिमन्तरेणान्यमनसोऽपि पुण्यस्याभिवृद्धिर्युज्यते। अकुर्वतश्च स्वयं परैः कारयतः कर्मपथा न सिध्येयु[7]रसत्यामविज्ञप्तौ। नह्याज्ञापनविज्ञप्तिः[8] मौलः[9] कर्मपथो युज्यते[10]। तस्य कर्यणोऽकृतत्वात्। कृतेऽपि च तस्याः स्वभावविशेषादिति। उक्तं च भगवता "धर्मा भिक्षवो बाह्यमायतनमेकादशभिरायतनैरसंगृहीतमनिदर्शनमप्रतिघमि"ति। न त्वरूपीत्युक्तम्। तत्र किं प्रयोजनं स्याद्यदि धर्मायतनान्तर्गतमविज्ञप्तिरूपं नश्येत। अष्टाङ्गश्च मार्गो न स्यादविज्ञप्तिमन्तरेण। समापन्नस्य सम्यग्वाक्कर्मान्ताजीवानामयोगात्[11]। यत्तर्हीदमुक्तं "तस्यैवं जानत एवं पश्यतः सम्यग्दृष्टिर्भावनापरिपूरिं गच्छति सम्यक् संकल्पः सम्यक् व्यायामः सम्यक् स्मृतिः सम्यक् समाधिः। पूर्वमेव चास्य सम्यक् वाक्कर्मान्ताजीवाः परिशुद्धा भवन्ति पर्यवदाता" इति। लौकिकमार्गवैराग्यं पूर्वकृतमभिसंधायैतदुक्तम्। प्रातिमोक्ष-[6a. 11A. VII] संवरश्चापि न

१ Y. adds उत्पादन। २. MS. जत्वात्। ३. Y. omits रूपम्। ४. MS. अनास्रावाः। ५. Y. omits च। ६. Y. adds वा। ७. MS. सिद्धेयु....। ८. Y.... विज्ञप्तेः। ९. Y. omits मौलः। १०. Y. उपयुज्यते। ११. Y. omits सम्यग्।

स्यादसत्यामविज्ञप्तौ। न हि समादानादूर्ध्वं तदस्ति येनान्यमनस्कोऽप्ययं भिक्षुः स्यात् भिक्षुणी वेति। सेतुश्च सूत्रे विरक्तिरुक्ता। दौःशील्यविवन्धत्वात्। न वा भवन्ती सेतुर्भवितुमर्हतीत्यस्त्येवाविज्ञप्तिः। अत्र सौत्रान्तिका आहुः बह्वप्येतच्चित्रमप्येतत्। नैवं त्वेतत्। किं कारणम्। यत्तावदुक्तं "त्रिविधरूपोक्ते रि"ति। तत्र योगाचारा उपदिशन्ति। ध्यायिनां समाधिविषयो[१] रूपं समाधिप्रभावादुत्पद्यते। चक्षुरिन्द्रियाविषयत्वात् अनिदर्शनम्। देशानावरणत्वा[२]दप्रतिघमिति। अथ मतम्। कथमिदानीं तत् रूपमिति। एतदविज्ञप्तौ समानम्। यदप्युक्तमनास्रवरूपोक्ते रिति तदेव समाधिप्रभावसंभूतं रूपमनास्रवे समाधावनास्रवं वर्णयन्ति योगाचाराः। अर्हतो यद्रूपं वाह्यं चेत्यपरे। आस्रवाणामनिश्रयत्वात्। यत्तर्हि सूत्र उक्तं "सास्रवा धर्माः कतमे। यावदेव चक्षुर्यावदेव रूपाणी"ति विस्तरः। तत्र पुनरास्रवाणामप्रतिपक्षत्वात्सास्रवमुक्तम्। पर्यायेण तर्हि तदेव सास्रवं चानास्रवं च स्यात्। किं स्यात्। लक्षणसंकरः स्यात्। यथा तत् सास्रवं तथा न कदाचिदनास्रवमिति [6b. 11B. VII] कोऽत्र संकरः। यदि च रूपायतनादीनि एकान्तेन सास्रवाणि स्युरिह सूत्रे किमर्थं विशेषितानि स्यु"र्यानि रूपाणि सास्रवाणि सोपादानीयानि चेतःखिलम्रक्षवस्त्व"ति विस्तरः। यदप्युक्तं 'पुण्याभिवृद्धिवचनादि" ति तत्रापि पूर्वाचार्या निर्दिशन्ति "धर्मता ह्येषा यथा यथा दातॄणां दायाः परिभुज्यन्ते तथा तथा भोक्तॄणां गुणविशेषादनुग्रहविशेषाच्चान्यमनसामपि दातॄणां तदालम्बनदानचेतनाभाविताः[३] संततयः सूक्ष्मं परिणामविशेषं प्राप्नुवन्ति येनायत्यां बहुतरफलाभिनिष्पत्तये समर्था भवन्ति।" इदमभिसंधायोक्तं "भवेदभिवर्धत एव पुण्यमुपजायत एव पुण्यमि"ति। अथ मतं कथमिदानीं संतानान्तरविशेषादन्यमनसोऽपि संतानान्तरस्य परिणामः सेत्स्यतीति। एतदविज्ञप्तौ समानम्। कथमिदानीं संतानान्तरविशेषात्संतानान्तरे धर्मान्तरमविज्ञप्तिः सेत्स्यतीति निरुपधिकेष्विदानीं पुण्यक्रियावस्तुषु कथं भविष्यतीति। अभीक्ष्णं तदालम्बनचेतनाभ्यासात्स्वप्नेष्वपि ता अनुषङ्गिन्यो भवन्ति। अविज्ञप्तिवादिनस्तु निरौपधिके यत्र विज्ञप्तिर्नास्ति तत्र कथमविज्ञप्तिः स्यात्। औप-[7a. 11A. VIII] धिकेऽ[४]प्यभीक्ष्णं तदालम्बने[५] चेतनाभ्यासादित्यपरे। यत्तर्हि सूत्र[६] उक्तं "यस्योग्रभिक्षुः शीलवान् कल्याणधर्मा पिण्डकं परिभुज्याप्रमाणं चेतःसमाधिं कायेन साक्षात्कृत्वोपसंपद्य विहरत्यप्रमाणस्तन्निदानदायकस्य दानपतेः पुण्याभिष्यन्दः कुशलाभिष्यन्दः सुखास्वादधारः[७]

---

१. Y. विषय। २. Y.....नावरणाद्। ३. Y. reads परिभाविताः but notes भाविताः MS.। ४. Y. औपधिकेष्वपि। ५. Y. तदालम्बन...। ६. Y. सूत्रम्।
७. MS. सुखास्पादधारः।

प्रतिकाङ्क्षितव्य" इत्यत्र तदानीं दातुः कश्चेतनाविशेषः। तस्मात्संततिपरिणामविशेष एव न्याय्यः। यदप्युक्तं "कारयतः कथं कर्मपथाः सेत्स्यन्ती"ति तत्राप्येवं वर्णयन्ति[१]। तत्प्रयोगेण परेषामुपघातविशेषात्प्रयोक्तुः सूक्ष्मः संततिपरिणामविशेषो जायते यत आयत्यां समन्तेऽपि वहुतरफलाभिनिर्वर्त्तनसमर्था भवतीति स्वयमपि च कुर्वतः क्रियाफलपरिसमाप्तावेष एव न्यायो वेदितव्यः। सोऽसौ संततिपरिणामविशेषः कर्मपथ इत्याख्यायते। कार्ये कारणोपचारात्। कायिकवाचिकत्वं तु[२] तत्क्रियाफलत्वाद्यथाऽविज्ञप्तिवादिनामविज्ञप्ते[३]रिति। उपात्तेषु स्कन्धेषु त्रिकालया चेतनया[४] प्राणातिपातावद्येन स्पृश्यत[५] इति भदन्तः। हनिष्यामि हन्मि हतमिति चास्य यदा भवतीति। न त्वियता कर्मपथः परिसमाप्यते। मा भूदहतेऽपि मा-[7b. 11B. VIII] त्रादौ हताभिमानिनामानन्तर्यं कर्मेति। स्वयं तु घ्नत एतावां[६]श्चेतनासमुदाचार इत्ययमत्राभिप्रायो युक्तरूपः स्यात्। क इदानीमेष प्रद्वेषो यदविज्ञप्तिः प्रक्षिप्यते संततिपरिणामविशेषश्चाभ्युपगम्यते तथैवाप्रज्ञायमानः[७]। न खलु कश्चित् प्रद्वेषः। किंतु चित्तान्वयकायप्रयोगेण क्रियापरिसमाप्तौ ताभ्यां पृथग्भूतं[८] धर्मान्तरं प्रयोजयितुरुत्पद्यत इति नोत्पद्यते परितोषः। यत्कृतप्रयोगसंभूता तु क्रियापरिसमाप्तिस्तस्यैव तन्निमित्तः संततिपरिणामो भवतीति भवति परितोषः। चित्तचैत्तसंतानाच्चायत्यां फलोत्पत्तेः। उक्तं चात्र। किमुक्तम्। "विज्ञप्त्यभावादि"त्येवमादि। तदभावादविज्ञप्तेरभावः। यदप्युक्तं "धर्मायतनस्यारूपित्वं यस्मान्नोक्तमि"ति। तद्यदेवात्र रूपमनिदर्शनमप्रतिघं चोक्तं तदेवास्तु धर्मायतनपर्यापन्नम्। यदप्युक्तमष्टाङ्ग आर्यमार्गो न स्यादिति। अङ्ग[९] तावदाचक्ष्व[१०]। कथं मार्गसमापन्नस्य सम्यग्वाक्कर्मान्ताजीवा भवन्तीति। किमसौ वाचं भाष्यते क्रियां वा करोति चीवरादीन् वा पर्येषते। नेत्याह। किं तर्हि। तद्रूपामनास्रवामविज्ञप्तिं प्रतिलभ-[8a. 11A₁. I] ते। यस्याः प्रतिलम्भाद्व्युत्थितोऽपि न पुनर्मिथ्यावागादिषु प्रवर्तते सम्यग्वागादिषु च प्रवर्तते। अतो निमित्ते नैमित्तिकोपचारादविज्ञप्तौ तदाख्या क्रियते[११]। यद्येवमिहाप्येवं किं न गृह्यते मार्गसमापन्नो विनाप्यविज्ञप्त्या तद्रूपमाशयं च आश्रयं च प्रतिलभते यस्य प्रतिलम्भात् व्युत्थितोऽपि न पुनर्मिथ्यावागादिषु प्रवर्तते सम्यग्वागादिषु च प्रवर्तते। अतो निमित्ते नैमित्तिकोपचारं कृत्वा अष्टौ मार्गाङ्गानि व्यवस्थाप्यन्त

---

१. MS. वर्त्तयन्ति। २. Y. adds तस्य। ३. Y....मविज्ञप्तिरिति। ४. MS. looks like हतनया। ५. Y. adds घातकः। ६. MS. एव तावां but न of एव seems to be struck off। ७. Y....संज्ञायमानः। ८. MS. पृथक्भूतं। ९. Y. अङ्ग तावद्। १०. MS. looks like आचक्षु, Y. आचक्ष। ११. Y. तदा व्याक्रियते।

इति। अपरस्त्वाह। तदक्रियामात्रमत्राङ्गमुक्तं स्यात्। यदसावार्यमार्गसामर्थ्यादक्रियानियमं प्रतिलभते तच्चानास्रवमार्गसंनिश्रयलाभादनास्रवं स्यात्। नहि सर्वत्र द्रव्यमन्तो धर्माः परिसंख्यायन्ते। तद्यथाऽष्टौ लोकधर्माः लाभोऽलाभः यशोऽयशः निन्दा प्रशंसा सुखं दुःखमिति। नचात्र चीवरादीनामलाभो नामास्ति द्रव्यान्तरम्। प्रातिमोक्षसंवरोऽपि स्यात् यया चेतनया विधिपूर्वं कृत्वाऽभ्युपगमः प्रतिषिद्धात्कर्मणः कायवाचौ संवृणोति। अन्यचित्तो न संवृतः स्यादिति चेत्। न। तद्भावनया क्रियाकाले स्मरतः तत्प्रत्युपस्थानात् सेतुभावोऽपि स्यादक्रियां प्रतिज्ञां संस्मृत्य संस्मृत्य लज्जितो दौःशील्याक-[8b. 11B1. I] रणात् इत्यर्थमेव च[१] तस्याः समादानम्। यदि पुनरविज्ञप्तेरेव दौःशील्यं प्रतिवध्नीयात् न कश्चित् मुषितस्मृतिः शिक्षां भिन्द्यात्[२]। अलं विस्तरेणास्त्येव द्रव्यान्तरमविज्ञप्तिरूपमिति वैभाषिकाः।

यद्यस्ति तच्च महाभूतान्युपादायेत्युक्तम् तत् किं विज्ञप्तिमहाभूतान्येवोपादायाविज्ञप्तिरुत्पद्यते अथान्यानि। अन्यान्येव सा महाभूतान्युपादायोत्पद्यते। नहि सैव सामग्री सूक्ष्मफला चौदारिकफला च युज्यते। किं खलु यदातनी विज्ञप्तिस्तदातनान्येव सा महाभूतान्युपादाय[३] वर्तते। सर्वमुपादायरूपं प्रायेणैवं किंचित्तु[४] वर्तमानमनागतं चा[५]तीतानि महाभूतान्युपादाय। किं पुनस्तदिति।

**क्षणादूर्ध्वमविज्ञप्तिः कामाप्तातीतभूतजा ॥४॥**

प्रथमात् क्षणादूर्ध्वमविज्ञप्तिः कामावचरी अतीतानि महाभूतान्युपादायोत्पद्यते। तान्यस्या आश्रयार्थेन भवन्ति[६]। प्रत्युत्पन्नानि शरीरमहाभूतानि संनिश्रयार्थेन। प्रवृत्त्यनुवृत्तिकारणत्वाद्यथाक्रमम्। चक्रस्येव भूमौ सपरिवर्तमानस्य पाण्यावेधभूमिप्रदेशौ।

अथ कुतस्त्यानि महाभूतान्युपादाय कुतस्त्यं कायवाक्कर्म।

**स्वानि भूतान्युपादाय कायवाक्कर्म सास्रवम्।**

कामावचरं कायवाक्कर्म कामावचराण्ये-[9a. 11A1. II] व महाभूतान्युपादाय एवं यावच्चतुर्थध्यानभूमिकं तद्भूमिकान्येवोपादाय।

**अनास्रवं यत्र जातः**

अनास्रवं तु कायवाक्कर्म यस्यां भूमौ जातस्तदुत्पादयति तद्भूमिकान्युपादाय[७]

१. Y. omits च। २. Y. भिद्यात्। ३. Y. adds अविज्ञप्तिः। ४. Y. omits तु। ५. Y. omits च। ६. Y. संभन्ति। ७. MS. तत् भूमि....।

तद्वेदितव्यम् । धात्वपतितत्वादनास्रवाणां च[1] भूतानामभावात्तद्बलेन चोत्पत्तेः । तत्र विज्ञप्त्यविज्ञप्त्याख्यकर्मणी वेदितव्ये ।

**अविज्ञप्तिरनुपात्तिका ।।५।।**

**नैःष्यन्दिकी[2] च सत्त्वाख्या**

किंच

**निष्यन्दोपात्तभूतजा ।**

नैःष्यन्दिकान्येव भूतान्युपादाय चित्तचैत्तानि[3] चोपादायाविज्ञप्तिर्भवति । असमाहितभूमिकाया एष प्रकारः ।

**समाधिजौ[4]पचयिकानुपात्ताभिन्नभूतजा ।।६।।**

ध्यानानास्रवसंवरा विज्ञप्तिः समाधिजा । सा समाधिसंभूतान्यौ[5]पचयिकान्यनुपात्तानि च महाभूतान्युपादायोत्पद्यते अभिन्नानि च यान्येव च भूतान्युपादाय प्राणातिपाताद्विरतिरुत्पद्यते तान्येव यावत् संभिन्नप्रलापात् । किं कारणम् । चित्तवत् भूताभेदात् । प्रातिमोक्षसंवरे त्वन्यान्यानि महाभूतान्युपादाय सप्ताविज्ञप्तयो भवन्ति । विज्ञप्तिस्तु नैःष्यन्दिकी । उपात्ता तु कायिकी । किं पुनरियं विज्ञप्तिरुत्पद्यमाना पूर्वकस्य संस्थानस्य संतानं वाधित्वोत्पद्यते उताहो [9b. 11B1. II] न । किंचातः यदि वाधित्वोत्पद्यते । न । विपाकरूपस्योच्छिन्नस्य पुनः प्रवन्धादवैभाषिकीयं प्राप्नोति । अथावाधित्वा । कथमेकस्मिन्भूतसंघाते संस्थानद्वयं सिध्यति । अन्यान्येव तानि नैःष्यन्दिकानि तदानीमुपजायन्ते यान्युपादाय विज्ञप्तिर्भवति । एवं तर्हि यद्यदेवाङ्गं निश्रित्योत्पद्यते विज्ञप्तिस्तेन तेनाङ्गेन महीयसा भवितव्यम् । तन्महाभूतैरभिव्यापनात् । अनभिव्यापने च पुनः कथं कृत्स्नाङ्गेन[6] विज्ञपयेत् । शुषिरत्वात् कायस्यास्ति तेषामवकाशः ।

तत् खल्वेतत् कर्म पर्यायेण द्विविधं त्रिविधं पञ्चविधं चोक्तम् । चेतना चेतयित्वा चेति । चेतयित्वा पुनर्द्विधा । कायवाक्कर्म चेतना च । कायकर्म पुनः द्विविधं विज्ञप्त्याख्यमविज्ञप्त्याख्यं च । एवं वाक्कर्म चेतना चेति पञ्चविधं भवति । तत्र पुनरविज्ञप्तिर्द्विधा । कुशलाऽकुशला च ।

**नाव्याकृतास्त्यविज्ञप्तिः**

किं कारणम्[7] । अव्याकृतं हि चित्तं दुर्बलमतो न शक्तं बलवत्कर्माक्षेप्तुं यन्निरुद्धेऽपि तस्मिन्ननुवध्नीयात् ।

---

१. Y. adds महा । २. G. नैष्यन्दिकी । ३. MS. त्तानि । चित्तचं seems to be dropped । ४. MS. समाधिजो । ५. MS. ....संभूतान्यो । ६. Y. कृत्स्नेनांगेन । ७. MS. कारणमव्या... ।

**त्रिधाऽन्यत्**

अन्यत्कर्म त्रिविधम् । कुशलाकुशलाव्याकृतम् । किं तदन्यत् । विज्ञप्तिश्चेतना च ।

**अशुभं पुनः ।**

**कामे**

अकुशलं वस्तु कर्म कामधातौ वेदितव्यम् । नान्यत्र ।[१] अकुशलमूलानां [10a. 11A1. III] प्रहीणत्वादाह्रीक्यानपत्राप्ययोश्च । कुशलाव्याकृतं तु सर्वत्रा-प्रतिवेधात् । तत्र

**रूपेऽप्यविज्ञप्तिः**

कामेऽपीत्यपिशब्दात् । आरूप्येषु नास्ति भूताभावात् । यत्र हि कायवाचोः प्रवृत्तिस्तत्र कायवाक्संवरौ । इह तर्हि समापन्नस्य स्यादनास्रवा विज्ञप्तिवत् । न । तस्या धात्वपतितत्वात् । आरूप्यावचरी त्वविज्ञप्तिर्नार्हति[२] विसभागानि [३]भूतान्युपादाय भवितुम् । सर्वरूपवैमुख्याच्चारूप्यसमापत्तुर्नालं[४] रूपोत्पत्तये । विभूतरूपसंज्ञत्वात् । दौःशील्यप्रतिपक्षेण शीलम् । तच्च दौःशील्यं कामावचरम् । आरूप्याश्च[५] कामधातोराश्रया[६]कारालम्बनप्रतिपक्षदूरताभिर्दूरे । अत एष्व-विज्ञप्तिर्नास्तीति वैभाषिकाः

**विज्ञप्तिः सविचारयोः ॥७॥**

विज्ञप्तिस्तु सविचारयोरेव भूम्योः । कामधातौ प्रथमे च ध्याने न तत ऊर्ध्वम् ।

**कामेऽपि निवृता नास्ति**

निवृता तु विज्ञप्तिः कामधातावपि नास्ति । ब्रह्मलोक[७] एवास्ति । महाब्राह्मणो हि शाठ्यसमुत्थितं कायकर्म श्रूयते । स हि स्वपर्षन्मध्ये आयुष्मतोऽश्वजितः क्षेपार्थमात्मानं क्षिप्तवान्[८] । तत ऊर्ध्वमसत्यां वाग्विज्ञप्तौ कथं तत्र शब्दायतनं वाह्यमहाभूतहेतुकम् । अन्ये पुनराहुः । द्वितीयादिष्वपि ध्यानेषु विज्ञप्तिरस्त्य-निवृताव्याकृता । न[९] कुशला [10b. 11B1. III] न क्लिष्टा । किं कारणम् । न हि तेषूपपन्नस्तज्जातीयमधोभूमिकं चित्तं संमुखीकरोति येन तां विज्ञप्तिं समुत्थापयेत् । न्यूनत्वात्प्रहीणत्वाच्च । पूर्वमेव तु वर्णयन्ति । किं पुनः कारणमूर्ध्वं ब्रह्मलोकान्नास्ति विज्ञप्तिः कामधातौ च निवृताव्याकृता नास्ति ।

---

१. MS. नान्यत्राकुश…। २. Y. adds. कामरूपावचराणि । ३. Y. adds. महा । ४. Y. …समापत्तिर्नालं । ५. MS. not clear. It looks like स्रव । ६. MS. …रश्रया…। ७. MS.…लोका । ८. MS. क्षिपतवान् । ९. Y. adds तु ।

**समुत्थानमसद्यतः ।**

सवितर्कविचारेण हि चित्तेन विज्ञप्तिः समुत्थाप्यते । तच्च द्वितीयादिषु ध्यानेषु नास्ति भावनाप्रहातव्येन चोत्थाप्यते । दर्शनप्रहातव्यस्यान्तर्मुखप्रवृत्तत्वात् । तच्च कामधातौ निवृताव्याकृतं नास्ति ।

किं खलु समुत्थानवशादेव धर्माणां कुशलाकुशलत्वं वेदितव्यम् । नेत्याह । किं तर्हि । चतुर्भिः प्रकारैः[1] । परमार्थतः स्वभावतः संप्रयोगतः समुत्थानतश्च । तत्र तावत्

**परमार्थशुभो मोक्षः**

निर्वाणं हि सर्वदुःखव्युपशमः । ततः परमक्षेमत्वात् परमार्थेन कुशलमारोग्यवत् ।

**स्वतो मूलह्र्यपत्रपाः[2] ॥८॥**

त्रीणि कुशलमूलानि ह्रीश्चापत्राप्यं च स्वभावेन कुशलानि । अन्यसंप्रयोगसमुत्थानानपेक्षत्वात् । पथ्यौषधवत् ।

**संप्रयोगेण[3] तद्युक्ताः**

तैरेव कुशलमूलह्र्यपत्राप्यैः संप्रयुक्ता धर्माः संप्रयोगेण कुशलास्तैरसंप्रयुक्तानां कुशलत्वाभावादौषधमिश्रपानीयवत् ।

**समुत्था[11a. 11A1. IV]नात् क्रियादयः ।**

कायवाक्कर्मणी चित्तविप्रयुक्ताश्च संस्कारजात्यादयः प्राप्तिनिरोधासंज्ञिसमापत्तयस्तैरेव कुशलमूलादिसंप्रयुक्तैर्धर्मैः समुपस्थापिताः समुत्थानेन कुशलाः । औषध[4]पानीयसंभूतधात्री[5]क्षीरवत् । प्राप्तीनां तु विसभागचित्तसमुत्थापितानां कथं कुशलत्वमिति वक्तव्यम् । तद्यथा विचिकित्सया[6] कुशलमूलप्रतिसंधानं धातुप्रत्यागमपरिहाणिभ्यां च । यथा च कुशलमुक्तं ततो

**विपर्ययेणाकुशलं**

कथं कृत्वा । संसारः परमार्थेनाकुशलः । सर्वदुःखप्रवृत्त्यात्मकत्वेन परमाक्षेमत्वात् । अकुशलमूलाह्रीक्यानपत्राप्याणि स्वभावतः । तत्संप्रयुक्ता धर्माः संप्रयोगतः । तत्समुत्थापिताः कायवाक्कर्मजात्यादिप्राप्तयः समुत्थानतः व्याध्यपथ्यौषधादिभिरुपमेयाः ।

१. MS. प्राकारैः । २. G. ···त्रपा । ३. MS. ···गेन । ४. Y. औषधि । ५. Y. omits. धात्री । ६. MS. drops कि ।

एवं तर्हि न किंचित्सास्रवमव्याकृतं भविष्यति कुशलं वा। संसाराभ्यन्तरत्वात्। परमार्थत एवमुक्तं विपाकं तु प्रति यत्सास्रवं न व्याक्रियते तदव्याकृतमित्युच्यते। इष्टविपाकं च कुशलमित्युच्यते। यदि तु परमार्थेनाव्याकृतं मृग्यते तत्

परमाव्याकृते ध्रुवे ॥९॥

द्वे असंस्कृते निष्पर्यायेणानिवृताव्याकृते। आकाशमप्रतिसंख्यानिरोधश्च। इदं विचार्यते। यदि [11b. 11B1. IV] समुत्थानवशात्कुशलाकुशलत्वं कायवाक्कर्मणः किं न महाभूतानाम्। कर्मणि हि कर्त्तुरभिप्रायो न महाभूतेषु। समाहितस्याविज्ञप्तौ नास्त्यभिप्रायो न चासमाहितं चित्तं तस्याः समुत्थापकं विसभागभूमिकत्वादिति[1] कथं तस्याः कुशलत्वम्। दिव्ययोरपि वा चक्षुःश्रोत्रयोः कुशलत्वप्रसङ्गः। कर्त्तव्योऽत्र यत्नः। यदुक्तं दर्शनप्रहातव्यं चित्तं विज्ञप्तेरसमुत्थापकमिति। किं तर्हि भगवतोक्तं "ततोऽपि मिथ्यादृष्टेर्मिथ्यासंकल्पः प्रभवति मिथ्या वाग्मिथ्याकर्मान्त[2]"मित्येवमादि। अविरुद्धमेतत्।

समुत्थानं द्विधा हेतुतत्क्षणोत्थानसंज्ञितम्।

द्विविधं समुत्थानं हेतुसमुत्थानं तत्क्षणसमुत्थानं च। तत्रैव क्षणे[3] तद्भावात्[4]।

प्रवर्तकं तयोराद्यं द्वितीयमनुवर्तकम् ॥१०॥

हेतुसमुत्थानं प्रवर्तकमाक्षेपकत्वात्। तत्क्षणसमुत्थानमनुवर्तकं क्रियाकालानुवर्तनात्। किमिदानीं तस्य तस्यां क्रियायां सामर्थ्यम्। तेन हि विनाऽसौ मृतस्येव न स्यादाक्षिप्ताऽपि सती। अचित्तकस्य तर्हि संवरोत्पत्तौ कथं भवति। स्फुटतरा तर्हि सचित्तकस्य भवतीत्येत[5]त्सामर्थ्यम्। तत्र च

प्रवर्तकं दृष्टिहेयं विज्ञानम्

दर्शनप्रहातव्यं चित्तं विज्ञप्तेः प्रव-[12a. 11A1. V]र्तकम्। तत्समुत्थापकयोर्वितर्कविचारयोर्निदानभूतत्वात्। न त्वनुवर्तकम्। बहिर्मुखचित्तस्य क्रियाकाले तदभावात्। तत्समुत्थापितं च रूपं दर्शनप्रहातव्यं स्यात्।[6] किं स्यात्। अभिधर्मो बाधितः स्यात्। विद्याऽविद्याभ्यां चाविरोधान्नास्ति रूपं दर्शनप्रहातव्यम्। साध्य एष पक्षः। भूतान्यपि तर्हि दर्शनप्रहातव्यानि स्युः। समानचित्तोत्थापितत्वात्।

१. Y. seems to be विसभागत्वाद् भूमितो वा। २. Y. ...कर्म्मान्तः। ३. MS. क्षण। ४. MS. तत् भावात्। ५. Y. तस्य। ६. MS. ....स्यात्कि

नैवं भविष्यति यथा न कुशलाकुशलानि भवन्ति । अथवा पुनर्भवन्तु । नैवं शक्यम् । नहि तानि दर्शनप्रहातव्यानि युज्यन्ते नाप्यप्रहातव्यानि । किं कारणम् । अक्लिष्टस्य धर्मस्य विद्याऽविद्याभ्यामविरोधात् । अतो हेतुसमुत्थानमधिकृत्य सूत्रे पठनान्नास्ति विरोधः ।

उभयं पुनः ।[1]

मानसं भावनाहेयं

भावनाहेयं पुनर्मनोविज्ञानमुभयं भवति । प्रवर्त्तकं चानुवर्तकं च ।

पञ्चकं त्वनुवर्तकम् ।।११।।

पञ्च विज्ञानकाया अनुवर्तका एव । तदिदं चतुष्कोटिकं भवति । प्रवर्तकमेव दर्शनप्रहातव्यं चित्तम् । अनुवर्तका एव पञ्च विज्ञानकायाः । उभयं भावनाहेयं मनोविज्ञानम् । नोभयमनास्रवम् । किं खलु यथा प्रवर्तकं तथैवानुवर्तकं भवति । नायमेकान्तम् ।

प्रवर्तके शुभादौ हि स्यात्त्रिधाऽप्यनुवर्तकम् ।

कु-[12b. 11B.1 V] शले प्रवर्तके कुशलाकुशलाव्याकृत[2]मनुवर्तकं स्यात् । एवमकुशले चाव्याकृते च ।

तुल्यं मुनेः

बुद्धस्य तु भगवतस्तुल्यं प्रवर्तकेनानुवर्तकम् । कुशले कुशलमव्याकृते चाव्याकृतम् ।

शुभं यावत्[3]

कुशलं वा भवत्यनुवर्तकमव्याकृतेऽपि प्रवर्तके । न तु कदाचित् कुशलं प्रवर्तकमनुवर्तकं चाव्याकृतं भवति । आम्नायमाना[4] हि बुद्धानां देशनेति । नास्ति बुद्धानामव्याकृतं चित्तमिति निकायान्तरीयाः । कुशलैकताना[5] हि बुद्धानां संततयो नित्यं समाहितत्वात् । उक्तं हि सूत्रे

"चरन् समाहितो नागस्तिष्ठन्नागः समाहितः ।
स्वपन् समाहितो नागो निषण्णोऽपि समाहित" इति ।

अनिच्छयाऽस्य चित्तस्याविसरणादेवमुक्तं[6] न तु न सन्त्यव्याकृतानि विपाकजैर्यापथिकनिर्माणचित्तानि बुद्धानामिति वैभाषिकाः । मानसं भावनाहेयं प्रवर्तकं चानुवर्तकं चेत्युक्तम् । तत्कुशलाकुशलाव्याकृतं सर्वं वेदितव्यम् ।

१. MS. पुनर्मानसं । २. MS. ...व्याकृते । ३. G. वाऽर्थं । ४. Y. अम्लायमाना ।
५. MS. not clear. It looks like ...संताना and it may be स is cancelled. Y. ....ताना । ६. MS. ....विशरणा.... ।

**नोभयं तु विपाकजम् ॥१२॥**

विपाकजं तु चित्तं नैव प्रवर्तकं नानुवर्तकं निरभिसंस्कारवाहित्वात् । किमिदानीं यथा प्रवर्तकं[1] तथा विज्ञप्तिराहोस्विद्यथाऽनुवर्तकम् । किं चातः । यथा प्रवर्तकं चेत् । इहापि निवृताव्याकृता विज्ञ-[13a. 11A₁. VI]प्तिः प्राप्नोति । सत्कायान्तग्राहदृष्टिप्रवर्तितत्वात् । न वा सर्वं दर्शनप्रहातव्यं प्रवर्तकमिति विशेषणं वक्तव्यम् । यथानुवर्तकं चेत् अकुशलाव्याकृतचित्तस्य प्रातिमोक्षविज्ञप्तिः कुशला न प्राप्नोति । यथा प्रवर्तकं तथा विज्ञप्तिर्नतु यथा दर्शनप्रहातव्यम् । भावना[2] हेयान्तरितत्वात् । यदि नानुवर्तकवशाद्विज्ञप्तेः कुशलादित्वं न तर्हीदं वक्तव्यम् । हेतुसमुत्थानं संधायोक्तं सूत्रे न तत्क्षणसमुत्थानम् । अतो नास्तीह निवताव्याकृता विज्ञप्तिरिति । एवं[3] वक्तव्यम् । अन्यव्यवहितं हेतुसमुत्थानं संधायोक्तमिति । अवसितः प्रसङ्गः ।

सा तु पूर्वोक्ता ।

**अविज्ञप्तिस्त्रिधा ज्ञेया संवरासंवरेतरा ।**

संवरश्चासंवरश्च । ताभ्यां चेतरो नैवसंवरो नासंवरः । दौःशील्यप्रसरस्य संवरणं संरोधः संवरः । तत्र पुनः

**संवरः प्रातिमोक्षाख्यो ध्यानजोऽनास्रवस्तथा ॥१३॥**

त्रिविधः संवरः । प्रातिमोक्षसंवर इहत्यानां कामावचरं शीलम् । ध्यानसंवरो रूपावचरं शीलम् । अनास्रवसंवरोऽनास्रवं शीलम् । तत्र पुनः

**अष्टधा प्रातिमोक्षाख्यः**

भिक्षुसंवरो भिक्षुणीसंवरः शिक्षमाणासंवर श्रामणेरसंवरः श्रामणेरीसंवरः उपासकसंवर उपा [13b. 11B₁. V] सिकासंवर उपवाससंवरश्च । एषोऽष्टविधसंवरः प्रातिमोक्षसंवर इत्याख्यायते । नामत एषोऽष्टविधः ।

**द्रव्यतस्तु चतुर्विधः ।**

भिक्षुसंवरः श्रामणेरसंवर उपासकसंवर उपवाससंवरश्च । इत्येष चतुर्विधः प्रातिमोक्षसंवरस्तु द्रव्यतः । प्रतिनियतलक्षणत्वात् । भिक्षुसंवराद्भिक्षुणीसंवरो नान्यः श्रामणेरसंवराच्च शिक्षमाणाश्रामणेरीसंवरौ । उपासकसंवरादुपासिकासंवरो नान्यः । कथं ज्ञायते ।

१. MS. drops प्र । २. MS. भावना.... । ३. Y. adds तु ।

**लिङ्गतो नामसंचारात्**

लिङ्गमिति व्यञ्जनस्याख्या येन स्त्रीपुरुषौ लिङ्ग्येते। लिङ्गतो हि भिक्षुभिक्षुण्यादीनां नामसंचारो भवति। कथं कृत्वा। परिवृत्ते हि व्यञ्जने भिक्षुर्भिक्षुणीत्युच्यते भिक्षुणी च पुनर्भिक्षुः। श्रामणेरः श्रामणेरीत्युच्यते श्रामणेरी च पुनः शिक्षमाणा च श्रामणेरः। उपासक उपासिकेत्युच्यते उपासिका च पुनरुपासक इति। न च व्यञ्जनपरिवृत्तौ पूर्वसंवरत्यागे[1] कारणमस्ति नाप्यपूर्वसंवरप्रतिलम्भे। तस्मादभिन्न एषां चतुर्णां संवराणां त्रिभ्यः स्वभावः।

य उपासकसंवराच्छ्रामणेरसंवरं समादत्ते तस्माच्च पुनर्भिक्षुसंवरं किं ते संवरा विरतिवृद्धियोगादन्योऽन्य[2] उच्यन्ते पञ्चदश [14a. 11A₁. VIII] विंशतिवत् दीनारशतेरवच्च आहोस्वित् पृथगेव ते सकला जायन्ते[3]। आह।

**पृथक्**

अव्यामिश्रा एव ते पृथग्लक्षणा उपजायन्ते। त्रिषु संवरेषु तिस्रः प्राणातिपातविरतयो यावन्मद्यपानविरतयः। एवं शेषाः। को नु तासां विशेषः। निदानविशेषाद्विशेषः। कथं कृत्वा। यथा यथा हि बहुतराणि शिक्षापदानि समादित्सते तथा तथा बहुतरेभ्यो मदप्रमादपदेभ्यो[4] निवर्तमानो बहुतरेभ्यः प्राणातिपातादीनां निदानेभ्यो निवर्तते विरतीनां च निदानेषु प्रवर्तत इति निदानविशेषाद्विरतीनां विशेषः। एवं चासति भिक्षुसंवरं प्रत्याचक्षाणस्त्रीनपि संवरान्विजह्याद्द्वयोरपि तत्रान्तर्भावात्। न चैतदिष्टम्। तस्मात् पृथगेव ते संवराः।

**ते चाविरोधिनः ॥१४॥**

ते च त्रयोऽपि सह वर्तन्ते। नोत्तरसंवरसमादानात् पूर्वकस्य त्यागः। मा भूत् भिक्षुसंवरपरित्यागादनुपासक[5] एवेति।

कथं चायमुपासको भवति कथमुपवासस्थो यावत् भिक्षुः।

**पञ्चाष्टदशसर्वेभ्यो वर्ज्येभ्यो विरतिग्रहात्।**
**उपासकोपवासस्थश्रमणोद्देशभिक्षुता ॥१५॥**

यथासंख्यमनुदेशो वेदितव्यः। पञ्चभ्यो वर्जनीयेभ्यो धर्मेभ्यो विरतिसमादानादु-

१. Y. त्याग...। २. MS. अन्यान्य। Y. अन्येन्य। ३. Y. उपजायन्ते। ४. Y. मदप्रमादेभ्यः। ५. MS. drops क।

पासकसंवरस्थो भ-[14b. 11B1. VII]वति । प्राणातिपातादत्तादानात्काम-मिथ्याचारात् मृषावादा[1]त्सुरामैरेयमद्यपानाच्च । अष्टाभ्यो विरतिसमादानादु-पवासस्थः । प्राणातिपातादत्तादानाब्रह्मचर्यमृषावादमद्यपानेभ्यो गन्धमाल्यविलेपन-नृत्यगीतवादित्रादुच्चशयनमहाशयनादकालभोजनाच्च । दशभ्यो विरतिसमादाना-च्छ्रामणेरो भवति । एभ्य एव जातरूपरजतप्रतिग्रहाच्च । नृत्यगीतवादित्रगन्धमा-ल्यविलेपनं चात्र द्वयीकृत्य दश भवन्ति । सर्वेभ्य एव वर्जनीयेभ्यः कायवाक्कर्मभ्यः विरतिसमादानात् भिक्षुरित्युच्यते । स एष प्रातिमोक्षसंवरः

**शीलं सुचरितं कर्म संवरश्चोच्यते**

विषमकर्मणां विरतिसमादाना[2]च्छीलम् । शीतलत्वादिति निरुक्तिः ।
"सुखशीलसमादानं कायो न परिदह्यत" इति
गाथावचनात् । विद्वत्प्रशस्तत्वात्सुचरितम् । क्रियास्वभावत्वात्कर्म । ननु चाविज्ञ-प्तिरक्रियेत्युच्यते । सा कथं क्रिया भवति । न कुर्वन्ति तया समात्तया लज्जिनः पापमित्यक्रियेत्युच्यते । सापि तु विज्ञप्तिचित्ताभ्यां क्रियत इति क्रिया भवति । क्रियाहेतुत्वात् क्रियाफलत्वाच्चेत्यपरे । संवर इति कायवाचोः संवरणात् । एवं तावदविशेषेण प्रातिमोक्षसंवरः सं-[15a. 11A1. VII] शब्द्यते ।

पुनः ।

**आद्ये विज्ञप्त्यविज्ञप्ती प्रातिमोक्षक्रियापथः ॥१६॥**

संवरसमादानस्य प्रथमे विज्ञप्त्यविज्ञप्ती प्रातिमोक्ष इत्युच्यते । पापस्य तेन प्रातिमोक्षणा[3]दुत्सर्जनादित्यर्थः । स्वार्थे वृद्धिविधानाद्वैकृतवैशसवत् । प्रातिमोक्ष-संवर इत्यपि कायवाक्संवरणात् कर्मपथ इत्यु[4]च्यते । मौलसंगृहीतत्वात् । द्वितीया-दिषु क्षणेषु प्रातिमोक्षसंवर एव न प्रातिमोक्षः । पृष्ठं च न मौलः कर्मपथः ।

अथैषां संवराणां केन कः समन्वागतः ।

**प्रातिमोक्षान्विता अष्टौ[5]**

प्रातिमोक्षसंवरेणाष्टौ निकायाः समन्वागता भिक्षुर्भिक्षुणी यावदुपवासस्थोऽष्टमः ।

१. MS. drops दा । २. Y. seems to read समापादनात्, but notes विरतिसमादानात् MSS. । ३. Y. प्रतिमोक्षणात् । ४. Y. adds अपि । ५. G. चाष्टौ ।

किं खलु बाह्यकानां समादानशीलं नास्ति। अस्ति नतु प्रातिमोक्षसंवरः। किं कारणम्। नहि तदत्यन्तं पापस्य प्रतिमोक्षणाय संवर्तते। भवसंनिश्रितत्वात्।

**ध्यानजेन तदन्वितः।**

ध्यानाद्ध्याने वा जातो ध्यानजः[१]। यो ध्यानेन समन्वागतः सोऽवश्यं ध्यानसंवरेण। सामन्तकमप्यत्र ध्यानं कृत्वोच्यते। यथा ग्रामसामन्तकमपि ग्राम इत्युच्यते। अस्त्यस्मिन् ग्रामे शालेयं क्षेत्रमस्ति व्रैहेयमिति।

**अनास्रवेणार्यसत्त्वाः**

आर्यपुद्गला अनास्रवेण संवरेण समन्वागताः। ते पुनः शैक्षाशैक्षाः। यदुक्तं "सहभूहेतावुच्यमा-[15b. 11B1. VIII] ने द्वौ संवरौ चित्तानुवर्तिनावि"ति। कतमौ तौ। एषामेव त्रयाणाम्

**अन्त्यौ चित्तानुवर्तिनौ ॥१७॥**

ध्यानसंवरोऽनास्रवसंवरश्च। न प्रातिमोक्षसंवरः। किं कारणम्। अन्यचित्ताचित्तकस्याप्यनुवृत्तेः। पुनस्तावेव ध्यानानास्रवसंवरौ प्रहाणसंवराख्यां लभेते[२]। कस्यामवस्थायामित्याह

**अनागम्ये प्रहाणाख्यौ तावानन्तर्यमार्गजौ।**

अनागम्ये तौ ध्यानानास्रवसंवरौ नवस्वानन्तर्यमार्गेषु प्रहाणसंवरावित्युच्येते। ताभ्यां दौःशील्यस्य तत्समुत्थापकानां च क्लेशानां प्रहाणात्। अत एव स्याद्ध्यानसंवरो न प्रहाणसंवर इति चतुष्कोटिकं क्रियते। प्रथमा कोटिरनागम्यानन्तर्यमार्गवर्ज्यः सास्रवो[३] ध्यानसंवरः। द्वितीया अनागम्यानन्तर्यमार्गेष्वनास्रवः[४]। तृतीया अनागम्यानन्तर्यमार्गेषु सास्रवः[५]। चतुर्थी अनागम्यानन्तर्यमार्गवर्ज्योऽनास्रवसंवरः। एवं स्यादनास्रवसंवरो न प्रहाणसंवर इति चतुष्कोटिकं यथायोगं वेदितव्यम्। यर्त्तहि भगवतोक्तं

"कायेन संवरः साधु साधु[६] वाचाऽथ संवरः।
मनसा संवरः साधु साधु सर्वत्र संवरः ॥इति।

यच्चोक्तं "चक्षुरिन्द्रियेण संवरसंवृतो विहरती"ति। एतौ मनइन्द्रियसंवरौ किंस्वभावौ। नैतावविज्ञप्तिशीलस्वभावौ। किं तर्हि।

---

१. MS. ध्यानतः। २. MS. लभते। ३. Y. omits सास्रवः। ४. Y. adds संवरः। ५. Y. adds संवरः। ६. MS. drops one साधु।

संप्रज्ञानस्मृती द्वे तु [16a. 11A. I] मनइन्द्रियसंवरौ ॥१८॥

प्रत्येकं द्विस्वभावज्ञापनार्थं पुनर्द्विग्रहणं मा यथासंख्यं विज्ञायीति मनःसंवरोऽपि स्मृतिसंप्रज्ञानस्वभाव इति।[१] इन्द्रियसंवरोऽपि।

इदं विचार्यते। कः कतमया विज्ञप्त्याऽविज्ञप्त्या वा कियन्तं कालं समन्वागत इति। तत्र

प्रातिमोक्षस्थितो नित्यमत्यागा[२]द्वर्तमानया।[३]

अविज्ञप्त्याऽन्वितः

यः प्रातिमोक्षसंवरस्थः पुद्गल उक्तः स यावत्तामविज्ञप्तिं न त्यजति तावत्तया वर्तमानया नित्यं समन्वागतः।

पूर्वात् क्षणादूर्ध्वमतीतया ॥१९॥

प्रथमात् क्षणादूर्ध्वमतीतयाऽपि समन्वागतः। अत्यागादिति सर्वत्राधिकृतं वेदितव्यम्। यथा प्रातिमोक्षसंवरस्थ उक्तः

तथैवासंवरस्थोऽपि

असंवरस्थोऽपि यावदसंवरं न त्यजति तावन्नित्यमविज्ञप्त्या वर्तमानया[४] समन्वागतः[५]। क्षणादूर्ध्वमतीतयाऽपि।

ध्यानसंवरवान् सदा।

अतीताजातया

ध्यानसंवरस्य लाभी नित्यमतीतानागताभ्यामविज्ञप्तिभ्यां[६] समन्वागतः आत्यागात्। प्रथमे हि क्षणे स जन्मान्तरत्यक्तं ध्यानसंवरमतीतं लभते।

आर्यस्तु प्रथमे नाभ्यतीतया ॥२०॥

आर्यस्तु पुद्गलोऽप्येवमनास्रवया। अयं तु विशेषः। स प्रथमे[७] क्षणे नातीतया[८] समन्वागतो मार्गस्य पूर्वमनुत्पादितत्वात्।

---

१. MS. इति। न्द्रय। २. G. ....मात्यागा। In this MS. we get both अत्यागात् and आत्यागात् (see later)। ३. MS. ....मानयाऽविज्ञप्त्या। ४. Y. adds एव। ५. Y. adds भवति। ६. Y. अतीतानागतया अविज्ञप्त्या। ७. Y. adds तु। ८. Y. ताभ्यतीतया।

**समाहितार्यमार्गस्थौ तौ युक्तौ वर्तमानया ।**

**तौ** ध्यानानास्रवसंवरा-[16b. 12B. I]न्वितौ **समाहितार्यमार्ग**समापन्नौ **वर्तमानया** अविज्ञप्त्या समन्वागतौ यथाक्रमं न तु व्युत्थितौ। संवरासंवरस्थानां तावदेष वृत्तान्तः।

अथेदानीं मध्यस्थस्य।

**मध्यस्थस्यास्ति चेदादौ मध्यया**

यो नैव संवरे नासंवरे[1] स्थितः स मध्यस्थः। तस्य नावश्यमविज्ञप्तिरस्ति। यस्य त्वस्ति दौःशोल्यशीलाङ्गादिसंगृहीता स **आदौ मध्यया** समन्वागतः। वर्तमाना ह्यविज्ञप्तिरतीतानागतयोर्मध्याद्[2]

**ऊर्ध्वं द्विकालया[3] ॥२१॥**

प्रथमात् क्षणादूर्ध्वमतीतया वर्तमानया च। आत्यागादिति वर्तते। किमसंवरस्थः कदाचित्कुशलया विज्ञप्त्या समन्वागतो भवति संवरस्थो वा पुनरकुशलया भवति। भवन् कदा कियन्तं वा कालमित्याह

**असंवरस्थः शुभयाऽशुभया संवरे स्थितः ।**

**अविज्ञप्त्यान्वितो यावत् प्रसादक्लेशवेगवान्[4] ॥२२॥**

येन प्रसादवेगेनासंवरस्थस्य[5] कुशलाऽविज्ञप्तिरुत्पद्यते स्तववन्दनादिक्रियां कुर्वतः येन च क्लेशवेगेन संवरस्थस्याकुशलाऽविज्ञप्तिरुत्पद्यते वधबन्धनताड़नादिक्रियां कुर्वतः तौ यावदनुवर्तेते[6] तावत्ते अप्यविज्ञप्ती। स आद्ये क्षणे वर्तमानयैवाविज्ञप्त्या[7] समन्वागतो भवत्यन्येष्वतीतयाऽपि। अविज्ञप्त्यधिकारः समाप्तः।

**विज्ञप्त्या तु पुनः[8] सर्वे [17a. 12A. II] कुर्वन्तो मध्ययान्विताः[9] ।**

**सर्वे** संवरासंवरमध्यस्था यावद्विज्ञप्तिं **कुर्वन्ति** तावत्तया वर्त्तमानया समन्वागताः।

**अतीतया क्षणादूर्ध्वमात्यागात्**

प्रथमात् **क्षणादूर्ध्वमात्यागा**दतीतया विज्ञप्त्या समन्वागतो भवति।

**नास्त्यजातया ॥२३॥**

---

१. Y. नैवसंवरनासंवरे। २. MS. ....ध्यादूर्द्धं। ३. G. मध्ययोर्द्वन्द्विकालया। ४. MS. ...वेशवान्। ५. MS. ....संवरस्तस्य। ६. MS. ...वर्त्तते। ७. MS. वर्त्तमानयैव विज्ञप्त्या। ८. G. युताः। ९. G. कुर्वन्तामव्ययान्विताः।

अनागतया तु विज्ञप्त्या न कश्चित् समन्वागतः ।

**निवृतानिवृताभ्यां च नातीताभ्यां समन्वितः ।**

अतीताभ्यामपि निवृतानिवृताव्याकृताभ्यां विज्ञप्तिभ्यां न कश्चित्समन्वागतः । दुर्बलस्य हि धर्मस्य प्राप्तिरपि दुर्बला नानुबन्धीभवति । किंकृतं तस्या दौर्बल्यम् । चित्तकृतम् । चित्तस्यापि तर्हि निवृताव्याकृतस्य मा भूत् । नैतदेवम् । जड़ा हि विज्ञप्तिः परतन्त्रा च । न चैवं चित्तम् । सा हि विज्ञप्तिर्दुर्बलेनोत्थापिता दुर्बलतरा भवति ।

असंवरस्थ इत्युक्तम् । कोऽयमसंवरो नाम ।

**असंवरो दुश्चरितं दौःशील्यं कर्म तत्पथः ॥२४॥**

असंवरस्येमे पर्यायशब्दाः । तत्र कायवाचोरसंवरणादसंवरः । सद्भिः कुत्सितत्वाद-निष्टफलत्वाद्[1] दुश्चरितम् । शीलविपक्षाद्दौःशील्यम् । कायवाक्कर्मत्वात्कर्म । मौलसंगृहीतत्वात्कर्मपथः । स्याद्विज्ञप्त्या समन्वागतो नाविज्ञप्त्येति चतुष्कोटिकम् । तत्र तावत्

**विज्ञप्त्यैवान्वितः कुर्वन्मध्यस्थो मृदुचेतनः ।**

मृद्व्या चेतनया कुशलमकुशलं वा कुर्वन्नैव-[17b. 12B. II]संवरनासंवरस्थितो विज्ञप्त्यैव समन्वागतो भवति नाविज्ञप्त्या प्रागेवाव्याकृते[2] अन्यत्रौपधिकपुण्य-क्रियावस्तुकर्मपथेभ्यः ।[3]

**त्यक्तानुत्पन्नविज्ञप्तिरविज्ञप्त्यार्यपुद्गलः ॥२५॥**

अविज्ञप्त्यैव समन्वागतो न विज्ञप्त्या येनार्यपुद्गलेन जन्मान्तरपरिवृत्तौ न ताव-द्विज्ञप्तं वा पुनर्विहीनम् । उक्तं संवरासंवरमध्यस्थानां विज्ञप्त्यविज्ञप्तिसमन्वागम-नव्यवस्थानम् ।

अथैते संवराः कथं लभ्यन्ते ।

**ध्यानजो ध्यानभूम्यैव लभ्यते**

यदा ध्यानभूमिकं चित्तं प्रतिलभ्यते मौलीयं सामन्तकीयं वा सास्रवं तदा ध्यान-संवरोऽपि सहभूतत्वात् ।

**अनास्रवस्तया ।**

**आर्यया**

तयैव ध्यानभूम्याऽनास्रवया लभ्यमानयाऽनास्रवः संवरो लभ्यते । तत्र षट् ध्यान-भूमयोऽनास्रवा भवन्ति चत्वारि ध्यानानि अनागम्यस्यानन्तरं चेति पश्चात्प्रवेद-यिष्यामः ।

---

१. MS. drops द् । २. Y. प्रागेवान्याकृतम् । ३. MS. पथेभ्यस्त्यक्ता.... ।

**प्रातिमोक्षाख्यः परविज्ञपनादिभिः[1] ॥२६॥**

प्रातिमोक्षसंवरस्तु परविज्ञप्तितो लभ्यते। यद्येनं परो विज्ञपयति[2] असौ च परम्। स पुनः संघाद्वा पुद्गलाद्वा। संघाद्भिक्षुभिक्षुणीशिक्षमाणासंवराः पुद्गलादन्ये। दशविधा उपसंपदिति विनयविभाषिकाः। तस्य उपसंग्रहणार्थमादिशब्दः। स्वयंभूत्वेन बुद्धानां प्रत्येकबुद्धानां च नियामावक्रान्त्या पञ्चका-[18a. 12A. III]नाम् एहिभिक्षुकया यशःप्रभृतीनाम् शास्तुरभ्युपगमान्महाकाश्यपस्य प्रश्नाराधनेन सोदायिनः गुरुधर्माभ्युपगमेन महाप्रजापत्याः दूतेन धर्मदिन्नायाः विनयधरपञ्चमेन प्रत्यन्तिमेषु जनपदेषु दशवर्गेण[3] मध्येषु जनपदेषु शरणगमनं त्रैवाचिकेन षष्टिभद्रवर्गपूगोपसंपादितानामिति तेषां नावश्यं विज्ञप्त्यधीनः प्रातिमोक्षसंवरः। स पुनरेष प्रातिमोक्षसंवरः समादीयमानः कियन्तं कालं समादातव्यः।

**यावज्जीवं समादानमहोरात्रं च संवृतेः।**

सप्तनैकायिकस्य प्रातिमोक्षसंवरस्य **यावज्जीवं समादानम्** उपवाससंवरस्याहोरात्रमित्येष नियमः। किं कारणम्। द्वौ हि कालपर्यन्तौ। अहोरात्रपर्यन्तो जीवितपर्यन्तश्च।[4] अहारोत्राणां पौनरुक्त्येन पक्षादयः। कालो नाम क एष धर्मः। संस्कारपरिदीपनाधिवचनमेतत्। आलोकावस्था हि द्वीपेषु दिवस इत्युच्यते। तमोऽवस्था रात्रिः। युक्तं तावज्जीवितादूर्ध्वं सत्यपि समादाने संवरस्यानुत्पत्तिः[5]। विसभागत्वादाश्रयस्य तेन च तत्राप्रयोगादस्मरणाच्च। अथाहोरात्रादूर्ध्वं पञ्चरात्रं दशरात्रं वा उपवाससमादानस्य कः प्रतिवन्धो वहूनामुपवाससंवरा-[18b. 12B. III]णामुत्पत्तौ। इत्थमस्ति प्रतिवन्धो यद्भगवानहोरात्रिकमेवोपवासं सूत्रे शास्ति स्म। इदमिदानीं संप्रधार्यम्। किं तावदहोरात्रादूर्ध्वं संवरस्यानुत्पत्तिं पश्यता तथागतेनाहोरात्रिक उपवासो देशित उताहो दुर्बलेन्द्रियाणामहोरात्रकेऽपि संवरसमादानेन संनियोजनार्थमिति। कुतस्त्वेतदेवं तर्क्यते। अहोरात्रात् परेणापि संवरोत्पत्तौ युक्त्यविरोधात्। तदेतत्कस्यचिदप्यहोरात्रादूर्ध्वमदेशनां नेच्छन्ति वैभाषिकाः। असंवरस्येदानीं कः कालनियमः।

**नासंवरोऽस्त्यहोरात्रं**

यावज्जीवं पापकर्माभ्युपगमादसंवर[6] उपजायते नाहोरात्रं यथोपवासः। किं कारणम्।

---

१. MS. drops प। G. ...ज्ञापना...। २. Y. विज्ञापयति। ३. MS. वर्गेन।
४. MS. पर्यन्तश्चाहो...। ५. MS. नुत्पत्ति। ६. MS. ....कर्म्मान्युप....।

**न किलैवं प्रगृह्यते[१] ॥२७॥**

न किल कश्चिदेवमसंवरं[२] समादत्ते[३] यथोपवासं कच्चिदहमहोरात्रमसंवृतः स्यामिति । कुत्सितत्वात्कर्मणः । एवं चैव न कश्चिदादत्ते कच्चिदहं[४] यावजीवमसंवृतः स्यामिति । यावज्जीवमप्यस्य लाभो न स्यात्[५] । यद्यपि नैवमादत्ते तथाप्यत्यन्तविपन्नेनाशयेन तां क्रियां प्रकुर्वन्नसंवरं प्रतिलभते न कालान्तरविपन्नेन । उपवाससंवरस्तु समादानवलाधानादनात्यन्तिकेऽप्याशये लभ्यत एव । संवरार्थित्वात् । यदि पु-[19a. 12A. VI] नः कश्चिदसंवरेणाप्यर्थी कालान्तरमसंवरं समाददीत सोऽवश्यं लभेत । न त्वेद्दृष्टमिति नैवं व्यवस्थाप्यते । अविज्ञप्तिवदसंवरोऽपि नास्ति द्रव्यत इति सौत्रान्तिकाः । स एव तु पापक्रियाभिसंधिरसंवरः । सानुवन्धो यतः कुशलचित्तोऽपि तद्वानु[६]च्यते । तस्यानिराकृतत्वात् ।

अथाहोरात्रं गृह्यमाण उपवासः कथं ग्रहीतव्यः ।

**काल्यं ग्राह्योऽन्यतो नीचैः स्थितेनोक्तानुवादिता ।**

**उपवासः समग्राङ्गो निर्भूषेणानिशाक्षयात् ॥२८॥**

काल्यं तावत्सूर्योदयकाले अहोरात्रिकत्वात्संवरस्य । यस्तु पूर्वकृतसमादानो नित्यमष्टभ्यामुपचेष्यामीति स भुक्त्वापि गृह्णीयात् । अन्यतश्च ग्रहीतव्यो न स्वयमेवापरापेक्षया सत्स्वपि प्रत्ययेष्वनतिक्रमार्थम् । नीचैः स्थितेनोत्कुट्टकेन वा जानुपातेन वा कपोतकमञ्जलिं कृत्वाऽन्यत्र ग्लान्यात् । अगौरवस्य हि संवरो नोत्पद्यते । दातुश्च वचनमनुब्रूवीत[७] । न पूर्वं न युगपत् । एवं ह्यसौ परस्मात् गृहीतो भवति । अन्यथा हि दानग्रहणं न सिध्येत् । समग्राङ्गश्चाष्टाङ्ग एव ग्रहीतव्यो न विकलाङ्गः । निर्भूषेण च । आजस्रिकमभ्यलंकारं[८] मुक्त्वा । आजस्रिको ह्यलंकारो नात्यर्थं मदमादधाति । आरात्रिपरिक्षया-[19b. 12B. IV] च्च ग्रहीतव्यो यावत् पुनः सूर्योदयात् । अतोऽन्यथा गृह्णतः सुचरितमात्रं स्यान्नतूपवाससंवरः । एवं च कृत्वा औरभ्रिकपारदारिकयो रात्रिदिवसोपवासकयोः[९] साफल्यं प्रयुज्यते । अर्हतां समीपे वसन्त्यनेनेत्युपवासस्तेषामनुशिक्षणात् । यावज्जीविकसंवरसमीपे वसन्त्यनेने[१०]त्यपरे । अल्पकुशलमूलानां कुशलमूलपोषणात् पोषध इति वा ।

---

१. G. स गृह्यते । २. MS. ...संवर । ३. MS. समादत्त । ४. MS. कश्चिदह । ५. MS. नात् । ६. Y. adds इति । ७. MS. ....ब्रुवत । ८. MS. .... कालं । ९. MS. looks like....इयोः । १०. MS. वसन्त्यननेने ।

"पोषं दधाति मनसः कुशलस्य यस्मा-
दुक्तस्ततो भगवता किल पोषधोऽयमि"ति ।

किमर्थं पुनरष्टाङ्गान्युपादीयन्ते । यस्मात्

**शीलाङ्गान्यप्रमादाङ्गं व्रताङ्गानि यथाक्रमम् ।**

**चत्वार्येकं तथा त्रीणि**

**चत्वारि तावच्छीलाङ्गानि** यावन्मृषावादविरतिः । प्रकृतिसावद्यविरतित्वात् । **एकमप्रमादाङ्गं** मद्यपानाद्विरतिः । समात्तशीलोऽपि मद्यपः प्रमाद्येत । **त्रीणि व्रताङ्गानि** यावदकालभोजनाद्विरतिः । संवेगानुगुणत्वात् । किं पुनरेभिरप्रमादाङ्ग-व्रताङ्गैरनुपात्तैः स्यात् ।

**स्मृतिनाशो मदश्च तैः ॥२९॥**

मद्यं हि पिवतः कार्या[1]कार्यस्मृतिरेव नश्येत् । उच्चशयनमहाशयननृत्तगीतादिकं प्रतिसेवमानस्य[2] मदः संभवेत् । मत्तस्य च दौःशील्यमदूरं भवेत् । काले [20a. 12A. V] पुनर्भुञ्जानस्योचितभक्तकालपरिहारादुपवासस्मृतिः संवेग[3]श्चोपष्ठितेत् । तदभावादुभयं न स्यादिति । केचित्तु खल्वकालभोजनात् प्रतिविरति-मेवोपवासं मन्यन्ते । तस्य शेषाण्यष्टाङ्गानीति । नृत्यगीतवादित्रं गन्धमाल्य-विलेपनं च द्वयं कृत्वा । एवं तु सति सूत्रपाठो न युज्येत । अकालभोजनाद्विरति-मुक्त्वा "अनेनाहमष्टमाङ्गेन तेषामार्याणामर्हतां शिक्षायामनुशिक्षे अनुविधीय" इति । कस्तर्हि सोऽन्य उपवासो यस्येमान्यङ्गानि[4] । समुदायस्यावयवा अङ्गानि । यथा रथस्याङ्गानि चतुरङ्गो वलकायः पञ्चाङ्गं तूर्यं तथाऽष्टाङ्ग उपवासो द्रष्टव्यः । अकालभोजनात् प्रतिविरतिरुपवास उपवासाङ्गं च यथा सम्य[5]ग्दृष्टिर्मार्गो[6] मार्गाङ्गं च । धर्मप्रविचयसंबोध्यङ्गं वोधिर्वोध्यङ्गं समाधिर्ध्यानं ध्यानाङ्गं[7] चेति वैभाषिकाः । ननु तेषामेव सम्यग्दृष्टयादीनां त एवाङ्गत्वाय कल्पन्त इति । पूर्वकाः सम्यग्दृष्टयादय उत्तरेषामङ्गं यदि स्युः प्रथमक्षणोत्पन्न आर्यमार्गो नाष्टाङ्गः स्यात् ।

किं खल्वयमुपवासकस्यैवोपवास आहोस्विदन्यस्यापि ।

**अन्यस्याप्युपवासोऽस्ति शरणं त्वगतस्य न ।**

अनुपवासकोऽपि यस्तमहोरात्रं[8] बुद्धधर्मसंघान् श [20b. 12B. V] रणं[9]

१. MS. काया । २. MS. प्रतिषेध.... । ३. MS. सम्वेश । ४. MS. यस्येयमांगानि । ५. MS. सम्यक् । In this MS. he always writes सम्यक् as in the following cases । ६. MS. दृष्टिमार्गो । ७. MS. समाधिर्ध्यानांगं । ८. MS.... रात्र । ९. MS. सरणं ।

गत्वोपवासं गृह्णाति तस्योत्पद्यते उपवाससंवरो नान्यथा। अन्यत्राज्ञानात्। सूत्र उक्तं "यतश्च महानामन् गृही अवदातवसनः पुरुषः पुरुषेन्द्रियेण समन्वागतो बुद्धं शरणं गच्छति धर्मं संघं शरणं गच्छति वाचं च भाषते उपवासकं च मां धारय। इयता उपवासको भवती"ति। तत् किं शरणगमनादेवोपवासको भवति। भवतीति बहिर्देशकाः[1]। न विना संवरेणेति काश्मीराः। यर्त्तांह सूत्र उक्तम्। नास्त्यत्र[2] विरोधः। यस्मादस्योत्पद्यते तत एव

उपासकत्वोपगमात्संवृत्[3]

उपासकत्वाभ्युपगमादेवास्योपासकसंवरो जायते। "यदेवाभ्युपगच्छत्युपासकं मां धारयेत्याद्यग्रेण[4] यावज्जीवं प्राणापेतमि"ति। प्राणातिपाताद्यपेतमित्यर्थो मध्यपदलोपात्। लघुसंवरस्यापि व्युत्पादनार्थं शिक्षापदानाम्

उक्तिस्तु भिक्षुवत् ॥३०॥

यथैवं भिक्षुर्लब्धसंवरोऽपि पुनः शिक्षापदानि ग्राह्यते श्रामणेरश्च व्युत्पादनार्थमित[5]श्चामुतश्च ते[6] संवर इति तथोपवासकोऽपि न तु विना संवरेणोपासकोऽस्ति।

सर्वे चेत् संवृता एकदेशकार्यादयः कथम्।

यदि सर्व एवोपासका उपासकसंवरस्थाः कथं भगवता एकदेश-[21a. 12A. VI] कारी प्रदेशकारी[7] यद्भूयःकारी[8] परिपूर्णकारो चोपासक उक्तः।

तत्पालनात् किल प्रोक्ताः

यो हि यच्छिक्षापदं पालयति स तत्कारीत्युक्तः। सर्वे तु समं संवरस्थाः। इदमुत्सूत्रं वर्तते। किमत्रोत्सूत्रम्। उपासकत्वाभ्युपगमादेव संवरलाभो यस्मात् प्राणातिपातमित्याहेति। न ह्येवं सूत्रपाठः उक्तो यथा महानामसूत्रे पाठः[9]। तत्रैव चोपासकलक्षणोपदेशो नान्यत्र। यत्र त्वेष पाठो "यावज्जीवं प्राणापेतं शरणगतमभिप्रसन्नमि"ति। तत्र[10] ते दृष्टसत्या[11] "अवेत्यप्रसादान्वयं प्राणैरपि सद्धर्मोपगमनं स्म। जीवितहेतो[12]रप्यभव्या वयमेनं धर्मं परित्यक्तु"मिति। न त्वेष लक्षणोपदेशः संवरस्य। प्राणापेतं तु न क्वचित् पठ्यते। कश्चैतदपरि-

१. MS. बहिर्देशकः। २. Y. adds सूत्र। ३. MS. संवृतः। ४. MS. धारयोद्याग्रेण। ५.....मितिश्चा...। ६. Y. तव। ७. MS. drops प्रदेशकारो। ८. MS. यत् भूयःकारी। ९. Y....सूत्रपाठः। १०. Y. ततस्ते। ११. Y. adds पुद्गलाः। १२. Y. omits स्म जीवितहेतोः।

स्फुटार्थं पठेत्। एकदेशकार्यादींस्तु खण्डितशिक्षानधिकृत्य प्रश्न एव न युज्यते। कुतो विसर्जनमावेणिकधर्माणाम्[1]। को ह्युपासकसंवरं जानन् एतन्न ज्ञास्यते यो हि यच्छिक्षापदं न खण्डयति स तत्कारी भवतीति। उपासकसंवरस्य तु परिमाणानभिज्ञांस्तन्मात्रशिक्षाक्षमान्[2] प्रत्येष प्रश्नो युज्यते। "कियता भदन्तोपासक एकदेशकारी भवति यावत् परिपूर्णकारी भवति।" य-[21b. 12B. VI] दि तर्हि विना संवरेणोपासकः स्याद्विकलेन वा भिक्षुश्रामणेरावपि स्याताम्। कथं तावदेषामुपासकसंवरादीनामङ्गप्रतिनियमो भवति। शास्तृप्रज्ञप्तिवशात्। उपासकत्वादिप्रतिनियमोऽपि शास्तृप्रज्ञप्तिवशादिष्यताम्। विनापि हि संवरेणोपासकः प्रज्ञप्तितो न तु भिक्षुश्रामणेराविति ते त्वेतन्नेच्छन्ति काश्मीराः। सर्वेषां तु संवराणाम्

**मृद्वादित्वं यथा मनः ॥३१॥**

मृदुमध्याधिमात्रत्वं ससंतानचित्तवशात्। एवं च कृत्वाऽर्हतोऽपि मृदुः प्रातिमोक्षसंवरः स्यात् पृथग्जनस्याधिमात्रः। किं पुनः संवरग्रहणादेवोपासकः स्याद्विना शरणगमनैः। न स्यादन्यत्राज्ञानात्।

यो बुद्धधर्मसंघाञ्छरणं गच्छति किमसौ शरणं गच्छति।

**बुद्धसंघकरान्धर्मानशैक्षानुभयांश्च सः।**
**निर्वाणं चेति शरणं यो याति शरणत्रयम् ॥३२॥**

यो बुद्धं शरणं गच्छति अशैक्षानसौ बुद्धकरकान्धर्माञ्छरणं गच्छति येषां प्राधान्येन स आत्मभावो बुद्ध[3] इत्युच्यते येषां वा लाभेन सर्वावबोधसामर्थ्याद्बुद्धो भवति। के पुनस्ते। क्षयज्ञानादयः सपरिवाराः। रूपकायस्य पूर्वं पश्चाच्चाविशेषात्। किं सर्वबुद्धानथैकम्। लक्षणतः सर्वबुद्धान्। मार्गस्या-[22a. 12A. VII] विलक्षणत्वात्। यः संघं शरणं गच्छति शैक्षाशैक्षानसौ संघकरकान्धर्मान् गच्छति येषां लाभेनाष्टौ पुद्गलाः संघीभवन्ति। अभेदत्वात्[4]। किं सर्वसंघानथैकम्। लक्षणतः सर्वसंघान्मार्गस्याविलक्षणत्वात्। यत्तु सूत्र उक्तं "योऽप्यसौ[5] भविष्यत्यनागतेऽध्वनि संघो नाम तमपि शरणं गच्छतमि"-ति। तत्प्रत्यक्षभाविनः संवरत्वस्योद्भावनार्थम्। यो धर्मं शरणं गच्छति असौ निर्वाणं शरणं गच्छति प्रतिसंख्यानिरोधम्। स्वपरसंतानक्लेशानां दुःखस्य च शान्त्येकलक्षणत्वात्। यद्यशैक्षा धर्मा एव बुद्धः कथं तथागतस्यान्तिके दुष्टचित्तरुधिरोत्पादनादानन्तर्यं भवति। आश्रयविपादनात्तेऽपि विपादिता

१. MS. विसर्ज्जनं। आवेणिक....। २. Y.....क्षमां। ३. MS. बद्ध। ४. Y. अभेद्यत्वात्। ५. Y. योऽसौ।

भवन्तीति वैभाषिकाः। शास्त्रं तु नैवं वाचकमशैक्षा धर्मा एव बुद्ध इति। किं तर्हि। बुद्धकरका इति। अत आश्रयस्य बुद्धत्वाप्रतिषेधादचोद्यमेवैतत्। अन्यथा हि लौकिकचित्तस्थो न बुद्धः स्यान्न संघः शीलमेव च[1] भिक्षुकरकं भिक्षुः स्यात्। यथा तु यो भिक्षून् पूजयति भिक्षुकरकमसौ शीलं पूजयति। एवं यो बुद्धं शरणं गच्छत्यशैक्षानसौ बुद्धकरकान्धर्मान् शरणं गच्छति। यो बुद्धं शरणं गच्छति सोऽष्टादशावेणिकान्बु-[22b. 12B. VII]द्धधर्मानित्यपरे। किंस्वभावानि शरणगमनानि। वाग्विज्ञप्ति[2]स्वभावानि। कः पुनः शरणार्थः। त्राणार्थः शरणार्थः। तदाश्रयेण सर्वदुःखात्यन्तनिर्मोक्षात्[3]। उक्तं हि भगवता

"वहवः शरणं यान्ति पर्वतांश्च वनानि च
आरामान्वृक्षांश्चैत्यांश्च[4] मनुष्या भयवर्जिताः[5] ॥

न त्वे[6]तच्छरणं श्रेष्ठं नैतच्छरणमुत्तमम्।
नैतच्छरणमागम्य सर्वदुःखात्प्रमुच्यते ॥

यस्तु बुद्धं च धर्मं च संघं च शरणं गतः।
चत्वारि चार्यसत्यानि पश्यति प्रज्ञया यदा ॥

दुःखं दुःखसमुत्पादं दुःखस्य समतिक्रमम्।
आर्यं चाष्टाङ्गिकं मार्गं क्षेमं निर्वाणगामिनम् ॥

एतद्धि शरणं श्रेष्ठमेतच्छरणमुत्तमम्।
एतच्छरणमागम्य सर्वदुःखात् प्रमुच्यते ॥" इति।

अतएव शरणगमनानि सर्वसंवरसमादानेषु द्वारभूतानि।

किं पुनः कारणमन्येषु संवरेष्वब्रह्मचर्याद्विरतिः शिक्षापदं व्यवस्थापितम् उपासकस्य तु काममिथ्याचारात्।

**मिथ्याचारातिगर्ह्यत्वात्सौकर्यादक्रियाप्तितः।**

काममिथ्याचारो हि लोकेऽत्यन्तं गर्हितः। परेषां दारोपघातादापायिकत्वाच्च। न तथाऽब्रह्मचर्यम्। सुकरा च काममिथ्याचाराद्विरतिर्गृहानध्यावसतां दुष्करा त्वब्रह्मचर्यादिति दुष्करं कर्तुं नोत्सहेरन्। आ-[23a. 12A. VIII]र्याश्चा-करणसंवरं काममिथ्याचारात् प्रतिलभन्ते। जन्मान्तरेष्वप्यनध्याचरणान्नत्वब्रह्म-चर्यादित्युपासकस्यापि तस्मादेव विरतिः शिक्षापदं व्यवस्थापितं मा भूत्

१. Y. स। २. D. adds तत्समुत्थितधर्म। ३. D. विमोक्षात्। ४. Y. D. चैत्य-वृक्षांश्च। ५. D. तर्जिताः। ६. D. न चै।

परिवृत्तजन्मान्तरः शैक्ष उपासकसंवराङ्गेष्वसंवृत इति । अक्रियानियमो ह्यकरणसंवरः । य उपासकाः सन्तो भार्याः परिणयन्ति किं तैस्ताभ्योऽपि संवरः प्रतिलब्धोऽथ न । प्रतिलब्धो मा भूत् प्रादेशिकसंवरलाभ इति । कथं संवरक्षोभो न भवति । यस्मात्

**यथाभ्युपगमं लाभः संवरस्य न संततेः ।।३३।।**

यथा ह्येषामभ्युपगमस्तथा संवरलाभः । कथं चैषामभ्युपगमः । काममिथ्याचाराद्विरमामीति । न त्वत्र संताने मया ब्रह्मचर्यं न कर्तव्यमित्यत एवैषां तदधिष्ठात्काममिथ्याचाराङ्गादेव संवरलाभो नाब्रह्मचर्यादिति नास्ति भार्यीभूतायां संवरक्षोभः ।

अथ कस्मात्[1] मृषावादाद् विरतिरेवोपासकसंवरशिक्षापदं न पैशुन्यादिविरतिः । एभिरेव च त्रिभिः कारणैः ।

"मृषावादातिगर्ह्यत्वात् सौकर्यादक्रियाप्तितः ।"

**मृषावादप्रसङ्गाच्च सर्वशिक्षाव्यतिक्रमे[2] ।**

सर्वत्र हि शिक्षातिक्रमे समनुयुज्यमानस्योपस्थितमिदं भवति नाहमेवमहा [23b. 12B. VIII]र्षमिति मृषावादस्य प्रसङ्गो भवत्यतो मृषावादाद्विरतिर्विधीयते कथं कृतातिक्रमोऽप्यात्मनि माविष्कुर्यादिति । किं पुनः कारणं प्रतिक्षेपणसावद्याच्छिक्षापदस्य न व्यवस्थापितम् ।

**प्रतिक्षेपणसावद्यान्मद्यादेव**

किं कारणं मद्यादेव नान्यस्मात् ।

**अन्यगुप्तये ।।३४।।**

मद्यं पिबतोऽन्यान्यप्यङ्गान्यगुप्तानि स्युः । कथं पुनर्मद्यपानं प्रतिक्षेपणसावद्यं गम्यते । प्रकृतिसावद्यलक्षणाभावात् । प्रकृतिसावद्यं हि क्लिष्टेनैव चित्तेनाध्याचर्यते । शक्यं तु मद्यं प्रतीकारबुद्ध्यैव पातुं यावन्न मदयेत् । क्लिष्टमेव तच्चित्तं यन्मदनीयं ज्ञात्वा पिबति । न तत् क्लिष्टं यदमदनीयमात्रां विदित्वा पिबति । प्रकृतिसावद्यं मद्यमिति विनयधराः । "कथं भदन्त ग्लान उपस्थातव्यः । प्रकृतिसावद्यमुपालिन्[3] स्थापयित्वा" इत्युक्तं भगवता । शाक्येषु च ग्लानेषु मद्यपानं नाभ्यनुज्ञातम् । इदं चोक्तं "मां भिक्षवः शास्तारमुद्दिशद्भिः कुशाग्रेणापि मद्यं न पातव्यमि" त्यतः प्रकृतिसावद्यमिति ज्ञायते । आर्यैश्च जन्मान्तरगतैरप्यनध्याचारात् । प्राणिवधादिवत् । कायदुश्चरितवचनाद्दुर्गतिगमनाच्चेति । नेत्याभिधार्मिकाः ।

---

१. MS. कस्मात्मृषा.... । २. G. ....म्यतिक्रमे । ३. Y. reads उपाले and notes उपालि MSS. ।

उत्सर्गविहितस्यापि-[24a. 12A1. I]ग्लानेषु प्रज्ञप्तिसावद्यस्य पुनर्मद्यस्यापवादः प्रसङ्गपरिहारार्थं मदनीयमात्रानियमनात्[1]। अत एव[2] कुशाग्रपानप्रतिषेधः। आर्यैरनध्याचरणं ह्रीमत्त्वात्तेन च स्मृतिनाशात्। अल्पकस्याप्यपानमनियमाद्विषवत्। दुश्चरितवचनं प्रमादस्थानत्वात्। अत एवात्र[3] प्रमादस्थानग्रहणं नान्येषु तेषां प्रकृतिसावद्यत्वात्। अत्यासेवितेन दुर्गतिगमनाभिधानम्। तत्प्रसङ्गेनाभीक्ष्णमकुशलसंततिप्रवृत्तेरापायिकस्य कर्मण आक्षेपाद्वृत्तिलाभाद्वा। सुरामैरेयमद्यप्रमादस्थानमिति कोऽर्थः। सुरा अन्नासवः[4]। मैरेयं द्रवासवः[5]। ते च[6] कदाचिदप्राप्तच्युत[7]मद्यभावे भवतः इत्यतो मद्यग्रहणम्। पूगफलकोद्रवादयोऽपि मदयन्तीति सुरामैरेयग्रहणम्। प्रज्ञप्तिसावद्यस्यादरेण प्रहेयत्वे कारण[8]ज्ञापनार्थं प्रमादस्थानवचनम्। सर्वप्रमादास्पदत्वादिति।

य इमे त्रयः प्रतिमोक्षध्यानानास्रवसंवराः किमेषां यत एको लभ्यते ततः शेषौ[9]। नेत्याह। किं तर्हि।

**सर्वोभयेभ्यः कामाप्तो वर्तमानेभ्य[10] आप्यते।**

वर्तमानेभ्य एव स्कन्धायतन[11] धातुभ्यः[12] कामाप्त इति प्रातिमोक्षसंवरः। सर्वेभ्य इति मौलप्रयोगपृष्ठेभ्यः। उभयेभ्य [24b. 12B1. I] इति सत्त्वासत्त्वाख्येभ्यः प्रकृतिप्रतिक्षेपणसावद्येभ्यश्च वर्तमानेभ्य एव स्कन्धायतनधातुभ्यो लभ्यते। सत्त्वाधिष्ठानप्रवृत्तत्वात् नातीतानागतेभ्यः। तेषामसत्त्वसंख्यातत्वात्।

**मौलेभ्यः सर्वकालेभ्यो ध्यानानास्रव[13]संवरौ ॥३५॥**

मौलेभ्य एव कर्मपथेभ्यो ध्यानानास्रवसंवरौ लभ्येते न प्रयोगपृष्ठेभ्यः कुत एव प्रज्ञप्तिसावद्येभ्यः सर्वकालेभ्यश्च स्कन्धायतनधातुभ्यो लभ्येते[14] अतीतानागतेभ्योऽपि। अत एव चतुष्कोटिकं क्रियते। सन्ति तानि स्कन्ध[15]धात्वायतनानि येभ्यः प्रातिमोक्षसंवरः एव लभ्यते न ध्यानानास्रवसंवराविति विस्तरः। प्रथमा कोटिः प्रत्युत्पन्नेभ्यः सामन्तकपृष्ठेभ्यः प्रतिक्षेपणसावद्याच्च। द्वितीयाऽतीतानागतेभ्यो मौलेभ्यः कर्मपथेभ्यः। तृतीया प्रत्युत्पन्नेभ्यो मौलेभ्यः कर्मपथेभ्यः।

---

१. MS. मात्राणि नियममात्। Y. मात्रानियमात्। २. Y. adds च। ३. Y. अत्रैव। ४. MS. अन्नसावः। ५. MS. द्रव्यासवः। ६. Y. वा। ७. Y. प्रच्युत। ८. MS. कारणं। ९. MS. शेषो नेत्याह। D. शेषा अपीति। १०. MS. मानेभ्यः। ११. MS. drops न। १२. MS. ....धातुभ्यो। १३. MS....ध्यानानामेव। १४. MS. लभ्यते। १५. MS. drops न्ध।

चतुर्थ्यतीतानागतेभ्यः सामन्तकपृष्ठेभ्यः इति । ननु संवरकाले वर्तमानाः कर्मपथाः सन्तीति वर्तमानाधिष्ठानेभ्यः इति वक्तव्यम् । अनागतानामेव संवरणं युज्यते नातीतवर्तमानानाम् ।

अथ किं संवरासंवरौ सर्वसत्त्वेभ्य एव लभ्येते सर्वाङ्गेभ्यः सर्वकारणैश्च आहोस्विदस्ति भेदः । नियतं तावत् लभ्यते [25a. 12A1. II]

**संवरः सर्वसत्त्वेभ्यो विभाषा त्वङ्गकारणैः ।**

**सर्वसत्त्वेभ्य** एव[1] **संवरो** लभ्यते[2] केभ्यश्चित् अङ्गेभ्यस्तु **विभाषा** । कश्चित् सर्वेभ्यो लभ्यते । भिक्षुसंवरः । कश्चिच्चतुर्भ्यः । ततोऽन्यः । कर्मपथा हि संवरस्याङ्गानि । कारणैरपि केनचित् पर्यायेण सर्वैः केनचिदेकेन । केन[3] तावत्सर्वैः । यद्यलोभाद्वेषामोहाः कारणानीष्यन्ते । केनै[4]केन । यदि मृदुमध्याधिमात्राणि चित्तानि कारणानीष्यन्ते । [5]पश्चिमं पर्यायं नियमय्योच्यते[5] अस्ति संवरस्थायी सर्वसत्त्वेषु संवृतो न सर्वाङ्गैः[6] न सर्वकारणैः । यो मृदुना चित्तेन मध्येनाधिमात्रेण वा उपासकोवास श्रामणेरसंवरं समादत्ते । अस्ति सर्व[7]सत्त्वेषु संवृतः सर्वाङ्गैश्च न तु सर्वकारणैः । यो मृदुना चित्तेन मध्येनाधिमात्रेण वा भिक्षुसंवरं समादत्ते । अस्ति सर्वसत्त्वेषु सर्वाङ्गैः सर्वकारणैश्च । यस्त्रिविधेन चित्तेन त्रीन् संवरान् समादत्ते । अस्ति सर्वसत्त्वेषु सर्वकारणैश्च न तु सर्वाङ्गैः । य उपासकोपवासश्रामणेरसंवरान्मृदुमध्याधिमात्रैः[8] समादत्ते । यस्तु न सर्वसत्त्वेषु स्यादीदृशो नास्ति । यस्मात्सर्वसत्त्वानुगते[9] कल्याणाशये स्थितः संवरं प्रतिलभते नान्यथा पापाशयस्यानुपरतत्वात् । पञ्च नियमा-[25b. 12B1. II]न् कुर्वन् प्रातिमोक्षसंवरं प्रतिलभते[10] । सत्त्वाङ्गदेशकालसमयनियमात् । अमुष्मात्सत्त्वाद्विरमामीति सत्त्वनियमः । अमुष्मादङ्गादित्यङ्गनियमः । अमुष्मिन् देश इति देशनियमः । मासाद्यावदिति कालनियमः । अन्यत्र युद्धादिति समयनियमः । सुचरितमात्रं तु[11] स्यात्तथा[12] गृह्णतः[13] । कथमशक्येभ्यः संवरलाभः । सर्वसत्त्वजीवितानुपघाताध्याशयेनाभ्युपगमात् । यदि पुनः शक्येभ्य एव संवरो लभ्यते चयापचययुक्तः स्यात् । शक्याशक्यानामितरेतरसंचारात् । एवं च सति विनापि लाभत्यागकारणाभ्यां संवरस्य लाभत्यागौ स्यातामिति वैभाषिकाः । नैवं भविष्यति । यथा ह्यपूर्वतृणाद्युत्पत्तौ शोषे वा संवरस्य वृद्धिह्रासौ न भवतस्तथा शक्याशक्यसंचारेऽपि न

१. D. खलु । २. D. adds न (supported by Chinese). In that case one full stop or coma is required after केभ्यश्चित् । ३. D. कथम् । ४. D. कथम् । ५....५. D. पश्चिमेन पर्यायेण नियम्योच्यते । ६. MS. सर्वांगै । ७. MS. सर्वं । ८. D. adds चित्तैः । ९. D. ....गत । १०. D. लभते । ११. D. adds तत् । १२. D. एवं । १३. D. adds न संवरः ।

स्याताम्। न सत्त्वानां पूर्वं पश्चाच्च भावात्तृणादीनां त्व[1]भावात्। को न्वत्र विशेषो न वा[2] भवेदसत्सु तृणादिषु संवरस्तद्वदशक्यो वा भवेत्। यदा च[3] परिनिर्वृता न भवन्त्येव[4] तदा[5] कथं संवरह्रासो न स्यादिति नैष युक्तः परिहारः। तस्मात्पूर्वक एव परिहारः[6] साधुः। एवं तर्हि पूर्वबुद्धपरिनिर्वृतेभ्य उत्तरेषां बुद्धानां प्रातिमोक्षसंवरस्या[7]लाभात्कथं शीलन्यूनता न प्र-[26a. 12A1. III] सज्येत। सर्वेषां सत्त्वेभ्यो लाभात्। यदि हि तेऽप्य[8]भविष्यं[9]स्तेभ्योऽपि तेऽलप्स्यन्त। उक्तं यतः[10] संवरो लभ्यते।

**असंवरस्तु सर्वेभ्यः सर्वाङ्गेभ्यो न कारणैः ॥३६॥**

असंवरस्तु सर्वसत्त्वेभ्यो लभ्यते सर्वकर्मपथेभ्यश्च। नास्ति हि विकलेनासंवरेणासंवरिकः। न तु सर्वकारणैर्युगपत्[11] मृद्वादिचित्तासंभवात्। यो मृदुना चित्तेनासंवरं प्रतिलभते सोऽधिमात्रेणापि चित्तन प्राणिनं[12] जीविताद्व्यपरोपयन्मृदुनैवासंवरेण समन्वागतो भवत्यधिमात्रया तु प्राणातिपातविज्ञप्त्या। एवं मध्याधिमावेण योज्यम्। तत्रेमे आसंवरिकास्तद्यथा औरभ्रिकाः कौक्कुटिकाः[13] सौकरिकाः शाकुनिका[14] मात्सिका मृगलुब्धकाश्चौरा वध्यघातका बन्धनपालका नागबन्धकाः[15] श्वपाका वागुरिकाश्च। राजानो दण्डनेतारो व्यावहारिकाश्चार्थत[16] आसंवरिकाः[17] असंवरे भवत्वात् तत्रस्थतया असंवर एषामस्तीति आसंवरिका वा। उरभ्रान् घ्नन्तीति औरभ्रिकाः। एवमन्येऽपि योज्याः। युक्तस्तावत् संवरस्य सर्वसत्त्वेभ्यो लाभः। सर्वसत्त्वहिताध्याशयेन ग्रहणात्। औरभ्रिकादीनां तु मातापितृपुत्रदारादिष्वविपन्नाशयानां जीवितहेतोरप्यहन्तुकामानां कथमसंवरः सर्व-[26b.12B1.III] सत्त्वेभ्यो युज्यते। मात्रादीनपि हि त उरभ्रीभूतान् हन्युः। न हि तावत्ते त एव[18] इति विद्वांसो हन्युः। आर्यीभूतानां च पुनः पशु[19]भवितुं नास्त्यवकाश इति तेभ्यः कथं स्यात्। यदि चा[20]नागतात्मभावापेक्षया वर्त्तमानादसंवृतः स्यादुरभ्रादीनपि ते पुत्रीभूतात् सर्वथा न हन्युरिति न स्यात्तेभ्योऽसंवरः। कथं हि नाम जिघांसतामेव

---

१. Y. चाभावात्। २. MS. looks न त्रा। ३. Y. omits च। ४. Y. सन्त्येवं। ५. MS. तथा। ६. Y. हेतुः। ७. Y. तस्य। ८. Y. adds अपरिनिर्वृताः। ९. Y. अभविष्यत् and after this adds संप्रति। १०. D. यथा। ११. MS....पत्मृद्वा...। १२. Y. seems to be प्राणिनः। १३. Y. seems to be कौर्कुटिकाः। १४. D. शाकुन्तिकाः। १५. Y. D. नागवन्धाः। १६. D. नीतिचालिता in place of अर्थतः। १७. D. असांवरिकाः। १८. Y. त एव ते। १९. Y. पशूभवितुं। २०. Y. वा।

तेभ्यो न स्यादसंवरः । एतन्मात्रादिषु समानम् । कथं हि नामाजिघांसतामेव तेभ्यः स्यादसंवर इति । यश्चौरभ्रिको जन्मनाप्यादत्ते[1] स्वदारपरितुष्टो मूकश्च । कथमस्य पूर्वाङ्गेभ्योऽसंवरः स्यात् । आशयस्याविपन्नत्वात् । मूकोऽपि च वाक्प्रापणीयमर्थं कायेन प्रापयितुं शक्त इति । यस्तर्हि द्वे त्रीणि वा शिक्षापदानि समादत्ते । सर्वथा नास्ति विकलः प्रादेशिकश्चासंवरिक इति वैभाषिकाः । यथाभ्युपगमं विकलोऽपि स्यात् प्रादेशिकोऽप्यसंवरः संवरश्चान्यत्राष्टविधादिति सौत्रान्तिकाः । तन्मात्रशील[2]दौःशील्यप्रतिवन्धात् ।

उक्तमिदमसंवरस्य येभ्यो लाभः । कथं तु लाभ इति नोक्तम् । तत इदमुच्यते

**असंवरस्य क्रियया लाभोऽभ्युपगमेन वा ।**

द्वाभ्यां कारणाभ्यामसंवरो लभ्यते । वधप्रयोगक्रियया तत्कुली-[27a.12A.IV]-नैः तत्कर्माभ्युपगमाच्चान्यत्र कुलीनैः । वयमप्यनया जीविकया जीविष्याम इति ।

**शेषाविज्ञप्तिलाभस्तु क्षेत्रादानादरेहनात् ।।३७।।**

क्षेत्रं वा तद्रूपं भवति यत्रारामादिप्रदानमात्रेणाविज्ञप्तिरुत्पद्यते । यथौपधिकेषु पुण्यक्रियावस्तुषु । [3]अथवा समादानमादत्ते[3] बुद्धमवन्दित्वा न भोक्ष्ये तिथि[4]-मासार्धमासभक्तानि वा नित्यं करिष्यामीत्यादि । आदरेण[5] तद्रूपेण क्रियामीहते कुशलामकुशलां वा यतोऽस्याविज्ञप्तिरुत्पद्यते । उक्तमेतद्यथा संवरासंवरेतराणां[6] प्रतिलम्भः ।

त्याग इदानीं वक्तव्यः । तत्र तावत्

**प्रातिमोक्षदमत्यागः शिक्षानिक्षेपणाच्च्युतेः ।**
**उभयव्यञ्जनोत्पत्तेर्मूलच्छेदान्निशात्ययात् ।।३८।।**

दाम्यन्त्यनेनेति दमः संवरोऽभिप्रेतस्तेनेन्द्रियदमनात् । चतुर्भिः कारणैः प्रातिमोक्षसंवरस्य त्यागः । स्थापयित्वोपवासम् । शिक्षापदानां विज्ञपुरुषस्यान्तिके प्रत्याख्यानदाशयतः निकायसभागत्यागात् युगपदु[7]भयव्यञ्जनप्रादुर्भावात् कुशलमूलसमुच्छेदाच्च । उपवाससंवरस्य त्वेभिश्चर्भिरारात्रिक्षयाच्च । तान्येतान्यभिसमस्य पञ्च त्यागकारणानि भवन्ति । किं पुनः कारणमेभिः कारणैस्त्यागो भवति । समादानविरुद्धविज्ञप्त्युत्पादा-[27b. 12B1. IV]दाश्रयत्यागादाश्रयविकोपनान्निदानच्छेदात्तावदेवाक्षेपाच्च ।

---

१. MS.....प्यदत्ते । २. MS.....शीला....। ३....३. D. आदरेण वा समादत्ते । ४. D. इति । ५. D. adds वा । ६. D. संवरासंवराणां । ७. MS. युगुप ।

**पतनीयेन चेत्येके**

अन्ये पुनराहुश्चतुर्णां पतनीयानामन्यतमेन भिक्षुश्रामणेरसंवरत्याग इति ।

**सद्धर्मान्तर्धितोऽपरे ।**

सद्धर्मस्यान्तर्धानादित्य[1]परे । यस्मादन्तर्हिते सद्धर्मे सर्वशिक्षासीमाकर्मान्ताः प्रतिप्रस्रभ्यन्त इति ।

**धनर्णवत्तु काश्मीरैरापन्नस्येष्यते द्वयम् ॥३९॥**

काश्मीरास्तु खलु वैभाषिकाः एवमिच्छन्ति । न मौलीमध्यापत्तिमा[2]पन्नस्यास्ति भिक्षुसंवरत्यागः । किं कारणम् । न ह्येकदेशक्षोभात् कृत्स्न[3]संवरत्यागो युक्त इति । नैव चान्यामप्यापत्ति[4]मापन्नस्यास्ति शीलच्छेदः । किं तर्हि । द्वयमस्य भवति शीलं दौःशील्यं च । यथा कस्यचिद्धनं स्यादृणं च । आविष्कृतायां तु तस्यामापत्तौ शीलवान्भवति न दुःशीलो यथा ऋणं शोधयित्वा धनवान्भवति न त्वृणवा[5]निति । यत्तर्हि भगवतोक्तम् "भिक्षुर्भवत्यश्रमणोऽशाक्यपुत्रीयो ध्वस्यते भिक्षुभावात् ।" कतमस्य भवति श्रामण्यं ध्वस्तं पतितं पराजितमिति । परमार्थभिक्षुत्वं संधायैतदुक्तम् । इदमभिसाहसं वर्तते । किमत्राभिसाहसम् । यत् भगवता नीतार्थं पुनरन्यथा नीयते । दौःशील्याय च वहुक्लेशेभ्यः प्रत्यया दीयन्ते । कथमेत[6]न्नीतार्थम् । एष हि विन [28a. 12A. V] ये निर्देशः । "चतुर्विधो भिक्षुः । संज्ञाभिक्षुः प्रतिज्ञाभिक्षुर्भिक्षत इति भिक्षुर्भिन्नक्लेशत्वात् भिक्षुः । अस्मिंस्त्वर्थे ज्ञप्तिचतुर्थकर्मो[7]पसंपन्नो भिक्षुरि"ति । न चासौ पूर्वं परमार्थभिक्षुरासीद्यतः पश्चादभिक्षुर्भवेत् . यच्चोक्तमेकदेशक्षोभादिति अत्र शास्त्रैव[8] दत्तोऽनुयोग "स्तद्यथा तालो मस्तकाच्छिन्नोऽभव्योऽङ्कुरितत्वाय अभव्यो विरूढि वृद्धि विपुलतामाप्तु[9]"मित्युपमां[10] कुर्वता । कः पुनरुपमार्थः । एवमेकदेश[11]स्यापि मूलभूतस्य च्छेदादभव्यः संवरशेषो विरोढुमिति । स च गुर्वी भिक्षुभावमर्यादाभेदिनीं मौलीमापत्तिमापद्यमानस्तीव्रानपत्राप्ययोगात्संवरस्य मूलं च्छिनत्तीति युक्तः कृत्स्नसंवरत्यागः[12] । यस्य चैकग्रासपरिभोगोऽप्येकपाद[13]पार्ष्णिप्रदेशपरिभोगोऽपि

---

१. MS. drops त्य । २. Y. अप्यापत्तिम् । ३. Y. सकल । ४. Y. adopts the reading चान्यापत्तिम् । ५. MS. तृणवान् । ६. MS. drops त । ७. Y. omits कर्म्मं । ८. MS शास्त्रेव । ९. MS. मात्तु.... । १०. MS. ...मेत्युपमां । ११. MS. एवमेकादेश । १२. MS. कृत्संवर.... । १३. Y. omits पाद ।

च नाभ्यनुज्ञायते सांघिकयोराहारविहारयोः सर्वभिक्षुसंभोगबहिष्कृतश्च शास्त्रा यं चाविकृत्योक्तं

"नाशयत कारण्डवकं कशम्बकमपकर्षत ।
अथोत्प्लाविनं वाहयत अभिक्षुं भिक्षुवादिन"मिति

तस्य कीदृशो भिक्षुभावः । यादृशस्तादृशोऽस्तु । अस्ति तु भिक्षुभावः । तथाहि
"चत्वारः श्रमणा न पञ्चमोऽस्ति चुन्दे"ति

भगवानवोचत्

"मार्गजिनो मार्गदेशिको[1] मार्गे जीवति [28b. 12B1. V] यश्च मार्गदूषी" अस्त्येतदुक्तम् । स त्वेष आकृतिमात्रावशेषत्वाच्छ्रमण[2] उक्तो दग्धकाष्ठशुष्कह्रदशुकनाशा[3]पूतिबीजालातचक्रमृतसत्त्ववत् । यदि हि दौःशील्यादभिक्षुः स्यात् शिक्षादत्तको न स्यात् । न वयं ब्रूमः सहाध्यापत्त्या सर्वः पाराजिकः इति । यस्तु पाराजिकः सोऽवश्यमभिक्षुः । कश्चित्तु संतानविशेषान्न पाराजिक एकचित्तेनाप्यप्रतिच्छादनादिति व्यवस्थापितं धर्मस्वामिना । यदि तर्हि पाराजिको न भिक्षुः किं पुनर्न[4] प्रव्राज्यते । तीव्रानपत्राप्यविपादितत्वात् संततेः संवराभव्यत्वान्न तु खलु भिक्षुभावापेक्षया । तथा ह्यसौ निक्षिप्तशिक्षोऽपि न प्रव्राज्यते । कश्चायमनर्थनिर्बन्धो यद्यसौ तथाभूतोऽपि भिक्षुर्नमोऽस्तु तस्मै तादृशाय भिक्षुत्वाय । सद्धर्मान्तर्धाने तु विनयकर्माभावादपूर्वसंवरलाभो नास्ति । लब्धस्य तु नास्ति त्यागः ।

अथ ध्यानानास्रवसंवरयोः कथं त्यागः ।

**भूमिसंचारहानिभ्यां[5] ध्यानाप्तं त्यज्यते शुभम् ।**

सर्वमेव[6] ध्यानाप्तं कुशलं द्वाभ्यां कारणाभ्यां परित्यज्यते[7] । उपपत्तितो वा भूमिसंचारादूर्ध्वं चावश्यं परिहाणितो वा समापत्तेर्निकायसभागत्वाच्च किंचित् । यथा च रूपाप्तं कुशलं भूमिसंचारहानिभ्यां त्यज्यते

**तथा-[29.a 12A1. VI]रूप्याप्तमार्यं तु फलाप्त्युत्तप्तिहानिभिः[9] ।।४०।।**

अनास्रवं तु कुशलं त्रिभिः कारणैः परित्यक्ष्यते । फलप्राप्तितः पूर्वको मार्गः

१. Y. .... दैशिको । २. MS. drops ण । ३. Y. शुकनासा । ४. Y. किं न पुनः । ५. MS हाणि । ६. D. adds खलु । ७. D. त्यज्यते । ८. MS. चावश्य । D. वाऽधोवा in place of चावश्यं । ९. MS. हाणि ।

परित्यक्ष्यते। इन्द्रियोत्तापनेन मृद्विन्द्रियमार्गः। परिहाणित उत्तरो मार्गः। फलं फलविशिष्टो वा। एवं तावत् संवरास्त्यज्यन्ते।

असंवरः संवराप्तिमृत्युद्विव्यञ्जनोदयैः।

त्रिभिः कारणैरसंवरच्छेदः। संवरप्राप्तितः। यदि संवरं समादत्ते[1] ध्यानसंवरं वा लभते[2]। हेतुप्रत्ययवलेन समाधिलाभात्। तेनासंवरश्छिद्यते[3]। प्रतिद्वन्द्ववलीयस्त्वात्। मरणेनाश्रय[4]त्यागात्। द्विव्यञ्जनोत्पादेनाश्रय[5]विकोपनादिति। शस्त्रजाल[6]त्यागेऽप्यकरणाशयतः। संवरमन्तरेणासंवरच्छेदो नास्ति। निदानपरिवर्जनेऽप्यौषधमन्तरेण प्रवृद्धरोगाविनिवृत्तिवत्।

य आसंवरिक उपवासं गृह्णाति किमसौ तस्मात्संवरात्पुनरसंवरं गच्छत्याहोस्विन्नैवसंवरं नासंवरम्। असंवरमित्येके। त्यागाशयस्यानात्यन्तिकत्वात्। प्रदोप्त[7] इवायःपिण्डः पुनः श्यामतां नाप्रयुज्यमानो गच्छतीत्यपरे। तल्लाभस्य[8] विज्ञप्त्यधीनत्वात्।

अथ संवरासंवरविनिर्मुक्ता कथमविज्ञप्तिस्त्यज्यते।

वेगादानक्रियार्थायुर्मूलच्छेदैस्तु मध्यमा[9] ॥४१॥

ये-[29b. 12B1. VI]न ह्यसौ प्रसादक्लेशवेगेनाविज्ञप्तिराक्षिप्ता भवति तस्यच्छेदात्साऽपि च्छिद्यते। कुम्भकारचक्रेषुगतिवत्[10]। आदानत्यागादपि च्छिद्यते। [11]यदि समादानं त्यजत्यलं समादानेनेति[11]। क्रियाविच्छेदादपि विच्छिद्यते यथासमात्तमकुर्वतः। अर्थविच्छेदादपि विच्छिद्यते। कतमस्यार्थस्य। चैत्यारामविहारशयनासन[12]यन्त्रजालादिनो वस्तुनः। आयुषोऽपि कुशलमूलानामपि च्छेदाद्विच्छिद्यते। यदा कुशलमूलानि समुच्छेत्तुमारभत इत्येभिः षड्भिः कारणैरविज्ञप्तिर्मध्यमा त्यज्यते।

कामाप्तं कुशलारूपं मूलच्छेदोर्ध्वजन्मतः।

कामावचरं कुशलमरूपस्वभावं द्वाभ्यां परित्यज्ते। कुशलमूलसमुच्छेदाद्रूपारूप्यधातूपपत्तितो वा।

प्रतिपक्षोदयात् क्लिष्टमरूपं तु विहीयते ॥४२॥

---

१. D. समापद्यते। २. D. प्रतिलभते। ३. D. त्याज्यते। ४. MS. स्त्रय। ४. D. मरणेन चाश्रय। ५. D. ....त्पादेन चाश्रय। ६. D. जल। ७. MS. प्रतीप्त। ८. MS. तल्लोभस्य। ९. Y. says "वेगादान....मध्यम इति च पठितव्यम्"। १०. MS. कुम्भचक्रेषु...। ११. ... ११. D. omits यदि....समादानेनेति। १२. ...शयनाशन।

क्लिष्टं त्वरूपस्वभावं सर्वमेव प्रतिपक्षोदयाद्विहीयते। यस्योपक्लेशप्रकारस्य यः प्रहाणमार्गस्तेनासौ सपरिवारः परित्यज्यते नान्यथा।

अथ केषां सत्त्वानामसंवरो भवति केषां संवरः।

**नृणामसंवरो हित्वा शण्ढ[1]पण्डद्विधाकृतीन्।**
**कुरूंश्च**

मनुष्यगतावेवासंवरो नान्यत्र। तत्रापि शण्ढपण्डकोभयव्यञ्जनानुत्तरकौ- [30a. 12A1. VII] रवांश्च हित्वा।

**संवरोऽप्येवं देवानां च**

संवरो हि मनुष्याणामेव यथोक्तं हित्वा देवानां चेति गतिद्वये संवरः। शण्ढादीनां संवरो नास्तीति कथं गम्यते। सूत्राद्विनयाच्च। सूत्र उक्तं 'यतश्च महानाम गृही अवदातवसनः पुरुषः पुरुषेन्द्रियेण समन्वागतो बुद्धं शरणं गच्छति यावद्वाचं भाषते उपासकं मां धारय इयता चोपासको भवती''ति। विनयेऽपि तद्रूपो नाशयितव्य उक्तः। किं पुनः कारणमेषां संवरो नास्ति। उभयाश्रयक्लेशाधिमात्रतया प्रतिसंख्या- नाक्षमत्वात्तीव्रह्रीव्यपत्राप्याभावाच्च। असंवरस्तर्हि कस्मान्नास्ति। पापेऽप्यस्थि- राशयत्वात्। यत्रैव च संवरस्तत्रासंवरोऽपि प्रतिद्वंद्वभावात्। उत्तरकौरवाणां समादानसमाध्यभावात् पापक्रियाशयाभावाच्च संवरासंवराभावः। आपायिका- नामपि तीव्रं ह्रीव्यपत्राप्यं नास्ति यद्योगाद्[2] यद्विपादनाच्च संवरासंवरौ स्याताम्। अपि खल्वाश्रय एव स तेषां तादृश ऊषरक्षेत्रभूतः शण्ढपण्डकोभयव्यञ्जनोत्तर- कौरवापायिकानां यत्राश्रये संवरोऽपि न विरोहत्यसंवरोऽप्यूषर इव क्षेत्रे सस्यमप्य- तिमात्रं कक्व[3]मपोति। यत्तर्हि सूत्र उक्तम् "अण्डजो भिक्षवो नागोऽष्टम्यां पक्षस्य भावनादभ्युद्गम्याष्टाङ्गस-[30b. 12B1 VIII]मन्वागतमुपवासमुपवसती"ति। सुचरितमात्रं तत्तेषां न संवरः। तस्मादेव मनुष्याणामेव संवरः। तत्र पुनः

**नृणां त्रयः ॥४३॥**

मनुष्याणां सर्वे त्रयः प्रातिमोक्षादिसंवराः संविद्यन्ते।

**कामरूपजदेवानां ध्यानजः**

ध्यानसंवरः कामरूपधातूपपन्नानां देवानामूर्ध्वं नास्ति।

**अनास्रवः पुनः[4]।**

---

१. G. पण्ढ। २. MS. drops द्। ३. MS. looks like कक्व.... Is it कत्तृण ?
४. MS. पुनर्धाना।

**ध्यानान्तरासंज्ञिसत्त्ववर्ज्यानामप्यरूपिणाम् ॥४४॥**

अनास्रवसंवरस्तु कामरूपधातूपपन्नानामप्यस्ति ध्यानान्तरिकासंज्ञिसत्वोपपन्नान्वर्जयित्वा। आरूप्योपपन्नानामपि तेषां तु समन्वागमतो[1]ऽस्ति न संमुखीभावतः।

अतः परमिदानीं कर्मनिर्देशाधिकारात्सूत्रोद्दिष्टानां कर्मणां निर्देश आरप्स्यते। त्रीणि कर्माणि। कुशलं कर्माकुशलमव्याकृतं कर्मेति। तत्र

**क्षेमाक्षेमेतरत्कर्म कुशलाकुशलेतरत्।**

इदं कुशलादीनां लक्षणम्। क्षेमं कर्म कुशलं यदिष्टविपाकं निर्वाणप्रापकं च दुःखपरित्रापात्। तत्कालमत्यन्तं च अक्षेममकुशलं क्षेमप्रतिद्वंद्वभावेन यस्यानिष्टो विपाकः। ताभ्यामितरत्कर्म नैव क्षेमं नाक्षेमं यत्तत्कुशलाकुशलाभ्यामितरत् वेदितव्यम्। अव्याकृतमित्यर्थः। पुनः

**पुण्यापुण्यमनिञ्जं च सुखवे-[31a. 12ıA.VIII]द्यादि च त्रयम् ॥४५॥**

त्रीणि कर्माणि पुण्यमपुण्यमानेञ्जं[2] च। पुनः त्रीणि। सुखवेदनीयं कर्म दुःखवेदनीयमदुःखासुखवेदनीयं च। तत्र तावत्

**कामधातौ शुभं कर्म पुण्यमानेञ्जमूर्ध्वजम्[3]।**

शुभमिति वर्तते। रूपारूप्यावचरं कुशलं कर्मानिञ्जम्। ननु च त्रीणि ध्यानानि सेञ्जितान्युक्तानि भगवता। "यदत्र वितर्कितं विचारितमिदमत्रार्या इञ्जितमित्याहुरित्येवमादि[4]। समाधौ[5] सापक्षालतां[6] तेषामधिकृत्यैवमुक्तम्[7]। आनिञ्जान्यपि[8] तु तान्युक्तान्यानिञ्जसूत्रे। आनिञ्जसंप्रेयगामिनीं[9] प्रतिपदमारभ्य। किं पुनः कारणं सेञ्जितमेवान्यत्रानिञ्जमुक्तम्।

**तद्भूमिषु यतः कर्मविपाकं प्रति नेञ्जति ॥४६॥**

कामावचरं हि विपाकं प्रति कम्पते। कथं कम्पते। अव्यवस्थानात्। अन्यगतिकमपि ह्यन्यस्यां गतौ विपच्यते। अन्यदेवनैकायिकं चान्य[10]देवनिकाये। यदेव हि प्रमाणवलवर्णकर्मान्यभूमिक[11]सुखभगादि संवर्तनीयं कर्म देवेषु विपच्यते तदेव कदाचिदन्यप्रत्ययवशान्मनुष्यतिर्यक्प्रेतेषु विपच्यते। रूपारूप्यावचरं तु कर्मान्यभूमिकमन्यस्यां भूमौ विपक्तुं न जातूत्सहते। तस्माद्व्यवस्थितविपाकत्वादानेञ्ज-

---

१. MS. समन्वागतो। २. Y. explains two spellings of this word *viz* आनेञ्ज्य and आनिञ्ज्य। ३. G. आनिञ्ज्यम्। ४. MS. drops व। Y. puts इत्येवमादि after विचारितम्। ५. MS. समाधो। ६. MS. सापक्षलतां। ७. D. समाध्यापक्षालास्तेषां संधायै...। ८. D. आनेञ्ज्या...। ९. Y. (N) adopts आनिञ्ज्यप्रत्ययगामिनीम्। but his MSS. also read आनिञ्ज्यसंप्रेयगामिनीम्। (See his note)। १०. D. चान्यत्र। ११. D. omits कर्मान्यभूमिक। १२. D. विपच्येत।

मित्युच्यते । अपुण्यं तु कर्माकुशलमिति प्रसिद्धं [31b. 12B1. VII] लोके । यश्च लोकतोऽर्थः प्रसिद्धः किं तत्र यत्नेन[1] । कृतः पुण्यादीनां कर्मणां निर्देशः । सुखवेदनीयादीनां कर्तव्यः । स एष क्रियते ।

सुखवेद्यं शुभं ध्यानादातृतीयात्

कुशलं कर्म सुखवेदनीयं यावत् तृतीयाद्ध्यानात् । एषा हि भूमिः सुखाया वेदनाया यदुत कामधातुस्त्रीणि च ध्यानानि ।

अतः परम्

अदुःखासुखवेद्यं तु

शुभमिति वर्तते । तृतीयध्यानात् परेण कुशलं कर्मादुःखासुखवेदनीयं सुखदुःखवेदनाऽभावात् ।

दुःखवेद्यमिहाशुभम् ।।४७।।

अकुशलं कर्म दुःखवेदनीयम् । इहग्रहणं कामधातावेव तद्भावज्ञापनार्थम् । न चैषां वेदनैव फलम् । किं तर्हि । ससंभारा ।

अधोऽपि मध्यमस्त्येके

अन्ये पुनराहुः तदेतन्मध्यमदुःखासुखवेदनीयं कर्मोक्तमेतच्चतुर्थध्यानादधोऽप्यस्ति । किं कारणम् ।

ध्यानान्तरविपाकतः ।

इतरथा हि ध्यानान्तरकर्मणो विपाको न स्याद्ध्यानान्तरं वा कस्यचित्कर्मणः । तत्र सुखदुःखयोरभावात् । ध्यानान्तरकर्मणो ध्यान एव सुखेन्द्रियं विपाक इत्येके । नैव तस्य वेदना विपाक इत्यपरे । तदेतदुच्छास्त्रम् । शास्त्रे हि पठितं "स्यात्कर्मणश्चैतसिक्येव वेदना विपाको विपच्येत । स्यात्कुशलस्याऽवितर्कस्य कर्मण" इति ।

अपूर्वाचरमः पाकस्त्रया[32a. 13A. I]णां चेष्यते यतः ।।४८।।

यतश्चोक्तं सूत्रे[2] "स्यात्त्रयाणां कर्मणामपूर्वाचरमो विपाको विपच्येत । स्यात्सुखवेदनीयस्य रूपं दुःखवेदनीयस्य चित्तचैत्ता[3] धर्माः । अदुःखासुखवेदनीयस्य चित्तविप्रयुक्ता" इत्यतोऽप्यस्त्यदुःखासुखवेदनीयं कर्माधस्तात् । नहि कामधातोरन्यत्रास्ति

१. MS. यत्नेनं । २. There are three letters on the top margin after यतश्चो not clear. These may be either क्तं सूत्रे (according to Paramartha) or क्तं शास्त्रे (according to Huen Tsang). ३. D. चैतसिकाः ।

युगपत्कर्मत्रयस्य विपाके संयोगः। किमिदानीं तत्कुशलमाहोस्विदकुशम्। दुर्बलं तु तत्। एवं तर्हि "सुखवेद्यं शुभं ध्यानादातृतीया।" "दिष्ट-विपाकं च कुशल" मित्यस्य विरोधः। वाहुलिक एष निर्देशो द्रष्टव्यः। कथं पुनरवेदनास्वभावं कर्म सुखादिवेदिनीयमित्युच्यते। सुखवेदनायै[1] हितं सुखवेदनोयं सुखोऽस्यं वेदनीय इति वा। कश्च वेदनीयः। यो विपाकः। स ह्यसौ विद्यते सुखस्य वा वेदनीयं येन सुखं वेदयते। स्नानीयकषायवत्।[2] एवं दुःखवेदनीयमदुःखासुखवेदनीयं च द्रष्टव्यम्। अपि च

**स्वभावसंप्रयोगाभ्यामालम्बनविपाकतः।**
**संमुखीभावतश्चेति पञ्चधा वेदनीयता ॥४९॥**

स्वभाववेदनीयता वेदनानाम्। स्वभावेनैव वेदनीयत्वात्। संप्रयोगवेदनीयता स्पर्शस्य। "सुखवेदनीयः स्पर्शः" इति। आलम्वनवेदनीयता विषयाणाम्। यथोक्तं "चक्षुषा रूपाणि दृष्ट्वा रूपप्रतिसंवेदी भवति नो-[32b. 13B. I] तु रूपराग-प्रतिसंवेदी"त्येवमादि। वेदनया हि तामालम्वमानः प्रतिसंवेदयते। विपाकवेद-नीयता कर्मणः। "दृष्टधर्मवेदनीयं कर्मे"ति विस्तरः। संमुखीभाववेदनीयता। यथोक्तं "यस्मिन् समये सुखां वेदनां वेदयते द्वे अस्य वेदने तस्मिन्समये निरुद्धे भवत" इति। नहि यस्मिन्समये सुखा वेदना वर्तते तस्मिन्पुनरन्या वेदनाऽस्ति स या[3] तां वेदयते। संमुखीकुर्वंस्तु तां वेदयत इत्युच्यते। अतो विपाकस्य वेदनीयत्वात् कर्माप्युच्यते सुखवेदनीयमित्येवमादि।

**नियतानियतं तच्च**

तच्चैतत्सुखवेदनीयादि त्रिविधं कर्म नियतं चानियतं च वेदितव्यम्। नावश्यवेद-नीयमनियतम्।

**नियतं त्रिविधं पुनः।**

**दृष्टधर्मादिवेद्यत्वात्**

दृष्टधर्मवेदनीयमुपपद्यवेदनीयमपरपर्यायवेदनीयं चेत्येत[4]त्त्रिविधं कर्म नियत-मित्येतच्चतुर्विधं कर्म भवति सहानियतवेदनीयेन।

**पञ्चधा कर्म केचन ॥५०॥**

अपरे पुनः पञ्चविधं कर्मेच्छन्ति। अनियतवेदनीयं द्विधा कृत्वा। विपाकेन नियतम-

१. Y. drops यै। २. Y. adds एतद्। ३. MS. या। ४. MS. चेत...।

नियतं चेति । तत्र दृष्टधर्मवेदनीयं यत्र जन्मनि कृतं तत्रैव विपच्यते । उपपद्यवेदनीयं द्वितीये जन्मनि । अपरपर्यायवेदनीयं तस्मात्परेण । जन्मा-[33a.13A.II न्तरेऽप्यस्ति दृष्टधर्मवेदनीयस्य कर्मणो विपाक आरम्भवशात्तन्नामव्यवस्थानमित्यपरे । मा भूद्यदेवमिष्टकर्म तस्यात्पिष्ठो विपाकः इति । तदेवं नेच्छन्ति वैभाषिकाः । अस्ति हि कर्म संनिकृष्टफलं न विप्रकृष्टफलमस्ति विपर्ययाद्वाह्यबीजवत् । यथा त्रिपक्षा सुवर्चला त्रिभिः पक्षैः फलं दधाति यवगोधूमादयः षड्भिर्मासैरिति ।

चतुष्कोटिकमित्यन्ये

दार्ष्टान्तिकास्तु चतुष्कोटिकं कुर्वन्ति । अस्ति कर्मावस्थानियतं न विपाके नियतम् । यत्कर्म दृष्टधर्मादिवेदनीयं विपाकेऽनियतम् । अस्ति विपाके नियतं नावस्थायाम् । यत्कर्मानियतवेदनीयं[1] विपाके नियतम् । अस्त्युभयनियतं यद्दृष्टधर्मादिवेदनीयं विपाके नियतम् । अस्ति नोभयनियतं यत्कर्मानियतवेदनीयं विपाके अनियतम् । तेषां तत्कर्माष्टविधं दृष्टधर्मवेदनीयं नियतमनियतं च । एवं यावदनियतवेदनीयम् । नियतमेव तु दृष्टधर्मादिवेदनीयमनियतं चतुर्थमिति वर्णयन्ति । स्यादेकस्मिन् क्षणे चतुर्विधं कर्माक्षिपेत् । स्यात्त्रिषु परं प्रयोज्य काममिथ्याचारे स्वयं प्रयुक्तस्तेषां युगपत्समाप्तौ[2] । एषां च पुनश्चतुर्णां कर्मणां

निकायाक्षेपणं त्रिभिः ।

नहि दृष्टधर्मवेदनीयेन कर्म-[33b. 13B. II] णा निकायसभाग आक्षिप्यते ।

कतमस्मिन्धातौ कतिविधं कर्माक्षिप्यते कस्यां वा गतौ ।

सर्वत्र चतुराक्षेपः

सर्वेषु त्रिषु धातुषु सर्वासु च गतिषु चतुर्णां कर्मणामाक्षेपः कुशलानामकुशलानां च यथासंभवम् । अस्योत्सर्गस्यायमपवादः ।

शुभस्य नरके त्रिधा ।।५१।।

नरकेषु कुशलस्य कर्मणस्त्रिविधस्या[3]क्षेपो न दृष्टधर्मवेदनीयस्य । तत्रे[4]ष्टविपाकाभावात् ।

यद्विरक्तः स्थिरो बालस्तत्र नोत्पद्यवेद्यकृत् ।

यतो भूमेः वीतरागपृथग्जनो भवत्यसौ च स्थिरो भवत्यपरिहाणधर्मा स तत्रोपपद्यवेदनीयं कर्म न करोति । किमन्यत्करोति ।

१. MS. यत्कर्म्म नियत....। २. Y. परिसमाप्तौ । ३. Y. adds एव । ४. Y. अत्र ।

**नान्यवेद्यकृदप्यार्यः**

स्थिर इति वर्तते । आर्यपुद्गलस्तु यतो वीतरागो न च परिहाणधर्मा स तत्रोपपद्यवेदनीयं चापरपर्यायवेदनीयं च कर्म न करोति । न ह्यसौ भव्यः पुनराधस्तनीं[१] भूमिमायातुमनियतं[२] कुर्याद्दृष्टधर्मवेदनीयं चात्रो[३]पपन्नः ।

**कामेऽग्रे[४] वाऽस्थिरोऽपि न ।।५२।।**

परिहाणधर्मापि त्वार्यपुद्गलः कामधातोर्भवाग्रा[५]द्वीतरागः तयोरुपपद्यापरपर्यायवेदनीयं कर्माभव्यः कर्त्तुम् । किं कारणम् । फलाद्धि स परिहीणो भवति । न चास्ति फलपरिहीणस्य कालक्रियेति पश्चात्प्रवेदयिष्यामः ।

किं-[34a. 13A. III]मन्तराभवेऽप्यस्ति कर्मण आक्षेपः । अस्तीत्याह ।

**द्वाविंशतिविधं कामेष्वाक्षिपत्यन्तराभवः ।**

कामावचरो ह्यन्तराभावो द्वाविंशतिविधं कर्माक्षिपति । कथं कृत्वा । पञ्च हि गर्भावस्थाः । कललार्बुदपेशीघनप्रशाखावस्थाः । पञ्च जातावस्थाः । वालकुमारयुवमध्यवृद्धावस्थाः । तत्रान्तराभवः कललवेदनीयं कर्माक्षिपत्यनियतं नियतं च । एवं यावद्वृद्धवेदनीयमन्तराभववेदनीयं च ।

**दृष्टधर्म[६]फलं तच्च**

तच्चैतदन्तराभविकं कर्म यन्नियतमेकादशविधमुक्तं दृष्टधर्मवेदनीयं तद्वेदितव्यम्[७] । किं कारणम् ।

**निकायो ह्येक एव सः ।।५३।।**

एक एव ह्यसौ निकायसभाग एककर्माक्षिप्तो[८] यश्चान्तराभवो याश्च तदन्वया[९] दशावस्थाः । अत एवान्यदन्तराभववेदनीयं कर्म नोक्तम् । उपपद्यवेदनीयेन च[१०] तस्याक्षेपात् ।

कीदृशं पुनः कर्म नियतं वेदितव्यम् ।

**तीव्रक्लेशप्रसादेन सातत्येन[११] च यत्कृतम् ।**
**गुणक्षेत्रे च नियतं तत्पित्रोर्घातकं च यत् ।।५४।।**

यद्धि कर्म तीव्रेण क्लेशेन कृतं यच्च तीव्रेण प्रसादेन यच्च सातत्येन गुणक्षेत्रे च

१. MS. ...राधस्तीं । २. MS. ....नियत । ३. Y. यत्र । ४. G. कामाग्रे । ५. Y. adds वा । ६. MS. drops धर्मं । ७. MS. looks like ...द्वेदिनीयेतव्यं । ८. MS. ए कर्म्मा.... । ९. MS. reads या (or पा) श्वतदन्वीया । १०. Y. एव । ११. G. मातृघ्नेन ।

तन्नियतं वेदितव्यम् । तत्र गुणक्षेत्रं त्रीणि रत्नानि । पुद्गलविशेषो वा कश्चित्फल-समापत्तिविशेषप्रा-[34b. 13B. III]प्तः । तत्र ह्यन्तरेणापि तीव्रक्लेशप्रसादानां सातत्यं च कुशलमकुशलं च कर्म नियतं संपद्यते । पितरौ पुनर्माता च पिता च । तयोश्चापि यत्र घातिकं कर्म यथा तथा वा[1] तन्नियतं संपद्यते नान्यत् ।

अथ दृष्टधर्मवेदनीयं कर्म कीदृशं वेदितव्यम् ।

दृष्टधर्मफलं कर्म क्षेत्राशयविशेषतः ।

दृष्टधर्मवेदनीयं कर्म क्षेत्रविशेषाद्वा भवति । यथा संघस्त्रीवादसमुदाचाराद्व्यञ्जन-परिवृत्तिः श्रूयते । आशयविशेषाद्वा । यथा शण्ढस्य गवामपुंस्त्वप्रतिमोक्ष-णात्पुम्भावः । अथवा

तद्भूम्यत्यन्तवैराग्यात्

तस्य वा कर्मणो या भूमिः कुशलस्याकुशलस्य वा ततोऽत्यन्तवैराग्यात्तत्कर्म दृष्टधर्मवेदनीयं कर्म संपद्यते । तस्यां भूमौ जातस्य कीदृशं कर्मेत्याह

विपाके नियतं हि यत् ।।५५।।

यद्धि कर्म नियतं विपाके न त्ववस्थायां नाप्यनियतं तस्यैष नियमः । यत्पुनरवस्था-न्तरनियतं तस्य तत्रैव नियतो विपाकस्तद्वतोऽत्यन्तवैराग्यासंभवात् । यच्चानियतं तस्याविपाक एवात्यन्तवैराग्यात् ।

कीदृशं पुनः क्षेत्रं यत्रावश्यं दृष्टधर्मवेदनीयं कर्म संपद्यते । आह । बुद्ध-प्रमुखो भिक्षुसंघः पुद्गलास्तु [35a. 13A. IV] पञ्च ।

ये निरोधारणमैत्रीदर्शनार्हत्फलोत्थिताः ।
तेषु कारापकारस्य फलं सद्योऽनुभूयते ।।५६।।

निरोधसमापत्तिव्युत्थितः परां चित्तशान्तिं लभते । निर्वाणसदृशत्वात्समापत्तेः । स हि गतप्रत्यागत इव निर्वाणाद्भवति । अरणाव्युत्थितस्याप्रमाणसत्त्वारणाहिता-ध्याशयानुगतात्युदग्राप्रमाणपुण्यपरिभावना[2]नुगता च संततिर्वर्तते । मैत्रीव्युत्थि-तस्याप्रमाणसत्त्वसुखाध्याशयानुगतात्युदग्राप्रमाणपुण्यपरिभावनानुगता च संत-तिवर्तते । दर्शनमार्गव्युत्थितस्याशेषदर्शनप्रहातव्यप्रहाणात् प्रत्यग्राश्रयपरिवृत्ति-निर्मला संततिर्वर्तते । अर्हत्फलव्युत्थितस्याशेषभावनाप्रहातव्यप्रहाणात्प्रत्यग्रा-श्रयपरिवृत्तिशुद्धा संततिर्वर्तते । अत एतेषु कृतानां कारापकाराणां

१. Y. च । २. Y. परिभाविता but notes ....भावना MSS.

फलं दृष्ट एव धर्मे[1] नियतं प्राप्यते। शेषस्य तु भावनामार्गस्यापरिपूर्णस्वभावफलत्वाच्च तद्व्युत्थितानां[2] न तथा प्रत्ययाश्रयपरिवृत्तिशुद्धाशयसंततिर्वर्तत इति न ते तथा पुण्यक्षेत्रं भवति[3]।

विपाकः पुनर्वेदनाप्रधानः। तदिदानीं विचार्यते। स्यात् कर्मणश्चैतसिक्येव वेदना विपाको विपच्येत न कायिकी। स्यात् कायिक्येव न [35b. 13B. IV]चैतसिकी स्यादित्याह

**कुशलस्याऽवितर्कस्य कर्मणो वेदना मता।**
**विपाकश्चैतसिक्येव**

अवितर्कं कर्म ध्यानान्तरात् प्रभृति यावत् भवाग्रं। तस्यावितर्कस्य कुशलस्य कर्मणश्चैतसिक्येव वेदना विपाकः। कस्मान्न कायिकी। तस्या अवश्यं सवितर्कविचारत्वात्[4]।

**कायिक्येवाशुभस्य तु ॥५७॥**

अकुशलस्य कर्मणः कायिक्येव-वेदना विपाकः। कस्मान्न चैतसिकी। तस्य हि दुःखा वेदना विपाकश्चैतसिकी च दुःखा वेदना दौर्मनस्यं न च दौर्मनस्यं विपाक इति व्याख्यातमेतत्।

यत्तर्हि सत्त्वानां चित्तक्षेपो भवति। कतमस्मिन्नसौ चित्ते भवति केन वा कारणेन।

**चित्तक्षेपो मनश्चित्ते**

मनोविज्ञान इत्यर्थः। नहि पञ्चसु विज्ञानकायेषु चित्तं क्षिप्यते। अविकल्पकत्वात्[5]।

**स च कर्मविपाकजः।**

स चैष चित्तक्षेपः सत्त्वानां कर्मजः। ये[6] हि द्रव्यमन्त्रप्रयोगेण वा परेषां चित्तं क्षेपयन्ति अकामकं वा विषं मद्यं वा पाययन्ति त्रासयन्ति वा मृगयादिष्वग्निं वा दावेषूत्सृजन्ति[7] प्रपाताद्वा पातयन्त्यन्येन वा केनचित्परेषां स्मृतिं भ्रंशयन्ति तेषां तस्य कर्मणो विपाकेनायत्यां चित्तं क्षिप्यते।

**भयोपघातवैषम्यशोकैश्च**

कथं ताव-[36a. 13A. V]द्भयेन। अमनुष्यादयो[8] मनुष्यान्विरूपेण रूपेणोपसंक्रामन्ति। तेभ्यो भीतानां चित्तं क्षिप्यते। कथमुपघातेन।[9] अमनुष्या एव कुपिता

---

१. MS. धर्म्म। २. MS. तत् व्यु....। ३. Y. भवंति। ४. Y....सविचार....। ५. MS. अविकल्पत्वात्। ६. MS. यो। ७. MS....त्सृजति। ८. MS. अमनुष्यादि। ९. MS. ....घातेनामनुष्या।

मनुष्याणां मर्मसु प्रहरन्ति । कथं महाभूतवैषम्येण[१] । वातपित्तश्लेष्माणः प्रकोपमापद्यन्ते । कथं शोकेन । यथा वासिष्ठीप्रभृतीनाम् । यदि मनो विक्षिप्यते कर्मविपाकजश्च चित्तक्षेपः । कथं न चैतसिकी वेदना विपाकः प्राप्नोति । नहि ब्रूमस्तदेव चित्तविपाक इत्यपि तु यो[२] महाभूतानां प्रकोपः स[२] विपाकः । तस्माज्जातमतो विपाकजम् । कर्मजेन हि धातुना वैषम्येण[३] व्याकुलमवशं भ्रष्टस्मृतिकं चित्तं वर्तत इति क्षिप्तमित्युच्यते । एवं चेदं चतुष्कोटिकं युज्यते । अस्ति चित्तं क्षिप्तं न विक्षिप्तमिति विस्तरः । क्षिप्तं तावन्न[४] क्षिप्तं विक्षिप्तचित्तस्य । क्लिष्टं चित्तं विक्षिप्तं न क्षिप्तं स्वस्थचित्तस्य क्लिष्टम् । उभयं क्षिप्तचित्तस्य क्लिष्टम् । नोभयं स्वस्थचित्तस्याक्लिष्टम् ।

कतमेषां पुनः सत्त्वानां चित्तं क्षिप्यते ।

**अकुरुकामिनाम् ॥५८॥**

अकुरूणां कामिनाम् । देवेष्वपि हि देवा[५] उन्मत्ताः सन्ति प्रागेव मनुष्यतिर्यक्प्रेतेषु । नारकास्तु नित्यं क्षिप्तचित्ता एव । ते हि विविधयातनासहस्रव्यतिभिन्नमर्माणस्तीव्राभिर्वेद-[36b. 13B. V] नाभिरभितुन्ना[६] आत्मानमपि तावन्नाभिचेतयन्ति किं पुनः कार्यमकार्यं वा । हाचित्तपरिदेवकश्चात्र नारक उदाहार्यः । आर्याणामपि चित्तं क्षिप्यते भूतवैषम्येणान्यत्र[७] बुद्धात् । न कर्मणा नियतस्य पूर्वं विपाकादनियतस्याविपाकात् । न भयेन । पञ्चभयसमतिक्रमात् । नोपघातेन । मनुष्यप्रकोपकारणस्याप्रासादिकस्याकरणात् । न शोकेन । धर्मताभिज्ञत्वात्[८] ।

पुनस्त्रयो वङ्का उक्ताः सूत्रे । कायवङ्को वाग्वङ्को मनोवङ्कः । त्रयो दोषाः । कायदोषो वाग्दोषो मनोदोषः । त्रयः कषायाः । कायकषायो वाक्कषायो मनःकषायः इति । तत्र यथाक्रमं वेदितव्याः ।

**वङ्कदोषकषायोक्तिः शाठ्यद्वेषजरागजे ।**

शाठ्यज कायकर्म कायवङ्क इत्युक्तम् । कुटिलान्वयत्वात् । एवं वाङ्मनोवङ्कौ । द्वेषजं कायकर्म कायदोष इत्युक्तम् । चित्तप्रदोषान्वयत्वात् । एवं वाङ्मनोदोषौ । रागजं कायकर्म कायकषाय[९] इत्युक्तम् । रञ्जनान्वयत्वात् । एवं वाङ्मनःकषायौ ।

**कृष्णशुक्लादिभेदेन पुनः कर्म चतुर्विधम् ॥५९॥**

---

१. MS. वैषम्येन । २. Y. omits यः सः । ३. MS. वैषम्येन । ४. MS. तावन्नि । ५. MS. देवोन्मत्ताः । ६. Y. अभिनुन्ना । ७. MS....वैषम्येना....। ८. Y....भिज्ञानत्वात् । ९. MS. कषाय seems to be written twice as कायकषाय कषाय and one struck off.

"अस्ति कर्म कृष्णं कृष्णविपाकम् । अस्ति कर्म शुक्लं शुक्लविपाकम् । अस्ति कर्म कृष्णशुक्लं कृष्णशुक्लविपाकम् । अस्ति क-[37a. 13A. IV]र्माकृष्णमशुक्लमविपाकम् । यत्तकर्म कर्मक्षयाय संवर्तत" इति । तत्र

अशुभं रूपकामाप्तं शुभं चैव यथाक्रमम् ।
कृष्णशुक्लोभयं कर्म तत्क्षयाय निरास्रवम् ॥६०॥

अशुभं[2] कर्म एकान्तेन कृष्णं क्लिष्टत्वात् कृष्णविपाकं चामनोज्ञविपाकत्वात् । रूपाप्तं[3] शुभमेकान्तेन शुक्लमकुशलेनाव्यतिभेदात्[4] । शुक्लविपाकं च[5] मनोज्ञविपाकत्वात् । आरूप्याप्तं कस्मान्नोच्यते । यत्र किल द्विविधोऽस्ति विपाक आन्तराभविक औपपत्तिभविकश्च[6] । त्रिविधस्य[7] काय[8]वाङ्मनस्कर्मणो यत्रैव संभवस्तत्रैवोक्तमिति । तदपि तूक्तं सूत्रान्तरे । "कामाप्तं शुभं[9] कर्म[10] कृष्णशुक्लमकुशलव्यवकीर्णत्वात् कृष्णशुक्लविपाकं व्यवकीर्णविपाकत्वात्" । संतानत एतद्व्यवस्थापितं न स्वभावतः । न ह्येवंजातीयकमेकं कर्मास्ति विपाको वा यत् कृष्णं च स्यात् शुक्लं चान्यं।न्यविरोधात् । ननु चैवमकुशलस्यापि कर्मणः कुशलव्यवकीर्णत्वात्[11] कृष्णशुक्लत्वं प्राप्नोति । नावश्यमकुशलं कुशलेन व्यवकीर्यते । कामधातौ तस्य[12] वलवत्त्वात्[13] । कुशलं तु[14] व्यवकीर्यते । दुर्बलत्वादिति । अनास्रवं कर्मैषां[15] त्रयाणां कर्मणां क्षयाय प्रहाणाय संवर्तते । तद्धयकृष्णमक्लिष्टत्वादशुक्लं विपाकशुक्लताऽभावात् । आभिप्रायिको ह्येषोऽशुक्ल[16]-[37b.13B. VI] शब्दः । उक्तं तु भगवता महत्यां शून्यताया[17]मशैक्षान्[18] धर्मानारभ्य "इमे ते आनन्द धर्मा एकान्तकुशला[19] एकान्तानवद्या" इति । शास्त्रे च । "शुक्ला[20] धर्माः[21] कतमे । कुशला धर्मा अनिवृताव्याकृताश्चे"ति । अविपाकं धात्व[22]पतितत्वात् प्रवृत्तिविरोधाच्च[23] ।

किं पुनः सर्वमनास्रवं कर्म सर्वस्यास्य त्रिविधस्य कर्मणः क्षयाय[24] संवर्तते । नेत्युच्यते । किं तर्हि ।

---

१. MS. निराश्रवम् । २. D. adds खलु । ३. D. adds तु । 4. D अव्यवकीर्णत्वात् । ५. D समनोज्ञ... । ६. D. अन्तराभविकश्चोपपत्तिभविकश्च । 7. Y. D. adds च । ८. MS. drops काय । ९. D. शुक्लं । १०. D. omits कर्म । ११. MS. कुशलमवकीर्णत्वात् । D. कुशलव्यवकीर्णत्वात् । १२. D. त्वस्य । १३ MS. वलत्वात् । १४. MS. त्व । १५. MS. कर्म्मेषां । १६. D...प्येश(ष)शुक्ल । १७. MS. drops या १८. D. अशैक्षः.... । १९. D. ....शुक्ला । २०. D. शुक्ल । २१. MS. धर्म्मा । २२. MS. ...न्धात्वा । २३. Y. ...विरोधतः । २४. MS. seems to drop क्षयाय । D. has क्षयाय ।

धर्मक्षान्तिषु वैराग्ये चानन्तर्यपथाष्टके ।
या चेतना द्वादशधा कर्म कृष्णक्षयाय[1] तत् ॥६१॥

दर्शनमार्गे चतसृषु धर्मज्ञानक्षान्तिषु कामवैराग्ये चाष्टास्वानन्तर्यमार्गेषु[2] या चेतना सेयं द्वादशविधा चेतना कृष्णस्य कर्मणः प्रहाणाय कर्म ।

नवमे चेतना या सा कृष्णशुक्लक्षयाय च ।

**नवमे** कामवैराग्यानन्तर्यमार्गे **या चेतना सा** कृष्णशुक्लस्य कुशलस्य कर्मणः कृष्णस्य[3] चाकुशलस्य नवमस्य प्रकारस्य प्रहाणाय ।

शुक्लस्य ध्यानवैराग्येष्वन्त्यानन्तर्य[4]मार्गजा ॥६२॥

ध्यानाद्ध्यानाद्वैराग्यं कुर्वतो योऽन्त्यो नवम आनन्तर्यमार्गस्तत्र या चेतना इयं चतुर्विधा चेतना शुक्लस्य कर्मणः प्रहाणाय । किं पुनः कारणमन्त्येनैवानन्तर्यमार्गेण कुशलस्य कर्मणः प्रहाणं नान्येन । नहि तस्य स्वभावप्रहाणं प्रहीणस्यापि संमुखीभावात् । किं तर्हि । तदालम्ब[38a. 13A. VII] नक्लेशप्रहाणात् । अतो यावदेकोऽपि तदालम्बनक्लेशप्रकार आस्ते[5] तावदस्य प्रहाणं[6] नोपपद्यते[7] ।

अन्ये नरकवेद्यान्यकामवेद्यं द्वयं विदुः[8] ।

अन्ये पुनराचार्याः पश्यन्ति नरकवेदनीयं नरकाच्चान्यकामधातुवेदनीयं कर्म यथाक्रम कृष्णं कृष्णशुक्लं चेति । नरके ह्यकुशलस्यैव कर्मणो विपाकस्तेन तद्वेदनीयं[9] कृष्णमित्युच्यते अतोऽन्य[10]कामधातौ कुशलाकुशलस्य कर्मणो विपाकस्तेन तद्वेदनीयं कृष्यशुक्लमित्युक्तम् ।

दृग्घेयं कृष्णमन्ये

अन्ये पुनराहुर्दर्शनप्रहातव्यं कर्म कृष्णं कुशलेनामिश्रत्वात् ।

अन्यत्कृष्णशुक्लं तु कामजम् ॥६३॥

अन्यत्तु कामावचरं कर्म कृष्णशुक्लम् । किं तदन्यत् । भावनाप्रहातव्यम् । तद्धि कुशलं चाकुशलं चेति । सूत्र उक्तं त्रीणि मौनेयानि कायमौनेयं वाङ्मौनेयं मनोमौनेयं च । तत्र

---

१. Y. seems to read कर्म्म कर्मक्षयाय । २. MS. चाष्टास्वन ...। ३. MS. कृष्णस्या । ४. MS. ...नन्तर्य... । ५. D. अस्ति । ६. MS. प्रहाणः । ७. D. नोपलभ्यते । ८. MS. सिद्धः । ९. MS. तावद्वेदनीयं । १०. Y. अन्यत्र ।

अशैक्षं काय[1]वाक्कर्म मनश्चैव यथाक्रमम् ।
मौनत्रयम्[2]

अशैक्षे कायवाक्कर्मणो कायवाङ्मौनेये[3] । अशैक्षं तु मन एव मनोमौनेयं[4] न मनस्कर्मेति । किं कारणम् । चित्तं हि परमार्थमुनिः । तत् किल कायवाक्कर्मभ्यामनुमीयत इति ।[5] अपि खलु कायवाक्कर्मणी विरतिस्वभावेन[6] न मनस्कर्म । चित्ताविज्ञप्त्यभावात् । विरमार्थेन च मौनम् । अतो मन एव विरतं मौनमित्युच्यते । कस्मादशैक्षमेव नान्यत् । अ-[38b. 13B. VII]र्हतः परमार्थमुनित्वात् । सर्वक्लेशजल्पोपरतेः । त्रीणि शौचेयानि उक्तानि सूत्रे । कायशौचेयं वाक्शौचेयं च । तदेतत्

त्रिधा शौचं सर्वं सुचरितत्रयम् ॥६४॥

सर्वं कासुचरितं कायशौचम् । सर्वं वाङ्मनःसुचरितं वाङ्मनःशौचम् । दुश्चरितमलापकर्षणात्तावत्कालमत्यन्तं वा[7] । एषा च देशना मिथ्यामौन[8]शौचाधिमुक्तिकानां[9] विवेचनार्थम् । त्रीणि दुश्चरितान्युक्तानि । तत्र

अशुभं कायकर्मादि मतं दुश्चरित[10]त्रयम् ।

अकुशलं कायवाङ्मनस्कर्म यथाक्रमं कायवाङ्मनोदुश्चरितम् ।

अकर्मापि त्वभिध्यादिमनोदुश्चरितं त्रिधा ॥६५॥

अकर्मस्वभावमप्यस्ति त्रिविधं मनोदुश्चरितं चेतनार्थान्तरभूतमभिध्या व्यापादो मिथ्यादृष्टिश्च । अभिध्यादय एव मनस्कर्मेति दार्ष्टान्तिकाः । संचेतनीयसूत्रे वचनात् । एवं तु सति कर्मक्लेशयोरैक्यं स्यात् । किं स्याद्यदि कश्चित् क्लेशोऽपि कर्म स्यात् । नैतदस्ति । सूत्रं विरुद्धं स्यात् । सूत्रे तु चेतनायास्तन्मुखेन प्रवृत्तेस्तैस्तां दर्शयतीति वैभाषिकाः । अनिष्टफलत्वात्कुत्सितः कायवाङ्मनश्चारो दुश्चरितम् ।

विपर्ययात्सुचरितम्[11]

इष्टं कुशलं कायवाङ्मनस्कर्मानभिध्याऽव्यापादसम्यग्दृष्टयश्च[12] । परानुग्रहो-

१. MS. drops काय । २. MS. ....त्रयमशैक्षे । ३. Y. seems to read....मौने । ४. Y. मनोमौनम् । ५. MS. इत्यपि । ६. Y. ....स्वभावं । ७. Y. च । ८. MS... मौनं । ९. Y. ....धिमुक्तानां । १०. G. दुश्चरितं । ११. MS. ....चरितमिष्टं । १२. MS. ....सम्यक् ।

पघाताभिसंध्यभावे क[39a. 13A. VIII]थं सम्यग्दृष्टिमिथ्यादृष्टचोः[1] कुशलाकुशलत्वम् । तन्मूलत्वात् । यानि चैतानि दुश्चरितसुचरितान्युक्तानि

तदौदारिकसंग्रहात् ।
दश कर्मपथा उक्ता यथायोगं शुभाशुभाः ॥६६॥

तेषामेव सुचरितदुश्चरितानां चौदारिकसंग्रहेण दश कर्मपथाः सूत्र उक्ताः यथायोगं कुशलाः सुचरितेभ्योऽकुशला दुश्चरितेभ्यः[2] । किमत्र दुश्चरितमसंगृहीतं किं वा सुचरितम् । अकुशलेषु तत्कर्मपथेषु कायदुश्चरितस्य प्रदेशो न संगृहीतः प्रयोगपृष्ठभूतः क्लिष्टश्चान्योऽपि [3]बन्धनादिः । तस्य नात्यौदारिकत्वात् । यद्धि कायदुश्चरितं परेषां जीवितभोगदारेभ्यश्च्यावकं तत्कर्मपथ उक्तं ततो विवेचनार्थम् । वाग्दुश्चरितमपि यदेव प्रशादं तत्कर्मपथ उक्तं तदर्थमेव । मनोदुश्चरितस्य च प्रदेश[4]चेतना । कुशलेष्वपि कायसुचरितस्य प्रदेशः प्रयोगपृष्ठमद्यादिविरतिदानेज्यादिको वाक्सुचरितस्य प्रियवचनादिको मनःसुचरितस्य चेतना ।

एषां च कर्मपथानाम्

अशुभाः षडविज्ञप्तिः

अकुशलाः षट् कर्मपथा अवश्यमविज्ञप्तिस्वभावाः प्राणातिपातादत्तादानमृषावादपैशुन्यपारुष्यसंभिन्नप्रलापाः । परेण कारयतो मौलविज्ञप्त्यभावात् ।

द्विधैकः

काममिथ्याचा-[39b. 13B. VIII]रो नित्यं विज्ञप्त्यविज्ञप्तिस्वभावस्तस्य स्वयमेव निष्ठापनात् । नहि तं परेण कारयतस्तादृशी प्रीतिर्भवतीति ।

तेऽपि कुर्वतः ।

तेऽपि षट् कर्मपथाः स्वयं कुर्वतो द्विविधा भवन्ति विज्ञप्तिरविज्ञप्तिश्च तत्कालमरणे पश्चात् मरणे त्वविज्ञप्तिरेव ।

कुशलानां पुनः कर्मपथानां

द्विविधाः सप्त कुशलाः

कुशलाः सप्त रूपिणः कर्मपथा[5] अवश्यं द्विप्रकारा विज्ञप्तिरविज्ञप्तिश्च । विज्ञप्त्यधीनत्वात्समादान[6]शीलस्य ।

---

१. MS. सम्यक् । २. Y. adds च । ३. Y. adds वध । MS. बन्धनादि । ४. Y. देशः । ५. MS. ...पथावश्यं । ६. D. समाहित ।

**अविज्ञप्तिः समाधिजाः ॥६७॥**

ध्यानानास्रवसंवरसंगृहीताः समाधिजाः उच्यन्ते । ते ह्यविज्ञप्तिरेव चित्तमात्राधीनत्वात् ।

**सामन्तकास्तु विज्ञप्तिः**

कर्मपथसामन्तकास्तु विज्ञप्तिस्वभावा अवश्यम् ।

**अविज्ञप्तिर्भवेन्न वा ।**

यदि तीव्रेण पर्यवस्थानेन प्रमादेन वा घनरसेन प्रयोगमारभेत स्यादविज्ञप्तिरन्यथा न स्यात् ।

**विपर्ययेण[1] पृष्ठानि**

सामन्तकेभ्यो विपर्ययेण कर्मपथानां पृष्ठानि वेदितव्यानि । तानि अवश्यमविज्ञप्तिस्वभावानि । विज्ञप्तिस्तु भवेन्न वा । यदि कर्मपथं कृत्वा पुनस्तस्यानुधर्मं चेष्टेत तस्य[2] स्यात् विज्ञप्तिरन्यथा न स्यात् । अथ कुतो यावदेषां प्रयोगमौलपृष्ठानां व्यवस्थानम् । यदा तावदिह कश्चित् पशुं हन्तुकामो मञ्चकादुत्तिष्ठति मूल्यं गृह्णाति गच्छत्यामृश-[40a. 13A₁. I]ति पशुं क्रीणात्यानयति पुष्णाति प्रवेशयति निहन्तुं शस्त्रमादत्ते प्रहारमेकं ददाति द्वौ वा यावन्न जीविताद्व्यपरोपयति तावत् प्रयोगः । येन तु प्रहारेण जीविताद्व्यपरोपयति[3] तत्र या विज्ञप्तिस्तत्क्षणिका वा[4]ऽविज्ञप्तिरयं[5] मौलः कर्मपथः । द्वाभ्यां हि कारणाभ्यां प्राणातिपातावद्येन स्पृश्यते[6] प्रयोगतः मृते सति फलपरिपूरितश्च[7] । तत ऊर्ध्वं[8]मविज्ञप्तिक्षणाः[9] पृष्ठं[10] भवन्ति । यावच्च[11] तं पशुं कुष्णाति[12] शोधयति विक्रीणीते[13]पचति खादयत्यनुकीर्तयति[14] वा[15] तावदस्य विज्ञप्तिक्षणा अपि पृष्ठं भवन्ति । एवमन्येष्वपि यथासंभवं योज्यम् । अभिध्यादीनां नास्ति प्रयोगो न पृष्ठं संमुखीभावमात्रा[16]त्कर्मपथः ।

इदमत्र वक्तव्यम् । किं तावत्[17]मरणभवस्थे तस्मिन् प्राणिनि ये विज्ञप्त्यविज्ञप्ती ते कर्मपथ आहोस्विन्मृते । किं चातः । यदि तावन्मरणभवस्थे सहमृतस्यापि हन्तुर्घातयितुर्वा प्राणातिपातावद्येन योगः प्राप्नोति । न चेष

१. MS. न । २. MS. तस्या । ३. MS. drops परो । ४. Y. seems to read चा । D. चा । ५. D. स । ६. MS. स्पृशते । ७. MS. फलपूरितश्च । ८. Y. seems to read ततः परम् । ९. MS. seems to be क्षणाताः । १०. D. पृष्ठी । ११. Y. seems to omit च । D. यावद्धतं । १२. D. कृष्णाति । Y. (w) seems to adopt क्षीणाति and gives in note :— Ktaṣṇāti'sº C, Ktaṣṇāti'sº N. १३. D. विक्रीणाति । १४. D. खादति कीर्त्तयति । १५. D. यदि । १६. D. adds एव । १७. MS. तावत्मरण... ।

सिद्धान्तः। अथ मृते। यदुक्तं "येन तु प्रहारेण जीविताद्व्यपरोपयति तत्र या विज्ञप्तिस्तत्क्षणिका वा[१]ऽविज्ञप्तिरयं मौलः कर्मपथ" इति तन्न वक्तव्यम्। यच्चापीदं शास्त्र उक्तं "स्यात् प्राणी हतः प्राणातिपातश्चानिरुद्धः। स्याद्यथा हि तत्प्राणी जीविताद्व्य-[40b. 13B1 I]परोपितो भवति प्रयोगश्चाप्रतिप्रस्रब्ध" इत्यत्र पृष्ठं[२] प्रयोगशब्देनोक्तमिति वैभाषिकीयोऽर्थविरोधो मौलस्यैव तदानीमनिरुद्धत्वात्[३]। यथा न दोषस्तथाऽस्तु। कथं च न दोषः। मौल एवात्र प्रयोगशब्देनोक्त इति। विज्ञप्तिस्तर्हि तदा कथं मौलः कर्मपथो भवति। कथं च न भवितव्यम्। असामर्थ्यात्। अविज्ञप्तिरिदानीं कथं भवति। तस्मात् प्रयोगफलपरिपूरिकाले तदुभयं कर्मपथः स्यात् कर्मत्पथोऽप्यन्यस्य प्रयोगः पृष्ठं च भवति। प्राणातिपातस्य दशापि कर्मपथाः प्रयोगः। यथा च शत्रोर्वधार्थं कृत्यं समुपस्थापयन् पशुना वलिं कुर्यात् परकीयं कृत्वा दारेषु[४] चास्य विप्रतिपद्येत तैरेव तद्घातनार्थम्[५] अनृतपिशुनपरुषसान्त्वैश्चास्य मित्रभेदं कुर्याद्यान्यस्य परित्राणाय कल्पेरन् अभिध्यां च तत्स्व[६] कुर्यात्तत्रैव च व्यापादं तद्वधार्थं च मिथ्यादृष्टिं बृंहयेदिति। एवमन्येष्वपि यथायोगं योज्यम्। न त्वभिध्यादयः प्रयोगा युज्यन्ते। नहि चित्तोत्पादमात्रेण प्रयुक्तो भवति। क्रियानारम्भात्।

सूत्र उक्तं "प्राणातिपातो भिक्षवस्त्रिविधो लोभजो द्वेषजो मोहजो यावन्मिथ्यादृष्टि"रिति। तत्र कीदृशः प्राणातिगतो लोभज इत्येवमादि वक्तव्यम्। नात्र सर्वेषां कर्म-[41a. 13A1. II]पथानां लोभादिभिर्निष्ठा।

**प्रयोगस्तु त्रिमूलजः[७] ॥६८॥**

प्रयोगस्तेषामकुशलमूलत्रयाज्जात इत्यादिसमुत्थानवचनादेवमुक्तः। तत्र लोभजप्राणातिपातो यथा तच्छरीरावयवार्थमर्थार्थं क्रीतार्थं च प्राणिनं[८] जीविताद्व्यपरोपयति आत्मसुहृत्परित्राणाय। द्वेषजो यथा वैरनिपीडनार्थम्। मोहजो यथा याज्ञिकानां धर्मबुद्ध्या राज्ञां च धर्मपाठकप्रामाण्याद्धिंसताम्[९]। दुष्टानां किल निग्रहं कुर्वन्तो राजानः पुण्यभाजो भवन्तीति। पारसीकानां च। ते ह्येवमाहुः। "मातापितरौ जीर्णौ वा ग्लानौ[१०] वा[११] हन्तव्या"विति। ये चान्येऽप्येवमाहुरहिवृश्चिकत्र्यम्बुकादयो मनुष्याणामुपघातापका हन्तव्याः

१. Y. चा। २. MS has शब्द extra, but it seems to be cancelled. ३. MS. ...मविरुद्धत्वात्। ४. MS. दारेष। ५. MS. तत्। ६. Y. तत्स्वे। ७. MS. drops त्रि। ८. MS. प्राणिजं। ९. MS. ....द्धिंशताम्। १०. MS. ग्लानौ not clear. ११. MS. looks like व्य।

मृगपशुपक्षिमहिषादयश्चोपभोगार्थत्वादिति। यश्च मिथ्यादृष्टिप्रवर्तितः प्राणातिपातः। लोभजमदत्तादानं यो येनार्थी स तद्धरति अन्यलाभसत्कारयशोऽर्थं वा आत्मसुहृत्परित्राणाय वा। द्वेषजं यद्वैरनिपीडनार्थम्। मोहजं यथा राज्ञां धर्मपाठकप्रामाण्यात्। दुष्टनिग्रहार्थं यथा ब्राह्मणा आहुः "सर्वमिदं ब्रह्मणा[1] ब्राह्मणेभ्यो दत्तं ब्राह्मणानां दौर्बल्याद्वृषलाः परिभुञ्जते। तस्मादपहरन् ब्राह्मणः स्वमादत्ते स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति चे"[41b. 13B1 II]ति। न चैषामपरस्वसंज्ञा भवति। यच्च मिथ्यादृष्टिप्रवर्त्तितम्। लोभजः काममिथ्याचारः परदारादिषु तत्संरागादब्रह्मचर्यं लाभसत्कारार्थमात्मसुहृत्परित्राणाय। द्वेषजो वैरनिपीड़नार्थम्। मोहजो यथा पारसीकानां मात्रादिगमनं गोसवे च जज्ञे। यथोक्तं "ब्राह्मणो गोसवेनेष्टचा संवत्सरगोव्रती भवति। उपहा उदकं चूषति[2] तृणानि च्छिनत्ति उपैति मातरमुप स्वसारमुप सगोत्रा"मिति। ये चाहु"रुदूखलपुण्यफलपक्वान्नतीर्थमार्गप्रख्यो मातृग्राम" इति। मृषावादादयो लोभजा द्वेषजाश्च पूर्ववत्। मोहजो मृषावादो यथाह

"न नर्मयुक्तमनृतं हि नास्ति[3]
न स्त्रीषु राजन्न विवाहकाले।
प्राणात्यये सर्वधनापहारे
पञ्चानृतान्याहुरपातकानी"ति।

यश्च मिथ्यादृष्टिप्रवर्तितो मृषावादः। पैशुन्यादयस्तु मिथ्यादृष्टिप्रवर्तिता मोहजाः। यश्च वेदाद्यसच्छास्त्रप्रलापः।

अभिध्यादयः कथं लोभजाः।

**तदनन्तरसंभूतेरभिध्याद्यास्त्रिमूलजाः।**

लोभादनन्तरमुत्पन्ना लोभजाः द्वेषादनन्तरं[4] द्वेषजा मोहादनन्तरं मोहजाः। उक्ता अकुशलाः कर्मपथाः।

कुशलाः कथमित्याह

**कुशलाः सप्रयोगान्ता अलोभद्वेषमोहजाः॥६९॥**

सप्रयोगपृष्ठाः कुशलाः कर्मपथा अलोभद्वेषमोहजाः। कु[42a. 13A. III]-शलचित्तसमुत्थितत्वात्। तस्य च अवश्य[5]मलोभादिभिः संप्रयोगात् तत्राकुशल-

१. MS. ब्राह्मणा। D. प्रजापतिना; २. D. चूषयति। ३. D. वचनं हिनस्ति। ४. MS. द्वेषानन्तरं। ५. MS. आवश्य।

१६

कर्मपथप्रयोगाद्विरतिः कुशलकर्मपथप्रयोगः । मौलाद्विरतिः मौलः । पृष्ठाद् विरतिः पृष्ठः । तद्यथा श्रामणेर उपसंपाद्यमानो नानावासं प्रविशति भिक्षून्वन्दते उपाध्यायं याचते यावदेकं कर्मवाचनं क्रियते द्वितीयं च । अयं प्रयोगः । तृतीय[1]कर्मवाचने या विज्ञप्तिस्तत्क्षणिका चा[2]विज्ञप्तिरयं मौलः कर्मपथः । तत ऊर्ध्वं यावन्निश्रया आरोच्यन्ते तदधिष्ठानं च विज्ञपयति अविज्ञप्तिच यावदनुवर्तते इदं पृष्ठम् ।

यदुक्तं "न सर्वेषां कर्मपथानां लोभादिभिर्निष्ठे"त्यथ कस्य केन निष्ठा ।

**वधव्यापादपारुष्यनिष्ठा द्वेषेण**

एषां प्राणातिपातव्यापादपारुष्याणां द्वेषेण समाप्तिः । परित्यागपरुषचित्तसंमुखीभावात् ।

**लोभतः ।**

**परस्त्रीगमनाभिध्याऽदत्तादानसमापनम् ।।७०।।**

लोभेन काममिथ्याचाराभिध्याऽदत्तादानानां समाप्तिः ।

**मिथ्यादृष्टेस्तु मोहेन**

अधिमात्रभूतो हि तां निष्ठापयति ।

**शेषाणां त्रिभिरिष्यते ।**

के पुनः शेषाः । मृषावादपैशुन्यसंभिन्नप्रलापाः । एषां त्रिभिरपि निष्ठा लोभेन द्वेषेण मोहेन वा

य एते कर्मपथाश्चतुर्भिः काण्डैरुक्तास्त्रयस्त्रय एकस्त्रयश्च [42b. 13B1. III] एषां यथाक्रमं

**सत्त्वभोगावधिष्ठानं नामरूपं च नाम च ।।७१।।**

सत्त्वाधिष्ठाना वधादयः । भोगाधिष्ठानाः परस्त्रीगमनादयः । नामरूपाधिष्ठाना मिथ्यादृष्टिः । नामकायाधिष्ठाना मृषावादादयः ।

यः परं मरणान्नियमय्य समं तेन पूर्वं वा म्रियते किमस्य मौलः कर्मपथो भवत्युताहो न ।

**समं प्राक् च मृतस्यास्ति न मौलः**

अत एवोच्यते "स्यात् प्रयोगं कुर्यात् फलं च परिपूरयेन्न च प्राणातिपातावद्येन स्पृश्यते । आह । स्यात् यथापि तद्वचपरोपकः पूर्वं सह वा कालं कुर्या"दिति ।

१. Y. तृतीये । २. Y. वा ।

किं पुनस्तत्कारणम् नहि वध्ये जीवति हन्तुः प्राणातिपातावद्येनास्ति योगो नापि सहमृतस्य हन्तुः।

**अन्याश्रयोदयात्।**

येनाश्रयेण तत्प्रयोगः कृतः स उच्छिन्नोऽन्य एवाश्रयो निकायसभागभिन्न उत्पन्नः। तस्य प्रयोक्तृत्वात् कर्मपथेन योगो न युक्तः। यत्सेनापातमृगयावस्कन्धेषु परेषां वधार्थं वहवः समग्राः पतन्त्येकश्च प्राणातिपातं करोति कस्तेन समन्वागतो भवति।

**सेनादिष्वेककार्यत्वात् सर्वे कर्त्तृवदन्विताः[1] ॥७२॥**

यथैव हि कर्त्ता तथा सर्वे समन्वागता भवन्त्येककार्यत्वात्। अर्थतो हि तेऽन्योन्यं प्रयोक्तारो भवन्ति। यस्तर्हि वलान्नीयते सोऽपि समन्वागतो भवत्यन्यत्र य एवं निश्चित्य यायात् यावज्जीवि-[43a. 13A1. IV] तद्धेतोरपि प्राणिनं न हनिष्यामीति

कियता पुनः प्राणातिपातं स्वयं कुर्वतः कर्मपथो भवति कियता यावन्मिथ्यादृष्टिः कर्मपथः इति लक्षणं वक्तव्यं तदुच्यते।

**प्राणातिपातः संचिन्त्य परस्याभ्रान्तिमारणम्।**

यदि मारयिष्याम्येनमिति संज्ञाय परं मारयति तमेव च मारयति नान्यं भ्रमित्वा। इयता प्राणातिपातो भवति। यस्तर्हि संदिग्धो मारयति क्रिमयं प्राणी न प्राणीति स एवान्यो वेति सोऽप्यवश्यमेतं निश्चयं लब्ध्वा तत्र प्रहरति। योऽस्तु सोऽस्त्विवति कृतमेवानेन त्यागचित्तं भवति। कथं क्षणिकेषु स्कन्धेषु प्राणातिपातो भवति। प्राणो नाम वायुः कायचित्तसंनिश्रितो वर्तते। तमभिपातयति[2]। यथा प्रदीपं निरोधयति घण्टास्वनं वा। जीवितेन्द्रियं वा प्राणास्तन्निरोधयति। यद्येकस्यापि जीवितक्षणस्योत्पद्यमानस्यान्तरायं करोति प्राणातिपातावद्येन स्पृश्यते नान्यथा। कस्या तज्जीवितं यस्तदभावान्मृतो भवति। कस्येति षष्ठीं पुद्‌गलवादे विचारयिष्यामः। उक्तं तु भगवता

"आयुरूष्माऽथ विज्ञानं यदा कायं जहत्यमी।
अपविद्धस्तदा शेते यथा काष्ठमचेतन[3]" ॥इति।

तस्मात्सेन्द्रियः कायो जीवतीत्युच्यते अनिन्द्रियो मृत इति। अबुद्धिपूर्वादपि प्राणिवधात् [43a. 13B1. VI] कर्तुरधर्मो यथाऽग्निसंयोगाद्दाह इति निर्ग्रन्थाः। तेषां

---

१. G. सेनादेस्चैककार्यत्वात् सर्वकर्तृ वदस्ति सः। २. Y. अपि पातयति, D. अतिपातयति। ३. D. अचेतनम्।

परदारदर्शनेऽप्येष[१] प्रसङ्गः। निर्ग्रन्थशिरोलुञ्चने च कष्टतपोदेशने च शास्तुः तद्विसूचिकामरणे च दातुर्वैद्यानां चातुरपीडने मरणे च मातृगर्भस्थयोश्चान्योन्यं[२] दुःखनिमित्तत्वात्। वध्यस्यापि च तत्क्रियासंबन्धादग्निस्वाश्रयदाहवत्[३]। कारयतश्चाप्रसङ्गस्तदसंबन्धात्। परेणाग्नि स्पर्शयतस्तेनादाहवत्। अचेतनानां च काष्ठादीनां गृहपाते प्राणिवधात्[४] पापप्रसङ्गो न वा दृष्टान्तमात्रात्सिद्धिरिति। उक्तः प्राणातिपातः।

**अदत्तादानमन्यस्वस्वीक्रिया बलचौर्यतः ॥७३॥**

अभ्रान्त्येति वर्तते। यदि बलाद्वा चौर्येण वा परस्वं स्वीकरोति यत्रैव च बलचौर्याभिप्रायेणान्यत्र[५] संज्ञाविभ्रमात् इयताऽदत्तादानं भवति। स्तूपादपहरतो बुद्धाददत्तादानम्। सर्वं हि तद्भगवता परिनिर्वाणकाले परिगृहीतमिति। येषां संरक्ष्यमित्यपरे। अस्वामिकं च निधिमुद्धरतो विषयस्वामिकात् परिवर्तकं हरतः कृते कर्मणि सीमाप्राप्तेभ्यः[६] अकृते सर्वबुद्धशैक्ष्येभ्यः।

**अगम्यगमनं[७] काममिथ्याचारश्चतुर्विधः।**

चतुष्प्रकारमगम्यगमनं काममिथ्याचारः। अगम्यां गच्छति परपरिगृहीतां वा मातरं दुहितरं[८] वा मातृ-[44a. 13A1. V]पितृसंबन्धिनीं वा। अनङ्गे वा गच्छति स्वामपि भार्याम् अपाने मुखे वा। अदेशे वा गच्छति प्रकाशे चैत्ये[९] विहारे वा। अकाले वा गच्छति। कः पुनः अकालः। गर्भिणीं वा गच्छति पाययन्तीं वा सनियमां वा। यदि भर्तुरनुज्ञया सनियमा भवतीत्येके। अभ्रान्त्येति वर्तते। यदि स्वसंज्ञी परस्त्रियं यायात् न स्यात् कर्मपथः। यद्यन्यः[१०] परस्त्रीसंज्ञयाऽन्यामभिगच्छेत् परदारप्रयोगाद्वस्तुपरिभोगाच्च स्यादित्येके। अन्यत्र प्रयोगान्न स्यात् प्राणातिपातवदित्यपरे। भिक्षुणीं गच्छतः कस्यान्तिकात् काममिथ्याचारः। विषयस्वामिनः। तस्य हि तन्न मर्षणीयम्। तस्यापि सनियमा स्वभार्येव तु सान गम्या। कुमारीं गच्छतो यस्य निसृष्टा नो चेद्यस्य रक्षाऽन्ततो राज्ञः।

**अन्यथासंज्ञिनो[११] वाक्यमर्थाभिज्ञे मृषावचः ॥७४॥**

यदि यमर्थं ब्रवीति तस्मिन्नन्यथासंज्ञी भवति यं चाधिकृत्य ब्रवीति स तस्य

१. Y. परस्त्रीदर्शनस्पर्शन एष २. Y. अन्योन्य...। ३. MS. ....ष्वास्रयः....। ४. MS. प्राणिवध्यत। Y. प्राणिनां वधात्। ५. MS..... न्यत्रासंज्ञा...। ६. MS. प्राप्तेभ्य। ७. G. अगम्या। ८ MS. drops त। ९. MS. चेत्ये। १०. MS. यद्यन्य। ११. G. अन्यसंज्ञोदितं।

वाक्यस्यार्थाभिज्ञो भवति तद्वाक्यं मृषावादः । अनभिज्ञे किं स्यात् । संभिन्नप्रलापः स्यात् । वाक्यमित्युच्यते । कदाचिच्च वहवो वर्णा वाक्यं भवन्तीति कतमः तत्र कर्मपथः । पश्चिमः सहाविज्ञप्त्या यत्र चार्थाभिज्ञो भवति । पूर्वे तु वर्णाः प्रयोगः । अर्थाभिज्ञ इत्युच्यते । कि तावदभिज्ञातार्थे श्रोतरि आहोस्वित् [44b. 13B₁ V] अभिज्ञातुं समर्थे । किं चातः । यद्यभिज्ञातार्थे मनोविज्ञानविषयत्वाद्वाक्यार्थस्य[1] श्रोत्रविज्ञानेन सह निरोधाच्च वाग्विज्ञप्तेरविज्ञप्तिरेव स्यात् कर्मपथः । अथाभिज्ञातुं समर्थे । एवं दोषो न भवति । कथं चाभिज्ञातुं समर्थोऽप्युत्पन्नभाव उत्पन्ने श्रोत्रविज्ञाने । यथा न दोषस्तथाऽस्तु ।

षोडश व्यवहाराः सूत्र उक्ताः । "अदृष्टे दृष्टवादिता अश्रुतेऽमतेऽविज्ञाते विज्ञातवादिता दृष्टे अदृष्टवादिता यावद् विज्ञातेऽविज्ञातवादिता इतीमेऽनार्या अष्टौ व्यवहाराः । दृष्टे दृष्टवादिता यावद्विज्ञाते विज्ञातवादिता अदृष्टेऽदृष्टवादिता यावदविज्ञाते अविज्ञातवादिता इतीमे आर्या अष्टौ व्यवहाराः । तत्रैषां दृष्टश्रुतमतविज्ञातानां किं लक्षणम् ।

**चक्षुः[2]श्रोत्रमनश्चित्तैरनुभूतं त्रिभिश्च यत् ।**
**तद्दृष्टश्रुतविज्ञातं[3] मतं चोक्तं यथाक्रमम् ॥७५॥**

यच्चक्षुर्विज्ञानेनानुभूतं तद्दृष्टमित्युक्तम् । यच्छ्रोत्रविज्ञानेन तच्छ्रुतम् । यन्मनोविज्ञानेन तत् विज्ञातम् । यत् घ्राणजिह्वाकायविज्ञानैस्तन्मतम् । किं कारणम् । गन्धरसस्प्रष्टव्यान्यव्याकृतत्वान्मृतकल्पानि । अत एतेषु मताख्येति वैभाषिकाः । किमत्र ज्ञापकम् । सूत्रं युक्तिश्च । सूत्रं तावत् 'तत्किं मन्यसे माहकीमातः[4] यानि त्वया चक्षुषा रूपाणि न दृष्टानि न दृष्टपूर्वाणि [45a. 13A₁. VI] न पश्यसि नापि ते एवं भवति पश्येयमिति । अपि नु ते तन्निदानमुत्पन्नश्छन्दो वा रागो वा स्नेहो वा येन वा आलयो वा नियतिरध्यवसानं वा । नो भदन्त । ये त्वया[5] श्रोत्रेण शब्दा न श्रुता न श्रुतपूर्वा विस्तरेण यावन्मनसा धर्मा न विज्ञाता विस्तरेण यावन्नो भदन्त । अत्र च ते माहकोमातर्दृष्टे दृष्टमात्रं भविष्यति श्रुते मते विज्ञाते विज्ञातमात्रमित्यु"क्तम् । अतस्त्रिषु विषयेषु दृष्टश्रुतविज्ञातशब्दापदेशाद्गन्धादिषु मताख्या गम्यते । अत एवं चानिष्यमाणे[6] दृष्टादिभावबाह्यत्वात् गन्धादिषु व्यवहारो न स्यादित्येषा[7] युक्तिः । सूत्रं तावज्ज्ञापकमन्यार्थत्वात् । न ह्यत्र सूत्रे भगवान् व्यवहाराणां लक्षणं शास्ति स्म । किं तर्हि । अत्र च ते षड्विधे विषये चतुर्षु व्यवहारेषु दृष्टादिव्यवहारमात्रं भविष्यति न[1] प्रियाप्रियनिमित्ताध्यारोप[2] इत्यय-

---

१. MS. drops स्य । २. G. चक्षु... । ३. G....विज्ञातमतं । ४. Y. one reading seems to be मालकीमातः । ५. MS. ये या । ६. MS. चानिष्यमाने । ७. MS. ...त्येषो ।

मत्र[3] सूत्रार्थो दृश्यते। किं पुनर्दृष्टं किं च यावद्विज्ञातम्। केचित्तावदाहुः। "यत् पञ्चभिरिन्द्रियैः प्रत्यक्षं तद्दृष्टम्। यत् परत आगमितं तच्छ्रुतम्। यत् स्वयं[4] युक्त्यनुमानतो रुचितं तन्मतम्। यन्मनःप्रत्यक्षभावेनाधिष्ठितं प्रत्यात्मवेद्यं तद्विज्ञातमि"ति ; एते च पञ्च विषयाः प्रत्येकं दृष्टा इति वा कृत्वा व्यवह्रियन्ते। श्रुता मता विज्ञाता इति वा। षष्ठोऽन्यत्र [45b. 13B. VI] दृष्टादिति नास्ति गन्धादिषु व्यवहाराभावप्रसङ्गः। तस्माद्युक्तिरप्येषा युक्तिर्न[5] भवति। पूर्वाचार्या एवमाहुः। यद्दृष्टं यत् प्रत्यक्षीकृतं चक्षुषा। श्रुतं यच्छ्रोत्रेण परतश्चाख्यरितम्[6]। मतं यत्स्वयं चिन्तितम्। विज्ञातं यत् प्रत्यात्म[7]प्रतिसंवेदितमधिगतं चोत्पन्नम्।

प्रसङ्गेन शास्त्रं प्रवर्तयताम्। यः कायेनान्यथात्वं प्रापयेत्स्यान्मृषावादः। स्यात्। अत एवोच्यते। "स्यान्न कायेन पराक्रमेत प्राणातिपातावद्येन च स्पृश्येत। स्याद्वाचा पराक्रमेत स्यान्न वाचा पराक्रमेत मृषावादावद्येन च स्पृश्येत। स्यात् कायेन पराक्रमेत स्यान्न कायेन न वाचा पराक्रमेत उभयावद्येन च[8] स्पृश्येत। स्यात् ऋषीणां मनःप्रदोषेण पोषधनिदर्शनं चात्रे"ति। यद्युभयथाऽपि न पराक्रमेत न चाविज्ञप्तिकास्त्यविज्ञप्तिः कामावचरी[9] कथं तयोः कर्मपथः सिद्ध्यति। कर्तव्योऽत्र यत्नः। गतो मृषावादः।

**पैशुन्यं क्लिष्टचित्तस्य वचनं परभेदने।**

यत् क्लिष्टचित्तस्य परेषां भेदाय वचनमप्रीतये तत् पैशुन्यम्। अर्थाभिज्ञ इति वर्तते अभ्रान्त्येति च।

**पारुष्यमप्रियं**

वचनम्। क्लिष्टचित्तस्येति वर्तते। अर्थाभिज्ञे अभ्रान्त्येति च। यत् क्लिष्टचित्तस्य परेषामप्रियवचनमर्थाभिज्ञे तत्रैव च यत् विवक्षि-[46a. $13A_1$. VII]तं तत् पारुष्यम्।

**सर्वं क्लिष्टं भिन्न[10]प्रलापिता ॥७६॥**

वाक्यमित्यधिकारो वर्तते। सर्वं क्लिष्टं वचनं संभिन्नप्रलापः। सैव[11] संभिन्नप्रलापिता। तद्योगेन हि संभिन्नप्रलापी भवति।

---

१. Y.D. add हि। २. MS. अध्याहारोप। It should be either अध्याहारो or अध्यारोप। Y. अध्यारोप। ३. MS.....मतो। ४. Y. omits स्वयं। ५. Y. न युक्तिः। ६. MS. It may be read as आखनितं। Y. आगमितं। ७. Y. प्रत्यात्मं। ८. Y. वा। ९. MS....विज्ञप्ति कामावचरीं। १०. MS. संभिन्न। ११. Y. adds च।

**अतोऽन्यत् क्लिष्टमित्यन्ये**

अतो मृषावादादिकाद्वाक्कर्मणो[१] यदन्यत्[२] क्लिष्टं वचनं त[३]त्संभिन्नप्रलाप इत्यपरे।

**लपनागीतनाट्यवत्।**

**कुशास्त्रवच्च**

तद्यथा भिक्षुर्मिथ्याजीवी लपनां करोति रक्ताश्च केचित् गायन्ति नाट्ये च नटाः[४] परेषां रञ्जनार्थं प्रलपन्ति। कुशास्त्राणि च तद्दृष्टयोऽपि गदन्ति। एवं परिदेव-संगणिकादिकमपि यदन्यन्मृषावादादिभ्यः क्लिष्टं वाक्कर्म तत्संभिन्नप्रलापः। कथं चक्रवर्तिकाले गीतं चास्ति न च संभिन्नप्रलापः। नैष्क्रम्योपसंहितानि हि तदानीं गीयन्ते स्म न ग्राम्यरसोपसंहितानि। तदाप्यावाहविवाहाद्यभिलापसद्भावादस्ति[५] संभिन्नप्रलापो न कर्मपथ इत्यपरे।

**अभिध्या तु परस्वविषमस्पृहा ॥७७॥**

अहो वत यत् परेषां तन्मम स्यादिति परस्वेभ्यो या विषमेणान्यायेन स्पृहा स्वीकरणेच्छा बलाद्वा चोपायाद्वा[६] साऽभिध्या कर्मपथः। सर्वैव कामावचरो तृष्णाभिध्येत्यपरे[७]। तथा हि निवरणाधिकारे[८] कामच्छन्दमधिकृत्योक्तं सूत्रे "सोऽभिध्यां लोके प्रहा[46b. 131.B VII]ये"त्येवमादि। यद्यपि सर्वाभिध्या नतु सर्वा कर्मपथ औदारिकदुष्चरितसंग्रहादित्यपरे। मा भूच्चक्रवर्तिनामप्यु[९]त्तरकौरवाणां चाभिध्या कर्मपथ इति।

**व्यापादः सत्त्वविद्वेषः**

सत्त्वेषु विद्वेषो व्यापादः परपीडाकारप्रवृत्तः[१०]।

**नास्तिदृष्टिः शुभाशुभे।**

**मिथ्यादृष्टिः**

शुभे चाशुभे च कर्मणि या नास्तीति दृष्टिः सा मिथ्यादृष्टिः। तद्यथा "नास्ति दत्तं नास्तीष्टं नास्ति हुतं नास्ति सुचरितं नास्ति दुश्चरितमित्येवमादि यावन्न सन्ति लोकेऽर्हन्त" इति। सैषा साकल्येन कर्मफलार्यापवादिका मिथ्यादृष्टिर्भवति। आदिमात्रं तु श्लोके दर्शितम्। एवंलक्षणा एते दश कर्मपथाः।

---

१. Y. ...वादादित्रयात् and omits वाक्कर्म्मणो। २. Y. यदन्यक्लिष्टं। ३. Y. स। ४. MS. नटः। ५. MS. सत्भावा...। ६. MS. drops या। ७. MS. दृष्टा... Y. तृष्णा... ८. Y. seems to be कारेण। ९. Y. omits अपि। १०. MS. पवृत्तः।

कर्मपथा इति कोऽर्थः ।

**त्रयो ह्यत्र पन्थानः सप्त कर्म च ॥७८॥**

अभिध्यादयो हि त्रयः कर्मणः पन्थान इति कर्मपथाः । तत्संप्रयोगिणी हि चेतना तेषां वाहेन वहति तेषां गत्या गच्छति । तद्वशेन तथाभिसंस्करणात् । सप्त तु प्राणातिपातादयः कर्म च कायवाक्कर्मत्वात्[1] कर्मणश्च पन्थान इति कर्मपथास्तत्समुत्थानचेतनायास्तानधिष्ठाय प्रवृत्तेरिति । कर्मपथाश्च कर्म च कर्मपथाश्चेति कर्मपथाः । असरूपाणामप्येकशेषसिद्धेः । एवमनभिध्यादयः प्राणातिपात[2]-[47a. 13A1. VIII] विरत्यादयश्च ज्ञेयाः । प्रयोगपृष्ठानि कर्माणि कर्मपथाः यस्मात्तदर्थं तन्मूलिका च तेषां प्रवृत्तिः । यथौदारिकं च ग्रहणादित्युक्तं प्राक्[3] । येषां चोत्कर्षापकर्षेणाध्यात्मिकवाह्यानां[4] भावानामुत्कर्षापकर्षौ लोके भवतः । ये तर्हि दार्ष्टान्तिका अभिध्यादीनेव मनस्कर्मेच्छन्ति तेषां ते कथं कर्मपथाः । त एव हि[5] प्रष्टव्याः । अपि तु शक्यं वक्तुं कर्म च ते पन्थानश्च सुगतिदुर्गतीनामिति कर्मपथाः । इतरेतरावाहनाद्वा । य एते दशाकुशलाः कर्मपथाः सर्वे एते कुशलानां[6] कर्मणां समुदाचारविरोधिनः ।

**मूलच्छेदस्त्वसद्दृष्ट्या ।[7]**

कुशलमूलच्छेदस्तु मिथ्यादृष्ट्या भवत्यधिमात्रपरिपूर्णया । यत्तर्हि[8] शास्त्र उक्तं "कतमान्यधिमात्राण्यकुशलमूलानि । यैरशलमूलैः कुशलकुमूलानि समुच्छिनत्ति कामवैराग्यं चानुप्राप्नुवन् यानि तत्प्रथमत उपलिखतो"ति । अकुशलमूलाध्याहृतत्वात्[9] मिथ्यादृष्टेस्तेष्वेव तत्कर्मापदेश[10] एष क्रियते तद्यथाग्निरेव ग्रामं दहति चौरास्तु तस्याध्याहारका इति चौरैर्ग्रामो दग्ध इत्युच्यते ।

कतमेषां कुशलमूलानां समुच्छेदो भवति ।

**कामाप्तोत्पत्तिलाभिनाम्[11] ।**

कामावचराणि कुशलमूलानि समुच्छिद्यन्ते । [47b. 13B1. VIII] रूपारूप्याचवरैरसमन्वागतत्वात् । प्रज्ञप्तिभाष्यं तर्हि कथं नीयते । "इयताऽनेन पुद्गलेन त्रैधातुकानि कुशलमूलानि समुच्छिन्नानि भवन्तो"ति । तत्प्राप्तिदूरी-

१. Y. कर्मस्वभावात् । २. MS.....पाता.... । ३. Y. यथौदारिकसंग्रहादित्युक्तं प्राक् । But in the Karika 66, there is तदौदारिकसंग्रहात् । ४. MS ....बाह्याणां । ५. Y. omits हि । ६. Y. सर्व एतेऽकुशलानां । ७. MS.....सद्दृष्टा । G. ...च्छेददृष्ट्या । ८. Y. किं तर्हि । ९. MS....मूलाव्याकृतत्वात् । Y....ध्याहृत ..। १०. Y. कर्मोपदेशः । ११. G. ...लाभिकः ।

करणमभिसंधायैतदुक्तम् । संततेस्तदभाजनत्वापादनात् । उपपत्तिप्रतिलाभिकान्येव च समुच्छिद्यन्ते । प्रायोगिकेभ्यः पूर्वं परिहीणत्वात्[1] । किमालम्बनया मिथ्या-दृष्टया समुच्छिद्यन्ते

फलहेत्वपवादिन्या

या च हेतुमपवदते नास्ति सुचरितं नास्ति दुश्चरितमिति या च फलं नास्ति सुच-रितदुश्चरितानां कर्मणां फलविपाक इति । आनन्तर्यविमुक्तिमार्गस्थानीये एते इत्यपरे । सास्रवालम्बनयैव नानास्रवालम्बनया सभागधात्वालम्बनयैव च न विसभागधात्वालम्बना । संप्रयोगमात्रानुशायित्वेन दुर्बलत्वादित्येके । एवं तु वर्णयन्ति ।

सर्वथा

नवप्रकाराण्यपि कुशलमूलानि सकृत्समुच्छिद्यन्ते । दर्शनप्रहातव्यव[2]दित्येके । एवं तु वर्णयन्ति ।

क्रमशः

नवप्रकारया मिथ्यादृष्टया नवप्रकाराणि कुशलमूलानि समुच्छिद्यन्ते । भावना-हेयक्लेशवत् यावदधिमात्राधिमात्रया मृदुमृदूनीति[3] । एवमयं ग्रन्थः पालितो भवति । "कतमान्यणुसहगतानि कुशलमूलानि । आह । यैरकुशलमूलैः कुशलानि स-[48a. 14A. I] मुच्छिन्नानि सर्वपश्चात् विजहाति यैः विकीर्णैः समुच्छिन्न-कुशलमूल इति संख्यां गच्छती"ति । अस्य तर्हि ग्रन्थस्य को नयः । "कतमान्य-धिमात्राधिमात्राण्यकुशलमूलानि[4] । यैरकुशलमूलैः कुशलमूलानि समुच्छिन-त्ती"ति । समाप्तिमेतत् संधायोक्तम् । तैर्निरवशेषच्छेदात् । एकोऽपि हि प्रकार-स्तेषामसमुच्छिन्नः सर्वेषां पुनरुत्पत्तौ हेतुः स्यादिति । दर्शनमार्गवदभ्युत्थानेन च्छिनत्तीत्येके । एवं तु वर्णयन्त्युभयथेति[5] । पूर्वं संवरं विजहाति पश्चात् कुशल-मूलानि समुच्छिनत्तीत्येके । एवं तु वर्णयन्ति ; यस्य चित्तस्य फलसंवरस्तत्त्या-गात्तस्य[6] त्याग इति । अथ कुशलमूलानि समुच्छिद्यन्ते

नृषु ।।७९।।

मनुष्येष्वेव नापायेषु । क्लिष्टाक्लिष्टयोः प्रज्ञयोरदृढत्वात् । न देवेषु कर्मफल[7] प्रत्यक्षत्वात् । त्रिषु द्वीपेषु नोत्तरकुरौ । अपापाशयत्वात् जम्बूद्वीप एवेत्यपरे । तेषामयं ग्रन्थो विरुध्यते । "जाम्बूद्वीपकः सर्वाल्पैरष्टाभिरिन्द्रियैः समन्वागतः ।

---

१. MS. ...हीनत्वात् । 2. ...प्रहातव्या इव । 3. Y. मृदुमृदुः कुशलप्रकार इति । ४. MS. drops ला । ५. Y. one reading is उभयेन । ६. MS. ...त्तस्या । ७. Y....फले ।

एवं पूर्वविदेहको[1] गोदानीयक[2]" इति। तानि पुनः[3]

छिनत्ति स्त्री पुमान्

स्त्री च समुच्छिनत्ति पुरुषश्च। मन्दच्छन्दवीर्यप्रज्ञत्वात्। न स्त्रीत्यपरे। अयं ग्रन्थो विरुध्येत। "यः स्त्रीन्द्रियेण समन्वागतो नियतमसावष्टाभिरिन्द्रियैः समन्वागत" इति। तेषा-[48b. 14B. I]मपि तृष्णाचरितो न समुच्छिनत्ति। चलाशयत्वात्। कस्तर्हि।

दृष्टिचरितः

दृढगूढपापाशयत्वात्। अत एव न शण्डा[4]दयस्तृष्णाचरिते शक्ष्यत्वात्[5]। आपायिकवच्च। किंस्वभावः कुशलमूलसमुच्छेदः।

सोऽसमन्वयः।

यदा हि कुशलमूलानां प्राप्तिर्न पुनरुत्पद्यते अप्राप्तिरप्युत्पद्यते। तस्मिन्नसमन्वागम उत्पन्ने समुच्छिन्नानि कुशलमूलान्युच्यन्ते। तेषां समुच्छिन्नानां कथं पुनः प्रतिसंधिः।

संधिः काङ्क्षास्तिदृष्टिभ्यां[6]

यदाऽस्य हेतुफले विचिकित्सा चोत्पद्यते। अस्तिदृष्टिर्वा सम्यक् दृष्टिरित्यर्थः। तदा पुनः तत्प्राप्तिसमुत्पादात् प्रतिसंधितानि कुशलमूलान्युच्यन्ते। नवप्रकाराणां युगपत् प्रतिसंधानं क्रमेण तु संमुखीभाव आरोग्यबललाभवत्। स पुनस्तेषां प्रतिसंधिः।

नेहानन्तर्यकारिणः ॥८०॥

अन्यस्यैवेह स्यादानन्तर्यकारिणस्तु नेह स्यात्। तमेव संधायोक्त"मभव्योऽयं पुद्गलो दृष्ट एव धर्मे कुशलमूलानि प्रतिसंधातुं नियतमयं नवकेभ्यश्च्यवमानो वा उपपद्यमानो वा कुशलमूलानि प्रतिसंधास्यती"ति। उपपद्यमानोऽन्तराभवस्थश्च्यवमानश्च्युत्यभिमुखस्तत्र पुनर्यो हेतुबलेन समुच्छिनत्ति स च्यवमानः प्रतिसंदधाति यः प्रत्ययबलेन स उपपद्यमानः। एवं [49a. 14A. II] यः स्वबलेन[7] परबलेन। पुनराह। य आशयविपन्नः समुच्छिनत्ति स दृष्टे धर्मे प्रतिसंदधाति। य आशयप्रयोगविपन्नः स भेदात्कायस्येति। एवं यो दृष्टिविपन्नो[8]

---

१. Y. पौर्वविदेहको। २. Y. गोदानीयक। ३. MS. पुनश्छिनत्ति। ४. Y. षण्डा....। ५. Y. चरितपक्षत्वात्। ६. G. ...दृष्टेः स्यान्। ७. From Y. it seems that स्वबलेन is dropped here in the MS. ८. Y. adds यो।

दृष्टि शीलविपन्न इति। स्यात्समुच्छिन्न[1]कुशलमूलो न मिथ्यात्वनियत इति। चतुष्कोटिकम्। प्रथमा कोटिः पूरणादयः। द्वितीया[2]ऽजातशत्रुः। तृतीया देवदत्तः। चतुर्थ्येतानाकारान् स्थापयित्वा। कुशलमूलसमुच्छेदिकाया मिथ्यादृष्टेरवीचौ विपाकः। आनन्तर्यकारिणां तु तत्र वाऽन्यत्र वा नरके।

कर्मपथप्रसङ्ग एवायं वर्तते। तत्र वक्तव्यं कतिभिः कर्मपथैः सह चेतना युगपदुत्पन्ना वर्तत इति।

**युगपद्यावदष्टाभिरशुभैः सह वर्तते।**

**चेतना**

एकेन तावत्सह वर्तते। विनाऽन्येनाभिध्यादिसंमुखीभावे अक्लिष्टचेतसो वा तत्प्रयोगेण रूपिणामन्यतमनिष्ठागमने[3]। द्वाभ्यां सह वर्तते। व्यापन्नचित्तस्य प्राणिवधे अभिध्याविष्टस्य वा[4]ऽदत्तादाने काममिथ्याचारे संभिन्नप्रलापे वा[5]। त्रिभिः सह वर्तते। व्यापन्नचित्तस्य परकीय[6]प्राणिमारणापहरणे युगपत्। न तर्हीदानीमदत्तादानस्य लोभेनैव निष्ठा सिध्यति। अनन्यचित्तस्य तत्समाप्तौ[7] स नियमो ज्ञेयः। अभिध्याद्याविष्टस्य [49b. 14B. II] च तत्प्रयोगेण रूपिद्वयनिष्ठागमने त्रिभिरेव। चतुर्भिः सह वर्तते। भेदाभिप्रायस्यानृत[8]वचने परुषवचने वा। तत्र हि मानस एको भवति वाचिकास्त्रयः। अभिध्यादिगतस्य वा तत्प्रयोगेणान्यरूपित्रय[9]निष्ठागमने। एवं पञ्चषट्सप्तभिर्योजयितव्या[10]। अष्टाभिः सह वर्तते। षट्सु प्रयोगं कृत्वा[11] स्वयं काममिथ्याचारं कुर्वतः समं[12] निष्ठागमने। एवं तावदकुशलैः।

**दशभिर्यावच्छुभैः[13]**

कुशलैः पुनः कर्मपथैर्यावत् दशभिः सह चेतना वर्तत इत्युत्सर्गं कृत्वाऽपवादं करोति

**नैकाष्टपञ्चभिः ॥८१॥**

एकेनाष्टाभि[14] पञ्चभिश्च कर्मपथैः सह न वर्तते। तत्र द्वाभ्यां सह वर्तते। कुशलेषु

---

१. MS. समुच्छिन्नः। २. MS. द्वितीयो अजात...। ३. Y. निष्ठापने। ४. D. चा। ५. Y. च। ६. Y. omits परकीय। ७. Y. तत्परिसमाप्तौ। ८. D. नन्दन। ९. Y. अन्यकर्मपथत्रयस्य। D. प्रयोगेऽन्यत्रय...। १०. D. योज्यम्। ११. D. adds परे संप्रेषणेन। १२. D. सम...। १३. MS. दशभिः याव....। १४. MS. एका seems to be corrected into एके।

पञ्चसु विज्ञानेषु । आरूप्यसमापत्तौ च क्षयानुत्पादज्ञानयोः ।[1] त्रिभिः सम्यग्दृष्टिसंप्रयुक्ते[2] मनोविज्ञाने । चतुर्भिरकुशलाव्याकृतचित्तस्यो[3]पासकश्रामणेरसंवरसमादाने । षड्भिः कुशलेषु पञ्चसु विज्ञानकायेषु[4] तत्समादाने । सप्तभिः कुशले मनोविज्ञाने तत्समादान एव अकुशलाव्याकृतचित्तस्य च भिक्षुसंवरसमादाने । नवभिः कुशलेषु पञ्चसु विज्ञानेषु । तत्समादाने क्षयानुत्पादज्ञानसंप्रयुक्ते च मनोविज्ञाने [50a. 14A. III] तस्मिन्नेव च ध्यानसंगृहीते । दशभिस्ततोऽन्यत्र कुशले मनोविज्ञाने भिक्षुसंवरसमादान एव । सर्वा च ध्यानानास्रव[5]संवरसहवर्तिनी[6] चेतनाऽन्यत्र क्षयानुत्पादज्ञानाभ्याम् संवरनिर्मुक्तेन त्वेकेनापि सह स्यादन्य[7]चित्तस्यैकाङ्गविरतिसमादाने । पञ्चाष्टाभिरपि स्यात्कुशले मनोविज्ञाने द्विपञ्चाङ्गसमादाने युगपत् ।

कस्यां गतौ कति कर्मपथा अकुशला कुशला वा संमुखीभावतः समन्वागमतो वा ।

**भिन्न[8]प्रलापपारुष्यव्यापादा नरके द्विधा ।**

इत्येते त्रयः कर्मपथा नरके द्वाभ्यां सप्रकाराभ्यां सन्ति । संमुखीभावतः समन्वागमभावतश्च । परिदेवनात्संभिन्नप्रलापः । परस्परपरितापनात्पारुष्यं[9] रुक्षसंतानतया । परस्परद्वेषाद्व्यापादः ।

**समन्वागमतोऽभिध्यामिथ्यादृष्टी**

न संमुखीभावतः । रञ्जनीयवस्त्वभावात्कर्मफलप्रत्यक्षत्वाच्च । कर्मक्षयेण मरणान्न[10]प्राणातिपातः । द्रव्यस्त्रीपरिग्रहाभावान्नदत्तादानकाममिथ्याचारौ प्रयोजनाभावान्न मृषावादः । अतएव न पैशुन्यं नित्यभिन्नत्वाच्च ।

**कुरौ त्रयः ॥८२॥**

समन्वागमत[11] इति वर्तते । अभिध्याव्यापादमिथ्यादृष्टयो न संमुखीभावतः । अममापरिग्रहत्वात्[12] स्निग्ध[50b. 14B. III] संतानत्वादाघातवस्त्वभावादपापाशयत्वाच्च ।

**सप्तमः स्वयमप्यत्र[13]**

असंभिन्नप्रलापः संमुखीभावतोऽप्यस्ति । ते हि क्लिष्टचित्ताः कदाचित् गायन्ति ।

१. MS....ज्ञानयोस्त्रिभिः । २. MS. सम्यक् । ३. MS... व्याकृतस्यो....। Y.... व्याकृतचित्तस्यो...। ४. Y. विज्ञानेषु । ५. MS. ध्यानाश्रव...। ६. D. समावर्तिनी । ७. MS. looks like स्यादस्य । ८. MS. संभिन्न....। G. संभिन्नालाप...। ९. MS. तपणात्पारूष्यं । १०. MS. मरणात् । ११. MS. drops म । १२. Y. adopts the reading अमम, but quotes MSS. अममा । १३. MS....मप्यत्रासंभिन्न...।

अपापाशयत्वात् न प्राणातिपातादयः। नियतायुष्कत्वाद्द्रव्यस्त्रीपरिग्रहाभावात् प्रयोजनाभावाच्च। कथमेषामब्रह्मचर्यम्। ते खलु यथा स्त्रिया सार्धं रन्तुकामा भवन्ति तां वाहौ गृहीत्वा वृक्षमूलमुपसर्पन्ति। गम्या चेत् वृक्षश्छादयति तां ते गच्छन्ति। अगम्या चेन्न छादयति तां ते न गच्छन्ति।

**कामेऽन्यत्र दशाशुभाः।**

स्वयमपीति वर्तते। नरकोत्तरकुरुभ्यामन्यत्र कामधातौ दशाकुशलाः कर्मपथाः संमुखीभावतोऽपि विद्यन्ते। तिर्यक्प्रेतदेवेष्वसंवरनिर्मुक्ताः[1]। मनुष्येष्वसंवर-संगृहीता अपि। यद्यपि देवो देवं न मारयति अन्यगतिस्थं तु मारयति। देवा अपि शिरोमध्यच्छेदात् म्रियन्त इत्यपरे। उक्ता अशुभाः।

**शुभास्त्रयस्तु सर्वत्र संमुखीभाव[2]लाभतः ॥८३॥**

पञ्चसु गतिषु त्रैधातुके[3] सर्वत्रानभिध्याऽव्यापादसम्यग्दृष्टयः[4] संमुखीभावतः समन्वागमतश्च विद्यन्ते।

**आरूप्यासंज्ञिसत्त्वेषु लाभतः सप्त**

कायिकवाचिकाः सप्त कुशला आरूप्येष्वसंज्ञिसत्त्वेषु समन्वागमत एव। आ-[51a 14A. IV] रू[5]प्योपपन्नानामार्याणामतीतानागतानास्रवसंवरसमन्वा-गमात्। असंज्ञिसत्त्वानां च ध्यानसंवरसमन्वागमात्। यद्भूम्यां[6] श्रयमार्येणा-नास्रवं शीलमुत्पादितं निरोधितं भवति तेनारूप्येष्वतीतेन समन्वागता भवति। पञ्च[7]भूम्याश्रयेण त्वनागतेन।

**शेषिते।**

**संमुखीभावतश्चापि हित्वा सनरकान् कुरून् ॥८४॥**

शेषः कृतः शेषितः। योऽन्यो धातुः शेषितो गतिर्वा। तत्रैते सप्त कुशलाः कर्मपथाः संमुखीभावतोऽपि संविद्यन्तेऽन्यत्र नरकोत्तरकुरुभ्यः। ते पुनस्तिर्यक्प्रेतेषु संवर-निर्मुक्ता रूपधातौ तु संवरसंगृहीता अन्यत्रोभयथा। त एते दशाकुशलाः कर्मपथाः कुशलाश्च

**सर्वेऽधिपतिनिष्यन्दविपाकफलदा मताः।**

अकुशलैस्तावत्सर्वैरेवासेवितभावितवहुलीकृतैः नरकेषूपपद्यते। तदेषां विपाकफलम्।

१. Y. seems to be.... देवेपु संवरनिर्मुक्ताः। २. G....भूत...। ३. MS. त्रैधातुके। ४. MS. सम्यक्। ५. MS. drops रू। ६. MS. यत् गम्मा...। D. यावद्भूम्याश्रयं। ७. D. षड्।

चेदित्थंत्वमागच्छति[1] मनुष्याणां सभागतां प्राणातिपातेनाल्पायुर्भवति अदत्तादानेन भोगव्यसनी भवति काममिथ्याचारेण स संपन्नदारः[2] मृषावादेनाभ्याख्यानवहुलः पैशुन्येन मित्रभेदोऽस्य भवति पारुष्येणामनोज्ञशब्दश्रवणं संभिन्नप्रलापेनानादेयवाक्यः अभिध्यया[3] तीव्ररागः व्यापादेन तीव्रद्वेषः मिथ्यादृ-[51b. 14B. IV] ष्ट्या तीव्रमोहः। तस्या मोहभूयस्त्वात्। इदमेषां निःष्यन्दफलम्। अल्पमप्यायुर्मनुष्येषु कुशलफलम्। तत् कथं प्राणातिपातस्य निःष्यन्दफलं भवति। नोच्यते तदेवायुस्तस्य फलम्। किं तर्हि। तेनाल्पायुर्भवतीति। अतोऽन्तरायहेतुः[4] प्राणातिपातस्तस्यायुषो भवतीति वेदितव्यम्। प्राणातिपातेनात्यासेवितेन[5] वाह्या भावा अल्पौजसो भवन्तीति। अदत्तादानेनाशनिरजोवहुलाः काममिथ्याचारेण रजोऽवकीर्णाः मृषावादेन दुर्गन्धाः पैशुन्येनोत्कूलनिकूलाः पारुष्येणोषरजाङ्गला[6] प्रतिक्रुष्टाः पापभूमयः संभिन्नप्रलापेन विषमर्तुपरिणामाः अभिध्यया[7] शुष्कफलाः[8] व्यापादेन कटुकफला मिथ्यादृष्ट्याऽल्पफला अफला वा[9]। इदमेषामधिपतिफलम्। किं तेनैव कर्मणाऽयमिहाल्पायुर्भवत्यथान्येन। तेनैवेत्येके। तद्विपाकफलमिदं निष्यन्दफलमिति। तत्र प्रयोगेणेह मौलेनेत्येके। परे सपरिवारग्रहणात्तु प्राणातिपातेनेत्युक्तमिति। यदप्येतन्निःष्यन्दफलमुक्तं नैतद्द्वयमतिवर्तते विपाकफलमधिपतिफलं च। सादृश्यविशेषात्तु तथोक्तम्। किं पुनः कारणमेषां कर्मपथानामेतत्त्रिविधफलमभिनिर्व[52a. 14A. V]र्तते। प्राणातिपातं हि तावत्कुर्वता मार्यमाणस्य दुःखमुत्पादितं मारितमोजो नाशिमतोऽस्य

**दुःखनान्मारणादोजोनाशनात्त्रिविधं फलम् ॥८५॥**

परस्य[10] दुःखनाद्विपाकफलेन नरके दुःखितो भवति। मारणन्निःष्यन्दफलेनाल्पायुर्भवति। ओजोनाशनादधिपति[11]फलेनाल्पौजसो[12] वाह्य[13] ओषधयो भवन्ति। एवमन्येष्वपि योज्यम्। एवं कुशलानामपि कर्मपथानां फलत्रयं वेदितव्यम् प्राणातिपातविरत्या आसेवितया भावितया वहुलीकृतया देवेषूपपद्यते। स चेदित्थंत्वमागच्छति मनुष्याणां सभागतां दीर्घायुर्भवतीत्यकुशलविपर्ययेण सर्वं योजयितव्यम्।

यद्भगवता "मिथ्यावाङ्मिथ्याकर्मान्तो मिथ्याजीव" इत्युक्तं कोऽयमन्यस्ताभ्यां मिथ्याजीवः। नायमन्योऽस्ति। तदेव तु

१. MS. looks like ....दिच्छंत्व...। २. D सपत्नदारः। ३. MS. drops भि। ४. MS. अतो अन्तराय...। ५. D...नासेवितेन। ६. Y.....जंगलाः। ७. MS. अभिध्याया। ८. MS. शूष्क। ९. MS....ल्पफलाफला वा। १०. MS. परमदुःख...। ११. MS. drops पति। १२. MS. ....नाल्पोजसो। १३. MS. वाह्य।

**लोभजं कायवाक्कर्म मिथ्याजीवः**

द्वेषमोहजौ तु कायवाक्कर्मान्तौ । स चैष ताभ्यां

**पृथक् कृतः ।**

**दुःशोधत्वात्**

हारी हि लोभधर्मः । तत्समुत्थात् कर्मणश्चित्तं न सुरक्ष्यम् । अत आजीवो दुःखशोध इत्यादरोत्पादनार्थं तत्रासौ पृथग्निर्दिष्टः । आह चात्र

"दुःशोधा गृहिणां दृष्टिर्नित्यं विविधदृष्टिना ।
आजीवो भिक्षुणा चैव परेष्वायत्तदृष्टिने"ति ।।

**परिष्कारलो-[52b. 14B. V]भोत्थं[1] चेत्**

यो मन्यते जीवितपरिष्कारलोभोत्थमेव कायवाक्कर्म मिथ्याजीवो नान्यत् । नह्यात्मरतिनिमित्तं नृत्तगीतादि आजीवयोग इति तत्[2]

**न सूत्रतः ।।८६ ।।**

शीलस्कन्धिकायां हि भगवता हस्तियुद्ध[3]दर्शनादीन्यपि मिथ्याजीवे न्यस्तानि । किं कारणम् । मिथ्यविषयपरिभोगात् । गतमेतत् ।

यानि पूर्वं पञ्च फलान्युक्तानि तेषां कतमत् कर्म कतिभिः फलैः प्रहाणम् ।

**प्रहाणमार्गे[4] समले सफलं कर्म पञ्चभिः ।**

प्रहाणार्थं मार्गः प्रहीयन्ते वाऽनेन क्लेशा इति प्रहाणमार्गः आनन्तर्यमार्गः । तस्मिन्सास्रवे यत् कर्म तत् पञ्चभिः फलैः सफलम् । तस्य हि विपाकफलं स्वभूमाविष्टो विपाकः । निःष्यन्दफलं समाधिजा उत्तरे सदृशा धर्माः । विसंयोगफलं विसंयोग एव । यत्तत् प्रहाणम् । पुरुषकारफलं तदाकृष्टा धर्मास्तद्यथाऽधिमुक्तिमार्गस्तत्सहभुवश्च । यच्चानागतं भाव्यते तच्च[5] प्रहाणम् । अधिपतिफलं स्वभावादन्ये सर्वसंस्काराः पूर्वोत्पन्नवर्ज्याः ।

**चतुर्भिरमले**

अनास्रवे प्रहाणमार्गे यत्कर्म तच्चतुर्भिः फलैः सफलं विपाकफलं हित्वा ।

**अन्यच्च सास्रवं यच्छुभाशुभम् ।।८७।।**

---

१. G. ...लाभोत्थ.... । २. MS. तन्न सूत्रतः । ३. MS. ...युद्धि.... । ४. MS. .... मार्गेण and । (stop) after समले । ५. D. यच्च ।

यच्चान्यत् प्रहाणमार्गात्सास्रवं कुशलं कर्म यच्चाकुशलं तदपि चतुर्भिर्विसंयो-[53a. 14A. VI]-गफलं हित्वा ।

**अनास्रवं पुनः शेषं त्रिभिरव्याकृतं च यत् ।**

प्रहाणमार्गादन्यदनास्रवं कर्म अव्याकृतं च कर्म त्रिभिर्विपाकविसंयोगफले हित्वा ।

**चत्वारि द्वे तथा त्रीणि कुशलस्य शुभादयः ।।८८।।**

अनुक्रममिति पश्चाद्वक्ष्यति । कुशलस्य कर्मणः[1] कुशला धर्माश्चत्वारि फलानि विपाकफलं हित्वा । अकुशला द्वे पुरुषकाराधिपतिफले । अव्याकृता[2] स्त्रीणि निःष्यन्दविसंयोगफले हित्वा ।

**अशुभस्य शुभाद्या द्वे त्रीणि चत्वार्यनुक्रमम् ।**

यथाक्रममित्यर्थः । अकुलस्य कर्मणः कुशला धर्मा द्वे पुरुषकाराधिपतिफले । अकुशलास्त्रीणि विपाकविसंयोगफले हित्वा । अव्याकृताश्चत्वारि विसंयोगफलं हित्वा । अव्याकृते हि सत्कायान्तग्राहदृष्टी अकुशलानां सर्वत्रगाणां दुःखदर्शन-हेयानां च निःष्यन्दफलम् ।

**अव्याकृतस्य द्वे त्रीणि त्रीणि चैते शुभादयः ।।८९।।**

अव्याकृतस्य कर्मणः कुशला धर्मा द्वे पुरुषकाराधिपतिफले । अकुशलाः[3] त्रीणि विपाकविसंयोगफले हित्वा । अकुशला हि दुःखदर्शनादिहेया[4] अव्याकृतयोर्दृष्ट्योर्निःष्यन्दफलम् । अव्याकृता धर्मा एतान्येव त्रीणि ।

**सर्वेऽतीतस्य चत्वारि**

सर्व इति त्रैयध्विकाः । अतीतस्य कर्मणस्त्रैय-[53b. 14B. VI]ध्विकाः धर्माश्चत्वारि फलानि । विसंयोगफलं हित्वा ।

**म[5]ध्यमस्याप्यनागताः ।**

प्रत्युत्पन्नस्यापि कर्मणो[6]ऽनागता धर्माश्चत्वारि फलान्येतान्येव ।

**मध्यमा द्वे**

प्रत्युत्पन्ना धर्माः प्रत्युपन्नस्य द्वे पुरुषकाराधिपतिफले ।

**अजातस्य फलानि त्रीण्यनागताः ।।९०।।**

---

१. Y. omits कर्मणः । २. अव्याकृतः । ३. MS. अकुशला । ४. Y. दुःखादिदर्शनहेयाः ।
५. MS. म is written above सा of साध्य... and there is no sign of cancellation of सा । ६. Y. omits कर्मणो ।

अनागतस्यानागतानि त्रीणि फलानि। निःष्यन्दविसंयोगफले हित्वा।

**स्वभूमिधर्माश्चत्वारि**[१]

स्वभूमिकस्य कर्मणः स्वभूमिका धर्माश्चत्वारि फलानि विसंयोगफलं हित्वा।

**त्रीणि द्वे वा**[२]**ऽन्यभूमिकाः।**

अन्यभूमिका धर्मा अनास्रवाश्चेत् त्रीणि फलानि। विपाकविसंयोगफले हित्वा। धात्वपतितत्वात्। सास्रवाश्चेत् द्वे पुरुषकाराधिपतिफले।

**शैक्षस्य त्रीणि शैक्षाद्याः**

शैक्षस्य कर्मणः शैक्षा धर्मास्त्रीणि फलानि विपाकविसंयोगफले[३] हित्वा। अशैक्षा अप्येवम्। नैवशैक्षानाशैक्षा अपि विपाकनिःष्यन्दफले हित्वा।

**अशैक्षस्य तु कर्मणः ॥९१॥**

**धर्माः शैक्षादिका एकं फलं त्रीण्यपि च द्वयम्।**

अशैक्षस्य कर्मणः[४] शैक्षा धर्माः एकमधिपतिफलम्। अशैक्षास्त्रीणि विपाकवि-संयोगफले हित्वा। नैवशैक्षानाशैक्षा द्वे पुरुषकाराधिपतिफले।

**ताभ्यामन्यस्य शैक्षाद्या द्वे द्वे पञ्च फला-**[54a. 14A.VII]**नि च॥९२॥**

शैक्षाशैक्षाभ्यामन्यस्य कर्मणो नैवशैक्षानाशैक्षस्य शैक्षा धर्मा द्वे पुरुषकाराधिपति-फले। अशैक्षा अप्येवम्। नैवशैक्षानाशैक्षाः पञ्च फलानि।

**त्रीणि चत्वारि चैकं च दृग्घेयस्य तदादयः।**

दर्शनहेयस्य कर्मणो दर्शनहेया धर्मास्त्रीणि फलानि विपाकविसंयोगफले हित्वा। भावनाहेयाश्चत्वारि विसंयोगफलं हित्वा। अप्रहेया एकमधिपतिफलम्।

**ते द्वे चत्वार्यथ त्रीणि भावनाहेयकर्मणः ॥९३॥**

भावनाहेयस्य कर्मणो दर्शनहेया धर्मा द्वे पुरुषकाराधिपतिफले। भावनाहेयाश्चत्वारि विसंयोगफलं मुक्त्वा। अप्रहेयास्त्रीणि विपाकनिःष्यन्दफले मुक्त्वा।

**अप्रहेयस्य ते त्वेकं द्वे चत्वारि यथाक्रमम्।**

अप्रहेयस्य कर्मणो दर्शनहेया धर्मा एकमधिपतिफलम्। भावनाहेया द्वे पुरुषकारा-

---

१. स्वभूमिकस्य चत्वारि। २. G. चा....। ३. MS. फलानि ४. Y. omits कर्मणः।

धिपतिफलो। अप्रहेयाश्चत्वारि विपाकफलं मुक्त्वा। पुनर्यथाक्रमग्रहणमाद्यन्तवन्मध्येऽपि ज्ञापनार्थम्। एष हि पेयालधर्मः।

कर्मनिर्देशप्रसङ्गेनेदमपि परिप्रश्न्यते। शास्त्रेषु अयोगविहितं योगविहितम, नैवयोगविहितं नायोगविहितं च कर्मोक्तम्। तस्य किं लक्षणम्।

**अयोगविहितं क्लिष्टं विधिभ्रष्टं च केचन ॥९४॥**

**क्लिष्टं कर्मा**योगविहि-[54b. 14B. VII] तमयोनिशोमनस्कारसंभूतत्वादित्येके। **विधिभ्रष्टमपी**त्यपरे। येन यथा गन्तव्यं स्थातव्यं भोक्तव्यं प्रविचरितव्यमित्येवमादि। तच्चान्यथा विदधाति। तदयुक्तविधानादयोगविहितमिति। कुशलं कर्म योगविहितमविधिभ्रष्टं चेत्यपरे। उभाभ्यामन्यन्नोभयथा। नैवयोगविहितं[1] नायोगविहितम्।

किमेकं कर्म एकमेव जन्माक्षिपति अथ नैकमपि। तथा किमेकमपि कर्मैकं जन्माक्षिपत्यथानेकम्। एष हि सिद्धान्तः।

**एकं जन्माक्षिपत्येकम्**

**एकमेव जन्माक्षिपत्येकमेव** च कर्म नानेकं जन्मेति निकायसभागस्याख्या। तत्र हि लब्धे जात इत्युच्यते। यत्तर्हि स्थविरानिरुद्धेनोक्तं "सोऽहं तस्यैकपिण्डपातस्य विपाकेन सप्तकृत्वस्त्रयस्त्रिंशेषु देवेषूपपन्नो यावदेतर्ह्याढ्ये शाक्यकुले जात" इति। तेन ह्यसौ समृद्धिं लब्ध्वा जातिस्मरः पुनरन्यत् पुण्यं कृतवान्। तत उत्थानं दर्शयति स्म। यथा मनुष्यो दीनारोत्थोऽनेन सहस्रं निर्विश्याह[2] एकेन दीनारेणाहमेतदीश्वर्यं प्राप्त इति। अपरे त्वाहुः। तस्य तं पिण्डपातमधिष्ठानं कृत्वा दानचेतनानां प्रवाहो महानुत्पन्नः कयाचित् किंचित्फलं परिगृहीतमिति। अनेकेनाप्येक-[55a. 14A. VIII] माक्षिप्यते मा भूत् खण्डशो निकायसभागस्याक्षेप इति। एकेन तु कर्मणा क्लिष्टस्य निकायसभागस्येष्यते[3] कर्म।

**अनेकं परिपूरकम्।**

यथा चित्रकर एकया वर्त्या रूपमालिख्य बह्वीभिः परिपूरयति। तथा हि तुल्ये मानुष्ये कश्चित् सकलेन्द्रियाङ्गप्रत्यङ्गो भवति वर्णाकृतिप्रमाणबलसंपदा विभ्राजमानः कश्चिदेषां केनचिद्विकलः[4]। न च केवलं कर्मैवाक्षेपकं जन्मनः। किं तर्हि।[5] अन्यदपि सविपाकम्। सर्वथा तु

---

१. Y. तदुभाभ्याम्। २. Y. adopts the reading of निर्वर्त्य। ३. MS...ष्येष्यते। ४. MS. केनचित्फलः। ५. MS. किन्तर्ह्यन्यदपि।

नाक्षेपिके समापत्ती अचित्ते प्राप्तयो न च ।।९५।।

सविपाकाभ्यामप्यचित्तसमापत्तिभ्यां निकायसभागो नाक्षिप्यते । कर्मासहभूतत्वात्[1] । प्राप्तिभिश्च कर्मणो[2]ऽनेकफलत्वात् ।

त्रीण्यावरणान्युक्तानि भगवता । कर्मावरणं क्लेशावरणं विपाकावरणं च । तेषां कः स्वभावः ।

आनन्तर्याणि कर्माणि तीव्रक्लेशोऽथ दुर्गतिः ।

कौरवासंज्ञिसत्त्वाश्च मत[3]मावरणत्रयम् ।।९६।।

पञ्चानन्तर्याणि कर्मावरणम् । तद्यथा मातृवधः पितृवधोऽर्हद्वधः संघभेदः तथागतशरीरे दुष्टचित्तरुधिरोत्पादनम् । तीव्रक्लेशता क्लेशावरणम् । द्विविधो हि क्लेशः । तीव्रश्च य अभीक्ष्णिकः तीक्ष्णश्च योऽधिमात्रः । तत्र यस्तीव्रः स आवरणम्[4] । यथा शण्ढादीनाम् । शक्तो ह्यधिमात्रवेगो-[55b.14B.VIII]ऽपि क्लेशः कादाचित्को निहन्तुं न तु समूहोऽप्याजस्रिकः । आजस्रिके हि क्लेशे तन्निर्घाताय पराक्रमकालं न लभते । तस्य मृदुं प्रतीत्य मध्य उपजायते । मध्यं प्रतीत्याधिमात्रः । तस्मात् एवावरणं त्रिविधा दुर्गतिः विपाकावरणं[5] सुगतेश्च प्रदेशः औत्तरकौरवा असंज्ञिसत्त्वाश्च । कस्यैतान्यावरणानि । आर्यमार्गस्यार्यमार्गप्रायोगिकाणां च कुशलमूलानाम् अन्यान्यपि ह्यपायादिनियतानि अण्डजसंस्वेदजस्त्रीत्वाष्टमभवनियतानि कर्माणि वक्तव्यानि स्युः । यान्येव तु पञ्चभिः कारणैः सुदर्शकानि सुप्रज्ञकानि[6] अधिष्ठानतः फलतो गतित उपपत्तितः पुद्गलतश्च तान्येवोक्तानि नान्यानि । क्लेशावरणं चैषां सर्वजघन्यम् । ततः कर्मावरणम् । ताभ्यां हि द्वितीयेऽपि जन्मन्यचिकित्सो भवत्युत्तरोत्तरावाहनादिति वैभाषिकाः ।

आनन्तर्याणीति कोऽर्थः । नान्तरायितुं शक्यानि विपाकं प्रति जन्मान्तरफलेन कर्मान्तिरेणेत्यानन्तर्याणि । न तिरस्कर्तुमित्यर्थः । न वा तत्कारिणः पुद्गलस्येतश्च्युतस्यान्तरमस्ति नरकोपपत्तिगमनं प्रतीत्यनन्तरः । तद्भाव[7] आनन्तर्यम् । यस्य धर्मस्य योगात्सोऽनन्तरो भ-[56a. 14A1. I] वति । श्रामण्यवत् ।

अथैषामावरणानां कतमत् कस्यां गतौ वेदितव्यम् । एकान्तेन तावत्

१. Y....सहभूत्वात् । २. Y. कर्मणा । ३. MS. मत्त....। ४. MS. आवरणः । ५. MS. विपाकक्कारणं । ६. Y. सुप्रज्ञपकानि । ७. MS. तत्भाव ।

त्रिषु द्वीपेष्वानन्तर्यं[1]

नोत्तरकुरौ नान्यासु गतिषु । कुत एवान्यत्र धातौ । तेष्वपि स्त्रीपुरुषाणामेव ।

शण्ढा[2]दीनां तु नेष्यते ।

किं कारणम् । तदेवासंवराभावे कारणमुद्दिष्टम् । अपि च

अल्पोपकारालज्जित्वात्

यथाक्रमं मातापित्रोस्तेषां च । अल्पोपकारौ किलैषां मातापितरौ । विकलात्मभावाधिपतित्वादल्पस्नेहत्वाच्च । तेषामपि न तीव्रं ह्यपत्राप्यं मातापित्रोरन्तिके प्रत्युपस्थितं यद्विपादनादानन्तर्येण स्पृश्येरन् । अत एव तिर्यक्प्रेतानामपि नेष्यते । पटुबुद्धीनां स्यादश्वाजानेयवदिति भदन्तः । मनुष्यस्याप्यमानुषौ मातापितरौ[3] मारयतो न स्यादानन्तर्यम् ।। उक्तं कर्मावरणम् ।।

शेषे गतिषु पञ्चसु ।।९७।।

के पुनः शेषे । क्लेशविपाकावरणे । मनुष्येषु विपाकावरणम् । कौरवा देवेष्वसंज्ञिसत्त्वाः । किंस्वभावान्यानन्तर्याणि । चत्वारि कायकर्म एकं वाक्कर्म त्रीणि प्राणातिपात एकं मृषावादः एकं प्राणातिपातप्रयोगः । अनुपक्रमधर्माणो हि तथागताः । हेतौ फलोपचारात्संघभेद आनन्तर्यमुक्तम् । भिद्यते वाऽनेनेति कृ-[56b. 14B1. I] त्वा ।

संघभेदस्त्वसामग्रीस्वभावो विप्रयुक्तकः ।

अक्लिष्टाव्याकृतो धर्मः

असामग्री नाम चित्तविप्रयुक्तः संस्कारोऽनिवृताव्याकृतः संघभेदः । स किमानन्तर्यं भविष्यति नैव च तेन भेत्ता समन्वागतः । किं तर्हि ।

संघस्तेन समन्वितः ।।९८।।

यो हि भिन्नस्तस्य भेदो न भेत्तुः । अथ भेत्ता केन समन्वागतः ।

तदवद्यं[4] मृषावादस्तेन भेत्ता समन्वितः ।

संघभेदावद्येन भेत्ता समन्वागतः । तत् पुनर्मृषावादः । स पुनः संघभेदसहजे वाग्विज्ञप्त्यविज्ञप्ती । स च तेनावद्येन समन्वागतो भेत्ता ।

---

१. G....स्वनन्तर्यं । २. G. षण्ढा...। ३. Y. अमानुषं मातापितरं । ४. G. तदवद्यं ।

अवीचौ पच्यते कल्पम्

अन्तरकल्पमवीचौ महानरके विपच्यते। अन्यैस्तु नावश्यमवीचौ। अथ येन बहून्यानन्तर्याणि कृतानि भवन्ति अनन्तरमेव तानि विपच्यन्ते। किं तु तैस्तस्य भवति।

अधिकैरधिका रुजः ॥९९॥

स हि भूयोभिरानन्तर्यैस्तस्मिन्नवीचौ घनतरं सुकुमारतरं चाश्रयं लभते कारणाश्च बहुतरास्तीव्रतराश्च येन द्वित्रिचतुष्पञ्चगुणां वेदनां वेदयते। कः पुनरेष संघं भिनत्ति।

भिक्षुर्दृक्चरितो वृत्ती भिनत्ति

भिक्षुर्भिनत्ति न गृही न भिक्षुण्यादयः। स च दृष्टिचरित एव न तृष्णाचरितः। वृत्तस्थो न भिन्नवृत्तस्तस्यानादेयवाक्यत्वात्। [57a.14A1. II] क्व भिनत्ति। यत्र भगवान् संनिहितस्ततः।

अन्यत्र

नहि शास्तुरेव संनिधौ शक्यो भेत्तुम्। तथागतानां दुष्प्रसहत्वादादेयवाक्यत्वाच्च। कान् भिनत्ति।

बालिशान्।

पृथग्जनानेव नार्यान् प्रत्यक्षधर्मत्वात्। तानपि न क्षान्तिलाभिन इत्यपरे। कियता भिन्नः संघो भवति।

शास्तृमार्गान्तरक्षान्तौ[1] भिन्नः

यदा तेभ्यस्तथागतादन्यः शास्ता क्षमते तदुपदिष्टाच्च मार्गादन्यो मार्ग इयता भिन्नः संघो वक्तव्यः। कियन्तं कालं भिन्न आस्ते। तामेव रात्रिं

न विवसत्यसौ ॥१००॥

अपर्युषित एव हि संघभेदे संघोऽवश्यं प्रतिसंधीयते। योऽयं संघभेद उक्तः

चक्रभेदः स च मतः

धर्मचक्रं हि तदा भगवतो भिन्नं भवति। मार्गप्रवृत्तिविष्ठापनात्। अत एव चक्रभेदश्चोच्यते संघभेदश्च। क्व पुनश्चक्रभेदो भवति।

१. G. ...क्षान्तो।

**जम्बूद्वीपे**

नान्येषु द्वीपेषु । कतिभिर्भिक्षुभिः ।

**नवादिभिः ।**

नवादि कृत्वा । परेणानियमः । अष्टौ भिक्षवः संघो भवति । नवमो भेत्ता । अवश्यं हि संघेन द्वयोः पक्षयोः स्थातव्यम् । एवं भिन्नो भवति । अन्यस्तु संघभेदः कर्मभेदाद् भवति । यद्येकसीमायां व्यग्राः कर्म[1] कुर्वन्ति । स चैष

**कर्मभेदस्त्रिषु[2] द्वीपेषु**

येष्वेव [57b. 14B1. II] शासनम् । कतिभिर्भिक्षुभिः

**अष्टाभिरधिकैश्च सः ।।१०१।।**

चक्रभेदस्तु षट्सु कालेषु न भवति । कतमेषु ।

**आदावन्तेऽर्बुदात् पूर्वं युगाच्चोपरते मुनौ ।**
**सीमायां चाप्यबद्धायां चक्रभेदो न जायते ।।१०२।।**

आदावचिरप्रवर्तिते चर्मचक्रे । अन्ते परिनिर्वाणकाले भगवतः । एतयोर्हि द्वयोरवस्थयोः संघ एकरसो भवति । मध्येऽप्यर्बुदात् पूर्वं न भिद्यते यावच्छासने शीलार्बुदं दृष्टचर्बुदं च[3] नोत्पन्नं भवति । युगाच्च पूर्वं न भिद्यते यावच्छ्रावकाग्रयुगं नोत्पन्नं भवति । भिन्नन्यायपरिवासात्तेन च प्रतिसंधानीयत्वात् । **उपरते मुनौ** शास्तरि परिनिर्वृते प्रतिद्वंद्वाभावात् । **सीमायामबद्धायां**[4] यावत् सीमा न बद्धा भवति[5] । एकसीमायां हि पक्षद्वयावस्थानात्संघभेद इत्येषु कालेषु **चक्रभेदो न** भवति । न च पुनः सर्वेषां वद्धानां चक्रभेदः । कर्माधीनत्वात् ।

कस्मात् मातृवधादिष्वानन्तर्यं नान्यत्र ।

**उपकारिगुणक्षेत्रनिराकृतिविपादनात् ।**

मातापितृवधे तावदुपकारिणो निराकरणात् । कथं तावुपकारिणौ । आत्मभावस्य तत्प्रभवत्वात् । किं तयोर्निराकरणम् । परित्यागः । गुणक्षेत्रत्वादर्हद्वधाद् आनन्तर्यम् । यदि [58a. 14A1. III] पुनर्मातुर्व्यञ्जनं परिवृत्तं स्यात् पितुर्वा तत्रैकस्मिन्नाम्नायो

---

१. Y. कर्माणि । २. MS. ...भेदः । त्रिषु । ३. Y. दृष्टचर्बुदं शीलार्बुदं वा । ४. MS. ....मनबद्धाया । ५. MS.भवन्ति ।

व्यञ्जनान्तरितो[1]ऽपि स्यात्

अत एवोच्यते "स्यात् पुरुषं जीविताद्व्यपरोपयेन्न पितरं नार्हन्तम्। आनन्तर्यविघ्नेन च स्पृश्येत। स्यान्मातुर्व्यञ्जनं परिवृत्तं स्यादिति। स्यात् स्त्रीं जीविताद्व्यपरोपयेन्न मातरं नार्हन्तीम् आनन्तर्यविघ्नेन च स्पृश्येत। स्यात् पितुर्व्यञ्जनं परिवृत्तं स्यादि"ति। अन्यस्याः स्त्रियाः कललं प्रस्रुतमन्यया योन्या पीतम्। कतरा तस्य माता यां घ्नतः स्यादानन्तर्यम्।

माता यच्छोणितोद्भवः ॥१०३॥

यस्याः[2] शोणितादसावुद्भूतः[3] सत्त्वः साऽस्य माता द्वितीया तु सर्वकृत्येष्ववलोक्या। सा ह्यापायिका[4] पोषिका संवर्धिका च। यदि मातरि प्रयोगं कृत्वाऽन्यां मारयेन्न स्यादानन्तर्यम्। अमातृप्रयोगेण मारयेत्तथापि न स्यात्। मञ्चतलावलीनमातृमारणं चात्रोदाहार्यं[5] धावकस्य च पुत्रेण मसक[6]प्रयोगेण पितुर्मारणं च। एकेन प्रहारेण मातरमन्यां च मारयतो द्वे अविज्ञप्ती भवतः। विज्ञप्तिस्त्वानन्तर्यमेव। तस्य कर्मणो बलीयस्त्वात्। परमाणुसंचितत्वाद्विज्ञप्तिरपि द्विधेति भदन्तघोषकः। अनर्हत्संज्ञयाऽपि अर्हद्घाते भवत्यानन्तर्यम् अहम् ह[7]-[58b. 14B$_1$ III]न्मीत्याश्रयावधारणात्। यः पितरमर्हन्तं हिंस्यात्तस्याप्येकमेव[8] स्यादानन्तर्यमाश्रयैकत्वात्। इदमवदानं कथं नीयते "गच्छ शिखण्डिनं ब्रूहि द्वे आनन्तर्ये भवता कृते। यच्च पिता जीविताद्व्यपरोपितो यच्चार्हन्नि"ति। द्वाभ्यां कारणाभ्यामिति वक्तव्यम्। द्वाभ्यां वा मुखाभ्यां परिभाषितः। किमवश्यं तथागतस्यास्ति कुदुष्टचित्तरुधिरोत्पादनादानन्तर्यम्। वधाभिप्रायस्य स्यात्।

बुद्धे न ताडनेच्छस्य

यदि ताडनाभिप्राय उत्पादयेन्न स्यात्। यद्यनर्हति प्रहरेत्स च प्रहारादूर्ध्वमर्हन् स्यात्

प्रहारान्नोर्ध्वमर्हति।

स्यादानन्तर्यमिति वर्तते। नहि तेन तत्र प्रयोगः कृतः। किमानन्तर्ये प्रयोगं कृत्वा तस्मिन्नव्यावर्तिते वैराग्यं फलं वा न प्राप्नुयात्।

नानन्तर्यप्रयुक्तस्य वैराग्यफलसंभवः ॥१०४॥

---

१. G. न्तरिते...। २. MS. यस्या। ३. MS. ...वुत्भूतः। ४. Y. आप्यायिका। ५. MS.....दाहार्यः। ६. Y. मशक...। ७. MS.....नन्तर्य अम हन्मी। ८. MS. हिंस्यात्तस्याप्यकमेव।

अन्यकर्मफलपथप्रयोगं[1] तु कृत्वार्यमार्गोत्पत्तौ न पुनः कर्मपथोत्पत्तिराश्रयस्यात्यन्तं तद्विरुद्धत्वात् ।

एषामा[2]नन्तर्याणां[3] कतमत् महासावद्यम् ।

**संघभेदे मृषावादो महावद्यतमो मतः ।**

यः संघभेदनिमित्तं **मृषावादो** धर्माधर्मज्ञस्य विपर्ययद्योतनात् स सर्वेषां दुश्चरितानां **महावद्यतमः** । किं कारणम् । तथाग-[59a. 14A₁. IV]तधर्मशरीरप्रहारितत्वात् लोकानां च स्वर्गापवर्गमार्गान्तिरायकत्वात् । संघे हि भिन्ने[4] लोकस्य नियामावक्रान्तिफलप्राप्तिवैराग्यास्रवक्षयाः प्रतिबध्यन्ते ध्यानाध्ययनस्वाध्यायचिन्ताकर्माण्यपि न प्रवर्तन्ते सदेवनागमनुष्यं जगच्चाकुलं विमनस्कं वर्तते यावत् पुनर्न प्रतिसंधितो भवति यस्माच्चावीचौ कल्पं विपाकः । शेषाणामानन्तर्याणां यथाक्रमं पञ्चमतृतीयप्रथमानि गुरुतराणि सर्वलघुः[5] पितृवधः । यत्तर्हि भगवता त्रयाणां दण्डानां मनोदण्डो महासावद्य उक्तः पुनर्मिथ्यादृष्टिः परमवद्यानामित्युक्तम् आनन्तर्याणि नियमस्य संघभेदो महासावद्य उक्तः । त्रीणि कर्माणि नियमय्य मनोदण्डः दृष्टीर्नियमय्य मिथ्यादृष्टिः । अथवा विपाकविस्तरं[6] महाजनव्यापादनं कुशलमूलसमुच्छेदं चाधिकृत्य यथाक्रमम् ।

सुचरितानां पुनः कतमत् महाफलतमम् ।

**भवाग्रचेतना लोके महाफलतमा शुभे ॥१०५॥**

कुशले पुनः कर्मणि **भवाग्रचेतना** सर्वेषां **महाफलतमा** । तस्या अशीतिकल्पसहस्राण्यतिप्रशान्तो विपाकः । विपाकफलं चाधिकृत्यैतदुक्तम् । विसंयोगफलं त्वधिकृत्य वज्रोपमसमाधिचेतना सर्वेषां महाफला सर्वसं-[59b. 14B₁. IV]योजनपर्यादानफलत्वात् । अत एव लोक इत्युक्तम् ।

किमानन्तर्यैरेवावश्यं नरकेषूपपद्यते । आनन्तर्यसभागैरप्यवश्यमुपपद्यते । नत्वनन्तरमेवेत्यपरे । कतमानि तानीत्याह

**दूषणं मातुरर्हन्त्या नियतिस्थस्य[7] मारणम् ।**
**बोधिसत्त्वस्य शैक्षस्य संघायद्वारहारिका ॥१०६॥**

---

१. MS. प्रयोयोगं । २. MS. drops मा । ३. MS. नन्तर्याणं । ४. MS. भिन्न । ५. MS. ...लघुः । ६. MS. विपाकविपाकविस्तरं । ७. MS. नियतिस्तस्य ।

**आनन्तर्यसभागानि पञ्चमं स्तूपभेदनम् ।**

एतानि पञ्च पञ्चानामानन्तर्याणां यथाक्रमम् सभागानि । यदि मातरमर्हन्तीं दूषयत्यब्रह्मचर्यकरणात् नियतिपतितं बोधिसत्त्वं मारयति शैक्षं मारयति संघस्य सुखायद्वारिकं हरति स्तूपभेदं करोति । अन्यदपि तु कर्म सविपाकं त्रिषु कालेष्वत्यर्थं विघ्नयति । कतमेषु त्रिषु ।

**क्षान्त्यनागामितार्हत्त्वप्राप्तौ कर्मातिविघ्नकृत् ।।१०७।।**

मूर्धस्यः क्षान्तिमाकिरत आपायिकानि कर्माणि विघ्नायोपतिष्ठन्ते । तद्विपाक-भूम्यतिक्रमात् । यथा पुरुषस्य देशत्यागं कुर्वतो धनिका उपतिष्ठन्ते[१] । अनागामि[२]-फलं प्राप्नुवतः कामावचराणि विघ्नायोपतिष्ठन्ते तथैव स्थापयित्वा दृष्टधर्मवेदनीयं कर्म । अर्हत्त्वं प्राप्नुवतो रूपारूप्यावचराणि तथैव । यदुक्तं "बोधिसत्त्वस्य मारण"मिति

**बो-[60a. 14A1. V]धिसत्त्वः कुतो यावत्**

कुत उपादाय बोधिसत्त्वो वक्तव्यः ।

**यतो लक्षण[३] कर्मकृत् ।**

यतः प्रभृति लक्षणविपाकानि कर्माण्यारभते कर्तुं स हि तदानीं नियतिपतितो भवति । कथं कृत्वा । स हि तस्मात् कालात् प्रभृति नित्यं भवति ।

**सुगतिः कुलजोऽव्यक्षः[४] पुमान् जातिस्मरोऽनिवृत् ।।१०८।।**

प्रशस्ता गतिरस्येति सुगतिर्देवमनुष्योपपत्तेः । तस्यां च सुगतौ क्षत्रियब्राह्मणगृह-पतिमहाशालकुलजो[५] भवति नान्यः कुलीनः । विकलान्यक्षाण्यस्येति[६] व्यक्षः । न व्यक्षोऽव्यक्षः अविकलेन्द्रियः इत्यर्थः । पुरुष एव न स्त्री कुत एव शण्ढादिः । जातिस्मरश्च भवति । सर्वस्यां जातौ निवर्तत इति निवृत् । न निवृदनिवृत् । अनिवर्तक इत्यर्थः । सत्त्वहितार्थं सर्वदुःखप्रकारैः सर्वसत्त्वविप्रतिपत्तिभिश्चाखे-दितत्वात् । यत्तल्लोक उच्यते "अपणक्रीतो दास" इति । बोधिसत्त्वास्ते ते हि महात्मानः सर्वसंपत्प्रकर्षविशेषप्राप्ता अपि सन्तो निष्कारणकरुणापारतन्त्र्यात्सर्व-सत्त्वेषु चण्डालकुमारकसदृशमात्मानं निर्मानतया व्यवस्थाप्य सत्त्वेभ्यः सर्वक-दर्थानां[७] सोढारो भवन्ति सर्वश्रमयन्त्रणानां चोद्वोढारः । यच्चैतल्लक्षणविपा-[60b. 14B1. V]कं कर्मेत्युक्तम् ।

---

१. Y. उत्तिष्ठन्ते । २. MS. अनागामि... । ३. MS. लक्षणं । ४. G. व्यक्षः । ५. MS. ...महाशालजो । Y. महाशालकुलजः । ६. MS. विकलान्यक्षीण्यस्येति । ७. Y. seems to be कदर्थनानां ।

जम्बूद्वीपे पुमानेव संमुखं बुद्धचेतनः ।
चिन्तामयं कल्पशते शेष आक्षिपते हि तत् ॥१०९॥

**जम्बूद्वीप** एव बोधिसत्त्वो लक्षणविपाकं कर्माक्षिपति । नान्यत्र । जाम्बूद्वीपकानां तीक्ष्णबुद्धित्वात् । पुरुष एव न स्त्री । संमुखीभूत एव शास्तरि बुद्धालम्बनयैव चेतनया **चिन्तामयं** तत्कर्म न श्रुतमयं न भावनामयम् । **कल्पशते** च **शेष आक्षिपति** न बहुभवेषु । भगवता तु शाक्यमुनिनोत्तप्तवीर्यतया[1] नव कल्पा अपावर्तिता एकनवत्या कल्पैराक्षिप्तम् । अत एव चोक्त"मितोऽहं[2]ग्रामणीरेकनवतं[3] कल्पमुपादाय न समनुस्मरामि नाभिजानामि यदेककुलमपि पक्षभिक्षाप्रदानहेतोः क्षतं वा स्यादुपहतं वे"ति । ततः प्रभृति प्रकृतिजातिस्मरत्वात् प्रथमकल्पासंख्येयनिर्यात एव बोधिसत्त्व एतांश्चतुरो दोषान् व्यावर्तयति द्वौ च गुणौ प्रतिलभत इति पूर्वाचार्याः । तेषां च लक्षणानाम्

एकैकं पुण्यशतजम्

किं पुण्यस्य परिमाणम् । संनिकृष्टबोधिसत्त्वं स्थापयित्वा यावत् सर्वसत्त्वानां भोगफलमित्येके । यावत् सर्वसत्त्वानां कर्माधिपत्येन त्रिसाहस्रमहासाहस्रको लोको[4]ऽभिभिनिवर्तत[5] इत्यपरे । बुद्धा एव च तत्परिमाणज्ञा इत्यपरे । अथ बोधिसत्त्वभूतो भगवान् कियतो बुद्धान् पर्युपासयामास । प्रथमे कल्पासंख्येये पञ्चसप्ततिसहस्राणि [61a. 14A1. VI] द्वितीये षट्सप्ततिं तृतीये सप्तसप्ततिम् ।

अथ कस्य कल्पासंख्येयस्यान्ते कतमो बुद्ध आसीत्[6] । प्रतिलोमानुक्रमेण यथाक्रमम्

असंख्येयत्रयान्त्यजाः[7] ।
विपश्यी दीपकृद्रत्नशिखी

रत्नशिखिनि सम्यक्संबुद्धे प्रथमोऽसंख्येयः समाप्तः । दीपंकरे भगवति द्वितीयः । विपश्यिनि तथागते तृतीयः । सर्वेषां तु तेषां

शाक्यमुनिः पुरा ॥११०॥

शाक्यमुनिर्नाम सम्यक्संबुद्धः पूर्वं बभूव । यत्र भगवता बोधिसत्त्वभूतेनाद्यं प्रणिधानं

---

१, MS. वीर्येतया । २. MS. ...मितोह । ३. Y. ग्रामणि एकनवतं । ४. MS. .....साहस्रलोलोके । ५. Y. त्रिसाहस्रको निर्वर्त्तते, but explains as येन सर्वसत्त्वकर्माधिपत्येन त्रिसाहस्रमहासाहस्रप्रादुर्भावः । ६. MS. आसते । ७. G. ...न्तजाः ।

कृतम् एवंप्रकार एवाहं बुद्धो भवेयमिति नोऽप्येवं कलियुग एवोत्पन्नवानार्यवत्तस्याप्येवं वर्षसहस्रान्तं शासनं बभूव ।

अथ कस्यामवस्थायां बोधिसत्त्वः कां पारमितां परिपूरयते ।

**सर्वत्र सर्वं ददतः[1] कारुण्याद्दानपूरणम् ।**

यदा सर्वस्मै सर्वं ददाति आ अक्ष्णः आ मज्जायाः[2] कारुण्यान्नाभ्युदयविशेषं लिप्समानः इयता दानपारमिता परिपूर्णा भवति ।

**अङ्गच्छेदेऽप्यकोपात्तु रागिणः क्षान्तिशीलयोः ॥१११॥**

यदाऽयमवीतरागोऽपि च्छिद्यमानेष्वङ्गेषु नाल्पमपि कुप्यति तदाऽस्य क्षान्तिशीलपारमिते परिपूर्णे भवतः ।

**तिष्यस्तोत्रेण वीर्यस्य**

तिष्यं तथागतरत्नगुहायां तेजोधातुसमापन्नदृष्ट्वा भग-[61b. 14B₁. VI] वान् बोधिसत्त्वभूत एकेन पादेन स्थित्वा सप्त दिवसान् स्तुतवानेकगाथया

"न दिवि भुवि वा नास्मिन् लोके न वैश्रवणालये ।
न मरुभवने दिव्ये स्थाने ह दिक्षु विदिक्षु वा[3] ॥
चरतु वसुधां स्फीतां कृत्स्नां सपर्वतकाननाम् ।
पुरुषवृषभस्त्वत्तुल्योऽन्यो महाश्रमणः[4] कुत" इति ।

तदा किल वीर्यपारमिता परिपूर्णा नव च कल्पाः प्रत्युदावर्तिताः ।

**धीसमाध्योरनन्तरम् ।**

बोधेः[5] पूर्वसमनन्तरं ध्यानप्रज्ञापारमितयोः परिपूरिर्वज्रोपमसमाधौ स्वस्याः संपदः पारगमनात् पारमिताः ।

सूत्र उक्तं "त्रीणि पुण्यक्रियावस्तूनि । दानमयं पुण्यक्रियावस्तु शीलमयं भावनामयमि"ति । कथमेतत्त्रयं पुण्यक्रियावस्तु ।

**पुण्यं क्रियाऽथ तद्वस्तु त्रयं कर्मपथा यथा ॥११२॥**

पुण्यमप्येतत्त्रयं क्रियाऽपि वस्त्वपि यथायोगमिति पुण्यक्रियावस्तु । तद्यथा कर्म च ते

१. MS. ददत्तः । २. MS. आ मज्जः । ३. Y. च । ४. MS. ...श्रमण । ५. MS. बोधिः ।

पन्थानश्च पन्थान एव च कर्मण इति कर्मपथा उक्ताः। तत्र दानमये तावत् पुण्यक्रियावस्तुनि कायवाक्कर्म त्रिधा[1] भवति। तत्समुत्थापिका चेतना पुण्यं च क्रिया च। तत्सहभुवो धर्माः पुण्यमेव। शीलमयं तु कायवाक्कर्मैवेति त्रिधा भवति। भावनामयो[2] मैत्री पु-[62a. 14A. VII]ण्यं च[3] पुण्यक्रियायाश्च वस्तु। तत्संप्रयुक्तायाश्चेतनाया मैत्रीमुखेनाभिसंस्करणात् तत्सहभुवश्चेतना शीलं च पुण्यं च क्रिया च। अन्ये तत्सहभुवः पुण्यमेव पुण्यस्य वा कारणं पुण्यक्रिया[4] पुण्यप्रयोगस्तस्या एतानि त्रीणि वस्तूनि। एषां संपादनार्थं पुण्यप्रयोगारम्भादिति। कुशलचेतनापर मार्थेन पुण्यक्रिया। तस्या एतानि वस्तूनीत्यपरे।

किमिदं दानं नाम। यदपि दीयते तद्दानम्। इह तु

**दीयते येन तद्दानं**

भवति स्म। रागादिभिरपि दीयते। न चात्र तदिष्टम्। अतो विशेषणार्थमाह

**पूजानुग्रहकाम्यया[5]।**

परेषां पूजानुग्रहकामताभ्यां येन दीयते। किं पुनस्तत्स्याद्येन दीयते।

**कायवाक्कर्म सोत्थानं**

किं पुनस्तदुत्थानम्। येन कलापेन तदुत्थाप्यते। आह चात्र

"शुभेन मनसा द्रव्यं स्वं ददाति यदा पुमान्।
तत् क्षणं कुशलाः स्कन्धाः दानमित्यभिधीयते॥" इति।

**महाभोग्यफलं च तत् ॥११३॥**

तच्चैतद्दानमयं पुण्यक्रियावस्तु महाभोग्यफलम्। स्वभावे चैष मयड्वेदितव्यः। तद्यथा तृणमयं गृहं पर्णमयं भाजनमिति। तत् खल्वेतद्दानं

**स्वपरार्थोभयार्थाय[6] नोभयार्थाय दीयते।**

तत्र यदवीतरागः आर्यः पृथग्जनो वा[62b. 14B1. VII]वीतरागश्चैत्ये दानं ददाति[7] तदस्यात्मन एवार्थाय। परेषां तेनानुग्रहाभावात्। यदार्यो वीतरागः परसत्त्वेभ्यो

---

१. Y. त्रिविधा। २. D. भावनामयं। ३. MS. has one more पुण्यञ्च extra। ४. D. पुण्यक्रिया च। ५. Y. ...कामया। ६. MS. ...भयार्थोय। ७. MS. looks like ...न्दादिति।

दानं ददाति स्थापयित्वा दृष्टधर्मवेदनीयं तत्र दानं परेषामर्थाय। तेन तेषामनुग्रहात्। नात्मनोऽर्थाय। तद्विपाकभूमेरत्यन्तसमतिक्रान्तत्वात्। यदवीतरागः पृथग्जनो वा वीतरागः परसत्त्वेभ्यो[1] ददाति तद्दानमुभयेषामर्थाय। यदार्यो वीतरागश्चैत्ये ददाति स्थापयित्वा दृष्टधर्मवेदनीयं तद्दानमुभयेषां नार्थाय। तद्धि केवलं गौरवं कृतज्ञाभ्यां दीयते। सामान्येन दानं महाभोग्यफलमुक्तम्।

**तद्विशेषः पुनर्दातृवस्तुक्षेत्रविशेषतः ॥११४॥**

तत्र तावत्

**दाता विशिष्टः श्रद्धाद्यैः**

श्रद्धाशीलश्रुतादिगुणयुक्तो दाता विशिष्टो भवति। तस्य तद्दानदातृविशेषेण फलदानं प्रतिविशिष्यते। स च तादृशो दाता

**सत्कृत्यादि ददाति**

सत्कृत्य स्वहस्तं काले परानुपहत्य ददाति।

**अतः।**

**सत्कारोदाररुचिता कालानाच्छेद्यलाभिता[2] ॥११५॥**

अतोऽस्य दातुस्तत्तादृशं दानं दत्त्वा यथाक्रमं चत्वारो विशेषा भवन्ति। सत्कारलाभी भवति। उदारेषु च भोगेषु[3] रुचिं लभते। कालेन[4] च[5] भोगान् लभते ना-[63a. 14A1. VIII]-तिक्रान्तिकालेन[6]। अनाच्छेद्यांश्च भोगान् लभते। नास्य भोगाः परैराच्छाद्यन्ते नाप्यग्न्यादिभिर्विनाश्यन्ते। उक्तं यथा दाता विशिष्यते तद्विशेषाच्च दानविशेषः।

अथ वस्तु कथं विशिष्यते।

**वर्णादिसम्पदा वस्तु**

विशिष्टमिति वर्तते। यदि यद्दीयते तद्वर्णगन्धरसस्पर्शानामन्यतमेनापि संपन्नं भवति। एवं वस्तु विशिष्यते। तादृशं वस्तु दत्त्वा किं भवति। यथाक्रमम्

**सुरूपत्वं यशस्वि वा।**

**प्रियता सुकुमारर्तुसुखस्पर्शाङ्गता ततः ॥११६॥**

वर्णसम्पन्नं दत्त्वा सुरूपो भवति। गन्धसंपन्नं दत्त्वा यशस्वी भवति। गन्धवद्यशसो

१. MS. drops स। २. G...नाच्छिद्य...। ३. Y. उदारेभ्यो भोगेभ्यो। ४. Y. काले। ५. Y. omits च। ६. Y. ...कालात्।

दिक्षु विधारणात् । रससंपन्नं दत्त्वा प्रियो भवति । रस इव स्वादुः । स्पर्शसंपन्नं दत्त्वा सुकुमाराङ्गश्च भवति ऋतुसुखस्पर्शानि चास्याङ्गानि भवन्ति यथा स्त्रीरत्नस्य ।

अथ क्षेत्रं कथं विशिष्यते ।

**गतिदुःखोपकारित्वगुणैः क्षेत्रं विशिष्यते ।**

गतिविशेषात्तावद्विशिष्यते । तथा ह्युक्तं भगवता "तिर्यग्योनिगताय दानं दत्त्वा शतगुणो विपाकः प्रतिकाङ्क्षितव्यः । दुःशीलाय मनुष्यभूताय दानं दत्त्वा सहस्रगुण" इति । दुःखविशेषा[3] द्विशिष्यते । तथा ह्यौपधिकेषु[4] पुण्यक्रियावस्तुषु । ग्लाने[5] दानं ग्लानोपस्थापके[6] दानम् । शी-[63b. 14B1. VIII]तलिकादिषु[7] च दानमुक्त्वोक्तमे"भिः सप्तभिः औपधिकैः पुण्यक्रियावस्तुभिः समन्वागतस्य श्राद्धस्य कुलपुत्रस्य वा कुलदुहितुर्वा न लभ्यं पुण्यानां प्रमाणमुद्ग्रहीतुमि"ति । उपकारित्वविशेषाद्यथा मातापित्रोरन्येषां चोपकारिणाम् ऋष्यमृगजातकाद्युदाहरणात्[8] । गुणविशेषाद्यथा" शीलवते दत्त्वा शतसहस्रगुणो विपाक" इत्येवमादि । सर्वेषां तु दानानाम्

**अग्रं मुक्तस्य मुक्ताय**

"यद्वीतरागो वीतरागाय दत्त्वाऽतिदानमिदं श्रेष्ठमामिषदानेषु दानमित्युक्तं भगवता ।

**बोधिसत्त्वस्य च**

यद्वा दानं वोधिसत्त्वे ददाति सर्वसत्त्वहितहेतोस्तदमुक्तस्याप्यमुक्तेऽभ्यादानमग्रम् । तत् स्थापयित्वा यानि भगवतोऽन्यान्यष्टौ दानान्युक्तानि तेषाम्

**अष्टमम् ॥११७॥**

अग्रमिति वर्तते । कतमान्यष्टौ । आसाद्य दानं भयदानम् अदान्मे दानं दास्यति मे दानं दत्तपूर्वं मे दानं[1] पितृभिश्च पितामहैश्चेति दानं ददाति स्वर्गार्थं दानं कीर्त्यर्थं दानं चित्तालंकारार्थं दानं चित्तपरिष्कारार्थं योगसंभारार्थमुत्तमार्थस्य प्राप्तये दानं ददाति । तत्रासाद्य दानं यत् आसन्नेभ्य उपगतेभ्यो दानं ददातीति पौराणाः[10] । भयदानं यद्विनाशाभिमुखं [64a. 15A. I] दृष्ट्वा वरं ददामीति ददाति । शेषं सुगमत्वान्न विभक्तम् । स्रोत[11]आपत्तिफलप्रतिपन्नकाय दानं दत्त्वाऽप्रमेयविपाकः । ततोऽप्रमेयतरः स्रोतआपन्नायेति विस्तरेणोक्तं सूत्रे । अपितु

१. MS. सुकुमारांगञ्च । २. D. omits दानं । ३. D. adds क्षेत्रं । ४. D. यथोपधिकेषु । ५. D. ग्लानाय । ६. D. ग्लानोपस्थापकाय । ७. D. adds वर्दलिका । ८. Y. ऋक्ष.... । ९. MS. This दानं seems to be extra. १०. MS. पोराणाः । ११. MS. श्रोत.... ।

मातृपितृग्लानधार्मकथिकेभ्योऽन्त्यजन्मने ।
बोधिसत्त्वाय चामेया अनार्येभ्योऽपि दक्षिणा[1] ॥११८॥

एभ्यः पञ्चभ्यः पृथग्जनभूतेभ्योऽप्यप्रमेया फलतो दक्षिणा भवति । तत्रान्त्यजन्मा बोधिसत्त्वश्चरमभविकः । धार्मकथिकश्चतुर्विधे क्षेत्रविशेषे कतमस्मिन् पक्षे दिक्षेप्तव्यः । उपकारिपक्षे । स हि महाकल्याणमित्रम्[2] अविद्यान्धायां प्रजायां प्रज्ञाचक्षुषो दाता समविषमस्य प्रकाशयिता[3] अनास्रवस्य धर्मकायस्यातिनिवर्तयिता समासतो बुद्धकृत्यस्य कर्ता ।

कर्मणां तु गुरुलघुत्वं ज्ञातुकामेन समासतः षट् कारणानि ज्ञेयानि । तद्यथा

पृष्ठं क्षेत्रमधिष्ठानं प्रयोगश्चेतनाशयः ।
एषां मृद्वधिमात्रत्वात् कर्ममृद्वधिमात्रता ॥११९॥

पृष्ठं नाम यत्कृतस्य पुनरनुक्रिया । क्षेत्रं नाम यत्र कारापकाराः क्रियन्ते । अधिष्ठानं कर्मपथः । प्रयोगस्तदर्थं कायवाक्कर्म । चेतना यथा कर्मपथं निष्ठापयति । आशयस्तदभिप्राय एवं चैवं च कुर्यामे-[64b. 15B. I]वं चैवं च न करिष्यामीति । कस्यचित् पृष्ठपरिग्रहेणैव तत्कर्म गुरु संपद्यते । विपाकनैयम्येनावस्थानात्[4] । कस्यचित् क्षेत्रवशेनैव । तत्रैव क्षेत्रे पुनरधिष्ठानवशात् गुरु संपद्यते नान्यथा । यथा मातापित्रोः प्राणातिपातात्[5] न त्वेवमदत्तादानादिकात् । एवमन्यदपि योज्यम् । यस्य तु सर्वाण्यधिमात्राणि भवन्ति तस्यात्यर्थमधिमात्रं गुरु कर्म वेदितव्यम् । यस्य मृदूनि तस्यात्यर्थं मृदु वेदितव्यम् ॥

कृतं चोपचितं च कर्मोच्यते । कथं कर्मोपचितं भवति । पञ्चभिः करणैः ।

संचेतनसमाप्तिभ्यां निष्कौकृत्य[6] विपक्षतः ।
परिवाराद्विपाकाच्च[7] कर्मोपचितमुच्यते ॥१२०॥

कथं संचेनतः । संचिन्त्य कृतं भवति नाबुद्धिपूर्वं न सहसा कृतम् । कथं समाप्तितः । कश्चिदेकेन दुश्चरितेनापायान्याति कश्चिद्यावत्त्रिभिः । कश्चिदेकेन कर्मपथेन कश्चिद्यावद्दशभिः । तत्र यो यावता गच्छति तस्मिन्नसमाप्ते[8] कृतं तत्कर्म[9] नोपचितम् समाप्ते तूपचितम् । कथं निष्कौकृत्यविपक्षतः । निर्विप्रतिसारं

१. G. दक्षिणाः । २. MS. ...महाकेल्याणमित्रं । के looks like ल्क । According to Chinese it should be लोके महाकल्याणमित्रम् । ३. MS. प्रकाशयित्वा । ४. Y. नैयम्यावस्थानात् । ५. Y. ....पातनात् । ६. G. निःकौकृत्य । ७. G. परिवारविपाकाच्च । ८. MS. looks like ...समाप्ति । ९. Y. seems to omit तत् ।

च तत् कर्म भवति निष्प्रतिपक्षं च। कथं परिवारतः। अकुशलं चाकुशलपरिवारं च भवति। कथं विपाकतः। वि-[65a. 15A. II]पाकदान[1] नियतं भवति। एवं कुशलमपि योज्यम्। अतोऽन्यथा कर्म कृतं भवति नोपचितम्।

चैत्ये सरागस्यात्मार्थं दानमित्युक्तम्। तत्रासत्युपभोक्तरि[2] कथं पुण्यं भवति। द्विविधं हि पुण्यं त्यागान्वयं त्यागादेव यदुपपद्यते परिभोगान्वयं च देय-धर्मपरिभोगाद्यदुत्पद्यते।

**चैत्ये त्यागान्वयं पुण्यं**

परिभोगान्वयं पुण्यं नास्ति। कथं तत्राप्रतिगृह्णति कस्मिश्चित् पुण्यम्। किं पुनः कारणं सति प्रतिग्रहीतरि भवितव्यं नासतीति। कस्यचिदप्यनुग्रहाभावात्। इदमकारणम्। यदि हि पुण्यं परानुग्रहादेव स्यात् मैत्र्याद्यप्रमाणसम्यग्दृष्टिभावनायां[3] न स्यात्। तस्मादेष्टव्यं चैत्येऽपि पुण्यम्।

**मैत्र्यादिवदगृह्णति।**

यथा मैत्र्यादिष्वन्तरेणापि प्रतिग्राहकं परानुग्रहं वा पुण्यं भवति स्वचित्तप्रभवं[4] तथाभ्यतीतेऽपि[5] गुणवति तद्भक्तिकृतं[6] स्वचित्तात् पुण्यं भवति। दानमानक्रिया तर्हि व्यर्था[7] प्राप्नोति। न। तत्कर्मसमुत्थापिकाया भक्तेः प्रकृष्टतरत्वात्। यथा हि शत्रुवधाभिप्रायस्य तत्समुत्थापितं[8] कायवाक्कर्म। शत्रुसंज्ञया तस्मिन्मृतेऽपि कुर्वतो वहुतरमपुण्यं जायते। नाभिप्रायमात्रेण। तथाभ्यतीते[9] शास्तरि त-[65b. 15B. II]द्भक्तिसमुत्थां[10] दानमानक्रियां कुर्वतो वहुतरं पुण्यं जायते। न भक्तिमात्रेण। यदि स्वक्षेत्रे दानक्रियावीजमिष्टफलं भवति तत्क्षेत्रे[11] तर्ह्यनिष्ट-फलं भविष्यति।

**कुक्षेत्रेऽपीष्टफलता फलबीजाविपर्ययात्[12] ॥१२१॥**

कुक्षेत्रेऽपि[13] फलस्य वीजादविपर्ययो दृष्टो मृद्वीकावीजान्मृद्वीकाफलमेवोत्पद्यते मधुरं निम्ववीजान्निम्वमेव तिक्तम्। एवं कुक्षेत्रेऽपि परहिताध्याशयप्रवृत्तस्य दानवीजस्येष्टमेव फलं निर्वर्तते नानिष्टम्। क्षेत्रदोषात्तु तद्वीजमल्पफलं वा

---

१. Y. ...दाने। २. MS. ....सत्यप...। ३. MS. ...भावायां। ४. MS. ... प्राभवं। ५. Y. adopts the reading ह्यतीते and notes स्वतीते MSS.। ६. MS. तत्। ७. MS. seems to drop व्यर्था। Y. व्यर्था प्राप्नोति। ८. Y. तत्समुत्थितं। ९. Y. adopts the reading ह्यतीते and notes स्यतीते MSS.। १०. MS. तत्। ११. Y. कुक्षेत्रे। १२. MS. वीज....। १३. Y. adds हि।

भवत्यफलं वा । गतं दानमयपुण्यक्रियावस्तु सप्रसङ्गम् ।।

शीलमयं वक्तव्यम् । तदुच्यते

**दौःशील्यमशुभं रूपं शीलं[1] तद्विरतिः**

अकुशलं हि रूपं दौःशील्यमुच्यते । तस्माद्विरतिः शीलम् । सा पुनर्विरतिः[2]

**द्विधा ।**

यया च विरम्यते विज्ञप्त्या यच्च तद्विरमणम् अविज्ञप्तिः । न च केवलं दौःशील्या-द्विरतिः शीलम् । किं तर्हि ।

**प्रतिक्षिप्ताच्च बुद्धेन**

यदपि न प्रकृत्या दौःशील्यं भगवता च बुद्धेन प्रतिक्षिप्तमकालभोजनादिकं तस्मादपि द्विधा विरतिः शीलम् । समात्तशिक्षस्य तु तदध्याचाराद्दौःशील्यं जायते ।। उक्तं समासेन शीलम् ।।

**विशुद्धं तु चतुर्गुणम् ।।१२२।।**[66a. 15A. III]

तत्तु शीलं चतुर्गुणं भवति । विपर्ययादविशुद्धम् । अथ कथं चतुर्गुणमित्याह

**दौःशील्यतद्धेत्वहतं तद्विपक्षशमाश्रितम्[3] ।**

दौःशील्येन तावदनुपहतं भवति यथोक्तेन दौःशील्येन[4] । हेतुनाऽप्यनुपहतं भवति । लोभादिभिः क्लेशोपक्लेशैः दौःशील्यविपक्षाश्रितं च भवति । स्मृत्युपस्थानसंनि-श्रितत्वात् समाश्रितं च भवति । नोपपत्तिविशेषाश्रितम् । निर्वाणपरिणामित-त्वात्[5] । पञ्चभिः कारणैः इत्यपरे । मौलैः कर्मपथैर्विशुद्धं भवति सामन्तकैर्विशुद्धं वितर्कैरनुपहतं स्मृत्याऽनुपरिगृहीतं निर्वाणपरिणामितं चेति । चतुर्विधं शीलमि-त्यपरे । भयशीलं यदा जीविकाश्लोकदण्डदुर्गतिभयात् पाल्यते । आशास्तिशीलं यद्भवभोगसत्कारतृष्णाकृतम् । बोध्यङ्गानुलोमं शीलं यन्मोक्षार्थं सम्यग्दृष्टिका-नाम्[6] । परिशुद्धं शीलमनास्रवशीलं निर्मलत्वादिति ।। गतं शीलम् ।।

**समाहितं तु कुशलं भावना**

किमिदं समाहितं नाम । समाधिस्वभावं सहभू[7] यत् । किमर्थमेतत् भावनेत्युच्यते ।

---

१. MS. शीतं । २. MS. ...विरतिर्द्विधा । ३. G. ...समाश्रितम् । ४. MS. drops न । Y. दौःशील्येन यथोक्तेन । ५. MS. ....परिमितत्वात् । ६. MS. सम्यक् । ७. Y. ....स्वभावसहभू । It should be ...सहभु ।

**चित्तवासनात् ॥१२३॥**

तद्धि समाहितं कुशलमत्यर्थं चित्तं वासयति[1]। गुणैस्तन्मयीकरणात्संततेः। पुष्पैस्तिलभावनावत्[2]। दानं तावन्महाभोगतायै संवर्तत इत्युक्तम्। अथ शी-[66b. 15B. III]लं भावना च

**स्वर्गाय शीलं प्राधान्यात् विसंयोगाय भावना।**

दानमपि स्वर्गाय शीलं प्राधान्यात्। शीलमपि विसंयोगाय। भावना तु प्राधान्यात्।

सूत्र उक्तं "चत्वारः पुद्गला ब्राह्मण्यं[3] पुण्यं प्रसवन्ती"ति। कतमत्तद्ब्राह्मपुण्यम्। यत्तल्लक्षणविपाकस्य[4] कर्मणः परिमाणज्ञापनायोक्तमिति वैभाषिकाः। पूर्वाचार्यास्तु व्याचक्षते[5]।

**चतुर्णां ब्राह्मपुण्यत्वं कल्पं स्वर्गेषु मोदनात् ॥१२४॥**

यावता पुण्येन कल्पं स्वर्गेषु मोदते इदं ब्राह्मं पुण्यम्। ब्रह्मपुरोहितानां कल्पायुष्कत्वात्। निकायान्तरे गाथां पठन्ति

"ब्राह्मं पुण्यं प्रसवति कल्पं स्वर्गेषु मोदत" इति।

आमिषदानमुक्तम्। धर्मदानं वक्तव्यम्। तदिदमुच्यते।

**धर्मदानं यथाभूत[6]सूत्राद्यक्लिष्टदेशना।**

सूत्रादीनां यथाभूतमक्लिष्टदेशना धर्मदानम्। अतो महतीं त आत्मनः पुण्यज्यानिं कुर्वन्ति ये विपरीतधर्मं देशयन्ति। क्लिष्टचित्ता वा लाभसत्कार[7]यशांसि वाञ्छन्तः[8]। उक्तं पुण्यक्रियावस्तुभेदेन त्रिविधं कुशलं पुनः

**पुण्यनिर्वाणनिर्वेधभागीयं कुशलं त्रिधा ॥१२५॥**

पुण्यभागीयं यदिष्टविपाकं मोक्षभागीयं यस्मिन्नुत्पन्ने नियतं परिनिर्वाणधर्मा भवति। यस्य संसारा-[67a. 15A. IV]दीनवनैरात्म्यनिर्वाणगुणद्योतिकां कथां श्रुत्वा रोमहर्षाश्रुपातौ भवतस्तस्यास्ति मोक्षभागीयं कुशलमूलमित्यवसेयं[9] प्रावृषीवाङ्कुरप्ररोहात् खलविलेषु बीजास्तित्वम्। निर्वेधभागीयमूष्मादि चतुर्विधं पश्चाद्व्याख्यास्यामः।

---

१. Y. संवासयति। २. Y. ....वासनावत्। ३. Y. ब्राह्मं। ४. Y. omits तत्। ५. व्यचक्षते। ६. G. यथाभूतं। ७. MS. ... सत्कारा...। ८. MS. वाञ्छतः। ९. MS. ....वशेयं।

यदिदं लोक उच्यते लिपिमुद्रागणना काव्यं संख्येति क एषां स्वभावः ।

**योगप्रवर्तितं कर्म ससमुत्थापकं[1] त्रिधा ।**
**लिपिमुद्रे सगणनं काव्यं संख्या यथाक्रमम् ।।१२६।।**

योगप्रवर्तितमिति उपायविशेषप्रवर्तितम् । त्रिधा कर्मेति कायवाङ्मनस्कर्म । तत्र लिपिमुद्रे तावद्योगप्रवर्तितं कायकर्म समुत्थापनम्[2] । गणना काव्यं च वाक्कर्म । इत्येतानि पञ्चस्कन्धस्वभावानि । संख्या मनस्कर्म । यन्मनसा संकलनं धर्माणाम् ।

धर्माणामिदानीं केचित् पर्याया उच्यन्ते ।

**सावद्या निवृता हीनाः क्लिष्टा धर्माः**

क्लिष्टानां धर्माणां सावद्या निवृता हीना इति पर्यायाः ।

**शुभामलाः[3] ।**

**प्रणीताः**

कुशलानास्रवाणां प्रणीता इति पर्यायः । हीनप्रणीतेभ्योऽ[67b. 15B. IV]न्ये मध्या इति सिद्धं भवति ।

**संस्कृतशुभाः सेव्याः**

कुशलसंस्कृतानां सेवितव्या इति पर्यायः । शेषा असेवितव्या इति सिद्धं भवति । कस्मादसंस्कृतं न सेव्यम् । अनभ्यसनीयत्वादफलत्वाच्च । फलार्थं हि सेवा भवति । सोत्तरा अन्ये सर्वधर्माः ।

**मोक्षस्त्वनुत्तरः ।।१२७।।**

नहि निर्वाणाद्विशिष्टतर[4]मस्ति । तच्च सर्वेभ्यो विशिष्टं कुशलनित्यत्वात् ।

अभिधर्मकोशभाष्ये कर्मनिर्देशो नाम
चतुर्थं कोशस्थानमिति ।।



१. MS. असमुत्थापकं । २. Y. समुत्थानम् । ३. MS. प्रभा अमलाः । ४. Y. विशिष्टतमम् ।

# पञ्चमं कोशस्थानम्

[Ib. 15B. V] ॐ नमो बुद्धाय

"कर्मजं लोकवैचित्र्य"मित्युक्तम्। तानि[१] कर्माण्यनुशयवशादुपचयं गच्छन्ति अन्तरेण चानुशयान् भवाभिनिर्वर्त्तने न समर्थानि भवन्ति। अतो वेदितव्याः

**मूलं भवस्यानुशयाः**

क्लेशो हि प्रवर्तमानो दश कृत्यानि करोति। मूलं च[२] दृढ़ीकरोति संततिमवस्थापयति क्षेत्रमापादयति निःष्यन्दं निर्वर्तयति कर्मभवमभिनिर्हरति स्वसंभारं परिगृह्णाति आलम्बने संमोहयति विज्ञानस्रोतो नमयति कुशलपक्षाद्व्युत्क्रामति[३] बन्धनार्थं च स्फरति धात्वनतिक्रमयोगेनेति[४]।

कति चेमेऽनुशयाः। समासेन षट्। कतमे

**षड्रागः प्रतिघस्तथा।**

**मानोऽविद्या च दृष्टिश्च विचिकित्सा च**

तथा ग्रहणं रागवशेनान्येषामालम्बनानुशायितज्ञापनार्थम्[५]। एतच्च पश्चात् प्रवेदयिष्यामः।

**ते पुनः[६] ॥१॥**

**षड्रागभेदात्सप्तोक्ताः[७]**

त एते षडनुशयाः सूत्रे रागस्य द्विधा भेदं कृत्वा सप्तोक्ताः। कामरागानुशयः प्रतिघानुशयो भवरागानुशयो मानानुशयः अविद्यानुशयो दृष्ट्यनुशयो विचिकित्सानुशय इति। कथमिदं ज्ञातव्यं कामराग एवानुशयः[८] कामरागानुशयः आहोस्वित् कामराग-

---

१. Y. adds च। २. Y. omits च। ३. Y. व्युत्क्रमयति। ४. Y. °तिक्रमण। ५. Y. adds अपि after अन्येषाम्। ६. G. तेषु नः। ७. G. भेदाः। ८. Y. कामराग एवानुशयः comes after आहोस्वित्। The order seems to be changed.

स्यानुशयः का-[2a. 15A. VI]मरागानुशयः। किं चातः। कामराग एवानुशयश्चेत्[1] सूत्रविरोधः। "इहैकत्यो न कामरागपर्यवस्थितेन चेतसा बहुलं विहरति। उत्पन्नस्य कामरागपर्यवस्थानस्योत्तरि[2]निःसरणं[3] यथाभूतं प्रजानाति। तस्य तत्कामराग-पर्यवस्थानं स्थामशः सम्यक्त्वसमवहतं[4] सानुशयं प्रहीयत" इति। कामरागस्यानुशयश्चेद्विप्रयुक्तानुशयप्रसङ्गादभिधर्मविरोधः "कामरागानुशयस्त्रिभिरिन्द्रियैः संप्रयुक्त" इति। कामराग एवानुशय इति वैभाषिकाः[5]। एवं यावद्विचिकित्सैवानुशय इति। ननु चोक्तमेवं सूत्रविरोध इति। नास्ति विरोधः। सानुशयं सानुबन्धमित्यर्थः[6]। औपचारिको वा सूत्रेऽनुशयशब्दः प्राप्तौ[7]। यथा दुःखोऽग्निरिति। लाक्षणिकस्त्वभिधर्मे क्लेश एवानुशयशब्दः। तस्मात्संयुक्ता एवानुशयाः। [8]कथमिदं गम्यते। अनुशयानां

"चित्तक्लेशकरत्वादावरणत्वाच्छुभैर्विरुद्धत्वात्"।

यस्मादनुशयैः क्लिष्टं चित्तं भवत्यपूर्वं कुशलं नोत्पद्यते उत्पन्नाच्च परिहीयते तस्मान्न विप्रयुक्ताः। अथ विप्रयुक्तैरप्येवं स्यात्। कुशलं न कदाचिदुपलभ्येत[9]। तेषां नित्यं संनिहितत्वात्। उपलभ्यते च। अतः

"कुशलस्य चोपलम्भाद-[2b. 15B. VI]विप्रयुक्ताः अथ[10] इहानुशयाः" इति।

तदिदमज्ञापकं यस्माद्यो[11] विप्रयुक्तमनुशयमिच्छति स एतत्सर्वमनुशयकृतं[12] नेच्छति। क्लेशकृतमेवेच्छति। एवं तु साधु यथा सौत्रान्तिकानाम्[13]। कथं च सौत्रान्तिकानाम्[14]। कामरागस्यानुशयः कामरागानुशय इति। न चानुशयः संप्रयुक्तो न विप्रयुक्तस्तस्याद्रव्यान्तरत्वात्। प्रसुप्तो[15] हि क्लेशोऽनुशय उच्यते। प्रबुद्धः पर्यवस्थानम्। का च तस्य प्रसुप्तिः। असंमुखीभूतस्य बीजभावानुबन्धः। कः प्रबोधः। संमुखीभावः। कोऽयं बीजभावो नाम। आत्मभावस्य क्लेशजा क्लेशोत्पादनशक्तिः। यथानुभवज्ञानजा स्मृत्युत्पादनशक्तिर्यथा चाङ्कुरादीनां शालिफलजा शालिफलोत्पादनशक्तिरिति। यस्तु क्लेशानां बीजार्थमर्थान्तरं विप्रयुक्त-

१. D. रागादय एव अनुशयाश्चेत्। २. Y. उत्तर, उत्तरे; D. उत्तरे। ३. Ms. निःसहरणं। ४. Y. सुसमवहतं, D. सम्यक्सुसंवहतं। ५. D. कर्मधारय एव परिगृह्यते न षष्ठीसमास इति वैभाषिकाः। ६. Y. इत्यर्थात्। ७. Ms. प्राप्तो। ८. ....D. omits कथमिदं गम्यते....एवन्तु साधु। ९. Y. कदाचिदपि। १०. Y. omits अथ। ११. Y. adds हि। १२. Y. सर्वमेतद्। १३. D. दार्ष्टान्तिकानाम्। १४. D. दार्ष्टान्तिकानाम्। १५. D. सुप्तो।

मनुशयं कल्पयति तेन स्मृतिबीजमप्यर्थान्तरं कल्पयितव्यं जायते[1] । यत्तर्हि सूत्रे क्लेश एवानुशय उक्तः षट्षट्के "सोऽस्य[2] भवति सुखायां वेदनायां रागानुशय" इति । भवतीति वचनान्नासौ[3] तदैवानुशयः[4] । कदा तर्हि भवति । यदा प्रसुप्तो भवति । हेतौ वा तदुपचार[5] एष द्रष्टव्यः । तिष्ठतु प्रसङ्गः । शास्त्रं प्रवर्त्तताम् ।

य ए-[3a. 15A. VII]ष सूत्रे रागस्य भेदः कृतः कामरागो भवराग इति । कोऽयं भवरागः ।

**भवरागो द्विधातुजः ।**

रूपारूप्यधातुजो रागो भवरागः कृतः । किं कारणमेवं कृतः ।

**अन्तर्मुखत्वात्तन्मोक्षसंज्ञाव्यावृत्तये कृतः ॥२॥**

समापत्तिरागो हि तेषां प्रायेण । स चान्तर्मुखप्रवृत्तस्तस्मात् भवरागः । उक्तस्तयोः किल धात्वोर्मोक्षसंज्ञाव्यावर्त्तना[6]र्थमेकेषामिति । आत्मभाव एव तु, भवः । ते च सत्त्वाः समापत्तिं साश्रया[7]मास्वादयन्त आत्मभावमेवास्वादयन्ति कामवीतरागत्वात् । अतः[8] स रागो भवराग इत्युक्तः । पुनरेते षडनुशया अभिधर्मे दश क्रियन्ते । कथं कृत्वा ।

**दृष्टयः पञ्च सत्कायमिथ्यान्तग्राहदृष्टयः ।**
**दृष्टिशीलव्रतपरामर्शा[9]विति पुनर्दश[10] ॥३॥**

षण्णामनुशयानां दृष्टिं पञ्चधा कृत्वा दश भवन्ति । पञ्च दृष्टिस्वभावाः सत्कायदृष्टिरन्तग्राहदृष्टिर्मिथ्यादृष्टिर्दृष्टिपरामर्शः शीलव्रतपरामर्शश्च । यथा दृष्टिस्वभावाः रागः प्रतिघो मानोऽविद्या विचिकित्सा । एते पुनरेते दशानुशया अभिधर्मेऽष्टानवतिः क्रियन्ते । कामावचराः षट्त्रिंशद् रूपावचरा एकत्रिंशत् आरूप्यावचरा एकत्रिंशत् । कथं [3b. 15B. VII] कृत्वा । समासतो ह्येतेऽनुशयास्त्रैधातुका दर्शनप्रहातव्या भावनाप्रहातव्याश्च । तत्र तावत् कामावचरा दर्शनप्रहातव्या द्वात्रिंशत् । कतमे त इत्याह—

---

१. D. omits यस्तु''''जायते । २. Y. adds पुद्गलस्य । ३. D. वचनाददोषः । नासौ । ४. Ms. D. तदेवा । ५. D. फलोपचार । ६. MS. व्यवर्त्तना । Y. विच्छन्दना । ७. Ms. सास्रया । ८. Ms. अथ । ९. Ms. परामर्षा । १०. Ms. पुनदशः ।

**दशैते सप्तसप्ताष्टौ त्रिद्विदृष्टिविवर्जिताः ।**
**यथाक्रमं प्रहीयन्ते कामे दुःखादिदर्शनैः ।।४।।**

य एते दशानुशया उक्ता एते कामधातौ दशापि दुःखदर्शनहेयाः सन्ति । एस्य एव सप्त समुदयदर्शनप्रहेयाः[1] । सप्त निरोधदर्शनहेयाः सत्कायदृष्टिमन्तग्राहदृष्टि शीलव्रतपरामर्शं च वर्जयित्वा । अष्टौ मार्गदर्शनहेयाः[2] । सत्कायदृष्टिमन्तग्राहदृष्टि च वर्जयित्वा । इत्येते कामावचरा द्वात्रिंशदनुशया दर्शनप्रहातव्याः । सत्यानां दर्शनमात्रेण प्रहाणात् ।

**चत्वारो भावनाहेयाः**

तद्यथा रागः प्रतिघो मानोऽविद्या च । दृष्टसत्यस्य पश्चात्[3] मार्गाभ्यासेन प्रहाणात् । तदेवं सत्कायदृष्टिरेकप्रकारा भवति दुःखदर्शनहेया । एवमन्तग्राहदृष्टिः मिथ्यादृष्टिश्चतुष्प्रकारा भवति । दुःखसमुदयनिरोधमार्ग[4]दर्शनहेया । एवं दृष्टिपरामर्शो विचिकित्सा च । शीलव्रतपरामर्शो द्विप्रकारः दुःखमार्गदर्शनहेयः । रागप्रतिघमानाविद्याः [4a. 15A. VIII] पञ्चप्रकाराश्चतुःसत्यदर्शनहेया भावनाहेयाश्च । कीदृशा एते दुःखदर्शनहेयाः कीदृशा यावद् भावनाहेयाः । ये यद्दर्शनहेयालम्बनास्ते तद्दर्शनहेया अवशिष्टा भावनाहेयाः । ता एव द्वादश दृष्टयो भवन्ति चतस्रो विचिकित्साः पञ्च रागाः पञ्च प्रतिघाः पञ्च मानाः पञ्चाविद्या इत्येते कामावचराः षट्त्रिंशदनुशया भवन्ति ।

**त एवाप्रतिघाः पुनः ।**

**रूपधातौ**

पञ्चप्रकारं प्रतिघमपहाय त एव रूपावचरा एकत्रिंशदनुशया भवन्ति । यथा रूपधातौ

**तथारूप्ये**

एकत्रिंशदनुशया भवन्ति ।

**इत्यष्टानवतिर्मताः ।।५।।**

त एवमेते षडनुशया आकारप्रकारधातुभेदैरष्टानवतिर्मताः आभिधार्मिकाणाम् ।

---

१. Y. °दर्शनहेयाः । २. MS. drops न । ३. MS. पश्चात्मार्गा° । ४. Y. चतुःसत्य ।

य इमे दर्शनप्रहातव्यानुशया उक्ताः किमेते नियतं दर्शनेनैव प्रहीयन्ते। नेत्याह। किं तर्हि।

**भवाग्रजाः क्षान्तिवध्या दृग्घेया एव**

ये भवाग्रभूमिजा अन्वयज्ञानक्षान्तिहेया अनुशयास्ते दर्शनहेया एव न भावनाहेयाः।

**शेषजाः।**

**दृग्भावनाभ्याम्**

क्षान्तिवध्या इति वर्त्तते। शेषासु भूमिषु यथायोगं धर्मान्वयज्ञानक्षान्तिहेया अनुशया आर्याणां दर्शनहेयाः पृ-[4b. 15B. VIII]थग्जनानां भावनाहेयाः।

**अक्षान्तिवध्या भावनयैव तु ।।६।।**

सर्वासु भूमिषु येऽनुशया ज्ञानवध्यास्ते उभयेषां नित्यं भावनाहेयाः। नैव हि वाह्यकानां दर्शनप्रहातव्याः प्रहीयन्त इत्यपरे। तथाहि महाकर्मविभागसूत्रे पूर्वान्तिकल्पकानां[1] च शाश्वतवादिनामेकत्यशाश्वतिकानाम् अहेतुसमुत्पत्तिकानां च वीतरागाणां च कामधात्वालम्बनानां दृष्टीनां समुदाचार उक्तः। न च रूपावचराणां क्लेशानां कामधातुरालम्बनं वीतरागत्वात्। तस्मात् कामप्रतिसंयुक्ता एव ता अप्रहीणा इति। दृष्ट्युत्पादसमकालं ते परिहीणा देवदत्त इवेति वैभाषिकाः।

दृष्टयः पञ्च नामतो निर्दिष्टा न तु स्वभावतस्तत् कस्तासां स्वभावः।

**आत्मात्मीयध्रुवोच्छेदनास्तिहीना[2]ग्रदृष्टयः।**
**अहेत्वमार्गे तद्दृष्टि[3]रेतास्ताः पञ्च दृष्टयः ।।७।।**

आत्मदृष्टिरात्मीयदृष्टिर्वा सत्कायदृष्टिः। सीदतीति सत्। चयः कायः संघातः स्कन्ध इत्यर्थः। सच्चायं कायश्चेति सत्कायः पञ्चोपादानस्कन्धाः। नित्यसंज्ञां पिण्डसंज्ञां च त्याजयितुमेवं द्योतिता। एतत्पूर्वको हि तेष्वात्मग्रहः। सत्काये दृष्टिः सत्कायदृष्टिः। सर्वैव सास्रवालम्बना[5a. 15A₁. I]दृष्टिः सत्काये। आत्मात्मीयदृष्टिरेव तु सत्कायदृष्टिरुक्ता। यथा गम्येत सत्कायदृष्टि-

---

१. MS. पूर्वान्तिकर्म्मकल्पकानां २. MS. हीणा। ३. MS. तत् दृष्टि।

रियं नात्मनि नात्मीये वेति। यथोक्तं "ये केचिद् भिक्षवः श्रमणा वा ब्राह्मणा वा आत्मेति समनुपश्यन्तः समनुपश्यन्ति सर्वे त इमानेव पञ्चोपादानस्कन्धानि"ति। तस्यैवात्माभिमतस्य वस्तुनो ध्रुवदृष्टिरुच्छेददृष्टिर्वाऽन्तग्राहदृष्टिः। शाश्वतोच्छेदान्तग्रहणात्। सति दुःखादिसत्ये नास्तीति दृष्टिर्मिथ्यादृष्टिः। सर्वैव हि विपरीतस्वभावप्रवृत्ता दृष्टिर्मिथ्यादृष्टिः एकैव तूक्ता। अतिशयवत्त्वात् दुर्गन्धक्षतवत्। एषा ह्यपवादिका अन्यास्तु समारोपिकाः। हीने अग्रदृष्टिर्दृष्टिपरामर्शः। किं हीनम्। सर्वं सास्रवम्। आर्यैः[1] प्रहीणत्वात्। तस्याग्रतो ग्रहणं दृष्टिपरामर्शः। दृष्ट्यादिपरामर्श इति वक्तव्ये आदिशब्दलोपः कृतः। अहेतौ हेतुदृष्टिरमार्गे[2] मार्गदृष्टिः शीलव्रतपरामर्शः। तद्यथा महेश्वरो न हेतुर्लोकानाम्। तं च हेतुं पश्यति प्रजापतिमन्यं वा। अग्निजलप्रवेशादयश्च न हेतुः स्वर्गस्य तांश्च हेतुं पश्यति। शीलव्रतमात्रकं सांख्ययोगज्ञानादयश्च न मार्गो मोक्षस्य तांश्च मार्गं पश्यति। अत्रापि किलादिशब्दलोपः कृत इत्येतास्ताः पञ्च [5b. 15B1. I] दृष्टयो वेदितव्याः। सत्यकारणे कारणदृष्टिः शीलव्रतपरामर्शः। कस्मादयं न समुदयदर्शनप्रहातव्यः। यो हि कश्चिदीश्वरं प्रजापतिमन्यं वा कारणं पश्यति स तन्नित्यमेकं चात्मानं कर्तारमभिनिविश्य। तद्यस्मात् स

**ईश्वरादिषु नित्यात्मविपर्यासात् प्रवर्तते।**
**कारणाभिनिवेशोऽतो दुःखदृग्घेय एव सः॥८॥**

दुःखदर्शनादेव हि तेषु तौ नित्यात्मग्राहौ प्रहीयेते। तस्मात्तत्कृतोऽपि कारणाभिनिवेशस्तत एव प्रहीयते। यर्स्ताह जलाग्निप्रवेशादिभिः स्वर्गोपपत्तिं पश्यति शीलव्रतेन वा शुद्धिं सोऽपि दुःखदर्शनप्रहातव्य एव। एष हि शास्त्रपाठः। "ये चैवं दृष्टय एवंवादिनो यदयं पुरुषपुद्गलो गोशीलं समादाय वर्तते मृगशीलं कुक्कुरशीलं, स तेन शुध्यति मुच्यते सुखदुःखं व्यतिक्रामति सुखदुःखव्यतिक्रमं चानुप्राप्नोति। अकारणं कारणतः प्रत्येति शीलव्रतपरामर्शो दुःखदर्शनप्रहातव्यः" इति विस्तरः। किं पुनः कारणमसौ दुःखदर्शनप्रहातव्यः। दुःखे विप्रतिपन्नत्वात्। सर्वेषां सास्रवालम्बनानां दुःखे विप्रतिपन्नत्वात्। कीदृशो वाऽन्यः शीलव्रतपरामर्शो मार्गदर्शनप्रहात-[6a. 15A1. II]व्यः। यो मार्गदर्शनप्रहातव्यालम्बनः। सोऽपि हि नाम दुःखे विप्रतिपन्नः। यस्य च मार्गालम्बना मिथ्यादृष्टिर्विचिकित्सा वाऽस्ति स नास्ति[3] मोक्षमार्ग इति पश्यन् विचिकित्सन् वा कथं तया शुद्धिं प्रत्येष्यति।

१. Y. आर्य। २. Y. adds च। ३. MS. ना।

अथान्यं मोक्षमार्गं परामृश्य[1] एष मोक्षमार्गो नास्तीत्याह। सोऽपि तेनैवान्येन शुद्धिं प्रत्येति न तया मिथ्यादृष्टचे ति। तस्याप्यसौ मार्गदर्शनप्रहातव्यालम्बनो न सिध्यति। यश्चापि समुदयनिरोधदर्शनप्रहातव्यालम्बनया मिथ्यादृष्टया शुद्धिं प्रत्येति स कस्मान्न तद्दर्शनहेयः। तस्मात् परीक्ष्य एषोऽर्थः।

यदुक्तं "नित्यात्मविपर्यासादि"ति। किमेतावेव द्वौ विपर्यासौ। चत्वारो विपर्यासाः। अनित्ये नित्यमिति। दुःखे सुखमिति। अशुचौ शुचीति। अनात्मन्यात्मेति। अथैतद्विपर्यासचतुष्कं किंस्वभावम्।

**दृष्टित्रयाद्विपर्यासचतुष्कं**

अन्तग्राहदृष्टेः शाश्वतदृष्टिर्नित्यविपर्यासः। दृष्टिपरामर्शात्सुखशुचिविपर्यासौ। सत्कायदृष्टेरात्मदृष्टिरात्मविपर्यासः। सकले[2]त्यपरे। कथमात्मीयदृष्टिर्विपर्यासः। कथं च न विपर्यासः[3]। विपर्याससूत्राद्।[4] आत्मानमेव तत्र वशिनं[5] पश्यन्नात्मीयं पश्यतीत्यात्मदृष्टिरेवासौ द्विमुखी अथाहमित्येतस्मा-[6b. 15B1. II]त् ममेति दृष्टचन्तरं स्यात्। मया मह्यमित्येतदपि स्यात्[6]।

कस्मादन्ये क्लेशा न विपर्यासाः। यस्मात् त्रिभिः कारणैर्विपर्यासानां व्यवस्थानम् कतमैस्त्रिभिः।

**विपरीततः।**

**नितीरणात् समारोपात्**

एकान्तविपर्यस्तत्वादालम्बने नितीरकत्वात्समारोपणाच्च। उच्छेददृष्टिर्मिथ्यादृष्टिश्च न समारोपिके। अभावमुखप्रवृत्तत्वात्। शीलव्रतपरामर्शो नैकान्तविपर्यस्तस्तन्मात्रशुद्धयालम्बनत्वात्। अन्ये क्लेशा न सन्तीरका अतो न विपर्यासाः। यत्तर्हि सूत्रे[7] उक्त "मनित्ये नित्यमिति संज्ञाविपर्यासः चित्तविपर्यासो दृष्टिविपर्यास" इति[8]। दृष्टिरेवात्र विपर्यासः।

---

१. Ms. परामृष्य। २. Ms. सफले°। ३. Y. भवितव्यम्। ४. Ms. °सूत्रादात्मा°।
५. Y. वाशिनं। ६. D. यदि च ममेत्येतद् दृष्ट्यन्तरं स्यात् मया मह्यमित्येवमाद्यपि स्याद्।
७. D ननु च सूत्रे। ८. D एवं यावदात्मनि इति (?)।

**संज्ञाचित्ते तु तद्वशात् ।।९।।**

दृष्टिविपर्यासवशादेव तत्संप्रयुक्ते संज्ञाचित्ते विपर्यासावुक्तौ। वेदनादयोऽपि कस्मान्नोक्ताः। लोकप्रसिद्धया। लोके हि विपर्यस्तसंज्ञो विपर्यस्तचित्त इति प्रसिद्धं न पुनर्विपर्यस्तवेदन[1] इति। त एते विपर्यासाः सर्वेऽपि स्रोतआपन्नस्य[2] प्रहीणा भवन्ति। दर्शनप्रहेयत्वात् दृष्टीनां ससंप्रयोगाणाम्। द्वादश विपर्यासाः। अनित्ये नित्यमिति संज्ञादृष्टिचित्तविपर्यासास्त्रयः। एवं यावदनात्मन्यात्मेति। तत्राष्टौ दर्शनप्रहात-[7a. 15A1. III]व्याश्चत्वारो भावनाप्रहातव्याः। दुःखे च संज्ञाचित्तविपर्यासावशुचौ चेति निकायान्तरीयाः। इतरथा हि कथमन्तरेण सुखशुचिसंज्ञामवीतरागस्यार्यस्य[3] कामरागः संभवेदिति। तदेतन्नेच्छन्ति वैभाषिकाः। यदि हि सुखशुचिसंज्ञाचित्तसमुदाचारादार्यस्य तद्विपर्यासावीक्ष्येते। सत्त्वसंज्ञाचित्तसमुदाचारात्तद्विपर्यासावपि किं नेष्येते। न हि स्त्रियामात्मनि च विना सत्त्वसंज्ञया कामरागो युक्त इति। सूत्रेऽपि चोक्तं "यतश्च श्रुतवानार्यश्रावक इदं दुःखमार्यसत्यमिति यथाभूतं प्रजानाति। यावत् तस्य तस्मिन् समये योऽनित्ये नित्यमिति संज्ञाविपर्यासः चित्तविपर्यासो दृष्टिविपर्यासः स प्रहीयत" इति विस्तरः। तस्माद् दृष्टिसमुत्थे[4] एव संज्ञाचित्ते विपर्यासौ नान्ये तत्कालभ्रान्तिमात्रत्वादलातचक्रचित्रयक्षभ्रान्तिवत्। यत्तर्हि स्थविरानन्देनार्यं वागीशमधिकृत्योक्तं

"विपर्यासे च संज्ञानां चित्तं ते परिदह्यते"।
निमित्तं वर्ज्यतां तस्माच्छुभं रागोपसंहितम् ।।

तस्मात् सर्व एवाष्टौ संज्ञाचित्तविपर्यासाः शैक्षस्याप्रहीणा इत्यपरे। तेऽपि चार्यसत्यानां यथाभूतपरिज्ञानात्[5] प्रहायन्ते। न विना तेनेत्युपायसमा-[7b. 15B1 III]ख्यानान्नास्ति सूत्रविरोधः।

अथ किं दृष्टचनुशयस्य एव भेदो नान्यस्य। मानस्याप्यस्ति। कथमित्याह—

**सप्त मानाः**

मानोऽतिमानो मानातिमानोऽस्मिमानोऽभिमान ऊनमानो मिथ्यामानश्च। अभेदेन चित्तस्योन्नतिर्मान उक्तः। स प्रवृत्तिभेदात् सप्तधा भवति। हीनाद्विशिष्टः

१. D. adds विपर्यस्तचेतनः। २. Ms. श्रोत। ३. Ms. drops स्य। ४. Ms. समुत्थ। ५. Y. यथाभूतज्ञानात्।

समेन वा समोऽस्मीति मन्यमानस्योन्नतिर्मानः। समाद्विशिष्टोऽस्मीत्यभिमानः। विशिष्टाद्विशिष्टोऽस्मीति मानातिमानः। पञ्चोपादानस्कन्धानात्मत आत्मीयतो वा मन्यमानस्यास्मिमानः। अप्राप्ते विशेषाधिगमे प्राप्तो मयेत्यभिमानः। बह्वन्तरविशिष्टादल्पान्तरहीनोऽस्मीत्यूनमानः। अगुणवतो गुणवानस्मीति मिथ्यामानः। यत्तर्हि शास्त्रे[1] नव मानविधा उक्ताः। "श्रेयानस्मीति[2] मानविधा। सदृशोऽस्मीति मानविधा। हीनोऽस्मीति[3] मानविधा। अस्ति मे श्रेयानस्ति मे सदृशोऽस्ति मे हीनः। नास्ति मे श्रेयान्नास्ति मे सदृशो नास्ति मे हीन" इति। एभ्य एव मानेभ्य एताः

**नवविधास्त्रिभ्यः**

कतमेभ्यस्त्रिभ्यः मानातिमानोनमानेभ्यः। तत्र प्रथमं त्रयं दृष्टिसंनिश्रितास्त्रयो मानाः। अतिमानमानोनमानाः। द्वितीयं त्रयमूनमानमानातिमानाः। तृतीयं त्रयं [8a. 15A1. IV] मानातिमानोनमानाः। युक्तस्तावद् बह्वन्तरविशिष्टादल्पान्तरहीनोऽस्मीत्यूनमान उन्नतिस्थानत्वात्। नास्ति मे हीन इत्यत्र किमुन्नतिस्थानम्। अस्ति सदृशो योऽभिप्रेते वरे सत्त्वराशौ निहीनमप्यात्मानं बहु मन्यते। अपि चास्त्येव ज्ञानप्रस्थानविहितो विधिः। प्राकरणं तु निर्देशं परिगृह्य श्रेयानस्मीत्येकेषु[4] मानोऽपि स्यादति[5]मानोऽपि मानातिमानोऽपि हीनसमविशिष्टापेक्षया।

अथैते सप्त मानाः किंप्रहातव्या इत्याह

**दृग्भावनाक्षयाः।**

दृग्भावनाभ्यामेषां क्षयः। एतदुक्तं भवति सर्वे दर्शनभावनाप्रहातव्या इति यद् भावनाहेयमप्रहीणं किमवश्यं तदार्याणां समुदाचरति। नावश्यं तद्यथा

**वधादिपर्यवस्थानं हेयं भावनया**

येन क्लेशपर्यवस्थानेन संचिन्त्य प्राणिवधं कुर्याद्यावन्मृषावादं तद् भावनाहेयं भावनाहेयधर्मालम्बनत्वात्।

**तथा ॥१०॥**

---

१. D. ननु पुनर्ज्ञानप्रस्थाने। २. D. श्रेयानहमस्मीति। ३. D. सदृशाद्धीनोऽहमस्मीति।
४. MS. °त्येकेष। ५. MS. स्यादिति।

विभवेच्छा

विभवतृष्णाऽपि भावनाहेया। विभवो नाम क एष धर्मः। त्रैधातुकी अनित्यता। तत्र प्रार्थना विभवतृष्णा। तथाशब्देन भवतृष्णायाः प्रदेशो गृह्यते। "अहो बताहमैरावणः स्यां[1] नागराज" इत्येवमादि। मानविधा अपि भावनाप्रहातव्याः स-[8b. 15B1. IV]न्तीत्युक्तमस्मिमानश्च।

न चार्यस्य संभवन्ति विधादयः।

नास्मिता

आदिग्रहणेन यावद्विभवतृष्णाया[2] ग्रहणम्। किं कारणमप्रहीणा अप्येते न समुदाचरन्ति[3]।

दृष्टिपुष्टत्वात्

सत्कायदृष्टिपुष्टा हि मानविधा अस्मिमानश्च। अतो भग्नपृष्ठत्वात् नोत्थातुं पुनरुत्सहन्ते। वधादिपर्यवस्थानं मिथ्यादृष्टिपुष्टत्वात्। विभवतृष्णा उच्छेददृष्टिपुष्टत्वात्। भवतृष्णायाः प्रदेशः शाश्वतदृष्टिपुष्टत्वात्।

कौकृत्यं नापि चाशुभम् ॥११॥

अकुशलं चापि[4] कौकृत्यं भावनाप्रहातव्यम्। न चार्यस्य तत्संभवति विचिकित्सासमुत्थितत्वात्।

अथैषामष्टानवतेरनुशयानां कति सर्वत्रगाः कत्यसर्वत्रगाः।

सर्वत्रगा दुःखहेतुदृग्घेया दृष्टयस्तथा।
विमतिः[5] सह ताभिश्च याऽविद्याऽवेणिकी च या ॥१२॥

दुःखसमुदयदर्शनप्रहातव्या दृष्टयो विचिकित्सा च ताभिश्च संप्रयुक्ता अविद्या आवेणिकी च दुःखसमुदयप्रहातव्ये चाविद्या। इतीमे एकादशानुशयाः सभागधातु-

१. Y. स्यां comes after नागराजः। २. Y. भवतृष्णाया। ३. Y. न संभवन्ति and it is explained as न समुदाचरन्ति। ४. MS. चाधि। ५. G. द्विमतिः।

सर्वत्रगाः। सप्त दृष्टयो द्वे विचिकित्से द्वे अविद्ये सकलस्वधात्वालम्वनत्वात्। किमेभिर्युगपदालम्वते आहोस्वित् क्रमेण। यदि क्रमेण अन्येषामपि प्रसङ्गः। अथ युगपत् कः [9a. 15A1. V] सकलेन कामधातुना शुद्धि प्रत्येत्यकारणं वा कारणतः। सकलं नोच्यते[१] सकलं[२] युगपदालम्वन्त[३] इति।[४] अपि तु पञ्चप्रकारमपि सर्वं युगपत्[५]। एवमपि यत्रात्मदृष्टिस्तत्रात्मतृष्णा यत्राग्रशुद्धिदृष्टी तत्र तत्प्रार्थना[६] तेन च मान इति तृष्णामानयोरपि सर्वत्रगत्वं प्राप्नोति। एवं सति दर्शनभावनाहेयालम्वनत्वादेतदुभयं किंप्रहातव्यं स्यात्। भावनाप्रहातव्यं व्यामिश्रालम्वनत्वात्। अथवा पुनरस्तु दर्शनप्रहातव्यं दृष्टिवलाधानवर्तित्वात्। स्वलक्षणक्लेशावेतौ न सामान्यक्लेशौ। तस्मान्न सर्वत्रगाविति वैभाषिकाः।

य एते सभागधातुसर्वत्रगा एकादशानुशया उक्ताः

**नवोर्ध्वालम्बना[७] एषां दृष्टिद्वयविर्जिताः।**

सत्कायदृष्टिमन्तग्राहदृष्टिं च वर्जयित्वाऽन्ये नवानुशया[८] विसभागधातुसर्वत्रगाः। कदाचित्तु[९] विसभागमेकं धातुमालम्वन्ते[१०] कदाचित् द्वौ। "येऽनुशयाः कामप्रतिसंयुक्ता रूपप्रतिसंयुक्तालम्वनाः। कामप्रतिसंयुक्ता आरूप्यप्रतिसंयुक्तालम्वनाः कामप्रतिसंयुक्ता रूपारूप्यप्रतिसंयुक्तालम्वना" इति वचनात्। यदा कामधातौ स्थितो ब्रह्मणि सत्त्वदृष्टिं नित्यदृष्टिं चोत्पादयति तदा कथं सत्कायान्त-[9b. 15A1. V] ग्राहदृष्टी विसभागधात्वालम्वने[११] न भवतः। आत्मात्मीयत्वेनाग्रहणादन्तग्राहदृष्टिश्च तत्समुत्थितत्वात्। का तर्हीयं दृष्टिः। नेयं दृष्टिर्मिथ्याज्ञानं पुनः एतदित्याभिधार्मिकाः। कुतो नु खल्वेतदन्या तदालम्वना[१२] दृष्टिरेषा न दृष्टिरिति सिद्धान्तस्तु प्रमाणयितव्यः।

किं खल्वनुशयाः एव सर्वत्रगाः। नेत्याह।

**प्राप्तिवर्ज्याः सहभुवो येऽप्येभिस्तेऽपि सर्वगाः[१३] ॥१३॥**

सर्वत्रगैरनुशयैः सहभुवो येऽप्यन्ये धर्मास्तेऽपि सर्वत्रगाः प्राप्तयस्तु नैवम्। अनेक-

---

१. Y. नोच्यते सकलम्। २. Y. स्वधातुं। ३. MS. °लम्वत। ४. MS. इत्यपि। ५. Y. सर्वयुगपत्। ६. Y. omits तत्। ७. MS. नेवो। ८. MS. न चा। ९. Y. omits तु। १०. Y. °लम्बते। ११. MS. drops धा। १२. MS. तद लम्बना। १३. MS. सर्व्वत्रगाः।

फलत्वात्। अत एव स्युः सर्वत्रगानुशया न सर्वत्रहेतुना हेतुरिति चतुष्कोटिकं क्रियते। प्रथमा कोटिरनागताः सर्वत्रगा अनुशयाः[१]। द्वितीयाऽतीतप्रत्युपन्नास्तत्सहभुवः। तृतीयाचतुर्थौ[२] योज्ये[३]।

एषामष्टानवतेरनुशयानां कति सास्रवालम्बनाः कत्यनास्रवालम्बनाः।

**मिथ्यादृग्विमती ताभ्यां युक्ताऽविद्याऽथ केवला।**
**निरोधमार्गदृग्घेयाः षडनास्रवगोचराः ॥१४॥**

निरोधदर्शनप्रहातव्यास्त्रयोऽनुशया मिथ्यादृष्टिर्विचिकित्साऽविद्या च ताभ्यां संप्रयुक्ताऽऽवेणिकी च। मार्गदर्शनप्रहातव्या अप्येत एव त्रयः। इत्येते षडनास्रवालम्वनाः। शेषाः सास्रवालम्वना इति सिद्धम्। तत्र पुनः

[10a. 15A1. VI] **स्वभूम्युपरमो मार्गः षड्भूमिनवभूमिकः।**
**तद्गोचराणां[४] विषयो मार्गो ह्यन्योऽन्यहेतुकः ॥१५॥**

निरोधालम्वनानां मिथ्यादृष्ट्यादीनां स्वभूमिनिरोध एवालम्वनं कामावचराणां कामधातोरेव यावत् भवाग्रभूमिकानां भवाग्रस्यैव। मार्गालम्वनानां कामावचराणां षड्भूमिको धर्मज्ञानपक्षो मार्गः सर्व एवालम्वनम्। योऽपि रूपारूप्यप्रतिपक्षः रूपारूप्यावचराणामप्यदृष्टभूमिकानां[५] नवभूमिकः। स एवान्वयज्ञानपक्ष्यो मार्ग आलम्वनं मार्गस्यान्योऽन्यहेतुकत्वात्। यद्यपि धर्मज्ञानान्वयज्ञाने अप्यन्योन्यहेतुके नत्वन्वयज्ञानं[६] कामधातुप्रतिपक्ष इति। न कामावचरा मार्गालम्वना अन्वयज्ञानपक्षानालम्वन्ते। धर्मज्ञानं तर्हि रूपारूप्यप्रतिपक्षत्वात्तद्भूमिकानां मार्गालम्वनानामालम्वनं भविष्यति। न तत् सकलं प्रतिपक्षो दुःखसमुदयधर्मज्ञानयोरतत्प्रतिपक्षत्वात्[७]। नापि सकलयो रूपारूप्ययोर्दर्शनप्रहातव्यानामप्रतिपक्षत्वादित्याद्याभावान्न भवत्यालम्वनम्।

अथ कस्माद्रागप्रतिघमाना दृष्टिशीलव्रतपरामर्शौ चानास्रवालम्बना नेष्यन्ते।

**न रागस्तस्य वर्ज्यत्वात्**

---

१. MS. सर्व्वत्रगानुशया। २. MS. Y. तृतीय। ३. MS. योज्या। ४. MS. तत् गोचराणां। ५. D. मप्यष्टभूमिकानां (?)। ६. Y. omits तु and न comes after अन्वयज्ञानम्। ८. Y. adopts एतदप्रतिपक्षत्वात्।

वर्जनीयो हि रागः [10b. 15B1. VI] यदि चानास्रवालम्बनः स्यान्न वर्जनीयः स्यात्कुशलधर्मच्छन्दवत् ।

न द्वेषोऽनपकारतः ।

अपकारवस्तुनि हि प्रतिघ उत्पद्यते । न चैवं निरोधमार्गौ ।

न मानो न परामर्शौ[1] शान्तशुद्धचग्रभावतः ॥१६॥

निरोधमार्गयोः शान्तत्वान्न ताभ्यामुन्नतिर्भवितुमर्हति । भूतार्थशुद्धित्वान्न तयोः शुद्धिग्राहः शीलव्रतपरामर्शः । अग्रौ[2] च तौ । हीने चाग्रग्राहो दृष्टिपरामर्शः । तस्मादयुक्तमेषामनास्रवालम्बनत्वम् ।

एषामष्टानवतेरनुशयानां कत्यालम्बनतोऽनुशेरते कति संप्रयोगत एव ।

सर्वत्रगा अनुशयाः सकलामनुशेरते ।
स्वभूमिमालम्बनतः स्वनिकायमसर्वगाः ॥१७॥

ये सर्वत्रगा[3] अनुशयास्ते सकलां पञ्चप्रकारामपि स्वां भूमिमालम्बनतोऽनुशेरते । असर्वत्रगास्तु स्वस्यां भूमौ स्वमेव निकायमालम्बनतोऽनुशेरते नान्यम् । तद्यथा दुःखदर्शनप्रहातव्या दुःखदर्शनप्रहातव्यमेव निकायम् । एवं यावद्भावनाप्रहातव्या भावनाप्रहातव्यमेव नान्यम् । उत्सर्गं कृत्वाऽपवादं करोति

नानास्रवोर्ध्वविषयाः

अनास्रवालम्बना अनुशया नैवालम्बनतोऽनुशेरते । नाप्यूर्ध्वभूम्यालम्बनाः । किं कारणम् । तदालम्ब-[11a. 15A1. VII] नस्य वस्तुनः

अस्वीकाराद्विपक्षतः ।

यद्धि वस्त्वात्मदृष्टितृष्णाभ्यां स्वीकृतं भवति तत्रान्येऽप्यनुशया अनुगमयितुमुत्सहन्ते । आर्द्रे इव पटे रजांसि संस्थातुम् । न चैवमनास्रवा नाप्येवमूर्ध्वा भूमिः । अतो न तदालम्बनास्तेष्वनुशेरते । यस्त्विहस्थस्तां भूमिं प्रार्थयते । कुशलोऽसौ धर्मच्छन्दः विपक्षभूतौ च निर्वाणमार्गौ तदालम्बनानां क्लेशाना-

---

१. Ms. परामार्शौ । २. Ms. अग्रा । ३. D. स्वधातुभूमिसर्वत्रगा ।

मूर्ध्वा च भूमिरधराणाम् । अतो न तेषु प्रतिष्ठां लभन्ते । तप्त इवोपले तलानि पादानाम् । आनुगुण्यार्थोऽत्रानुशयार्थः । न च ते तदनुगुणा इत्यपरे । वातिकस्य रूक्षाननुशयनवत् । अत[1] उक्ता आलम्बनतोऽनुशेरते ।

**येन यः संप्रयुक्तस्तु स तस्मिन् संप्रयोगतः[2] ॥१८॥**

अनुशरेत इति वर्त्तते । योऽनुशयो येन धर्मेण संप्रयुक्तस्तस्मिन् संप्रयोगतोऽनुशेते[3] । यावदप्रहीण इति विशेषणार्थंस्तुशब्दः । स्युरनुशया नानास्रवालम्बना न विसभागधातुसर्वत्रगाः । ते चानुशयाः संप्रयोगतोऽनुशयीरन्नालम्बनतः न[4] स्युर्विसभागभूमिसर्वत्रगा अनुशयाः[5] ।

एषामष्टानवतेरनुशयानां कत्यकुशलाः कत्यव्याकृताः ।

**ऊर्ध्वमव्याकृताः सर्वे**

रूपारूप्यावचरास्ता-[11b 15B1. VII] वत्सर्वे एवाव्याकृताः । किं कारणम् । क्लिष्टानां धर्माणां दुःखविपाकः स्यात् । तच्च तयोर्नास्ति परव्याबाधहेत्वभावात् ।

**कामे सत्कायदर्शनम् ।**

**अन्तग्राहः सहाभ्यां च मोहः**

कामधातौ सत्कायान्तग्राहदृष्टी तत्संप्रयुक्ता चाविद्या अव्याकृताः । किं कारणम् । दानादिभिरविरुद्धत्वात् । अहं प्रेत्य सुखी भविष्यामीति दानं ददाति शीलं रक्षति । उच्छेददृष्टिरपि मोक्षानुकूला । अतएवोक्तं भगवता "एतदग्रं[6] बाह्यकानां[7] दृष्टिगतानां यदुत नो च स्यां नो[8] च मे स्यात् न भविष्यामि न मे भविष्यती"ति । अपि चानयोर्दृष्ट्योः स्वद्रव्यसंमूढत्वादपरपीडाप्रवृत्तत्वाच्च । स्वर्गतृष्णाऽस्मिमानयोरप्येवं[9] प्रसङ्गः । सहजा सत्कायदृष्टिरव्याकृता । या मृगपक्षिणामपि वर्त्तते । विकल्पिता त्वकुशलेति[10] पूर्वाचार्याः ।

---

१. M. drops त । २. MS. drops प्र । ३. D. अनुशेरते (?) ४. Ms. seems to drop न here. One न is expected here । ५. Ms °सर्वत्रगानुशयाः । ६. D. इदमग्र्य । ७. Y. seems to omit बाह्यकानां । ८. D. न । ९. Y. अप्येष । १०. Ms. त्वकुशलेनेति ।

**शेषास्त्विहाशुभाः ॥१९॥**

शेषास्त्वशुभा अनुशयाः[१] कामधातावकुशलाः ।
कत्यकुशलमूलानि कति न ।

**कामेऽकुशलमूलानि रागप्रतिघमूढयः ।**

कामधातौ सर्वरागः सर्वप्रतिघः सर्वो मोहोऽन्यत्र सत्कायान्तग्राहदृष्टिसंप्रयुक्ताद्यथाक्रमम् ।

**त्रीण्यकुशलमूलानि**

लोभोऽकुशलमूलं द्वेषो मोहो-[12a. 15A1. VIII]ऽकुशलमूलम् । यद्ध्यकुशलं[२] चाकुशलस्य च मूलं[३] तदेवाकुशलमूलमिष्टम् । शेषा अनुशया नाकुशलमूलानीति सिद्धम् ।

कत्यव्याकृतमूलानि कति न । त्रीण्यव्याकृत[२]मूलानि । कतमानि त्रीणि ।

**तृष्णा[४]ऽविद्या मतिश्च सा ॥२०॥**

सेत्यव्याकृततां दर्शयति या काचिदव्याकृता तृष्णा अविद्या प्रज्ञा चान्ततो विपाकजा अपि सर्वाऽसावव्याकृतमूलमिति काश्मीराः ।

**द्वैधोर्ध्ववृत्तेर्नातो[५]ऽन्यौ**

विचिकित्सा किल द्वैधवृत्तेर्न मूलं भवितुमर्हति । चलत्वात् । उन्नतिलक्षणेनोर्ध्ववृत्तेर्न मानो मूलम् । विविध[६]स्मृतिमूलानि हि स्थिराण्यधोवृत्तीनि च लोके दृष्टानीति ।

---

१. MS. °शुभानुशयाः । २....२. Ms. It was dropped and is written on the top margin. It is very faint and not clear in the photo. Y. The reading seems to be "यद्यकुशलं चाकुशलस्यैव च मूलमिष्टम् । एत एवाकुशलमूलानि । शेषा अनुशया नाकुशलमूलानीति सिद्धम् । ३. D. ये धर्मा अकुशलाश्चाकुशलमूलं च । ४. MS दृष्टच । G. Y. तृष्णा । ५. MS. नतौ । ६. Ms. drops one वि ।

**चत्वार्येवेति बाह्यकाः ।**

बाह्यका[1]श्चत्वार्यव्याकृतमूलानीच्छन्ति ।

**तृष्णादृङ्मानमोहास्ते**

त इत्यव्याकृता इति दर्शयति । अव्याकृता तृष्णा दृष्टिर्मानोऽविद्या च । किं कारणमेतान्यव्याकृतमूलानीच्छन्ति ।

**ध्यायित्रित्वादविद्यया ॥२१॥**

यस्मात्त्रयो ध्यायिनः । तृष्णादृष्टिमानोत्तरध्यायिनः । ते चाविद्यावशाद्भवन्तीति ।

यानि सूत्रे चतुर्दशाव्याकृतवस्तूनि किं तानि अव्याकृतत्वात् । नेत्याह । किं तर्हि । स्थापनीयः[2] प्रश्नोऽव्याकृत इत्युक्तम् । चतुर्विधो हि प्रश्नः । एकांशव्याकरणीयो विभज्यव्याकरणीयः परिपृच्छ्य व्याकरणीयः स्थापनीयश्च । तत्र यथाक्रमं वेदितव्यम् ।

**एकांशतो व्याकरणं विभज्य परिपृच्छ्य च ।**

**स्थाप्यं च मरणोत्पत्ति वि-** [12b. 15B1. VIII]

**शिष्टात्माऽन्यतादिवत् ॥२२॥**

किं सर्वसत्त्वा मरिष्यन्तीत्येकांशेन व्याकर्त्तव्यं मरिष्यन्तीति । किं सर्वे जनिष्यन्त इति विभज्य व्याकर्त्तव्यं संक्लेशा[3] जनिष्यन्ते न निःक्लेशा इति । किं मनुष्यो विशिष्टो हीन इति परिपृच्छ्य व्याकर्त्तव्यम् । कानधिकृत्य प्रश्नयसीति[4] । यदि ब्रूयाद् देवानिति । हीन इति व्याकर्त्तव्यम् । अथ ब्रूयादपायानिति । विशिष्ट इति व्याकर्त्तव्यम् । किमन्यः स्कन्धेभ्यः सत्त्वोऽनन्य इति स्थापनीयः । सत्त्वद्रव्यस्याभावात् वन्ध्यापुत्रश्यामगौरतादिवत् ।

कथमेतद्व्याकरणं भवति अव्याकृतमेतदिति । एवं व्याकरणात् । अपर आह । इदमप्येकांशव्याकरणं[5] यन्न सर्वे जनिष्यन्त इति । यस्तु पृच्छेद्ये मरिष्यन्ति किं ते जनिष्यन्त इत्येतद्विभज्यव्याकरणीयं[6] स्यात् । मनुष्येषु चोभयमस्ति हीनत्वं विशिष्टत्वं चापेक्षिकमित्यु-

---

१. D बहिर्देशीयकाः । २. D. स्थापनीयत्वात् । ३ Y. सक्लेशाः One reading is संक्लेशाः । ४. D. पृच्छसि । ५. Y. एकांशेन । ६. Y. इति तस्य विभज्यव्याकरणं ।

भयमेकांशेन व्याकर्त्तव्यम्। तद्यथा[१] विज्ञानं कार्यं कारणं चेति एकान्तेन तु पृच्छतो नैकान्तव्याकरणात् विभज्यव्याकरणं युज्यते। स्कन्धेभ्योऽन्यः सत्त्व इत्येतदव्याकृतमेव। न चाव्याकरणमेव व्याकरणं युज्यत इति। यस्तु स्थापनीयः प्रश्नः स्थापनीयत्वेन व्याक्रि-[13a. 16A. I] यते। कथं न व्याकृतो भवति। आभिधर्मिका आहुः। "तथागतो भगवानर्हन् सम्यक्संबुद्धः स्वाख्यातोऽस्य धर्मः सुप्रतिपन्नः श्रावकसंघः रूपमनित्यं यावद्विज्ञान दुःखप्रज्ञप्तिर्यावन्मार्गप्रज्ञप्तिरेकांशेन व्याकर्त्तव्यमर्थोपसंहितत्वात्। विभज्यव्याकरणं नाम यदि कश्चिद् ब्रूयाद्धर्मान् वदेति स वक्तव्यो वहवो धर्मा अतीता अनागताः प्रत्युत्पन्नाः कतमान् वदामीति। यदि ब्रूयादतीतानिति। स व्यक्तव्योऽतीता अपि वहवो रूपं यावद्विज्ञानमिति। अथ ब्रूयाद्रूपमिति। स वक्तव्यो रूपमपि त्रिविधं कुशलमकुशलमव्याकृतं च। यद्याह कुशलमिति। तदपि सप्तप्रकारं प्राणातिपाताद्विरतिर्यावत्संभिन्नप्रलापाद्विति। यद्याह प्राणातिपाताद्विरतिमिति। साऽपि त्रिप्रकारा अलोभजाऽद्वेषजाऽमोहजा। यद्याहालोभजामिति। अलोभजाऽपि द्विविधा विज्ञप्त्यविज्ञप्तिभेदादित्येवं विभज्य वक्तव्यमिति। एतदेव च[२] शठस्य परिपृच्छ्य व्याकरणम्। तस्य वक्तव्यं धर्मा वहव इति। न तु विभक्तव्या यावत्तूष्णीं वा तिष्ठति स्वयं वा व्याकरोतीति। यदा तौ न किंचित् पृच्छतः के-[13b. 16B. I]वलमध्येपयतः तयोश्च न किंचित् व्याक्रियते केवलं परिप्रश्न्येते[३] तत् कथमनयोः प्रश्नो भवति कथं वा व्याकरणम्। यो हि पन्थानं ब्रूहीत्याह किं तेन पन्था न पृष्टो भवति। परिपृच्छ्यैव[४] व्याकरणात् कथं न परिपृच्छाव्याकरणं भवति। स्थापनीयस्तु यथा अन्तवान् लोकोऽनन्तवानित्येवमादि सूत्रान्तादेव तु प्रश्नव्याकरणानां लक्षणं द्रष्टव्यम्[५]। भदन्तमहासाङ्घिकाः सूत्रं पठन्ति। "चत्वारीमानि भिक्षवः प्रश्नव्याकरणानीति। कतमानि चत्वारि। अस्ति भिक्षव एकांशव्याकरणीयः प्रश्नः। अस्ति यावत् स्थापनीयः। कतमश्च भिक्षवः एकांशव्याकरणीयः प्रश्नः। सर्वे संस्कारा अनित्या इत्ययं भिक्षव एकांशव्याकरणीयः प्रश्नः। कतमश्च भिक्षवो विभज्यव्याकरणीयः प्रश्नः। संचेतनीयं कर्म कृत्वा किं प्रतिवेदयत इत्ययं विभज्यव्याकरणीयः प्रश्नः। कतमश्च भिक्षवः परिपृच्छ्यव्याकरणीयः प्रश्नः। संज्ञासु पुरुपस्यात्मा उताहोऽन्या संज्ञा अन्य आत्मेति पृष्टेन सता परिप्रष्टव्यः कतमं पुनरायुष्मानात्मानं प्रत्येति। स चेदेवं वदेदौदारिकं खल्वहमायुष्मन्नात्मानं प्रत्ये-[14a. 16A. II]मि। एवं सत्यन्या संज्ञा अन्य आत्मने[६]त्येवं वचनीयः। अयं हि परिपृच्छ्य व्याकरणीयः प्रश्नः। कतमश्च

---

१. Y. adds किं। २. Y. omits च। ३. Y. परिपृच्छ्येते। ४. Y. परिपृच्छ्यैव च। ५. MS. drops ष्ट। ६. MS. अन्यात्मे।

भिक्षवः स्थापनीयः प्रश्नः। तद्यथा शाश्वतो लोकोऽशाश्वतः। शाश्वतश्चाशाश्वतश्च[1]। नैव शाश्वतो नाशाश्वतः। अन्तवानन्ततः। अन्तवांश्चानन्तश्च। नैवान्तवान्नानन्तवान्। भवति तथागतः परं मरणान्न भवति तथागतः परं मरणात् यावदन्यो जीवोऽन्यच्छरीरमित्ययं भिक्षवः स्थापनीयः प्रश्न" इति। यस्य पुद्गलस्य योऽनुशयो यस्मिन्नालम्बनेऽनुशेते स तेन तस्मिन् संप्रयुक्तः। इदं तु वक्तव्यमतीते न कस्मिन् यावत् प्रत्युत्पन्ने न कस्मिन्निति।

समासत इमे द्विविधाः क्लेशाः। स्वलक्षणक्लेशाश्च रागप्रतिघमानाः। सामान्यक्लेशाश्च दृष्टिविचिकित्साऽविद्याः। तत्र तावत्

**रागप्रतिघमानैः स्यादतीतप्रत्युपस्थितैः।**

**यत्रोत्पन्नाऽप्रहीणास्ते तस्मिन् वस्तुनि संयुतः॥२३॥**

अतीताः प्रत्युत्पन्नाश्च रागप्रतिघमाना यस्मिन् वस्तुन्युत्पन्ना न च प्रहीणास्तस्मिन् वस्तुनि तैः संयुक्तः[2]। एते हि स्वलक्षणक्लेशत्वान्न सर्वस्यावश्यं सर्वत्रोत्पद्यन्ते।

**सर्वत्रानागतैरेभिर्मानसैः**

यत्राप्रहीणास्ते इति वर्त्तते। अनागतैरेभिरेव रागप्रतिघमा-[14b. 13B. II] नैर्मनोभूमिकैः सर्वत्र वस्तुनि संयुत[3]स्त्रैयध्विके। मानसानां त्र्यध्वविषयत्वात्[4]

**स्वाध्विके[5] परैः।**

अन्यै रागप्रतिघैरनागतैरनागत एव वस्तुनि संयुक्तः। के पुनरन्ये। ये पञ्च विज्ञानकायिका रागाश्च प्रतिघाश्च। उत्पत्तिधर्मभिरेव। तैरेव तु

**अजैः सर्वत्र**

अनुत्पत्तिधर्मभिः पञ्चविज्ञानकायिकैरपि सर्वत्र वस्तुनि संयुक्तः। त्रैयध्विकेऽपि

**शेषैस्तु सर्वैः सर्वत्र संयुतः॥२४॥**

---

१. MS. शाश्वश्चांशाश्वश्च। २. D. संप्रयुक्ताः। ३. Y. संयुक्तः। ४. D. त्रैयध्व....
५. G. साध्विके।

के पुनः शेषाः। दृष्टिविचिकित्साऽविद्यास्त्रैयध्विकाः। तैः सर्वैरपि सर्वस्मिन्वस्तुनि संयुक्तः। सामान्यक्लेशत्वात्। यावदप्रहीणा इत्यधिकारोऽनुवर्त्तत एव। किं पुनरिदमतीतानागतमुच्यते[1]ऽस्त्यथ न। यद्यस्ति सर्वकालास्तित्वात्संस्काराणां शाश्वतत्वं प्राप्नोति। अथ नास्ति। कथं तत्र तेन वा[2] संयुक्तो भवति विसंयुक्तो वा। न संस्काराणां शाश्वतत्वं प्रतिज्ञायते वैभाषिकैः संस्कृतलक्षणयोगात्। प्रतिज्ञायते तु विशदं[3]

## सर्वकालास्तिता

किं कारणम्।

### उक्तत्वात्

उक्तं हि भगवताऽ"तीतं चेद् भिक्षवो रूपं नाभविष्यन्न श्रुतवानार्यश्रावकोऽतीते रूपे[4]ऽनपेक्षोऽभविष्यत्। यस्मात्तर्ह्यस्त्यतीतं रूपं तस्माच्छ्रुतवानार्यश्रावकोऽतीते रूपेऽनपेक्षो भवति। अ-[15a. 16A. III]नागतं चेद्रूपं नाभविष्यत् न[5] श्रुतवानार्यश्रावकोऽनागतं रूपं नाभ्यनन्दिष्यत्। यस्मात्तर्ह्यस्त्यनागतं रूपमिति" विस्तरः।

### द्वयात्

"द्वयं प्रतीत्य विज्ञानस्योत्पाद" इत्युक्तम्। द्वयं कतमत्। चक्षू रूपाणि यावत् मनो धर्मा इति। असति वाऽतीतानागते तदालम्बनं विज्ञानं द्वयं प्रतीत्य न स्यात्। एवं तावदागमतोऽस्त्यतीतानागतं युक्तितोऽपि।

### सद्विषयात्

सति विषये विज्ञानं प्रवर्तते नासति। यदि चातीतानागतं न स्यादसदालम्बनं विज्ञानं स्यात्। ततो विज्ञानमेव न स्यादालम्बनाभावात्।

### फलात्।

यदि चातीतं न स्यात् शुभाशुभस्य कर्मणः फलमायत्यां कथं स्यात्। न हि

---

१. MS. नागतं उच्यते। २. Y. च। ३. MS. विषदं। ४. MS. seems to drop रूपे। ५. MS. seems to drop न।

फलोत्पत्तिकाले वर्त्तमानो विपाकहेतुरस्तीति। तस्मादस्त्येवातीतानागतमिति वैभाषिकाः। अवश्यं च किलैतत्सर्वास्तिवादेन सताऽभ्युपगन्तव्यम्। यस्मात्

**तदस्तिवादात् सर्वास्तिवादा इष्टाः**

ये हि सर्वमस्तीति वदन्ति अतीतमनागतं प्रत्युत्पन्नं च ते सर्वास्तिवादाः। ये तु केचिदस्ति यत् प्रत्युत्पन्नमदत्तफलं चातीतं कर्म किंचिन्नास्ति यद्दत्तफलमतीतमनागतं चेति विभज्य वदन्ति ते विभज्यवादिनः। कति चैते सर्वास्तिवादा इत्या-[15b. 16B. III]ह

**चतुर्विधाः ॥२५॥**

**ते भावलक्षणावस्थाऽन्यथाऽन्यथिकसंज्ञिताः।**

भावान्यथिको भदन्तधर्मत्रातः। स किलाह। धर्मस्याध्वसु, प्रवर्तमानस्य भावान्यथात्वं भवति[1] न द्रव्यान्यथात्वम्। यथा सुवर्णभाजनस्य[2] भित्त्वाऽन्यथा क्रियमाणस्य संस्थानान्यथात्वं भवति न वर्णान्यथात्वम्[3]। यथा च क्षीरं दधित्वेन परिणमद्रसवीर्यविपाकान् परित्यजति न वर्णम्। [4]एवं धर्मोऽप्यनागतादध्वनः प्रत्युत्पन्नमध्वानमागच्छन्ननागतभावं जहाति न द्रव्यभावम्। एवं प्रत्युत्पन्नादतीत-मध्वानं गच्छन् प्रत्युत्पन्नभावं जहाति न द्रव्यभावमिति[4]।

लक्षणान्यथिको भदन्तघोषकः। स किलाह। धर्मोऽध्वसु प्रवर्त्तमानोऽतीतोऽतीतलक्षणयुक्तोऽनागतप्रत्युत्पन्नाभ्यां लक्षणाभ्यामवियुक्तः। अनागतोऽनागत-लक्षणयुक्तोऽतीतप्रत्युत्पन्नाभ्यामवियुक्तः। एवं प्रत्युत्पन्नोऽप्यतीतानागताभ्यामवियुक्तः। तद्यथा पुरुष एकस्यां स्त्रियां रक्तः शेषास्वविरक्त इति।

अवस्थाऽन्यथिको भदन्तवसुमित्रः। स किलाह। धर्मोऽध्वसु प्रवर्तमानोऽवस्थामवस्थां प्राप्यान्योऽन्यो[5] निर्दिश्यते अवस्थान्तरतो न द्रव्यान्तरतः। यथैका वर्तिका[6] एकाङ्के निक्षिप्ता एकमित्युच्यते श-[16a. 16A. IV]ताङ्के शतं सहस्राङ्के सहस्रमिति।

---

१. D. अनागतादिभावमात्रमन्यथा भवति। २. D. सुवर्णस्य। ३. D. पूर्वसंस्थाननाशो न सुवर्णनाशः। ४...४. D. omits एवं....द्रव्यभावमिति। ५. D. अन्यथाऽन्यथाऽस्तीति। ६. Y. गुलिका, D. निक्षेपवर्त्तिका।

अन्यथान्यथिको भदन्तबुद्धदेवः। स किलाह। धर्मोऽध्वसु प्रवर्तमानः पूर्वापरमपेक्ष्या[1]न्योऽन्य उच्यते अवस्थान्तरतो न[2] द्रव्यान्तरतः। यथैका स्त्री माता वोच्यते[3] दुहिता वेति[4]। इत्येते चत्वारः सर्वास्तिवादाः।

एषां तु प्रथमः परिणामवादित्वात् सांख्यपक्षे निक्षेप्तव्यः। द्वितीयस्याध्वसंकरः प्राप्नोति। सर्वस्य सर्वलक्षणयोगात्। पुरुषस्य तु कस्यांचित् स्त्रियां रागः समुदाचरति कस्यांचित् केवलं समन्वागम इति किमत्र साम्यम्। चतुर्थस्याप्येकस्मिन्नेवाध्वनि त्रयोऽध्वानः प्राप्नुवन्ति। अतीतेऽध्वनि पूर्वपश्चिमौ क्षणावतीतानागतो मध्यमः क्षणः प्रत्युत्पन्न इति। एवमनागतेऽपि। अत एषां सर्वेषां

तृतीयः शोभनः

योऽयमवस्थाऽन्यथिकः। तस्य किल

अध्वानः कारित्रेण व्यवस्थिताः ।।२६।।

यदा स धर्मः कारित्रं न करोति तदाऽनागतः[5]। यदा करोति तदा प्रत्युत्पन्नः। यदा कृत्वा निरुद्धस्तदाऽतीत इति। परिगतमेतत्सर्वम्। इदं तु वक्तव्यम्। यद्यतीतमपि द्रव्यतोऽस्त्यनागतमिति। कस्मात्तदतीतमित्युच्यतेऽनागतमिति वा। ननु चोक्तमध्वानः कारित्रेण व्यवस्थिता इति। यद्येवं प्रत्युत्पन्नस्य तत्सभा-[16b. 16B. IV]गस्य चक्षुषः किं कारित्रम्। फलदानप्रतिग्रहणम्[6]। अतीतानामपि तर्हि सभागहेत्वादीनां फलदानात् कारित्रप्रसङ्गोऽर्धकारित्रस्य वेति लक्षणसंकरः। इदं च वक्तव्यम्। तेनैवात्मना सतो धर्मस्य नित्यं कारित्रकरणे

किं विघ्नं

येन कदाचित् कारित्रं करोति कदाचिन्नेति। प्रत्ययानामसामग्र्यमिति चेत्। न। नित्यमस्तित्वाभ्युपगमात्। यच्च तत् कारित्रमतीतानागतं[7] प्रत्युत्पन्नं चोच्यते

तत्कथं[8]

---

१. D. मवेक्ष्या। २. MS. drops न। ३. D. चोच्यते। ४. D. Y. चेति। ५. .MS. looks like तद्यनागतः। ६. Y. adopts परिग्रहः। ७. Y. seems to be अतीतमनागतम्। ८. G. किं विघ्नकृत् कथं।

किं कारित्रस्याप्यन्यदस्ति कारित्रम्[1]। अथ तन्नैवातीतं नाप्यनागतं न प्रत्युत्पन्नमस्ति च। तेनासंस्कृतत्वान्नित्यमस्तीति प्राप्तम्। अतो न वक्तव्यं यदा कारित्रं न करोति धर्मस्तदाऽनागत इति।

स्यादेष दोषो यदि धर्मात् कारित्रमन्यत्स्यात्। तत्तु खलु

**नान्यत्**

अतो न भवत्येष दोषः। एवं तर्हि स एव

**अध्वायोगः**

यदि धर्म एव कारित्रं कस्मात्स एव धर्मस्तेनैवात्मना विद्यमानः कदाचिदतीत इत्युच्यते कदाचिदनागत इत्यध्वनां व्यवस्था न सिध्यति ; किमत्र न सिध्यति। यो ह्यजातो धर्मः सोऽनागतः। यो जातो भवति न च विनष्टः स वर्त्तमानः। यो विनष्टः सोऽतीतः इति। एतदेवात्र वक्तव्यम्। यदि यथा वर्त्तमानं द्रव्यतोऽस्ति तथाऽतीतमना-[17a. 16A. V]गतं चास्ति। तस्य

**तथा सतः[2]।**

**अजातनष्टता केन**

तेनैव स्वभावेन सतो धर्मस्य कथमिदं सिध्यत्यजात इति यो विनष्टः इति वेति। किमस्य पूर्वं नासीद्यस्याभावादजात इत्युच्यते। किं च पश्चान्नास्ति यस्याभावाद्विनष्ट इत्युच्यते। तस्मान्न सिध्यति सर्वथाऽप्यत्राध्वत्रयम्। यद्यभूत्वा भवतीति नेष्यते भूत्वा च पुनर्न भवतीति। यदप्युक्तं "संस्कृतलक्षणयोगान्न शाश्वतत्वप्रसङ्ग" इति। तदिदं केवलं वाङ्मात्रमुत्पादविनाशयोरयोगात्। नित्यं च नामास्ति स धर्मो न च नित्य इत्यपूर्वैषा वाचो युक्तिः। आह खल्वपि

"स्वभावः सर्वदा चास्ति भावो नित्यश्च नेष्यते।
न च स्वभावाद् भावोऽन्यो व्यक्तमीश्वरचेष्टितम्।"

---

१. Y. अन्यत् कारित्रमस्ति। २. G. सतः।

यत्तूक्तमुक्तत्वादिति । वयमपि ब्रूमोऽस्त्यतीतानागतमिति । अतीतं तु यद् भूतपूर्वम् । अनागतं यत्सति हेतौ भविष्यति । एवं च[1] कृत्वाऽस्तीत्युच्यते न तु पुनर्द्रव्यतः । कश्चैवमाह । वर्त्तमानवत्तदस्तीति । कथमन्यथाऽस्ति । अतीतानागतात्मना । इदं पुनस्तवोपस्थितम् । कथं तदतीतमनागतं चोच्यते यदि नित्यमस्तीति । तस्मात् भूतपूर्वस्य च हेतोर्भाविनश्च फलस्य भूतपूर्वतां भावितां च ज्ञापयितुं हेतुफलापवाददृष्टिप्रतिषे [17b. 16B.V] धार्थमुक्तं भगवता "अस्त्यतीतमस्त्यनागतमि"ति । अस्तिशब्दस्य निपातत्वात् । यथाऽस्ति दीपस्य प्रागभावोऽस्ति पश्चादभाव इति वक्तारो भवन्ति यथा चास्ति निरुद्धः स दीपो[2] न तु मया निरोधित इति । एवमतीतानागतमप्यस्तीत्युक्तम्[3] । अन्यथा ह्यतीतानागतभाव[4] एव न सिध्येत् । यत्तर्हि लगुडशिखीयकान्परिव्राजकानधिकृत्योक्तं भगवता "यत्कर्माभ्यतीतं क्षीणं निरुद्धं विगतं विपरिणतं तदस्ती"ति । किं ते तस्य तस्य कर्मणो भूतपूर्वत्वं नेच्छन्ति स्म । तत्र तुनस्तदाहितं तस्यां संततौ फलदानसामर्थ्यं संधायोक्तम् । अन्यथा हि स्वेन भावेन विद्यमानमतीतं न सिध्येत् । इत्थं चैतदेवं यत् परमार्थशून्यतायामुक्तं भगवता "चक्षुरुत्पद्यमानं न[5] कुतश्चिदागच्छति निरुध्यमानं न क्वचित्संनिचयं गच्छति । इति हि भिक्षवश्चक्षुरभूत्वा भवति भूत्वा च प्रतिगच्छती"ति । यदि चानागतं चक्षुः स्यान्नोक्तं स्याद् भूत्वा न भवतीति । वर्त्तमानेऽध्वन्यभूत्वा भवतीति चेत् न ।[6] अध्वनो भावादनर्थान्तरत्वात् । अथ स्वात्मन्यभूत्वा भवति । सिद्धमिदमनागतं चक्षुर्नास्तीति । यदप्युक्तं "द्वयं प्रतीत्य विज्ञानस्योत्पादादिति [18a. 16A. VI] इदं तावदिह संप्रधार्यम् । यन्मनः प्रतीत्य धर्मश्चोत्पद्यते मनोविज्ञानं किं तस्य यथा मनोजनकः प्रत्यय एवं धर्मा आहोस्विदालम्बनमात्रं धर्मा इति । यदि तावत् जनकः प्रत्ययो धर्माः कथं यदनागतं कल्पसहस्रेण[7] भविष्यति वा न वा तदिदानीं विज्ञानं जनयिष्यति । निर्वाणं च सर्वप्रवृत्तिनिरोधाज्जनकं नोपपद्यते । अथालम्बनमात्रं धर्मा भवन्ति । अतीतानागतमप्यालम्बनं भवतीति ब्रूमः । यदि नास्ति कथमालम्बनम् । अत्रेदानीं ब्रूमः । यदा तदालम्बनं तथास्ति कथं तदालम्बनम् अभूत् भविष्यति चेति । न हि कश्चिदतीतं रूपं वेदनां वा स्मरन्नस्तीति पश्यति । किं तर्हि ।[8] अभूदिति । यथा खल्वपि वर्त्तमानं रूपमनुभूतं तथा तदतीतं स्मर्यते । यथा चानागतं वर्त्तमानं भविष्यति तथा बुद्ध्या गृह्यते । यदि च तत्तथैवास्ति वर्तमानं[9] प्राप्नोति । अथ नास्ति । असदप्यालम्बनं भवतीति सिद्धम् । तदेव तद्विकीर्णमिति चेत् । न ।

---

१. Y. हि । २. Y. adopts स प्रदीपो, better स तु दीपो । ३. Y. omits अपि ।
४. Y. omits भाव । ५. Ms. drops न । ६. Ms. नाध्वनो । ७. Y. सहस्रैः ।
८. Ms. किन्तर्ह्यं । ९. Y. puts तत् before वर्त्तमानं ।

विकीर्णस्याग्रहणात् । यदि च तत्तदेव रूपं केवलं परमाणुशो[1] विभक्तम् । एवं सति परमाणवो नित्याः प्राप्नुवन्ति[2] । परमाणुसंचयविभागमात्रं चैवं सति प्राप्नोति । न तु किंचिदुत्पद्यते नापि निरु-[18b. 16B. VI]ध्यत इत्याजीविकवाद आलम्बितो[3] भवति । सूत्रं चापविद्धं[4] भवति "चक्षुरुत्पद्यमानं न कुतश्चिदागच्छती"ति विस्तरः । अपरमाणुसंचितानां वेदनादीनां कथं विकीर्णत्वम्[5] । तेऽपि च यथोत्पन्नानुभूताः स्मर्यन्ते । यदि च ते तथैव सन्ति नित्याः प्राप्नुवन्ति । अथ न सन्ति । असदप्यालम्बनमिति सिद्धम् । यद्यसदप्यालम्बनं स्यात्. त्रयोदशमप्यायतनं[6] स्यात् । अथ त्रयोदशमायतनं नास्तीत्यस्य विज्ञानस्य किमालम्बनम् । एतदेव नामालम्बनम् । एवं तर्हि नाम एव नास्तीति प्रतीयेत । यश्च शब्दस्य प्रागभावमालम्बते किं तस्यालम्बनम् । शब्द एव । एवं तर्हि यः शब्दाभावं प्रार्थयते तस्य शब्द एव कर्तव्यः स्यात् । अनागतावस्थ इति चेत् । सति कथं नास्तिबुद्धिः । वर्तमानो नास्तीति चेत् । न ।[7] एकत्वात् । यावता तस्य विशेषस्तस्याभूत्वाभावसिद्धिः । तस्मादुभयं विज्ञानस्यालम्बनं भावश्चाभावश्च । यत्तर्हि बोधिसत्त्वेनोक्तम् "यत्तत् लोके[8] नास्ति [9]तदहं ज्ञास्यामि वा द्रक्ष्यामि वा नेदं स्थानं विद्यत" इति[9] । अपरे आभिमानिका भवन्त्यसन्तमप्यवभासं सन्तं पश्यन्ति । अहं तु सन्तमेवास्तीति पश्यामीत्ययं तत्राभिप्रायः । इतरथा हि सर्वबुद्धीनां स-[19a. 16A. VII]दालम्बनत्वे कुतोऽस्य विमर्शः स्यात् को वा विशेषः । इत्थं चैतदेवम्[10] । यदन्यत्र भगवतोक्तम् "एतत् भिक्षुर्मम श्रावको यावत्स मया कल्पमवोदितः सायं विशेषाय परैष्यति । सायमवोदितः[11] कल्पं[12] विशेषाय परैष्यति[13] । सच्च[14] सतो ज्ञास्यति असच्चासतः सोत्तरंच सोत्तरतः अनुत्तरं चानुत्तरत" इति । तस्मादयमप्यहेतुः[15] । सदालम्बनत्वाद्विज्ञानस्येति । यदप्युक्तं फलादिति । नैव हि सौत्रान्तिका अतीतात् कर्मणः फलोत्पत्तिं[16] वर्णयन्ति । किं तर्हि । तत्पूर्वका[17]त्संतानविशेषादित्यात्मवादप्रतिषेधे संप्रवेदयिष्यामः । यस्य त्वतीतानागतं द्रव्यतोऽस्ति तस्य फलं नित्यमेवास्तीति किं तत्र कर्मणः सामर्थ्यम् । उत्पादने[18] सामर्थ्यम् । उत्पादस्तर्ह्यभूत्वा भवतीति सिद्धम् ।

---

१. Ms. looks like परमार्थशो । १. Y. नित्याः परमाणवः स्युः । ३. Y. परिगृहीतो । ४. Y. अपास्तं । ५. Y. विप्रकीर्णत्वम् । ६. Y. adds आलम्बनं । ७. Ms. नैकत्वात् । ८. Y. यल्लोके, D. यद्वत् लोके । ९....९. Y. तज्ज्ञास्यामीत्येष संभवो नास्ति । १०. Ms. चेतदेवं । ११. Ms °वोदित । १२. Ms काल्प । १३. Ms. परेस्यति । १४. Ms. यच्च. Y. सच्च । १५. Ms. °मप्येहेतुः । १६. Ms. कालोत्पत्ति । १७. Ms. पूर्वाकात् । १८. Ms. उत्पादेने ।

अथ सर्वमेव[1] चास्ति[2]। कस्येदानीं क्व सामर्थ्यम्। वार्षगण्यवादश्चैवं द्योतितो भवति। "यदस्त्यस्त्येव तत्। यन्नास्ति नास्त्येव तत्। असतो नास्ति संभवः। सतो नास्ति विनाश" इति। वर्तमानीकरणे तर्हि सामर्थ्यम्। किमिदं वर्त्तमानीकरणं नाम। देशान्तराकर्षणं चेत्। नित्यं प्रसक्तम्। अरूपिणां च कथं तत्। यच्च तदाकर्षणं तदभूत्वा-[19b. 16B. VII] भूतम्। स्वभावविशेषणं चेत् सिद्धमभूत्वा भवनम्। तस्मान्नैवं सर्वास्तिवादः शासने साधुर्भवति। यदतीतानागतं द्रव्यतोऽस्तीति वदति। एवं तु साधुर्भवति। यथा सूत्रे सर्वमस्तीत्युक्तं तथा वदति। कथं च सूत्रे सर्वमस्तीत्युक्तम्। "सर्वमस्तीति ब्राह्मण यावदेव द्वादशायतनानी"ति। अध्वत्रयं वा। यथा तु[3] तदस्ति तथोक्तम्। अथासत्यतीतानागते कथं तेन तस्मिन्वा संयुक्तो भवति। तज्जतद्धेत्वनुशयभावात्[4] क्लेशेन तदालम्बने[5] क्लेशानुशयभावाद्वस्तुनि संयुक्तो भवति। अस्त्येव त्वतीतानागतमिति वैभाषिकाः। यत्र नेतुं शक्यते तत्रात्मकात्मनैवं वेदितव्यम्।

**गम्भीरा खलु[6] धर्मता ॥२७॥**

नावश्यं तर्ह्यसाध्या भवतीति। अस्ति पर्यायो यदुत्पद्यते तन्निरुध्यते। रूपमुत्पद्यते रूपं निरुध्यते। अस्ति पर्यायोऽन्यदुत्पद्यतेऽन्यन्निरुध्यते। अनागतमुत्पद्यते वर्त्तमानं निरुध्यते। अध्वाऽप्युत्पद्यते। उत्पद्यमानस्याध्वसंगृहीतत्वात्। अध्वनो[7]ऽप्युत्पद्यते। अनेकक्षणिकत्वादनागतस्याध्वनः। गतमेतत् यत्प्रसङ्गेनागतम्।

इदानीमिदं विचार्यते। यद्वस्तु प्रहीणं विसंयुक्तः स तस्मिन्वस्तुनि। यत्र वा विसं[20a.16A.VIII]युक्तः प्रहीणं तस्य तद्वस्त्विति। यत्र तावद्विसंयुक्तः प्रहीणं तस्य तद्वस्तु। स्यात्तु प्रहीणं न च तत्र विसंयुक्तस्तद्यथा

**प्रहीणे दुःखदृग्घेये संयुक्तः शेषसर्वगैः।**
**प्राक् प्रहीणे प्रकारे च[8] शेषैस्तद्विषयैर्मलैः ॥२८॥**

दुःखज्ञाने समुत्पन्ने[9] समुदयज्ञानेऽनुत्पन्ने दुःखदर्शनप्रहातव्यो निकायः[10] प्रहीणो

---

१. Y. सर्व एव। २ Y. omits च। ३. Y. यथात्र। ४, MS. looks like तज्जतद्धा°। ५. Y. तदालम्बनक्लेशा°। ६. G. जातु। ७. MS. अध्वानो। ८. प्रकारैश्च। ९. D. उत्पन्ने। १०. D. प्रहातव्यं वस्तु।

भवति। तस्मिन् प्रहीणे तदालम्बनैः समुदयदर्शनप्रहातव्यैः सर्वत्रगैः संयुक्तः। भावनाप्रहातव्येऽपि निकाये नवानां प्रकाराणां यः प्रकारः प्राक्[1]प्रहीणस्तस्मिन् प्रहीणेऽपि शेषैस्तदालम्बनैः क्लेशैः संयुक्तो वेदितव्यः।

कस्मिन्वस्तुनि कत्यनुशया अनुशेरत इति एतत्प्रतिपदमभिधीयमानं बहुतरं वक्तव्यं जायते। तस्मात् पिण्डविभाषां कुर्वन्ति। कथमल्पेनाल्पेन यत्नेन महतो महतः प्रश्नौघान् प्रतिपाद्येमहीति[2]। समासत इमे षोड़श धर्माः कामरूपारूप्यावचराः पञ्चप्रकाराः अनास्रवाश्च। चित्तान्यपि[3] षोड़श एतान्येव। तत्र कतमो धर्मः कस्य चित्तस्यालम्बनमिति ज्ञात्वा अमुष्मिन्नियन्तोऽनुशया अनुशेरत इत्येतदभ्यूहितव्यम्[4]। तत्र तावत्

**दुःखहेतुदृगभ्यासप्रहेयाः कामधातुजाः।**
**स्वकत्रयैकरूपाप्तामलविज्ञानगोचराः॥२९॥**

स्वकं [20b. 16B. VIII] च तत्त्र्यं च **स्वकत्रयम्**। एकं च तद्रूपाप्तं च **एकरूपाप्तम्**। एषा विग्रहजातिः। कामावचरास्तावद् दुःखसमुदयदर्शनहेया भावनाहेयाश्च धर्माः पञ्चानां चित्तानामालम्बनम्। स्वधातुकानां त्रयाणां तेषामेव ऊर्ध्वधातुकस्यैकस्य भावनाहेयस्यैव अनास्रवस्य चेति।

**स्वकाधरत्रयोर्ध्वैकामलानां रूपधातुजाः।**

रूपावचरास्त एव त्रिप्रकारा धर्मा अष्टानां चित्तानामालम्बनम्। स्वधातुकानां त्रयाणां तेषामेव। अधरधातुकानां त्रयाणां तेषामेव। ऊर्ध्वधातुकस्यैकस्य भावनाहेयस्यैव। अनास्रवस्य चेति।

**आरूप्यजास्त्रिधात्वाप्तत्रयानास्रवगोचराः॥३०॥**

आरूप्यावचरास्त एव त्रिप्रकारा धर्मा दशानां चित्तानामालम्बनम्। त्रैधातुकानां त्रिप्रकाराणां तेषामेव। अनास्रवस्य चेति। उक्तास्त्रैधातुका दुःखसमुदयदर्शनहेया भावनाहेयाश्च धर्माः।

**निरोधमार्गदृग्घेयाः सर्वे स्वाधिकगोचराः[5]।**

---

1. Ms. प्रक्, D. पूर्वं। २. Ms. प्रतिपाद्येमहीति। ३. D. विज्ञानान्यपि। ४. Ms. °भ्याहितव्यम्। ५. Y. सर्वस्वाधिक।

निरोधमार्गदर्शनहेयानां स्वं चित्तं निरोधमार्गदर्शनहेयमेव। तस्याधिकस्य ते धर्मा आलम्बनं ज्ञेयाः। कथं कृत्वा। कामावचरा हि निरोधदर्शनहेया धर्माः षण्णां विज्ञानानामालम्बनम्। पूर्वोक्तानां पञ्चानां तस्यै-[20a. 16A1. I]व[1] च निरोधदर्शनप्रहातव्यस्याधिकस्य। मार्गदर्शनहेया[2] अप्येवम्। पञ्चानां पूर्वोक्तानां तस्यैव च मार्गदर्शनप्रहातव्यस्याधिकस्य। एवं रूपारूप्यावचराणि। निरोधमार्ग-दर्शनप्रहातव्यास्तस्यैव निरोधमार्गदर्शनप्रहातव्यस्याधिकस्य चित्तस्यालम्बनमिति नवानामेकादशानां च चित्तानामालम्बनं भवन्ति। उक्तास्त्रैधातुकाः पञ्चप्रकाराः धर्माः।

**अनास्रवास्त्रिधात्वन्त्यत्रयानास्रवगोचराः ॥३१॥**

अनास्रवा धर्मा दशानां चित्तानामालम्बनम्। त्रैधातुकानामन्त्यानां त्रिप्रकाराणां निरोधमार्गदर्शनभावनाहेयानामनास्रवस्येति। पुनरस्यैवार्थस्याध्यर्धेन श्लोकेन संग्रहो भवति।

"दुःखहेतुदृगभ्यासहेया धातुत्रयेऽमलाः
पञ्चाष्टदशविज्ञानदशविज्ञानगोचराः[3]
निरोधमार्गदृग्घेयाः सर्वे स्वाधिकगोचराः"। इति।

एवमेषां षोडशानां चित्तानां षोडशधर्मालम्बनव्यवस्थां विदित्वा कथमनुशयकार्यं योजयितव्यम्। दिङ्मात्रं दर्शयिष्यामः।

सुखेन्द्रियालम्बने विज्ञाने कत्यनुशयाः अनुशेरत इति प्रश्न आगते विचार-यितव्यम्। सुखेन्द्रियं सप्तविधं कामावचरं भावनाप्रहातव्यं रूपावचरं च पञ्चप्रकारमनास्रवं चेति। तदे-[20b. 16B1. I]तत्समासतो द्वादशधर्मस्य[4] विज्ञानस्यालम्बनं भवति। कामावचरस्य चतुष्प्रकारस्यान्यत्र निरोधदर्शनहेयात्। रूपावचरस्य पञ्चप्रकारस्यारूप्यावचरस्य द्विप्रकारस्य मार्गदर्शनभावनाहेयस्याना-स्रवस्य च। इदं द्वादशविधं सुखेन्द्रियालम्बनं विज्ञानम्। तत्र यथासंभवं[5] कामा-वचराश्चत्वारो निकाया रूपावचराश्च संस्कृतालम्बना आरूप्यावचरौ च द्वौ निकायौ सर्वत्रगाश्चानुशया अनुशेरत इति ज्ञातव्यम्[6]। सुखेन्द्रियालम्बनालम्बने विज्ञाने कत्यनुशया अनुशेरते। तत् पुनः सुखेन्द्रियालम्बनालम्बनं द्वादशविधं विज्ञानं

---

१. Ms. drops व। २. Y. प्रहातव्या। ३. G. Only these two lines are regarded as a separate kārikā। ४. D. द्वादशविधस्य। ५. D. यथायोगं। ६. Y. विज्ञातव्यम्, D. omits ज्ञातव्यम्।

कतमस्य विज्ञानस्यालम्बनम्। तस्यैव द्वादशविधस्यारूप्यावचरस्य च भूयो द्विप्रकारस्य दुःखसमुदयदर्शनप्रहातव्यस्य[1]। इदं चतुर्दशविधं सुखेन्द्रियालम्वनालम्वनं[2] विज्ञानं[3] तत्रारूप्यावचरौ द्वौ[4] दुःखसमुदयदर्शनहेयौ वर्धयित्वा कामावचरा आरूप्यावचराश्चत्वारो निकाया रूपावचराः संस्कृतालम्वना अनुशया अनुशेरत इति ज्ञातव्यम्। अनया वर्तन्याऽन्यदप्यनुगन्तव्यम्[5]। यैरनुशयैर्यच्चित्तं सानुशयं तेऽनुशयास्तस्मिंश्चित्तेऽनुशेरते। स्युरनुशेरते। येऽ-[22a. 16A1. II] नुशयास्तेन चित्तेन संप्रयुक्ता अप्रहीणास्तदालम्वनाश्चाप्रहीणाः। स्युर्नानुशेरते। येऽनुशयास्तेन चित्तेन संप्रयुक्ताः प्रहीणास्तदालम्वनाश्च। तदेवं कृत्वा भवति।

**द्विधा सानुशयं क्लिष्टमक्लिष्टमनुशायकैः[6]।**

क्लिष्टं चित्तमनुशयानैश्चानुशयैः सानुशयं तत्संप्रयुक्ततदालम्वनैरप्रहीणैरननुशयानैश्च[7] तत्संप्रयुक्तैः प्रहीणैस्तत्सहितत्वात्। अक्लिष्टं तु चित्तमनुशयानैरेव तदालम्वनैरप्रहीणैरिति।

अथैषां दशानामनुशयानां कथं प्रवृत्तिरिति। आदित एव तावदविद्यायोगात्सत्येषु[8] स मुह्यति। दुःखमस्मै न रोचते[9] यावत्[10] मार्गस्ततः

**मोहाकाङ्क्षा[11]**

मूढस्य पक्षद्वयं श्रुत्वा विचिकित्सोत्पद्यते। दुःखं न्विदं नत्विदं दुःखमित्येवमादि।

**ततो मिथ्यादृष्टिः**

विचिकित्साया मिथ्यादृष्टिः प्रवर्तते। संशयितस्य मिथ्याश्रमणचित्तानां मिथ्यानिश्चयोत्पत्तेः। नास्ति दुःखमित्येवमादि।

**सत्कायदृक्ततः ॥३२॥**

मिथ्यादृष्टेः किल सत्कायदृष्टिः प्रवर्तते। दुःखतः स्कन्धानपोह्यात्मतोऽभिनिवेशात्।

**ततोऽन्तग्रहणं**

---

१. D omits दर्शन। २. D. सुखेन्द्रियालम्वनं। ३. Y. सुखेन्द्रियालम्बनविज्ञानालम्बनम्। ४. Y. D. omit द्वौ। ५. Y. गन्तव्यम्। ६. Ms. °शायकैः। ७. Ms. °शायानैश्च। ८. Ms. सत्येय। ९. Ms. रोचेतें। १०. Ms. यावत्मार्ग्गं। ११. Ms. मोहात्कांक्षां।

सत्कायदृष्टेरन्तग्राहदृष्टिः प्रवर्तते । आत्मनः शाश्वतोच्छेदान्तग्रहणात् ।

**तस्माच्छीलामर्शः**

अन्तग्रहणाच्छीलव्रतपरामर्शः । यमेवान्तं गृह्णाति ते-[22b. 16A1. II]न शुद्धिप्रत्यागमनात् ।

**ततो दृशः ।**

आमर्श इति वर्तते । शीलव्रतपरामर्शाद्दृष्टिपरामर्शः प्रवर्तते । येन शुद्धिं प्रत्येति तस्याग्रतो ग्रहणात् । ततो

**रागः स्वदृष्टौ मानश्च**

तस्यामभिष्वङ्गात् तया चोन्नतिगमनात् ।

**द्वेषोऽन्यत्र**

स्वदृष्टच्यध्यवसितस्य तत्प्रत्यनीकभूतायां परदृष्टौ द्वेषः प्रवर्तते । अपरे स्वदृष्टावेवान्यत्र गृहीते त्यक्तायां द्वेषमिच्छन्ति दर्शनहेयानां रागादीनां स्वासान्तानिकदृष्टचालम्वनत्वात् ।

**इत्यनुक्रमः ।।३३।।**

एष एषां दशानां क्लेशानां प्रवृत्तिक्रमः ।
उत्पद्यमानस्तु त्रिभिः कारणैरुत्पद्यते ।

**अप्रहीणादनुशयाद्विषयात् प्रत्युपस्थितात्**

**अयोनिशो मनस्कारात् क्लेशः**

तद्यथा रागानुशयोऽप्रहीणो भवत्यपरिज्ञातः कामरागपर्यवस्थानीयाश्च धर्मा आभासगता भवन्ति तत्र चायोनिशो मनस्कार एवं कामराग उत्पद्यते । तान्येतानि यथाक्रमं हेतुविषयप्रयोगवलानि । एवमन्योऽपि क्लेश उत्पद्यत इति वेदितव्यो यः

**संपूर्णकारणः ।।३४।।**

कदाचित्किल विषयबलेनैवोत्पद्यन्ते। न हेतुबलेन। यथा परिहाणधर्मकस्यार्हत इति। एत एवानुशयाः सूत्रे भगवता त्रय आस्रवा[1] उक्ताः कामास्रवो भवास्रवोऽविद्यास्रव इति। चत्वार ओघाः कामौघो[23a. 16A1. III]भवौघो दृष्ट्योघोऽविद्यौघश्च। चत्वारो योगा एत एव। चत्वार्युपादानानि कामोपादानं दृष्ट्युपादानं शीलव्रतोपादानमात्मवादोपादानमिति। तत्र तावत्

**कामे सपर्यवस्थानाः क्लेशाः कामास्रवो[2] विना।**

**मोहेन**

अविद्यां वर्जयित्वाऽन्ये कामावचराः क्लेशाः सह पर्यवस्थानैः कामास्रवो वेदितव्य एकचत्वारिंशद्द्रव्याणि। एकत्रिंशदनुशयाः पञ्चप्रकारामविद्यां हित्वा दश पर्यवस्थानानि।

**अनुशया एव रूपारूप्ये भवास्रवः ॥३५॥**

**विना मोहेनेति** वर्तते। रूपारूप्यावरा अविद्यावर्ज्या अनुशया भवास्रवो द्वापञ्चाशद्द्रव्याणि। रूपावचराः षड्विंशतिरनुशयाः पञ्चप्रकाराविद्यां हित्वा। आरूप्यावचराः षड्विंशतिः। ननु च तत्राप्यस्ति पर्यवस्थानद्वयं स्त्यानमौद्धत्यं च। प्रकरणेषु चोक्तं "भवास्रवः कतमः। अविद्यां स्थापयित्वा यानि तदन्यानि रूपारूप्यप्रतिसंयुक्तानि। संयोजनबन्धनानुशयोपक्लेशपर्यवस्थानानी"ति। कस्मादिह तस्याग्रहणम्। अस्वातन्त्र्यादिति काश्मीराः।

किं पुनः कारणं रूपारूप्यावचरा अनुशयाः समस्यैको भवाग्र उक्तः।

**अव्याकृतान्तर्मुखा हि ते समाहितभूमिकाः।**

**अत एकीकृताः**

ते[23b. 16B1. III]ह्युभयेऽप्यव्याकृता अन्तर्मुखप्रवृत्ताः समाहितभूमिकाश्चेति त्रिविधेन साधर्म्येणैकताः। येनैव च कारणेन भवराग उक्तस्तेनैव भवास्रवः इत्यविद्येदानीं त्रैधातुक्यविद्यास्रव इति सिद्धम्। तानि पञ्चदश द्रव्याणि। किं कारणमसौ पृथग्व्यवस्थाप्यते। सर्वेषां हि[3] तेषां

---

१. Ms. Here and later on, it is spelt as आश्रव in the Ms.।
२. G. कामास्रवा। ३. Y. omits हि।

**मूलमविद्येत्यास्रवः पृथक् ॥३६॥**

यथा चैते आस्रवा उक्ता वेदितव्याः

**तथौघयोगा[1] दृष्टीनां पृथग्भावस्तु[2] पाटवात् ।**

कामास्रव एव कामौघः कामयोगश्च । एवं भवास्रव एव भवौघो भवयोगश्चान्यत्र दृष्टिभ्यः । ताः किल पटुत्वादोघयोगेषु पृथक् स्थापिताः ।

**नास्रवेष्वसहायानां न किलास्यानुकूलता ॥३७॥**

आसयन्तीत्यास्रवाणां निर्वचनं पश्चाद्वक्ष्यते[3] । न च किल केवला दृष्टय आस्यानुकूलाः पटुत्वात् । अत आस्रवेषु न पृथक् स्थापिताः । मिश्रीकृत्य स्थापिता इति तदेवं कामौघ एकान्नत्रिंशद्द्रव्याणि । रागप्रतिघमानाः पञ्चदश विचिकित्साश्चतस्रो दश पर्यवस्थानानीति । भवौघोऽष्टाविंशतिद्रव्याणि । रागमाना विंशतिर्विचिकित्साऽष्टौ । दृष्टयोघः षट्त्रिंशद्द्रव्याणि । अविद्यौघः पञ्चदश द्रव्याणि । ओघवद् योगा वेदितव्याः[4] ।

**यथोक्ता एव साऽविद्या द्विधा दृष्टि-[24a. 16A1. IV]विवेचनात् ।**

**उपादानानि**

कामयोग एव सहाविद्यया कामोपादानं चतुस्त्रिंशद्द्रव्याणि । रागप्रतिघमानाऽविद्याविंशतिर्विचिकित्साश्चतस्रो दश पर्यवस्थानानि । भवयोग एव सहाविद्यया आत्मवादोपादानमष्टत्रिंशद्द्रव्याणि । रागमानाविद्यास्त्रिंशद्विचिकित्सा अष्टौ । दृष्टियोगाच्छीलव्रतं निष्कृष्य दृष्टयुपादानं त्रिंशद्द्रव्याणि । शीलव्रतोपादानं षड्द्रव्याणि कर्मदृष्टिभ्यो[5] निष्कृष्टम् । मार्गप्रतिद्वन्द्वित्वा[6]दुभयपक्षविप्रलम्भनाच्च[7] । गृहिणोऽप्यनेन विप्रलब्धा अनशनादिभिः स्वर्गमार्गसंज्ञया प्रव्रजिता अपीष्टविषयपरिवर्जनेन[8] शुद्धिप्रत्यागमनादिति । किं कारणमविद्यां मिश्रयित्वोपादानमुक्तं न पृथक् । भवग्रहणादुपादानानि ।

**अविद्या तु ग्राहिका नेति मिश्रिता ॥३८॥**

---

१. G. योगाद् । २. Ms. पृथक्... । ३. Y. वक्ष्यति । ४. Ms. योगाद्वेदितव्याः । ५. D. कस्मात् पुनरेतत् । ६. Y. प्रतिद्वंद्वात् । ७. D. प्रतिद्वन्द्वभूतं ह्येतदुभयपक्षविप्रलम्भकं च । ८. D. परिवर्तने ।

असंप्रख्यानलक्षणतयाऽपटुत्वादविद्या न ग्राहिका भवत्यतः किल मिश्रिता । सूत्रे तु भगवतोक्तं "कामयोगः कतमः । विस्तरेण यावद्योऽस्य भवति कामेषु कामरागः कामच्छन्दः कामस्नेहः कामप्रेम कामेच्छा काममूर्च्छा कामगृद्धः कामपरिगर्द्धः कामनन्दी कामनियन्तिः कामाध्यवसानं तदन्यचित्तं पर्यादाय तिष्ठति । अयमुच्यते कामयोगः । एवं याव-[24b. 16B1. IV]द्भवयोगः" । च्छन्दरागश्चोपादान-मुक्तं सूत्रान्तरेष्वतो विज्ञायते कामा ह्युपादानमपि कामादिषु[1] च्छन्दराग इति । उक्तमिदमनुशया एवास्रवौघयोगापादानसंशब्दिताः[2] सूत्रेष्विति ।

अथ कोऽयमनुशयार्थः कश्च यावदुपादानार्थः ।

अणवोऽनुगताश्चैते द्विधा चाप्यनुशेरते ।
अनुबध्नन्ति यस्माच्च तस्मादनुशयाः स्मृताः[3] ॥३९॥

तत्राणवः सूक्ष्मप्रचारत्वात् दुर्विज्ञानतया । अनुगताः प्राप्त्यनुषङ्गतः । अनुशेरते द्वाभ्यां प्रकाराभ्यामालम्बनतः संप्रयोगतश्च । अनुबध्नन्त्यप्रयोगेण प्रतिवारयतोऽपि[4] पुनः पुनः संमुखीभावात् । एभिः कारणैरनुशया उच्यन्ते ।

आसयन्त्यास्रवन्त्येते[5] हरन्ति श्लेषयन्त्यथ[6] ।
उपगृह्णन्ति चेत्येषामास्रवादिनिरुक्तयः ॥४०॥

आसयन्ति संसारे आस्रवन्ति भवाग्राद्यावदवीचिं षड्भिरायतनव्रणैरित्यास्रवाः । हरन्तीत्योघाः । श्लेषयन्तीति योगाः । उपगृह्णन्तीति उपादानानि । एवं तु साधीयः स्याद् । आस्रवत्येभिः संततिर्विषयेष्वित्यास्रवाः । "तद्यथा आयुष्मन्तो नौर्महद्भिरभिसंस्कारैः प्रतिस्रोतो[7] नीयते । सा तेषामेव संस्काराणां प्रतिप्रस्रब्ध्याऽल्पकृच्छ्रेणानुस्रोत[8] उह्यत इति सूत्रवादानु-[25a. 16A1. V]सारात् । अधिमात्रवेगत्वादोघाः । तर्हि तद्वानुह्यते तदनुविधानात् । नातिमात्र[9]समुदाचारिणोऽपि योगा विविधदुःखसंयोजनात्[10] । आभीक्ष्ण्यानुषङ्गतो[11] वा कामाद्युपादानादुपादानानीति ।

संयोजनादिभेदेन पुनस्ते पञ्चधोदिताः ।

---

१. Y. adds यः । २. Ms. °पादानं° । ३. G. मताः । ४. Y. प्रतिनिवारयतोऽपि । ५. Ms. आस्रयन्त्या । ६. Ms. श्लेषमन्मथः । ७. Ms. प्रतिश्रोतो । ८. Ms. °श्रोत । ९. Y. नाधिमात्र° । १०. Y. °दुःखयोजनात् । ११. अभीक्ष्णा° ।

त एवानुशयाः पुनः **संयोजनवन्धनानुशयोपक्लेशपर्यवस्थानभेदेन पञ्चधा** भित्त्वोक्ताः। तत्र नव संयोजनान्यनुनयप्रतिघमानाविद्यादृष्टिपरामर्शविचिकित्सेर्ष्या मात्सर्यसंयोजनानि। तत्रानुनयसंयोजनं त्रैधातुको रागः। एवमन्यानि यथासंभवं योज्यानि। दृष्टिसंयोजनं तिस्रो दृष्टयः। परामर्शसंयोजनं द्वे दृष्टी। अत एवोच्यते स्यात् दृष्टिसंप्रयुक्तेषु धर्मेष्वनुनयसंयोजनेन संयुक्तो न दृष्टिसंयोजनेन न च तत्र दृष्ट्यनुशयो नानुशयीत। आह स्यात् समुदयज्ञाने उत्पन्ने निरोधज्ञानेऽनुत्पन्ने निरोधमार्गदर्शनप्रहातव्येषु दृष्टिशीलव्रतपरामर्शसंप्रयुक्तेषु[1] धर्मेषु। तेष्वनुनयसंयोजनेन[2] संयुक्तस्तदालम्वनेन दृष्टिसंयोजनेनासंयुक्तः।

सर्वत्रगस्य प्रहोणत्वादसर्वत्रगस्य च तदालम्वनसंप्रयोगिणो दृष्टिसंयोजनस्याभावात्। दृष्ट्यनुशयश्च तेष्वनुशेते। ते एव परामर्शदृष्टी संप्रयो-[25b. 16B1. V]गतः।

किं पुनः कारणं संयोजनेषु तिस्रो दृष्टयो दृष्टिसंप्रयोजनं पृथगुक्तं द्वे पुनर्दृष्टी परामर्शसंयोजनं पृथक्।

**द्रव्यामर्शन[3]सामान्याद्दृष्टी संयोजनान्तरम् ।।४१।।**

अष्टादश द्रव्याणि तिस्रो दृष्टयः। अष्टादशैव द्वे परामर्शदृष्टी। अतः किल द्रव्य[4] सामान्यादेते संयोजनान्तरं कृते। एते च द्वे परामर्शस्त्रभावेन शेषाइति परामर्शनसामान्यादप्येते पृथग्विहिते ग्राह्यग्राहकभेदात्।

अथ कस्मादीर्ष्यामात्सर्ये संयोजने पृथक्संयोजनद्वयमुक्तं नान्यत् पर्यवस्थानम्।

**एकान्ताकुशलं यस्मात् स्वतन्त्रं चोभयं यतः।**

**ईर्ष्यामात्सर्यमेषूक्तं पृथक् संयोजनद्वयम् ।।४२।।**

नह्यन्यत्पर्यवस्थानमेवंजातीयकमस्ति यत्रैतदुभयं स्यादेकान्ताकुशलत्वं स्वतन्त्रत्वं चेति। यस्याष्टौ पर्यवस्थानानि तस्यैवं स्यात्। यस्य पुनर्दश तस्य क्रोधम्रक्षावप्युभयप्रकारौ। तस्मान्न भवत्ययं परिहार[5] इत्यपरे। पुनरन्यत्र भगवता संयोजनमुक्तम्

---

१. Y. adds यावत्। २. Y. ह्यनुनय....३. MS. drops न. D. द्रव्यामर्शण (?) ४....C. नाम। ५. Here there seems to be a passage missing. The passage includes one kārikā and a quotation of half of a verse, which is commented upon by Yasomitra. It is found in both of the Chinese translations.

**पञ्चधाऽवरभागीयं**

तद्यथा सत्कायदृष्टिः शीलव्रतपरामर्शो विचिकित्सा कामच्छन्दो व्यापाद इति। कस्मादेतान्यवरभागीयान्युच्यन्ते। अवरभागहितत्वात्। अवरो हि भागः कामधातुरेतानि च तस्यानुगुणानि। य-[26a. 16A1. VI]स्मात्।

**द्वाभ्यां कामानतिक्रमः।**

**त्रिभिस्तु पुनरावृत्तिः**

कामच्छन्दव्यापादाभ्यां कामधातुं नातिक्रामति। सत्कायदृष्ट्यादिभिरतिक्रान्तोऽपि पुनरावर्त्यते[1] दौवारिकानुचरसाधर्म्यात्। त्रिभिः सत्त्वावरतां नातिक्रामति पृथग्जनत्वं द्वाभ्यां धात्ववरतां कामधातुम्। अत[2] एव[3] तान्यवरभागीयानीत्यपरे। यदा स्रोतआपन्नस्य[4] पर्यादाय त्रिसंयोजनप्रहाणात्[5] षट्क्लेशाः प्रहीणाः किमर्थं तिस्रो दृष्टीरपहाय त्रयमेवाह सत्कायदृष्टिं शीलव्रतपरामर्शं विचिकित्सां च। सर्वमेतद्वक्तव्यं स्यात्। किं तूक्तं

**मुखमूलग्रहात्त्रयम् ॥४३॥**

त्रिप्रकाराः किल क्लेशा एकप्रकारा[6] द्विप्रकाराश्चतुष्प्रकाराश्च। तेषामेभिस्त्रिभिर्मुखं गृहीतमिति। अपिचान्तग्राहदृष्टिः सत्कायदृष्टिप्रवर्तिता। दृष्टिपरामर्शः शीलव्रतपरामर्शप्रवर्तितः मिथ्यादृष्टिर्विचिकित्साप्रवर्तिता।[7] मूलं गृहीतमिति। अपरे पुनराहुः।

**अगन्तुकामतामार्गविभ्रमो मार्गसंशयः।**

**इत्यन्तराया मोक्षस्य गमनेऽतस्त्रिदेशना[8] ॥४४॥**

---

१. D. पुनरावर्त्तते। २. Y. तस्माद्। ३. MS. एवा। ४. MS. श्रोत। ५. D. प्रहाणे। ६. MS. एकारा। ७. Y. अतो। ८. This kārikā is a problem. The Tsang Yao edition does not inlude this kārika at its proper place and gives note that this Sanskrit Gāthā does not occur in the original Sanskrit. But other editions of Chinese translations regard it as a kārikā. Yaśomitra in Sphuṭārthā says अपरे पुनराहुरित्ययमेवाचार्यः"। (p. 492). This MS reads

[Continued to the next page]

त्रयोऽन्तराया देशान्तरगमने भवन्ति । अगन्तुकामता मार्गविभ्रमोऽन्यमार्गसंश्रयणात् मार्गसंशयश्च । एवं मोक्षगमनेऽप्येत एव त्रयोन्तरायाः । तत्र सत्कायदृष्ट्या मोक्षादुत्त्रासमापन्नस्यागन्तुकामता भवति । शीलव्रतपरामर्शेनान्यमार्गसंश्रयणान्मोक्षविभ्रमः । विचिकित्सया मार्गसंशयः । एषां मोक्षगमनान्तराया- [26b. 16B1. VI]णां प्रहाणं द्योतयन् • भगवान् क्लेशत्रयस्यैव प्रहाणं देशितवान् । यथा भगवता पञ्चविधमवरभागीयं संयोजनमुक्तम् । एवं पुनः

पञ्चधैवोर्ध्वभागीयं

कथमित्याह

द्वौ रागौ रूप्यरूपिजौ

तौ

औद्धत्यमानमोहाश्च

इत्येतानि पञ्चोर्ध्वभागीयानि संयोजनानि । तद्यथा रूपराग आरूप्यराग औद्धत्यं मानोऽविद्या च । एषामप्रहाणेनोर्ध्वधात्वनतिक्रमात् । समाप्तः संयोजनप्रसङ्गः ।

बन्धनानि कतमानि । त्रीणि बन्धनानि । रागो बन्धनं सर्वः द्वेषो बन्धनं सर्वः मोहो बन्धनं सर्वः । कस्मादेतदेव त्रयं बन्धनमुक्तं भगवता ।

विद्वशाद् बन्धनत्रयम् ॥४५॥

---

as "अपरे पुनराहुः आगन्तुमाकामता मार्गविभ्रमो मार्गासंश्रयणान्मार्गसंशयश्च । एवं मोक्षगमनेऽप्येत एव इत्यन्तराया मोक्षस्य गमनेऽतस्त्रिदेशना । त्रयोऽन्तराया देशान्तरगमने भवन्ति । अगन्तुकामता मार्गविभ्रमोऽन्यमार्गसिंश्रयणान्मार्गसंशयश्च । Of this the first मार्गविभ्रमो is on the top margin and इत्यन्तराया······मार्गसंशय, of which most part is not distinct, is on the lower margin. Here मार्गसंश्रयणात् presents a problem to regard it as a Gātha. G. has it as kārikā punctuating as अगन्तुका मता ।

त्रिवेदनावशात्त्रीणि बन्धनानि। सुखायां हि वेदनायां रागोऽनुशेते आलम्बनसंप्रयोगाभ्याम्। दुःखायां द्वेषः। अदुःखासुखायां मोहो न तथा रागद्वेषौ। स्वासांतनिकालम्बनतो वा नियमः। अनुशयाः पूर्वमेवोक्ताः।

उपक्लेशाः वक्तव्याः। तत्र ये यावत् क्लेशा उपक्लेशा अपि ते। चित्तोपक्लेशनात्।

**येऽप्यन्ये चैतसाः क्लिष्टाः संस्कारस्कन्धसंज्ञिताः।**
**क्लेशेभ्यस्तेऽप्युपक्लेशास्ते तु न क्लेशसंज्ञिताः ॥४६॥**

येऽप्यन्ये क्लेशेभ्यः क्लिष्टा धर्माः संस्कारस्कन्धसंगृही-[27a. 16A1. VII] ताश्चैतसिकास्त उपक्लेशास्ते[1] पुनर्ये क्षुद्रवस्तुके पठिताः। इह तु पर्यस्थानक्लेशमलसंगृहीतानेव निर्देक्ष्यामः। कानि पुनः पर्यवस्थानानीत्याह। क्लेशा अपीहि[2] पर्यवस्थानं कामरागपर्यवस्थानप्रत्ययदुःखमिति सूत्रे वचनात्। प्रकरणशास्त्रे तु

**आह्रीक्यमनपत्राप्यमीर्ष्यामात्सर्यमुद्धवः।**
**कौकृत्यं स्त्यानमिद्धं च पर्यवस्थानमष्टधा ॥४७॥**

वैभाषिकन्यायेन पुनर्दश पर्यवस्थानान्येतानि चाष्टौ

**क्रोधम्रक्षौ च**

तत्राह्रीक्यानपत्राप्ये व्याख्याते। परसंपत्तौ चेतसो व्यारोष ईर्ष्या। धर्मामिषकौशलप्रदानविरोधी चित्ताग्रहो मात्सर्यम्। औद्धत्यं चेतसोऽव्युपशमः। कौकृत्यं स्त्यानं च व्याख्याते। कायसंधारणासमर्थश्चित्ताभिसंक्षेपो मिद्धम्। तत्तु क्लिष्टमेव पर्यवस्थानम्। कौकृत्यं च व्यापाद[3]विहिंसावर्जितः सत्त्वासत्त्वयोराघातः[4] क्रोधः। अवद्यप्रच्छादनं म्रक्षः। एषां च दशानां पर्यवस्थानानां

**रागोत्था आह्रीक्यौद्धत्यमत्सराः।**

एते त्रय उपक्लेशा रागनिःष्यन्दाः।

---

१. Y. उपक्लेशा एव ते। २. Ms. क्लेशा पि हि। ३. Ms. व्यावाद। ४. Ms drops :

त्रक्षे विवादः

तृष्णानिःष्यन्द इत्येके । अविद्यानिःष्यन्द इत्यपरे । उभयोरित्यन्ये । यथा-क्रमं ज्ञाताज्ञातानामिति ।

अविद्यातः स्त्यानमिद्धानपत्रपाः ॥४८॥

एते त्रयोऽविद्यानिःष्यन्दाः ।

कौकृत्यं वि-[27b. 16B1. VII]चिकित्सातः[1] कोधेर्ष्ये प्रतिघान्वये ।

प्रतिघसमुत्थे इत्येते च दश क्लेशनिःष्यन्दा उपक्लेशाः ।

अन्ये च षट्क्लेशमलाः

तद्यथा

माया शाठ्यं मदस्तथा ॥४९॥

प्रदाश उपनाहश्च विहिंसा चेति

तत्र परवञ्चना माया । चित्तकौटिल्यं शाठ्यं येन यथाभूतं नाविष्करोति विक्षिपत्य[2]परिस्फुटं वा प्रतिपद्यते । मदः पूर्वोक्तः । सावद्यवस्तुदृढग्राहिता प्रदाशो[3]येन न्यायसंज्ञप्तिं न गृह्णाति । आघातवस्तुवहुलीकार उपनाहः । विहेठनं विहिंसा येन प्रहारपारुष्यादिभिः परान् विहेठयते । एषां पुनः षण्णां क्लेशमलानां

रागजौ

मायामदौ प्रतिघजे उपनाहविहिंसने ॥५०॥

---

१. Y. adopts विचिकित्साजम्, but notes त MS. । 2. Y. क्षिपति ।

३. MS. पदाशो ।

**दृष्टयामर्शात् प्रदाशस्तु शाठ्यं दृष्टिसमुत्थितम् ।**

"किं कुटिलं पापिका दृष्टिरिति" गाथावचनाद् युज्यते । शाठ्यं[1] दृष्टि-निःष्यन्दः ।

क एषां किंप्रहातव्यः । यानि तावत् दश पर्यवस्थानान्युक्तानि

**तत्राह्रीक्यानपत्राप्यस्त्यानमिद्धोद्धवा[2] द्विधा ॥५१॥**

एते पञ्च धर्मा द्विविधा दर्शनभावनाप्रहातव्या उभयप्रकारक्लेशसंप्रयोगात् । यश्च यद्दर्शनहेयसंप्रयुक्तः स तद्दर्शनप्रहातव्यः ।

**तदन्ये भावनाहेयाः**

तेभ्योऽन्ये पर्यवस्थानसंगृहीता उपक्लेशा भावनाहेया एव । ईर्ष्यामा-[28a, 16A1, VIII]त्सर्यकौकृत्यक्रोधम्रक्षाः स्वतन्त्राश्च । स्वतन्त्राश्चैते पञ्चोपक्लेशा अधिमात्रसंप्रयोगित्वात् । यथैते ईर्ष्यादयः पञ्चोपक्लेशा भावनाहेयाः

**स्वतन्त्राश्च तथा मलाः ।**

षट्क्लेशमला[3]स्तथैव । एते पुनर्यथोक्ता उपक्लेशाः

**कामेऽशुभाः**

कामधातावकुशलाः । तत्रापि

**त्रयो द्विधा[4]**

स्त्यानौद्धत्य[5]मिद्धान्यकुशलाव्याकृतानि ।

**परेणाव्याकृतास्ततः ॥५२॥**

कामधातोरूर्ध्वमव्याकृताः उपक्लेशा यथासंभवम् ।

---

१. Ms. looks like शाष्ठ्य । २. Ms. °मिद्धाद्धधा । ३. Ms. °माला । ४. G. द्वे वा । ५. Ms. स्त्यानमौद्धत्य ।

कति पुनरेषां कुतस्त्या वेदितव्याः ।

**मायाशाठ्यं च कामाद्यध्यानयोः**

एतौ द्वौ कामधातौ प्रथमे च ध्याने । कथं ब्रह्मलोके मायाः ।

**ब्रह्मवञ्चनात् ।**

स हि तत्र महाब्रह्मा वितथात्मसंदर्शनतया आयुष्मन्तमश्वजितं वञ्चयितुं प्रवृत्तः । उक्तमपि शाठ्यं प्रसङ्गागतं[1] पुनरेवोक्तम् ।

**स्त्यानौद्धत्यमदा धातुत्रये**

एते त्रयस्त्रैधातुकाः ।

**अन्ये कामधातुजाः ॥५३॥**

षोडशभ्यः पञ्चापनीयान्य एकादशोपक्लेशाः कामावचरा एव । उक्ता क्लेशाः उपक्लेशाश्च ।

अथैषामनुशयानां कति मनोभूमिकाः कति षड्विज्ञानकायिकाः । संक्षेपतः

**समानसिद्धा दृग्घेया मनोविज्ञानभूमिकाः ।**

दर्शनप्रहातव्याः सर्वे मनोभूमिकाः सह मानसिद्धाभ्यां भावना-[28b. 16B1. VIII]हेयाभ्यामपि । ते हि सकले मनोभूमिके ।

**उपक्लेशाः स्वतन्त्राश्च**

ये च केचिदुपक्लेशाः स्वतन्त्रास्ते भावनाहेया अपि सन्तो मनोभूमिका एव द्रष्टव्याः ।

**षड्विज्ञानाश्रयाः परे ॥५४॥**

अन्ये क्लेशोपक्लेशाः षड्विज्ञानभूमिकाः[2] वेदितव्याः । के पुनरन्ये ।

१. Y. seems to be प्रसङ्गेणागतम् । २. Ms. drops न ।

भावनाप्रहातव्या रागप्रतिघाविद्या उपक्लेशाश्च तत्संप्रयुक्ताः । आह्रीक्यानपत्राप्यस्त्यानौद्धत्यानि । ये च[1] क्लेशमहाभूमिकेषूक्ताः ।

यानीमानि सुखादीनि पञ्चेन्द्रियाणि एषां कतमेनेन्द्रियेण कतमः क्लेश उपक्लेशो वा संप्रयुक्तः ।

**सुखाभ्यां संप्रयुक्तो हि रागः**

सुखसौमनस्याभ्यां रागः संप्रयुक्तः ।

**द्वेषो विपर्ययात् ।**

दुःखाभ्यामित्यर्थः । दुःखेन दौर्मनस्येन च । हर्षदैन्याकारवर्तित्वात् षड्विज्ञानभूमिकत्वाच्च रागद्वेषयोः ।

**मोहः सर्वैः**

अविद्यायाः सर्वक्लेशसंप्रयोगित्वात् पञ्चभिरपीन्द्रियैः संप्रयोगः ।

**असद्दृष्टिर्मनोदुःखसुखेन तु ।।५५।।**

मनोदुःखं दौर्मनस्यं मनःसुखं सौमनस्यं च । ताभ्यां मिथ्यादृष्टिः संप्रयुक्ता पुण्यकर्मणां पापकर्मणां च यथाक्रमम् ।

**दौर्मनस्येन काङ्क्षा**

संशयितो हि निश्चयेनार्थी दुर्मनायते ।

**अन्ये सौम-[29a. 17A. I]नस्येन**

अन्येऽनुशयाः सौमनस्येनैवं संप्रयुक्ताः । के पुनरन्ये । चतस्रो दृष्टयो मानश्च । हर्षाकारवर्तित्वात्[2] । किंप्रतिसंयुक्ता इमेऽनुशया निर्दिष्टाः । आह ।

**कामजाः ।**

---

१. Ms. seems to drop च । Y. has च । २. D. हर्षाकारवृत्तित्वात् ।

एवं प्रतिनियतं संप्रयोगमुक्त्वा सामान्येनाह

**सर्वेऽप्युपेक्षया**

सर्वेऽप्येतेऽनुशया उपेक्षेन्द्रियेण संप्रयुक्ताः। प्रवाहच्छेदकाले किल क्लेशानामवश्यमुपेक्षा संतिष्ठते[1]। अधोभूमिकाः कथमित्याह

**स्वैः स्वैर्यथाभूम्यूर्ध्वभूमिकाः ॥५६॥**

स्वैः स्वैरिन्द्रियैरूर्ध्वभूमिका अनुशयाः संप्रयुज्यन्ते। यस्यां भूमौ यावन्तीन्द्रियाणि। तत्रापि चातुर्विज्ञानकायिकाश्चातुर्विज्ञानकायिकैर्मनोभूमिका मनोभूमिकैरेव यथासंभवम्। उक्तः क्लेशाना[2]मिन्द्रियसंप्रयोगः।

उपक्लेशानां पुनः

**दौर्मनस्येन कौकृत्यमीर्ष्या क्रोधो विहिंसनम्।**

**उपनाहः प्रदाशश्च**

संप्रयुक्तानीति वर्तते। दैन्याकारवर्तित्वादेषां मनोभूमिकत्वाच्च।

**मात्सर्यं तु विपर्ययात् ॥५७॥**

सौमनस्येनेत्यर्थः। लोभान्वयत्वेन हर्षाकारवर्तित्वात्।

**माया शाठ्यमथो[3] म्रक्षो मिद्धं चोभयथा**

सौमनस्यदौर्मनस्याभ्यां संप्रयुज्यन्ते। कदाचिद्धि सुमनाः परं वञ्चयते। कदाचिद्दुर्मनाः। एवं यावत् स्वपिति।

**मदः।**

[29b. 17B. I] **सुखाभ्याम्**

---

१. D. सम्मुखीभवति। २. Ms. drops ना। ३. Ms, मथा।

तृतीये ध्याने सुखेनाधस्तात्सौमनस्येन ऊर्ध्वमुपेक्षया । यस्मात्[1]

**सर्वगोपेक्षा**

अतस्तया सर्वेऽनुशयाः संप्रयुज्यन्ते । न हि तस्याः क्वचित् प्रतिषेधो यथाऽविद्यायाः ।

**चत्वार्यन्यानि पञ्चभिः ॥५८॥**

आह्रीक्यमनपत्राप्यं स्त्यानमौद्धत्यं चैतानि चत्वारि पर्यवस्थानानि पञ्चभिरपीन्द्रियैः संप्रयुज्यन्ते । अकुशलमहाभूमिकत्वात् क्लेशमहाभूमिकत्वाच्च ।

यानि सूत्रे पञ्च निवरणानि उक्तानि कामच्छन्दो व्यापादः स्त्यानमिद्धमौद्धत्यकौकृत्यं विचिकित्सा च । तत्र किं त्रैधातुक्यः[2] स्त्यानौद्धत्यविचिकित्सा[3] गृह्यन्ते । अथ कामप्रतिसंयुक्ता एव । "केवलोऽयं परिपूर्णोऽकुशल[4] राशिर्यदुत पञ्च निवरणानी"त्येकान्ताकुशलत्ववचनात्सूत्रे ।

**कामे निवरणानि**

नान्यत्र धातौ । किं पुनः कारणं द्वे स्त्यानमिद्धे एकं निवरणमुक्तं द्वे चौद्धत्यकौकृत्ये एकम् ।

**एकविपक्षाहारकृत्यतः ।**

**द्व्येकता**

द्वयोरेकता द्व्येकता । विपक्षः प्रतिपक्षोऽनाहार इत्येकोऽर्थः । स्त्यानमिद्धयोरेकआहारः सूत्रेऽनाहारश्च । कः स्त्यानमिद्धनिवरणस्याहारः । पञ्च धर्माः । तन्द्रा[5]अरतिर्विजृम्भिका[6] भक्तेऽसमता चेतसो लीनत्वमिति । अथ स्त्यानमिद्धनिवरणस्यानाहारः आलोकसंज्ञे-[30a. 17A.II]ति । कृत्यमनयोरप्येकम् । उभे अपि

---

१. Ms. यस्मात्सर्व्वं । २. Ms. किंधातुल्यः Y. किं त्रैधातुक्यः ३, Ms. स्त्यानमौद्धत्य....
४. Ms. परिपूर्णकुशलाः... । ५. Ms. looks like तन्द्री । ६, Ms. अरतिविजृम्भिका ।

ह्येते चित्तं लयं चोदयतः। औद्धत्यकौकृत्ययोरप्येक आहार उक्तः एकोनाहारः[1]।
कश्चौद्धत्यकौकृत्यनिवरणस्याहारः। चत्वारो धर्माः। ज्ञातिवितर्को जनपदवितर्कोऽमरवितर्कः पौराणस्य च हसितक्रीडितरमितपरिभावितस्यानुस्मर्ता भवतीति। कश्चौद्धत्यकौकृत्यनिवरणस्याहारः। शमथ इति। कृत्यमप्यनयोरेकम्। उभे अपि ह्येते चित्तमव्युपशान्तं वर्तयतः। अत एकविपक्षाहारकृत्यत्वात् द्वयोरप्येकत्वमुक्तम्। यदि सर्वक्लेशा निवरणं कस्मात् पञ्चैवोक्तानि।

**पञ्चता स्कन्धविघातविचिकित्सनात्॥५९॥**

कामच्छन्दव्यापादाभ्यां शीलस्कन्धविघातः। स्त्यानमिद्धेन प्रज्ञास्कन्धस्यौद्धत्यकौकृत्येन समाधिस्कन्धस्य समाधिप्रज्ञयोरभावे सत्येषु विचिकित्सको भवतीत्यतः पञ्चोक्तानि। एतस्यां तु कल्पनायां समाधिस्कन्धविरोधिन औद्धत्यकौकृत्यनिवरणस्य पूर्वं ग्रहणं प्राप्नोति। अतो यथासंख्यमेताभ्यां समाधिप्रज्ञास्कन्धोपघात इत्यपरे। समाधिप्रयुक्तस्य हि स्त्यानमिद्धाद्भयम्। धर्मप्रविचयप्रयुक्तस्यौद्धत्यकौकृत्यादिति। अन्ये त्वन्यथा वर्णयन्ति। कथं वर्णयन्ति। चारगतस्य [30b. 17B. II]प्रियाप्रियरूपेषु विषयेषु निमित्तग्राहाद्विहारगतस्य तत्पूर्वकौ कामच्छन्दव्यापादौ समाधिप्रवेशस्यादितोऽन्तरायं कुरुतः। ततः समाधिप्रविष्टस्याप्रयोगेण शमथविपश्यनासेवनात् स्त्यानमिद्धमौद्धत्यकौकृत्यं विचिकित्सा[2] च यथाक्रमं शमथविपश्यनयोरन्तरायं कुरुतः। व्युत्थितस्यापि धर्मनिध्यानकाले विचिकित्सान्तरायं करोति। अतः पञ्च निवरणान्युक्तानि।

इदं विचार्यते। विसभागधातुसर्वत्रगाणां निरोधमार्गदर्शनप्रहातव्यानां च सास्रवालम्बनानां यदालम्बनं परिज्ञायते तदा न[3] प्रहीयन्ते। यदा प्रहीयन्ते तदालम्बनं न परिज्ञायते इति कथमेषां प्रहाणम्। नावश्यमालम्बनपरिज्ञानात् क्लेशानां क्षयो भवति। किं तर्हि। चतुर्भिः प्रकारैः। कतमैश्चतुर्भिः। दर्शनहेयानां तावत्

**आलम्बनपरिज्ञानात्तदालम्बनसंक्षयात्।**

**आलम्बनप्रहाणाच्च**

तत्रालम्बनपरिज्ञानाद् दुःखसमुदयदर्शनहेयानां स्वभूम्यालम्बनानामनास्रवालम्बनानां च। तदालम्बनसंक्षयाद् विसभागधातुसर्वत्रगाणाम्। तदालम्बना हि[4]

१. MS. केनाहारः। २. Y. one reading is औद्धत्यकौकृत्यविचिकित्से। ३. Y. न ते तदा। ४. Y. omits हि।

सभागधातुसर्वत्रगाः। तेषु प्रहीणेषु तेऽपि प्रहीणा भवन्ति। आलम्बनप्रहाणान्नि-रोधमार्गहेयानां सास्रवालम्बनानाम्। ते ह्यनास्रवालम्ब-[31a 17A III]नास्ते-षामालम्बनम्। अतस्तेषु प्रहीणेषु तेऽपि प्रहीणा भवन्ति। भावनाहेयानां पुनः

प्रतिपक्षोदयात् क्षयः ॥६०॥

यस्य हि क्लेशप्रकारस्य प्रतिपक्षो मार्ग उत्पद्यते स प्रहीयते। कस्य पुनः कः प्रतिपक्षः। अधिमात्राधिमात्रस्य मृदुमृदुरिति विस्तारेण पश्चात् प्रवेदयिष्यामः।

कतिविधश्च प्रतिपक्ष इत्याह

प्रहाणाधारभूतत्व[1]दूषणाख्यश्चतुर्विधः।

प्रतिपक्षः

प्रहाणप्रतिपक्षः आनन्तर्यमार्गः। आधारप्रतिपक्षस्तस्मात्परेणार्यो मार्गो येन तत्प्रा-पितं प्रहाणमाधार्यते[2]। दूरीभावप्रतिपक्षो विमुक्तिमार्गात्परेण यो मार्गश्छिन्न-प्राप्तिदूरीकरणात्। विमुक्तिमार्गोऽपीत्यपरे। सोऽपि हि तां प्राप्तिं[3] दूरीकरोति। विदूषणाप्रतिपक्षो येन मार्गेण तं धातुं दोषतो दर्शनाद्विदूषयति। अपि त्वेषामिय-मानुपूर्वी[4] साध्वी भवेत्। विदूषणाप्रतिपक्षो दुःखसमुदयालम्बनः प्रयोगमार्गः। प्रहाणप्रतिपक्षः सर्वं आनन्तर्यमार्गः[5]। आधारप्रतिपक्षो विमुक्तिमार्गः। दूरीभाव-प्रतिपक्षो विशेषमार्ग इति।

प्रहीयमाणः क्लेशः कुतः प्रहातव्यः।

प्रहातव्यः क्लेश आलम्बनात् मतः[6] ॥६१॥

न हि संप्रयोगात् क्लेशो विवेचयितुं शक्यते आलम्बनाच्च शक्यते। यस्मान्न पुनस्त-[31b. 17B. III]दालम्ब्योत्पद्यते। अनागतस्तावच्छक्येतालम्बनाद्विवे-चयितुम्। अतीतस्तु कथम्। अथालम्बन[7]परिज्ञानात्प्रहातव्य इत्ययमस्यार्थः।

---

१. G. दूरत्व. It seems to be correct। २. MS. माधर्यते। ३. Y. क्लेश-प्राप्ति। ४. Y. omits एषाम्। ५. Y. सर्वानन्तर्य०। ६. MS. ०नात्मतः। ७. MS. ०लम्बनं।

एषोऽपि नैकान्तः। तस्माद्वक्तव्यमेतत्। कियता क्लेशः प्रहीणो वक्तव्यः। स्वासंतानिकः प्राप्तिच्छेदात्। पारसांतानिकस्तु क्लेशः सर्वं च रूपमक्लिष्टश्च धर्मस्तदालम्बनस्वासांतानिकक्लेशप्रहाणात्।

दूरीभाव इत्युच्यते। कतिविधो दूरीभावः। चतुर्विधा किल दूरता।

वैलक्षण्याद्वि[1]पक्षत्वाद्देशविच्छेदकालतः।
भूतशीलप्रदेशाध्वद्वयानामिव दूरता ॥६२॥

विलक्षणदूरता यथा महाभूतानाम्। वैलक्षण्यात्सहजानामपि दूरता। विपक्षदूरता[2] यथा शीलस्य दौःशील्यम्। देशविच्छेददूरता यथा विप्रकृष्टदेशानां देशविच्छेदात् पूर्वपश्चिमसमुद्रवत्। कालदूरता यथा अतीतानागतद्दूरमुच्यते। कुतस्तद्दूरम्। वर्तमानात्। यदनन्तरातीतमुत्पद्यमानं वा[3] तत् कथं दूरम्। अध्वनानात्वेन तद्दूरं न चिरभूतभावित्वेन। वर्तमानमप्येवं[4] दूरं प्राप्नोति। अकारित्रा[5]त्तर्हि तद्दूरम्। असंस्कृतस्य कथमन्तिकत्वं सिध्यति। सर्वत्र तत्प्राप्तेः। अतीतानागतेऽपि तत्प्रसङ्गः[6]। आकाशं च कथम्। एवं तर्ह्यतीतानागतमन्योऽन्यं वर्त्तमानव्यवहितत्वाद् दूरम्। वर्त्तमानमुभयो [32a. 17A. IV]रासन्नत्वादन्तिकम्। असंस्कृतं चाप्यव्यवहितत्वादिति। एवमप्यतीतानागतं वर्त्तमानस्यान्तिकत्वादुभयं प्राप्नोति। एवं तु युक्तं स्यात्। धर्मस्वलक्षणादनागतं दूरमसंप्राप्तत्वात्[7]। अतीतं च प्रच्युतत्वादिति।

किं मार्गविशेषगमनात् क्लेशानां पुनः प्रहाणविशेषो भवति। नैतदस्ति। सर्वेषां हि क्लेशानां

सकृत् क्षयः

यस्य यः प्रहाणमार्गस्तेनैव तस्य क्षयः।

विसंयोगलाभस्तेषां[8] पुनः पूनः[9]।

---

१. Ms. वैलक्षण्यादि। २. Ms. seems to drop विपक्षदूरता। It is expected here. ३. Y. च। Ms. looks like °मप्येवं। ५. Ms. कारित्रा। ६. Y. omits तत्। ७. Ms. seems to cancel three letters दन्तिक। ८. G. °स्त्वेपां। ९. Ms. drops one पुनः।

कतिषु कालेष्वित्याह षट्सु कालेषु ।

**प्रतिपक्षोदयफलप्राप्तीन्द्रियविवृद्धिषु ।।६३।।**

प्रतिपक्षो विमुक्तिमार्ग एतस्मिन्नभिप्रेतः । फलानि चत्वारि श्रामण्यफलानि । इन्द्रियविवृद्धिरिन्द्रियसंचारः । एतेषु कालेषु क्लेशस्य विसंयोगलाभः । स पुनरेष यथायोगं द्रष्टव्यः । केषांचित् षट्सु कालेषु केषांचिद् यावद्द्वयोः ।

स एव विसंयोगस्तासु तास्ववस्थासु परिज्ञासंज्ञां लभते । द्वे हि परिज्ञे ज्ञानपरिज्ञा प्रहाणपरिज्ञा च । तत्र ज्ञानपरिज्ञा सास्रवं ज्ञानम् । प्रहाणपरिज्ञा तु प्रहाणमेव । फले हेतूपचारात् । किमेकैव परिज्ञा सर्वप्रहाणम् । नेत्याह । किं तर्हि ।

**परिज्ञा नव**

तत्र तावत्

**कामाद्यप्रकारद्वयसंक्षयः ।**

**एका**

कामधातावाद्यस्य प्रकारद्वयस्य दुःखसमुदयद-[32b. 17B. IV]र्शनहेयस्य प्रहाणमेका परिज्ञा ।

**द्वयोः क्षये[1] द्वे ते**

कामधातावेव निरोधदर्शनहेयस्य प्रकारस्य प्रहाणमेका परिज्ञा । मार्गदर्शनहेयस्यैका । यथा कामावचराणां दर्शनप्रहातव्यानां प्रहाणं तिस्रः परिज्ञाः

**तथोर्ध्वं तिस्र एव ताः ।।६४।।**

रूपारूप्यावचराणां दर्शनप्रहातव्यानां प्रहाणं तथैव तिस्रः परिज्ञा भवन्ति । दुःखसमुदयदर्शनप्रहातव्यानां प्रहाणमेका निरोधदर्शनहेयानां प्रहाणं द्वितीया मार्गदर्शनहेयानां प्रहाणं तृतीयेति त्रैधातुकानां दर्शनहेयानां प्रहाणं षट् परिज्ञा भवन्ति ।

१. G. क्षयो ।

**अन्या अवरभागीयरूपसर्वास्रवक्षयाः ।**
**तिस्रः परिज्ञाः**

अवरभागीयप्रहाणमेका परिज्ञा । रूपास्रवप्रहाणमेका रूपरागक्षयपरिज्ञा । आरूप्याप्तानां सर्वास्रवप्रहाणमेका सर्वसंयोजनपर्यादान[1]परिज्ञा । कस्माद्रूपारूप्यावचराणां भावनाहेयानां प्रहाणं पृथक् परिज्ञा न दर्शनहेयानाम् । भावनाहेयानामतुल्यप्रतिपक्षत्वात् । इत्येता नव परिज्ञाः । आसां पूर्विकाः

**षट् क्षान्तिफलं**

या एव दर्शनहेयप्रहाणस्वभावाः ।

**ज्ञानस्य शेषिताः ॥६५॥**

अवरभागीयप्रहाणादिपरि· [33a. 17A. V]ज्ञा भावनामार्गफलत्वात् । कथं क्षान्तिफलं परिज्ञा भवन्ति । क्षान्तीनां ज्ञानपरिवारत्वात् । राजपरिवारे राजोपचारवत् । ज्ञानैकफलत्वाच्च ।

**अनागम्यफलं सर्वा ध्यानानां पञ्च वाथवा[2] ।**
**अष्टौ**

वैभाषिकमतेन मौलध्यानफलं पञ्च परिज्ञा या रूपारूप्यावचरक्लेशप्रहाणस्वभावाः । कामावचरक्लेशप्रहाणस्यानागम्यफलत्वात् भदन्तघोषकस्य मतेनाष्टौ । स हि वीतरागस्यापि कामावचराणां दर्शनहेयानां प्रहाणं दर्शनमार्गफलमिच्छन्ति । अनास्रवविसंयोगप्राप्तिलाभात् । अवरभागीयप्रहाणपरिज्ञा त्वनागम्यफलमेव । ध्यानान्तरं ध्यानवद्द्रष्टव्यम् । आरूप्याणां तु

**सामन्तकस्यैका**

आकाशानन्त्यायतनसामन्तकस्यैका रूपरागक्षयपरिज्ञा फलम् ।

---

१. From here upto सामन्तकस्यैका, the स्फुटार्थ is missing । २. Ms. वा अथवा ।

**मौलारूप्यत्रयस्य च ॥६६॥**

मौलानां च त्रयाणामारूप्याणामेकैव सर्वसंयोजनपर्यादानपरिज्ञा फलम् ।

**आर्यमार्गस्य सर्वाः**

नव परिज्ञाः फलम् ।

**द्वे लौकिकस्य**

लौकिस्य मार्गस्य द्वे अवरभागीयरूपरागक्षयपरिज्ञे फलम् ।

**अन्वयस्य च ।**

अन्वयज्ञानस्यापि द्वे परिज्ञे फलं पश्चिमे ।

**धर्मज्ञानस्य तिस्रस्तु**

पश्चिमा एव त्रैवातु-[33b. 17B. V]कभावनाहेय[1]प्रतिपक्षत्वात् ।

**षट् तत्पक्षस्य पञ्च च[2] ॥६७॥**

धर्मज्ञानपक्षस्य षट् परिज्ञाः[3] फलं या एव धर्मज्ञान[4]क्षान्तिज्ञानानाम् । अन्वयज्ञानपक्षस्य पञ्च या एवान्वयक्षान्तिज्ञानानाम् । पक्षग्रहणेन हि क्षान्तिज्ञानानि गृह्यन्ते । कस्मान्नैकैकं प्रहाणं परिज्ञा व्यवस्थाप्यते । यस्मात् क्षान्तिफलं तावत् प्रहाणं व्यवस्थाप्यते ।

**अनास्रवबियोगाप्तेर्भवाग्रविकलीकृतेः ।**
**हेतुद्वयसमुद्घातात् परिज्ञा**

तत्रैतानि त्रीणि कारणानि भवन्ति तत् प्रहाणं परिज्ञोच्यते । पृथग्जनस्य तावदनास्रवा विसंयोगप्राप्तिर्नास्ति भवाग्रविकलीकरणं चेति नास्य प्रहाणं परिज्ञाख्यां

१. Ms. looks like हेया° । २. Y. वा । ३. Ms. परिज्ञा । ४. Ms. drops न ।

लभते। आर्यस्यापि यत् क्षान्तिफलं तावत् प्रहाणम्। तत्र यावत् दुःखेऽन्वय[1]-ज्ञानक्षान्तावनास्रवा विसंयोगप्राप्तिरस्ति न तु भवाग्रविकलीकृतम्। दुःखेऽन्वयज्ञाने उभयमस्ति न तु हेतुद्वयसमुद्घातः। समुदयदर्शनप्रहातव्यस्य सर्वत्रगहेतोरप्रहीण-त्वात्। अन्येषु धर्मान्वयज्ञानेषु सर्वं त्रयमस्ति। अतस्तास्ववस्थासु प्रहाणं परिज्ञाख्यां लभते। ज्ञानफलं तु प्रहाणम्। अतश्च कारणत्रयात् परिज्ञाख्यां लभते। चतुर्थाच्च

**धात्वतिक्रमात् ॥६८॥**

यदा धातुं समतिक्रामति। कृत्स्नधातुवैराग्यात्[34a. 17A. VI] उभयसंयोग-वियोगं[2] पञ्चमं कारणमाहुरपरे। यः प्रकारः प्रहीणो यदि तत्रान्येन तदालम्बनेन क्लेशेन विसंयुक्तो भवतीति। स तु नास्य उभयहेतुसमुद्घातात् धातुसमतिक्र-माच्चेति न ब्रूमः।

कः कतिभिः परिज्ञाभिः समन्वागतः।

**नैकया पञ्चभिर्यावद्दर्शनस्थः समन्वितः।**

पृथग्जनस्तावन्नैव समन्वागतः[3]। आर्योऽपि दर्शनमार्गस्थो यावत्समुदय-धर्मज्ञानक्षान्तिं[4] नैव समन्वागतः। समुदये धर्मज्ञान एकया समन्वागतः। समुदये-ऽन्वयज्ञाने[5] द्वाभ्याम्। निरोधे[6] धर्मज्ञाने तिसृभिर्निरोधान्वयज्ञाने चतसृभिर्मार्गधर्म-ज्ञाने पञ्चभिः।

**भावनास्थः पुनः षड्भिरेकया वा द्वयेन वा ॥६९॥**

भावनामार्गस्थः पुनरार्यपुद्गलो मार्गान्वयज्ञाने षड्भिः परिज्ञाभिः समन्वा-गतो यावत् कामवैराग्यं न प्राप्तः। परिहीणो वा ततः कामवैराग्यं प्राप्तः पूर्वं पश्चाद् वा एकयाऽवरभागीयप्रहाणपरिज्ञया[7]। अर्हत्त्वं प्राप्त[8] एकयैव सर्वसंयो-जनपर्यादानपरिज्ञया। परिहीणोऽपि रूपावचरेण पर्यवस्थानेनैकयाऽवरभागीय-प्रहाणपरिज्ञया[9]। रूपवैराग्यं प्राप्तो द्वाभ्यामवरभागीयप्रहाणरूपरागक्षयपरिज्ञा-भ्याम्। प्रहीणोऽप्यारूप्यावचरेण[10] पर्यवस्थानेनाभ्यामेव। किं पुनः कारणमना-गाम्य-[34b. 17B. VI]र्हतोरेकैव परिज्ञा व्यवस्थाप्यते न भूयस्यः। यस्मात्

---

१. Ms. drops य। २. Y. विसंयोगं। ३. Ms. seems to drop ग। ४. Y. क्षान्तौ। ५. Y. समुदयान्वयज्ञाने। ६. Y. निरोध॰। ७. Ms. प्रहाणं....। ८. Y. अर्ह-त्वप्राप्त। ९. Ms. प्रहाणं....। १०. Y. परिहीणो....।

**तासां संकलनं धातुवैराग्यफललाभतः ।**

द्वाभ्यां कारणाभ्यां परिज्ञानां संकलनं भवत्येकत्वेन व्यवस्थापनं धातुवैराग्यात् फलप्राप्तितश्च । तयोश्चावस्थयोरेतदुभयं भवति । अतः सर्वं प्रहाणं संकलय्यैका परिज्ञोच्यते[1] ।

अथ कः कति परिज्ञास्त्यजति लभते वा ।

**एकां द्वे पञ्च षट् कश्चिज्जहात्याप्नोति पञ्च न ॥७०॥**

एकां त्यजति अर्हत्त्वात् कामवैराग्याद् वा परिहीयमाणः । द्वे परिज्ञे त्यजत्यनागामी रूपवीतरागः कामवैराग्यात् परिहीयमाणः । पञ्च त्यजति वीतरागपूर्वी मार्गान्वयज्ञाने । स ह्यवरभागीयप्रहाणपरिज्ञालाभे पूर्विकाः पञ्च परिज्ञास्त्यजति । षट् परिज्ञास्त्यजत्यानुपूर्विकः कामवैराग्यात् । लाभे[2]ऽप्येवमेव । कश्चिदेकां परिज्ञां[3] लभते । यः कश्चिदपूर्वां[4] लभते । कश्चिद् द्वे यः केवलादारूप्यधातुवैराग्यात्[5] परिहीयते । कश्चित् षट् योऽनागामिफलात् परिहीयते । पञ्च तु नैव कश्चिल्लभते ।

**समाप्तः परिज्ञाप्रसङ्गः ॥**

अभिधर्मकोशभाष्येऽनुशयनिर्द्देशो नाम
पञ्चमं कोशस्थानं समाप्तमिति ॥

**श्रीलामावाकस्य यदत्र पुण्यम् ।**

---

१. Y. एकपरिज्ञो° । २. Y. लाभो । ३. Y. omits परिज्ञां । ४. Y. अपूर्वं (?) ५. Y. omits धातु ।

# षष्ठं कोशस्थानम्

[श्री 1b. 17B. VII] नमो बुद्धाय ॥

उक्तं यथा प्रहाणं परिज्ञाख्यां[1] लभते । तदपि च

**क्लेशप्रहाणमाख्यातं सत्यदर्शनभावनात् ।**

दर्शनहेया भावनाहेयाश्च क्लेशा इति विस्तरेणाख्यातम्[2] । ताविदानीं दर्शन-भावनामार्गौ किमनास्रवौ सास्रवाविति वक्तव्यम् । अत इदमुच्यते

**द्विविधो भावनामार्गो दर्शनाख्यस्त्वनास्रवः ॥१॥**

द्विविधो भावनामार्गो लौकिको लोकोत्तरश्च । दर्शनमार्गस्तु[3] लोकोत्तर एव त्रैधा-तुकप्रतिपक्षत्वात् । नवप्रकाराणां दर्शन[4] हेयानां सकृत्प्रहाणाच्च । न हि लौकि-कस्य एषा शक्तिरस्ति ।

सत्यदर्शनादित्युक्तम् । कानीमानि सत्यानि कति च ।

**सत्यान्युक्तानि चत्वारि**

क्वोक्तानि । सास्रवानास्रवधर्मनिर्देशे । "अनास्रवा मार्गसत्यमि"ति स्वशब्देन "प्रतिसंख्यानिरोधो यो विसंयोग" इति निरोधसत्यं "दुःखं समुदयो लोक" इत्यत्र दुःखसमुदयसत्ये । किमेष एवैषामनुक्रमः । नेत्याह । किं तर्हि ।

**दुःखं समुदयस्तथा ।**

**निरोधमार्ग इति**

एष एषामनुक्रमः । स्वभावस्तु यथा पूर्वमुक्तस्तथैवेतिप्रदर्शनार्थस्तथाशब्दः । स पुनरयम्

**एषां यथाऽभिसमयं क्रमः ॥२॥**

---

१, Y. परिज्ञां । २. Y. विस्तरेणोक्तम् ३. Ms. drops न । ४ Ms. drops न ।

यस्य हि सत्यस्या-[2a. 17A. VIII]भिसमयः पूर्वस्य[1] पूर्वंनिर्देशः। इतरथा हि पूर्वं हेतुनिर्देशोऽभविष्यत् पश्चात् फलनिर्देशः। केषांचिदुत्पत्त्यनुकूला[2] देशना। यथा स्मृत्युपस्थानध्यानादीनाम्। केषांचित्प्ररूपणानुकूला देशना यथा सम्यक्प्रहाणानाम्। न ह्येष नियमो यत् पूर्वमुत्पन्नानां प्रहाणाय च्छन्दं जनयति। पश्चादनुत्पन्नानामनुत्पादायेति। सत्यानां त्वभिसमयानुकूला देशना। किं पुनः कारणमेवमेषां सत्यानामभिसमयः। यत्र हि सक्तो येन च बाध्यते यतश्च मोक्षं प्रार्थयते तदेवादौ व्यवचारणावस्थायां दुःखसत्यं परीक्ष्यते। पश्चात्कोऽस्य हेतुरिति समुदयसत्यं कोऽस्य निरोध इति निरोधसत्यं कोऽस्य मार्ग इति मार्गसत्यम्। व्याधिं दृष्ट्वा तन्निदानक्षयभेषजान्वेषणवत्। सूत्रेऽप्येष एव सत्यानां दृष्टान्तो दर्शितः। कतमस्मिन् सूत्रे। "चतुर्भिरङ्गैः समन्वागतो भिषक्कल्पसर्त्ते"त्यत्र[3]। यथा च व्यवचारणावस्थायां सत्यपरीक्षा तथाभिसमयावस्थायां सत्याभिसमयः। पूर्वावेधात्। दृष्टभूमिनिःसंगाश्वधावनवत्[4]। अभिसमय इति कोऽर्थः। अभिसंबोध इणो बोधनार्थत्वात्। कस्मादनास्रव एव न सास्रवः। स हि निर्वाणाभिमुखः सम्यक्बोधः। सम्यगिति तत्त्वेन। तत्र फ-[2b.17B. VIII]लभूता उपादानस्कन्धा दुःखसत्यम्। हेतुभूताः समुदयसत्यम्। समुदेत्यस्मादिति कृत्वा। अत एव तयोः फलहेतुभावान्नामतो भेदो न द्रव्यतः। निरोधमार्गयोस्तु द्रव्यतोऽपि। आर्यसत्यानीति सूत्र उच्यन्ते। कोऽस्यार्थः। आर्याणामेतानि सत्यानि तस्मादार्यसत्यानीति सूत्र एवोक्तम्। किमन्येषामेतानि मृषा। सर्वेषामेतानि सत्यान्यविपरीतत्वात्। आर्यैस्तु यथैतानि तथा दृष्टानि नान्यैः। अत आर्याणामेतानि सत्यान्युच्यन्ते न त्वनार्याणां विपरीतदर्शनात्।

"यदार्याः सुखतः प्राहुस्तत् परे दुःखतो विदुः।
यत्परे सुखतः प्राहुस्तदार्या दुःखतो विदुः॥"

इति गाथा। द्वे आर्याणां सत्ये द्वे आर्ये चार्याणां च सत्ये इत्यपरे। यथा वेदनैकदेशो दुःखस्वभावः। कथं सर्वे सास्रवाः संस्कारा दुःखमित्युच्यन्ते।

**दुःखा[5]स्त्रिदुःखतायोगाद्यथायोगमशेषतः।**
**मनापा अमनापाश्च तदन्ये चैव सास्रवाः॥३॥**

---

१. Is it पूर्वस्तस्य ? २. Y. seems to be उपपत्त्यनुकूला। ३. Ms. looks like भिषक्कल्पसर्त्ते° । Y. adopts भिषक् शल्यापहर्त्ता and gives in note कल्पापह° Mss । ४. Ms. धानवत् । Y. प्रसरण० । ५. G. दुःखं ।

तिस्रो हि दुःखता दुःखदुःखता संस्कारदुःखता विपरिणामदुःखता च। ताभिर्यथायोगमशेषतः सर्वे सास्रवाः संस्कारा दुःखाः। तत्र मनापा विपरिणामदुःखतया। अमनापा दुःखदुःखतया। तेभ्योऽन्ये संस्कारदुःखतया। के पुनर्मना-[3a. 17A1. I]पाः केऽमनापाः के नोभयथा। तिस्रो वेदना यथाक्रमं तद्वशेन सुखवेदनीयादयोऽपि संस्कारा मनापादिसंज्ञां लभन्ते। सुखाया हि वेदनाया विपरिणामेन दुःखता। सूत्र उक्तं "सुखा वेदना उत्पादसुखा स्थितिसुखा विपरिणामदुःखे"ति। दुःखायाः दुःखस्वभावेनैव दुःखता। "दुःखा वेदना उत्पाददुःखा स्थितिदुःखा" इति सूत्रे। अदुःखासुखावेदनायाः संस्कारेणैव दुःखता। "प्रत्ययाभिसंस्करणाद्यदनित्यं तद्दुःखमि"ति। वेदनावत्तद्वेदनीया अपि संस्कारा उच्यन्ते[1]। दुःखमेव दुःखता दुःखदुःखता। एवं यावत् संस्कारा एव दुःखतेत्यपरे। असाधारणत्वात्[2] मनापाऽमनापानां विपरिणामदुःखदुःखते उक्ते। सर्वे तु संस्काराः संस्कारदुःखतया दुःखाः। तांस्त्वार्या[3] एव पश्यन्ति॥ आह चात्र।

"ऊर्णापक्ष्म यथैव हि करतलसंस्थं न वेद्यते पुम्भिः
अक्षिगतं तु तथैव हि जनयत्यरतिं च पीडां च।
करतलसदृशो बालो न वेत्ति[4] संस्कारदुःखतापक्ष्म
अक्षिसदृशस्तु विद्वांस्तेनैवोद्विज्यते गाढमि"ति॥

न हि बालानामावीचिकेष्वपि स्कन्धेषु तथा दुःखबुद्धिः प्रवर्तते यथार्याणां भावाग्रिकेष्वपीति। एवं तर्हि मार्गस्यापि[5] संस्कारदुःखताप्रस-[3b. 17B1. I]ङ्गः। संस्कृतत्वात्। प्रतिकूलं हि दुःखमिति लक्षणान्न मार्गो[6] दुःखम्। न हि तस्योत्पाद आर्याणां प्रतिकूलः सर्वदुःखक्षयावाहनात्। यदापि ते निर्वाणं शान्ततः पश्यन्ति तदापि यदेव दुःखतो दृष्टं तस्यैव निरोधं शान्ततः पश्यन्ति न मार्गस्य। यदापि दुःखमप्यत्रास्ति तस्मात् दुःखमेवार्यसत्यमुच्यते। सुखस्याल्पत्वात् मुद्गादिभावेऽपि माषराश्यपदेशवदित्येके। को हि विद्वान् परिषेकसुखाणुकेन गण्डसुखमिति व्यवस्येत्। आह खल्वपि

"दुःखस्य च हेतुत्वात् दुःखैश्चानल्पकैः समुदितत्वात्।
दुःखे च सति तदिष्टेर्दुःखं सुखमिति[7] व्यवस्यन्ति"इति॥

---

१. Y. वेदितव्याः। २. Ms. °त्वात्म°। ३. Y. तां त्वार्या। ४. Ms. वेत्ति। ५. Y. मार्गेऽपि। ६. Y. मार्गो न। ७. Ms. दुःखदुःखमिति। Y. दुःखमिति सुखम्।

सहैव तु सुखेन सर्वं भवमार्या दुःखतः पश्यन्ति। संस्कारदुःखतैकरसत्वात्। अतो दुःखमेवार्यसत्यं व्यवस्थाप्यते न सुखम्। कथमिदानीं सुखस्वभावां वेदनां दुःखतः पश्यन्ति। अनित्यतया प्रतिकूलत्वात्। यथा रूपसंज्ञादीन्यपि दुःखतः पश्यन्ति। न च तान्येवं दुःखानि यथा दुःखवेदनेति[१]। यस्तु मन्यते दुःखहेतुत्वादिति। तस्यासौ समुदयाकारः स्यान्न दुःखाकारः। आर्याणां च रूपारूप्योपपत्तौ कथं दुःखसंज्ञा प्रवर्तेत[२]। न हि पुनस्तेषां[३] दुःखवेदनाहेतुः स्कन्धा भव-[4a. 17A1. II]न्ति। संस्कारदुःखता च सूत्रे किमर्थं पृथगुक्ता[४] भवेत्। यदि तर्ह्यनित्यत्वात् दुःखतः पश्यन्ति। अनित्यदुःखाकारयोः कः प्रतिविशेषः। उदयव्ययधर्मित्वादनित्यं पश्यन्ति। [५]प्रतिकूलत्वात् दुःखम्। अनित्यं तु दृश्यमानं प्रतिकूलं भवतीत्यनित्याकारो दुःखाकारमाकर्षति। नास्त्येव सुखा वेदनेत्येकीया दुःखैव तु सर्वा। कथमिदं गम्यते। सूत्राद्युक्तितश्च। कथं तावत्सूत्रात्। उक्तं हि भगवता "यत्किंचिद्वेदितमिदमत्र दुःखस्ये"ति। "दुःखा[६] वेदना दुःखतो द्रष्टव्ये"-ति। "दुःखे सुखमिति संज्ञाविपर्यास" इति। एवं तावत्सूत्रात्। कथं युक्तितः। सुखहेत्वव्यवस्थानात्। य एव हि केचित्पानभोजनशीतोष्णादय इष्यन्ते सुखहेतवस्त एवात्युपयुक्ता अकालोपयुक्ताश्च पुनर्दुःखहेतवः संपद्यन्ते। न च युक्ता सुखहेतुवृद्धया समेन वाऽन्यस्मिन्काले दुःखोत्पत्तिरित्यादित एव ते दुःखहेतवो न सुखस्य। अन्ते तु तद्दुःखं वृद्धिमापन्नं व्यक्तिमापद्यत इति। एवमीर्यापथविकल्पेऽपि[७] वक्तव्यम्। दुःखप्रतिकारे च सुखबुद्धेर्दुःखविकल्पे च। न हि तावत् सुखमिति वेद्यते किञ्चिद्यावन्न दुःखान्तरेणोपद्रुतो भवति क्षुत्पिपासाशीतोष्णश्रमकामरा-[4b 17B1. II]गप्रभवेण[८]। तस्मात् प्रतीकार एवाविदुषां सुखबुद्धिर्न सुखे दुःखविकल्पे च वालाः सुखबुद्धिमुत्पादयन्ति यथांशादंशं भारं संचारयन्तः। तस्मान्नास्त्येव सुखमिति। अस्त्येवेत्याभिधार्मिकाः। एष एव च न्यायः। कथं कृत्वा। इदं हि तावदयं प्रष्टव्यः सुखापवादी। किमिदं दुःखं नाम। यद्बाधनात्मकं चेत्[९]। कथमिति वक्तव्यम्। उपघातकं चेत्। अनुग्राहकं सुखमिति सिद्धम्। अनभिप्रेतं चेत्। अभिप्रेतं सुखमिति सिद्धम्। तदेव ह्यभिप्रेतं पुनरनभिप्रेतं[१०] भवत्यार्याणां नैवाल्पकाले। तस्मादनिष्पन्नमभिप्रेतत्वं चेत्। न। अन्यथाऽनभिप्रेतत्वात्। या हि वेदना स्वेन लक्षणेनाभिप्रेता नासौ पुनस्तेनैव जात्वनभिप्रेता भवति। तथा

---

१. Y. दुःखा...। २. Y. प्रवर्त्तते। ३. Y. omits पुनः। ४. Y. omits पृथक्। ५. Y. adds यथा। ६. Y. सुखा। ७. Ms. विकलेपि। ८. Ms. प्रभवेन। ९. Ms. looks like चेति। १०. Y. adopts अनभिप्रीतं and gives in note °pret° Mss।

ह्येनामाकारान्तरेण विदूषयन्त्यार्याः प्रमादपदं चैनां पश्यन्ति महाभिसंस्कारसाध्यां च विपरिणामिनीं चानित्यां च येनानभिप्रेता भवति । न तु खलु स्वलक्षणाकारेण । यदि चासौ स्वेनात्मनानभिप्रेता भवेन्नैव तस्यां कस्यचिद्रागो भवेद्यतो वैराग्यार्थं प्रकारान्तरेणापि[1] दोषवतीं पश्येयुः । तस्मादस्त्येव स्वलक्षणतः सुखा वेदना ॥ यत्तु भगवतोक्तं "यत्किंचिद्वेदितमिदमत्र दुःखस्ये"ति तद्भगवतैव नीतार्थं "संस्कारानित्यतामानन्द म-[5a. 17A1. III]या संधाय भाषितं संस्कारविपरिणामतां च यत्किंचिद्वेदितमिदमत्र दुःखस्ये"ति । अतो न दुःख-दुखतां संधायैतदुक्तमिति सिद्धं भवति । यदि च स्वभावत एव सर्वं वेदितव्यं दुःखमभविष्यत्किमर्थमार्यानन्द एवं भगवन्तमप्रक्ष्यत् । तिस्र इमे वेदना उक्ता भगवता सुखा दुःखाऽदुःखासुखा च । उक्तं चेदं भगवता "यत्किंचिद्वेदितमिदमत्र दुःखस्ये"ति । किं नु संधाय भगवता भाषितं यत्किंचिद्वेदितमिदमत्र दुःखस्येति । एवं हि सोऽप्रक्ष्यत् किं नु संधाय भाषितं तिस्रो वेदना इति । भगवानप्येवं[2] व्याकरिष्यत् । इदं मया संधाय भाषितं तिस्रो वेदना इति । न त्वेवमाह । तस्मात्सन्त्येव स्वभावतस्तिस्रो वेदनाः । इदं तु संधाय मया भाषितं यत्किंचिद्वेदितमिदमत्र दुःखस्येत्याभिप्रायिकमेतद्वाक्यं दर्शयति । यदप्युक्तं "सुखा वेदना दुःखेति द्रष्टव्ये"ति । उभयं तस्यामस्ति । सुखत्वं च स्वभावतोमनापत्वाद् दुःखत्वं च पर्यायतो विपरिणामानित्यधर्मत्वात् । सा तु सुखतो दृश्यमाना बन्धाय कल्पते तदास्वादनात् । दुःखतो दृश्यमाना मोक्षाय कल्पते । तद्वैराग्यादिति । यथा दृश्यमाना मोक्षाय कल्पते तथैनां द्रष्टुमाज्ञापयन्ति बुद्धाः । कथमिदं गम्यते स्वभावतः सा सुखेति । य-[5b.17B1. III]दाह

संस्कारानित्यतां ज्ञात्वा अथो[3] विपरिणामताम् ।
वेदना दुःखतः प्रोक्ता संबुद्धेन प्रजानतेति ॥

यदपि चोक्तं "दुःखे सुखमिति संज्ञाविपर्यास" इति । आभिप्रायिक एष निर्देशः । लोकस्य हि सुखसंज्ञा वेदनायां कामगुणेषूपपत्तौ च । तत्र सुखां वेदनां पर्यायेण दुःखां सतीमेकान्तसुखां पश्यतो विपर्यासः । एवमुपपत्तिम् ।

तस्मान्नातः सुखवेदनाऽभावसिद्धिः । यदि तु स्वभावत एव सर्वं वेदितं दुःखमभविष्यत् तिस्रो वेदना इति वचने को गुणोऽभविष्यत् । लोकानुवृत्त्येति चेत्

१. Y. आकारान्तरेणापि । २. Y. अपि चैवं । ३. Ms. is not clear. It looks like अखो or सुखो ।

न। सर्ववेदितदुःखत्वस्य संस्कारविपरिणामानित्यतां[1] संधाय भाषितवचनात् यथाभूतवचनाच्च। "यच्च सुखेन्द्रियं यच्च सौमनस्येन्द्रियं सुखैषा वेदना द्रष्टव्ये"ति विस्तरेणोक्त्वा "येनेमानि पञ्चेन्द्रियाण्येवं यथाभूतं सम्यक् प्रज्ञया दृष्टानि त्रीणि चास्य संयोजनानि[2] प्रहीणानि भवन्ती"त्येवमादि। लोकोऽपि च कथं दुःखां वेदनां त्रिविधां व्यवस्येत्। मृद्वधिमात्रमध्यासु यथाक्रमं सुखादिबुद्धिरिति चेत्। न। सुखस्यापि त्रिविधत्वात् मृद्वादिषु दुःखेष्वधिमात्रा[3]दिसुखबुद्धिः स्यात्। यदा च गन्धर-[6a. 17A1. IV]सस्प्रष्टव्यविशेषजं सुखं वेदयते तदा कतमत् दुःखं मृदुभूतं यत्रास्य सुखबुद्धिर्भवति। अनुत्पन्नविनष्टे च तस्मिन्मृदुनि दुःखे सुतरां सुखबुद्धिः स्यात्। अशेषदुःखापगमात्। एवं कामसुखसंमुखीभावेऽपि वक्तव्यम्। कथं च नामेदं[4] योज्यते[5] यन्मृदुनि वेदिते सुव्यक्तस्तीव्रोऽनुभवो[6] गृह्यते मध्ये पुनरव्यक्त इति। त्रिषु च ध्यानेषु सुखवचनात् मृदु दुःखं स्यात्। ऊर्ध्वमदुःखसुखवचनान्मध्यं दुःखमिति न युज्यते मृद्वादिषु दुःखेषु सुखादिवेदनाव्यवस्थानम्। उक्तं च भगवता "रूपं चेन्महानामन्नेकान्तदुःखमभविष्यन्न सुखं न सुखानुगतमि"-त्येवमादि। तस्मादप्यस्ति किंचित्सुखम्। एवं तावन्न सूत्रात्सुखवेदनाऽभावः सिध्यति। यत्पुनः सुखहेत्वव्यवस्थानादित्युक्तम्। हेत्वपरिज्ञाना[7]दिदमुच्यते। आश्रयविशेषापेक्षो हि विषयः सुखहेतुर्वा भवति दुःखहेतुर्वा। न केवलो विषयः। स यां कामवस्थां[8] प्राप्य सुखहेतुर्भवति न तां पुनः प्राप्य कदाचिन्न भवतीति व्यवस्थित एव सुखहेतुः। तद्यथा स एवाग्निः पाक्यभूतविशेषापेक्षः स्वादुपाकहेतुर्भवति स एवास्वादपाकहेतुः न तु यां पाक्यभूतावस्थां प्राप्य स्वादुपाकहेतुस्तां पुनः प्राप्य न हेतुरित्येष दृष्टान्तः। [6b. 17B1. IV] ध्यानेषु च कथं न व्यवस्थितः सुखहेतुः। यत्तु पुनः दुःखप्रतिकारे सुखबुद्धिरित्युक्तं तत्र विहितः प्रतीकारः।[9] यदा गन्धादिविशेषजं सुखं वेदयते[10] तदा कस्य प्रतीकारेषु सुखबुद्धिर्भवत्यनुत्पन्नविनष्टे[11] च तस्मिन् दुःखे सुतरां सुखबुद्धिः स्यात्। ध्यानजे सुखे कः कस्य प्रतीकार इत्येवमादि। भावसंचारेऽपि चावस्थान्तरजं सुखमेवोत्पद्यते। यावदसौ तादृशी कायावस्थाऽन्तर्धीयते[12]। अन्यथा हि पश्चाद्भूयसी सुखबुद्धिः स्यात्। एवं श्रान्तस्येर्यापथविकल्पेषु वेदितव्यम्।

"अन्ते कुतो दुःखबुद्धिरारम्भो यदि नादित" इति

---

१. Ms °विपरिणाम...। २. Ms drops नि। ३. Ms. drops त्रा। ४. Y. नामैतत्। ५. Y. adopts योक्ष्यते। ६. Y. तीव्रानुभवो। ७. Ms seems to drop ना। ८. Ms यां कावस्थां। ९. Ms. प्रतीकारो यदा....। १०. Ms. वेदये। ११. Ms. विशिष्टे। १२. Y. seems to be अन्तरीयते।

चेत्। कायपरिणामविशेषान्मद्यादीनामन्ते माधुर्यशुक्तताvत्। तस्मादस्त्येव सुखा वेदनेति सिद्धम्। त्रिदुःखतायोगाद्वा सर्वं सास्रवं दुःखमिति। यत्तु समुदयसत्यं तदेवोच्यते। इदमुत्सूत्रम् सूत्रे हि तृष्णैवोक्ता। प्रधान्यादसौ सूत्र उक्ता। अन्येऽपि तु समुदयः। कथमिदं प्रत्येतव्यम्। अन्यत्रान्यस्यापि वचनात्। उक्तं हि भगवता।

"कर्म च तृष्णा च अथो[1] अविद्या संस्काराणां हेतुरभिसंपराय" इति।

पुनश्चोक्तं "पञ्च बीजजातानीति सोपादानस्य विज्ञानस्यैतदधिवचनम्। पृथिवीधातुरिति चतसृणां विज्ञानस्थितीनामेतदधिवचनमि"ति। तस्मादाभिप्रायिकः सूत्रेषु नि-[7a. 17A. V]र्देशो लाक्षणिकस्त्वभिधर्मे। अपि त्वभिनिर्वृत्तिहेतुं ब्रुवता समुदयसत्यं तृष्णैवोक्ता। उपपत्त्यभिनिर्वृत्तिहेतुं सहेतुकं ब्रुवता गाथायां कर्म च तृष्णा चाविद्योक्ता। "कर्महेतुरुपपत्तये तृष्णाहेतुरभिनिर्वृत्तय" इति सूत्रे वचनात्[2]। सहेतुसप्रत्ययसनिदानसूत्रक्रमेण वा बीजक्षेत्रभावं प्रतिपादयता विज्ञानादयोऽप्युक्ताः। का पुनरुपपत्तिः का चाभिनिर्वृत्तिः। धातुगतियोन्यादिप्रकारभेदेनात्मभावस्योपपदनमुपपत्तिः। अभेदेन पुनर्भवप्रतिसंधानमभिनिर्वृत्तिः। तयोर्यथाक्रमं कर्म च भवतृष्णा च हेतुः। तद्यथा बीजं शालियवादिजातिप्रकारभेदेनाङ्कुरोपपदनस्य हेतुः। आपः पुनरभेदेन सर्वाङ्कुरप्ररोहमात्रस्येत्येव दृष्टान्तः। तृष्णाऽभिनिर्वृत्तिहेतुरिति काऽत्र युक्तिः। वीततृष्णस्य जन्माभावात्। उभयेऽपि म्रियन्ते। सतृष्णा वीततृष्णाश्च। सतृष्णा एव जाता दृश्यन्ते न वीततृष्णा इति। विना तृष्णया जन्माभावात्। भवस्याभिनिर्वृत्तौ तृष्णाहेतुं प्रतीमः। संततिनमनाच्च[3]। यत्र च सतृष्णा[4] तत्राभीक्ष्णं चित्तसंततिं नमन्तीं पश्यामः। तस्मात् पुनर्भवेऽप्येनमिति व्यवस्यामः। न चात्मभाव एवं केन-[7b. 17B1. IV]चिदागृहीतो यथा तृष्णया। शुष्कमसूरोपस्नानलेपाङ्गवत्। न चान्यो हेतुरेवमनुषक्तो यथात्मस्नेह इत्येषा युक्तिः।

चत्वार्यपि सत्यान्युक्तानि भगवता। द्वे अपि सत्ये संवृतिसत्यं परमार्थसत्यं च। तयोः किं लक्षणम्।

---

१. Ms. चाथो। २. Y. सूत्रात् and it is explained as सूत्रान्तरे वचनात्। ३. Y. °नामनाच्च। ४. Y. adds चित्तसंततिः। It is expected also।

**यत्र भिन्नेन तद्बुद्धिरन्यापोहे धिया च तत् ।**
**घटार्थवत्संवृतिसत् परमार्थसदन्यथा ।।४।।**

यस्मिन्नवयवशो[1] भिन्ने न तद्बुद्धिर्भवति तत् संवृतिसत् । तद्यथा घटः । तत्र हि कपालशो भिन्ने घटबुद्धिर्न भवति । तत्र चान्यानपोह्य धर्मान् बुद्ध्या तद्बुद्धिर्न भवति तच्चापि संवृतिसद्वेदितव्यम् । तद्यथाम्बु । तत्र हि बुद्ध्या रूपादीन्धर्मानपोह्याम्बुबुद्धिर्न भवति । तेष्वेव तु संवृतिसंज्ञा कृतेति संवृतिवशात् घटश्चाम्बु चास्तीति ब्रुवन्तः सत्यमेवाहुर्न मृषेत्येतत्संवृतिसत्यम् । अतोन्यथा परमार्थसत्यम् । तत्र भिन्नेऽपि तद्बुद्धिर्भवत्येव । अन्यधर्मापोहेऽपि बुद्ध्या तत् परमार्थसत् । तद्यथा रूपम् । तत्र हि परमाणुशो भिन्ने वस्तुनि[2] रसादीनपि च धर्मानपोह्य बुद्ध्या रूपस्य स्वभावबुद्धिर्भवत्येव[3] । एवं वेदनादयोऽपि द्रष्टव्याः । एतत् परमार्थेन भावात् परमार्थसत्यमिति । यथा लोकोत्तरेण ज्ञानेन गृह्यते तत् पृष्ठलब्धेन वा लौकिकेन [8a. 17A$_1$. VI] तथा परमार्थसत्यम् । यथान्येन तथा संवृतिसत्यमिति पूर्वाचार्याः । उक्तानि सत्यानि ।

कथं पुनस्तेषां दर्शनं भवति । वक्तव्यम् । अत आदिप्रस्थानमारभ्योच्यते ।

**वृत्तस्थः श्रुतचिन्तावान्भावनायां प्रयुज्यते ।**

सत्यानि हृ द्रष्टुकाम आदित एव शीलं पालयति । ततः सत्यदर्शनस्यानुलोमं श्रुतमुद्गृह्णात्यर्थं वा शृणोति । श्रुत्वा चिन्तयति अविपरीतं चिन्तयित्वा भावनायां प्रयुज्यते । समाधौ तस्य श्रुतमयीं प्रज्ञां निश्रित्य चिन्तामयी जायते । चिन्तामयीं निश्रित्य भावनामयी जायते ।

किं पुनरासां प्रज्ञानां लक्षणम् ।

**नामोभयार्थविषया[4] श्रुतमय्यादिका[5] धियः ।।५।।**

नामालम्बना किल श्रुतमयी प्रज्ञा । नामार्थालम्बना चिन्तामयी । कदाचिद्व्यञ्जनेनार्थमाकर्षति कदाचिदर्थेन व्यञ्जनम् । अर्थालम्बनैव भावनामयी । सा हि व्यञ्जननिरपेक्षा अर्थे प्रवर्तते । तद्यथाऽम्भसि प्लोतुमशिक्षितः

१. Ms. यस्मिनवयवशो । २. Ms. वस्तुवनि । ३ Y. seems to be °स्वभावे ।
४. Ms. नामोभयार्थं विषयाः । ५. Ms. श्रुतमय्याधिका ।

प्लवन्नेव[1] मुञ्चति । कियच्छिक्षितः कदाचित् मुञ्चेत्[2] कदाचिदालम्बते । सुशिक्षितः प्लवन् निरपेक्षस्तरतीत्येष दृष्टान्तः इति वैभाषिकाः । अस्यां तु कल्पनायां चिन्तामयी प्रज्ञा न सिद्ध्यतीत्यपरे । याहि नामालम्बना श्रुतमयी प्राप्नोति यार्थालम्बना भावनामयीति । इदं तु लक्षणं [8b. 17B1. VI] नानिरवद्यं[3] विद्यते । आप्त[4]वचनप्रामाण्यजातनिश्चयः[5] श्रुतमयी । युक्तिनिध्यानजश्चिन्तामयी । समाधिजो भावनामयीति । हेतौ मयट्विधानात् । यद्यथाऽन्नमयाः प्राणाः तृणमय्यो[6] गावः इति ।

तस्य पुनरेवं भावनायां प्रयुक्तस्य कथं भावना संपद्यत इत्याह ।

**व्यपकर्षद्वयवतः**

यदि हि कायचित्ताभ्यां व्यपकृष्टो भवति । संसर्गाकुशलवितर्कदूरीकरणात् । तर्त्तहि व्यपकर्षद्वयं कस्य सुकरं भवति । योऽल्पेच्छः संतुष्टश्च ।

**नासंतुष्टमहेच्छयोः ।**

का पुनरियमसंतुष्टिः । का च महेच्छता ।

**लब्धे भूयःस्पृहाऽतुष्टिरलब्धेच्छा महेच्छता ।।६।।**

लब्धेषु किल प्रणीतेषु चीवरादिषु भूयस्कामताऽसंतुष्टिः । अलब्धेषु तत्कामता महेच्छतेत्याभिधार्मिकाः । ननु च साऽतिभूयस्कामताऽलब्ध एव न लब्धे भवतीति कोऽनयोर्विशेष इति वक्तव्यमेतद् । एवं तु[7] युज्यते । लब्धेनाप्रणीतेनाप्रभूतेन[8] परितापोऽसंतुष्टिः । अलब्धप्रणीतप्रभूतेच्छा महेच्छता ।

**विपर्यासात्तद्विपक्षौ[9]**

असंतुष्टिमहेच्छताविपर्ययेण तत्प्रतिपक्षौ वेदितव्यौ । संतुष्टिश्चाल्पेच्छता चेति ।

---

१. Ms. प्लवन्नैव । २. Ms. कदाचित्मुञ्चेत् । मुञ्चति seems to be correct ।
३. Ms. looks like लक्षणमा सानिरवद्यं । ४. Ms. प्राप्त । ५. Ms. जाति··· ।
६. Ms. तृणमयो । ७. Ms. °तदेवन्तु । ८ Ms. लब्धो··· । ९. G. विपर्ययात् ।

**त्रिधात्वाप्तामलौ च तौ ।**

तद्विपक्षाविति वर्तते । त्रिधातुकौ च प्रतिसंयुक्तौ च । सास्रवानास्रवत्वात् । असंतुष्टिमहेच्छते च का-[9a. 17A1. VII.]मावचर्यविव ।

कः पुनरनयोरल्पेच्छतासंतुष्टचोः स्वभाव इत्याह ।

**अलोभः**

अलोभस्वभावे ह्येते[1] ।

**आर्यवंशाश्च**

अलोभ इति वर्तते । आर्याणामेभ्यः प्रसवादार्यवंशाश्चत्वारः । तेऽप्यलोभस्वभावाः ।

**तेषां तुष्टचात्मकास्त्रयः ॥७॥**

संतुष्टिस्वभावाः । चीवरपिण्डपातशयनासनसंतुष्टयः । प्रहाणभावनारामता चतुर्थ आर्यवंशः कथमलोभस्वभावः । भवकामरागवैमुख्यात् ।

अथ चतुर्भिरार्यवंशैः किं दर्शितं भगवता ।

**कर्मान्तेन[2] त्रिभिर्वृत्तिः**

धर्मस्वामिना हि भगवता परित्यक्तस्ववृत्तिकर्मान्तेभ्यः शिष्येभ्यो मोक्षार्थमभ्युपगतेभ्यो द्वयं प्रज्ञप्तं वृत्तिश्च कर्म च । त्रिभिरार्यवंशैर्वृत्तिश्चतुर्थेन कर्म । अनया वृत्त्येदं कर्म कुर्वाणा[3] भवन्तो न चिरान्मोक्षं प्राप्स्यन्तीति । कस्मात्पुनरियमीदृशी वृत्तिरिदं च कर्म प्रज्ञप्तम् ।

**तृष्णोत्पादविपक्षतः ।**

चत्वारस्तृष्णोत्पादाः सूत्र उक्ताः । "चीवरहेतोर्भिक्षोस्तृष्णोत्पद्यमाना उत्पद्यते प्रतितिष्ठन्ति प्रतितिष्ठति अभिनिविशमानाऽभिनिविशते[4] । पिण्डपातहेतोः शय्यासनहेतोरिति । भवविभवहेतोर्भिक्षोस्तृष्णोत्पद्यमाना उत्पद्यत" इति विस्तरः ।

---

१. Ms. ह्येतौ । २. G. कर्मान्त्येन । ३. Ms. कुर्वाणो । ४ Ms. drops मा ।

एषां प्रतिपक्षेण चत्वार आर्यवंशा देशिताः ।

**मम-[9b. 17B1. VII]माह्ंकारवस्त्विच्छातत्कालात्यन्तशान्तये ॥८॥**

स एवार्थः पुनः परिशेषेणोच्यते । ममकारवस्तु चीवरादयोऽहंकारवस्त्वात्मभावः । तत्रेच्छा तृष्णा । तत्र ममकारवस्त्विच्छायास्तत्कालशान्तये त्रय आर्यवंशा भवन्ति । उभयेच्छात्यन्तशान्तये चतुर्थ इति । उक्तमिदं यथा भूतस्य भावना संपद्यते ।

तस्य त्वेवं पात्रीभूतस्य कथं तस्यां भावनायामवतारो भवति ।

**तत्रावतारोऽशुभया चानापानस्मृतेन च ।**

स्मृतिरेव स्मृतम् । केषां पुनरशुभया केषामानापानस्मृत्या । यथाक्रमम्

**अधिरागवितर्काणाम्**

अधिको रागो वितर्कश्चैषां त इमे अधिरागवितर्काः । यो हि प्रत्यासन्नमत्यर्थं रागचरितस्तस्याशुभया । यो हि वितर्कचरितस्तस्यानापानस्मृत्येति । अविचित्रालम्वनत्वादेषां वितर्कोपच्छेदाय संवर्तत इत्येके । अशुभा तु यत्र संस्थानविशेषालम्वनत्वाद्वितर्कमावहतीति । अवहिर्मुखत्वादित्यपरे । अशुभा हि चक्षुर्विज्ञानवद्वहिर्मुखी । तद्विषयोपनिध्यानात् । तत्र पुनश्चतुर्विधो रागः वर्णरागः संस्थानरागः स्पर्शराग उपचाररागश्च । प्रथमस्य प्रतिपक्षेण विनीलकाद्यालम्वनामशुभां[1] वर्जयन्ति । द्वितीय-[10a. 17A1. VIII]स्य विखादितकविक्षिप्तालम्वनां तृतीयस्य विपटुम्ना[2] पूयनिवद्धास्थ्यालम्वनां चतुर्थस्य निश्चेष्टमृतकायालम्वनाम्[3] । अभेदेन तु शस्यते

**शंकला[4] सर्वरागिणाम् ॥९॥**

---

१. Ms. विनीलकाद्यालकाद्यालम्वना''''। Here लकाद्या seems to be repeated. Y. विनीलकाद्याकारालम्वनाम् । २. Y. The word seems to be विपटुमकम् । ३. Ms. °कायाम्वलम्वनम् । ४. Ms. drops ला । The MS. has both spellings शंकला and संकला ।

अस्थिसंकलायां हि सर्वमेतच्चतुर्विधं रागस्तु नास्तीति अधिमुक्तिप्रादेशिकमनस्कारत्वादशुभया[1] न क्लेशप्रहाणं विष्कम्भणं तु । स पुनरयमशुभां भावयन्योगाचारस्त्रिविध उच्यते । आदिकर्मिकः कृतपरिजयोऽतिक्रान्तमनस्कारश्च । तत्र

**आसमुद्रास्थिविस्तारसंक्षेपादादिकर्मिकः ।**

अशुभां भावयितुकाम आदितो योगाचारः । स्वाङ्गावयवे चित्तं निवध्नाति[2] पादाङ्गुष्ठे ललाटे यत्र चास्याभिरतिः । स तत्र मांसक्लेदपीता[3]धिमोक्षक्रमेणास्थि विशोधयन् सकलामस्थिसंकलां[4] पश्यति । तथैव च पुनर्द्वितीयामधिमुच्यते यावद्विहारारामक्षेत्रक्रमेण समुद्रपर्यन्तां पृथिवीमस्थिसंकलां पूर्णामधिमुच्यतेऽधिमोक्षाभिवर्धनार्थम् । पुनश्च संक्षिपन्यावदेकामेव स्वामस्थिसंकलामधिमुच्यते चित्तसंक्षेपार्थम् । इयता किल कालेनाशुभा परिनिष्पन्ना भवति । अयमादिकर्मिको योगाचारः ।

**पादास्थ्न आकपालार्धत्यागात् कृतजयः स्मृतः ।।१०।।**

स पुनः [10b. 17B1. VIII] चित्तसंक्षेपविशेषार्थं तस्यामस्थिशंकलायां पादास्थीनि हित्वा शेषं मनसि करोति । एवं क्रमेण यावत् कपालस्यार्धं हित्वाऽर्धं मनसि करोति क्षयकृतपरिजयः ।

**अतिक्रान्तमनस्कारो भ्रूमध्ये चित्तधारणात् ।**

सोऽर्धमपि कपालस्य मुक्त्वा भ्रुवोर्मध्ये चित्तं धारयति । अयं किलाशुभायामतिक्रान्तमनस्कारो योगाचारः । अस्त्यशुभा आलम्वनपरीत्ततया परीत्ता न वशितापरीत्ततया परीत्तेति चतुष्कोटिकम् । जिताजितमनस्कारयोरजितजितमनस्कारयोश्च स्वकायसमुद्रपर्यन्तालम्वनात् ।

अथ किंस्वभावेयमशुभा कतिभूमिका किमालम्वना क्व चोत्पद्यते । यथाक्रमम्

**अलोभो दशभूः कामदृश्यालम्बा नृजाऽशुभा ।।११।।**

अलोभस्वभावा दशभूमिका ससामन्तकध्यानान्तरेषु चतुर्षु ध्यानेषु कामधातौ च कामावचर[5]दृश्यालम्वना किं पुनर्दृश्यवस्तुसंस्थाने । अत एवार्थालम्वनेति सिद्धम् । मनुष्येष्वेवोत्पद्यते । नान्यस्यां गतौ । कुत एव धातौ ।

---

१. Y. °मनसिकार°...। २. Y. उपनिबध्नोति । ३. It is not clear । ४. Y. शंकलां । ५. Ms. कामवचर० ।

तत्रापि नोत्तरकुरौ। नाम्नैव सिद्धमशुभाकारेति[1]। यदध्विका तदध्वालम्वना। अनुत्पत्तिधर्मिणी तु त्र्यध्वालम्वना। अधिमुक्तिमनस्कारत्वात्सास्रवा[2]। वैराग्यलाभिकी च प्रायो-[11a. 18A. I]गिकी च। उचितानुचितत्वात्। उक्तमशुभायाः सप्रभेदं लक्षणम्।

**आनापानस्मृतिः प्रज्ञा पञ्चभूर्वायुगोचरा।**

**कामाश्रया**

आननमान आश्वासो यो वायुः प्रविशति। अपाननमपानः प्रश्वासो यो वायुः निष्क्रामति। तयोः स्मृतिरानापानस्मृतिः। सैव प्रज्ञास्वभावा। स्मृतिवचनं तु स्मृत्युपस्थानवत्तद्वलाधानवृत्तित्वात्। पञ्चसु भूमिसु त्रिषु सामन्तकेषु ध्यानान्तरे कामधातौ चोपेक्षासंप्रयोगित्वात्। वितर्कानुगुणत्वात् किल सुखदुःखयोस्तत्प्रतिपक्षस्य ताभ्यामसंप्रयोगः। सुखसौमनस्ययोश्चावधानपरिपन्थित्वात् तस्याश्चावधाने साध्यत्वादिति[3]। ये तु[4] मौलेष्वपि ध्यानेषु समापन्नस्योपेक्षामिच्छन्ति तेषामष्टभूमिका। परेगाश्वासप्रश्वासानामभूमित्वात्। वाय्वालम्वना चैषा कामधात्वाश्रया। देवमनुष्येषु प्रायोगिकी वैराग्यलाभिकी च। तत्वमनस्कारश्चैषा। इदं धर्माणामेव।

**न बाह्यानाम्**

उपदेशाभावात्। स्वयं च सूक्ष्मधर्मानभिसंवोधात्। सा चेयं

**षड्विधा गणनादिभिः ॥१२॥**

षट्कारणयुक्ता चैषा परिपूर्णा भवति। गणनयाऽनुगमेन स्थापनया उपलक्षणया विवर्त्तेन परिशुद्धया च। तत्र च गण-[11b. 18B. I]ना नाम आश्वासप्रश्वासेषु चित्तं दत्वाऽनभिसंस्कारेण[5] कायं चित्तं चा[6]ध्युपेक्ष्य स्मृतिमात्रेण गणयत्येकं द्वौ यावद्दश। चित्ताभिसंक्षेप विक्षेपभयान्नाल्पबहुतरा। तस्यां तु त्रयो दोषाः। ऊनगणना यदि द्वावेकं गृह्णाति। अधिकगणना यद्येकं द्वाविति। संकरो यद्याश्वासं प्रश्वासतो गृह्णाति विपर्ययाद्वा। अतोऽन्यथा

१. Ms. अशुभाकरोति। २. Y. मनसिकार...। ३. Y. अवधानसाध्यत्वात्। ४. Y. seems to add one किल somewhere here। ५. Ms. One letter before न seems to be cancelled; but it is not clear। ६. Y. वा।

सम्यग्गणना। अन्तरविक्षेपे पुनरादितो गणयितव्यं तावद्यावत्समाधिं लभते। अनुगमो नाम अनभिसंस्कारेणाश्वासप्रश्वासानां गतिमनुगच्छति। कियद्दूरमेते प्रविशन्ति वा निष्क्रामन्ति वा किमेते सर्वशरीरव्यापिन एकदेशचारिण इति। तान् प्रविशतः कण्ठहृदयनाभिकट्युरुजङ्घाप्रवेशक्रमेण यावत् पादावनुगच्छति। निष्क्रामतो वितस्तिव्यामान्तरं यावद्वायुमण्डलं वेरम्भाश्च वायव इत्यपरे। तदेतत्तत्त्वमनसिकारत्वान्न युक्तम्[1]। स्थापना नाम नासिकाग्रे यावत् पादाङ्गुष्ठे स्थितां पश्यति। मणिसूत्रवत्। किमनुग्राहका एते उपघातकाः शीता उष्णा इति। उपलक्षणा नाम नैते केवला वायव एव। चत्वार्येतानि महाभूतानि महाभूताभिनिर्वृत्तमुपादायरूपं तदा-[12a. 18A. II]श्रिताश्चित्तचैत्ता इति पञ्चस्कन्धानुपलक्षयति। विवर्तो नाम वाय्वालम्बनां वृद्धिं विवर्त्योत्तरेषु[2] कुशलमूलेषु संनियोजनं यावदग्रधर्मेषु। परिशुद्धिर्दर्शनमार्गादिष्ववतारः। स्मृत्युपस्थानादिवज्रोपमसमाध्यन्ता विवर्त इत्यपरे। क्षयज्ञानादिशुद्धिरिति[3]।

**गणनानुगमः[4] स्थानं लक्षणा[5]थंविवर्त्तना**
**परिशुद्धिश्च षोढेयमानापानस्मृतिर्मता इति संग्रहश्लोकाः[6]।**

तत्र पुनर्वेदितव्यौ

**आनापानौ यतः कायः**

यद्भूमिको[7] हि कायः तद्भूमिकावेतौ[8]। कायैकदेशत्वात्। कायचित्तविशेषसंनिश्रिता आश्वासप्रश्वासा वर्तन्ते। आरूप्यकललादिगतानामभावात् अचित्तचतुर्थध्यानसमापन्नानां च। यदि हि कायः शुषिरो भवति आश्वासप्रश्वासभूमिकं च चित्तं संमुखीभूतमेवं ते वर्त्तन्ते। जायमानस्य चतुर्थध्यानाद्व्युत्तिष्ठमानस्य च प्रविशन्ति म्रियमाणस्य चतुर्थं च ध्यानं समापद्यमानस्य निष्क्रामन्ति। एतौ चानापानौ।

**सत्त्वाख्यौ**

नासत्त्वसंख्यातौ।

**अनुपात्तकौ।**

---

१. Y. puts एतत् after युक्तम्। २. Y. उत्तरोत्तरेषु। ३. Y. विशुद्धिः। ४. Ms. °नुगम। ५. Ms. लम्बना। ६. It is not regarded as a Kārikā in both the Chinese translations। ७. Ms. यत्.....। ८. Ms. तत्.....।

इन्द्रियविनिर्भागित्वात् ।

**नैःष्यन्दिकौ**[1]

नौपचयिकविपाकजौ । कायोपचयेनानुपचयात्[2] छिन्नानां[3] पुनः प्रतिसंधानाच्च । नह्येतद्विपाकरू-[12b. 18B. II]पस्यास्ति ।

**नाधरेण[4] लक्ष्येते मनसा च तौ ॥१३॥**

स्वभूम्युपरिभूमिकेन च तयोश्चित्तेनोपलक्षणम् । नाधरेणेर्यापथिक[5]नैर्माणिकेन । उक्ते द्वे अवतारमुखे । ताभ्यां तु समाधिलब्धा

**निष्पन्नशमथः कुर्यात् स्मृत्युपस्थानभावनाम् ।**

विपश्यनायाः संपादनार्थम् । कथं च पुनः कुर्यात् ।

**कायविच्चित्तधर्माणां द्विलक्षणपरीक्षणात् ॥१४॥**

कायं स्वसामान्यलक्षणाभ्यां परीक्षते । वेदनां चित्तं धर्मांश्च । स्वभाव एवैषां स्वलक्षणम् । सामान्यलक्षणं तु अनित्यता संस्कृतानां दुःखता सास्रवाणां शून्यताऽनात्मते सर्वधर्माणाम् । कायस्य पुनः कः स्वभावः । भूतभौतिकत्वम् । धर्मास्त्रिभ्योऽन्ये । सामाहितस्य किल कायं परमाणुशः क्षणिकतश्च पश्यतः कायस्मृत्युपस्थानं निष्पन्नं भवति ।

अथ स्मृत्युपस्थानानां कः स्वभावः । त्रिविधस्मृत्युपस्थानं स्वभावसंसर्गालम्बनस्मृत्युपस्थानम् । तत्र स्वभावस्मृत्युपस्थानम्

**प्रज्ञा**

कीदृशी प्रज्ञा ।

**श्रुतादिमयी**

---

१. G. नैष्यन्दिकौ । २. Y. अपचयात् । ३. Y. उच्छिन्नानाम् । ४. G. नावरेण । ५. Y. नाधरेणैर्या° ।

श्रुतमयी चिन्तामयी भावनामयी च। त्रिविधानि स्मृत्युपस्थानानि श्रुतचिन्ताभावनामयानि।

**अन्ये संसर्गालम्बना:**[1]

अन्ये तत्सहभुवो धर्माः संसर्गस्मृत्युपस्थानम्। तदालम्बना[2] आलम्बन-स्मृत्युपस्थानम्। स्वभावस्मृत्युपस्थानं प्रज्ञेति। कुत ए-[13a. 18A. III]व तत्। "कामे कायानुपश्यना स्मृत्युपस्थान"मिति वचनात्। का पुनरनुपश्यना। प्रज्ञा। तथा हि तद्वाननुपश्यः क्रियते। यतश्चोक्त"मध्यात्मं काये कायानुपश्यी विहरतो"ति। अनुपश्यमस्यास्ति दर्शनमित्यनुपश्यी। कायेऽनुपश्यी कायानुपश्यी। कस्मात् प्रज्ञा स्मृत्युपस्थानमित्युक्ता भगवता। स्मृत्युद्रेकत्वादिति वैभाषिकाः। स्मृतिबलाधानवृत्तित्वादिति योऽर्थः। दारुपाटन[3]कीलसंधारणवत्। एवं तु युज्यते। स्मृतिरनयोपतिष्ठत इति स्मृत्युपस्थानं प्रज्ञा यथादृष्टस्याभिलपनात्। तद्यथा ह्युक्तमायुष्मता अनिरुद्धेन "तस्य काये कायानुपश्यिनो विहरतः कायालम्बनानुस्मृतिस्तिष्ठति संतिष्ठत" इति विस्तरः। भगवताऽपि चोक्तं "तस्य काये कायानुपश्यिनो विहरत उपस्थिता स्मृतिर्भवत्यसंमूढे"ति। यत्र तूक्तं "कथं भिक्षवश्चतुर्णां स्मृत्युपस्थानानां समुदयश्च भवत्यस्तंगमश्च। आहारसमुदयात्कायस्य समुदयो भवत्याहारनिरोधात्कायस्यास्तंगम"इत्यत्रालम्बनमेव स्मृत्युपस्थानमुक्तम्। स्मृतिरत्रोपतिष्ठत इति कृत्वा। यथालम्बनं चैषां नाम स्वपरोभयसंतत्यालम्बनत्वात् प्रत्येकमेषां त्रैविध्यम्।

**क्रमः।**

**यथोत्पत्ति**

कस्मात्पुनरेव-[13b. 18B. III]मुत्पत्तिः। औदारिकस्य पूर्वं दर्शनात्। यतो वा कामरागस्य कायोऽधिष्ठानं स च वेदनाऽभिलाषात्स च चित्तस्यादान्तत्वात् तत्क्लेशाप्रहाणादिति वैभाषिकाः।

**चतुष्कं तु विपर्यासविपक्षतः ॥१५॥**

---

१. Y. G. लम्बनात्। २. Y. तदालम्बनात् and quotes it as a different reading। ३ Y. °पाटः।

शुचिसुखनित्यात्मविपर्यासानां चतुर्णां प्रतिपक्षेण चत्वारि स्मृत्युपस्थानान्युक्तानि यथाक्रमं नाधिकन्यूनानि एवं च त्रीण्यसंभिन्नालम्बनानि चतुर्थमुभयथा। यदि धर्मानेव पश्यत्यसंभिन्नालम्वनम्। अथ कायादीनां द्वे त्रीणि चत्वारि वा समस्तानि पश्यति संभिन्नालम्वनम्। एवं कायाद्यालम्वनानि स्मृत्युपस्थानान्यभ्यस्य

**स धर्मस्मृत्युपस्थाने समस्तालम्बने स्थितः ।**
**अनित्यदुःखतः शून्यानात्मतस्तान्विपश्यति ॥१६॥**

संभिन्नालम्वने धर्मस्मृत्युपस्थाने स्थितस्तान् कायादीन् सर्वानभिसमस्य चतुर्भिराकारैः पश्यति। अनित्यतो दुःखतः शून्यतोऽनात्मतश्च।

**तत ऊष्मगतोत्पत्तिः**

तस्माद्धर्मस्मृत्युपस्थानादेवमभ्यस्तात् क्रमेणोष्मगतं नाम कुशलमूलमुत्पद्यते। ऊष्मगतमिवोष्मगतम्। क्लेशेन्धनदहनस्यार्यमार्गाग्नेः पूर्वरूपत्वात्।

**तच्चतुःसत्यगोचरम् ।**

तदूष्मगतं प्राकर्षिकत्वाच्चतुःसत्यालम्वनम्।

**षोडशाकारम्**

दुःखं चतुर्भिराकारैः [14a. 18A. IV] पश्यत्यनित्यतो दुःखतः शून्यतोऽनात्मतश्च। समुदयं चतुर्भिर्हेतुतः समुदयतः प्रभवतः प्रत्ययतश्च। निरोधं चतुर्भिः निरोधतः शान्ततः प्रणीततो निःसरणतश्च। मार्गं चतुर्भिर्मार्गतो न्यायतः प्रतिपत्तितो नैर्याणिकतश्च[1]। एषां तु विशेषणं पश्चाद्वक्ष्यामः।

**ऊष्मभ्यो मूर्धानः**

मृदुमध्याधिमात्रक्रमाभिवृद्धेभ्य ऊष्मभ्यो मूर्धान उत्पद्यन्ते।

**तेऽपि तादृशाः ॥१७॥**

---

१. Ms. नैर्म्माणिकतश्च।

यादृशा ऊष्माणश्चतुःसत्यालम्बनाः षोडशाकाराश्च। उत्कृष्टतरत्वात्तु नामान्तरं चल[1]कुशलमूलमूर्धत्वात् मूर्धानः[2]। एभ्यो हि पातोऽतिक्रमो वा।

**उभयाकरणं धर्मेण**

एषां पुनरुभयेषामूष्मगतमूर्ध्नां[3] धर्मस्मृत्युपस्थानेनाकरणम्। किमिदमाकरणम्। सत्येष्वाकाराणां प्रथमतो विन्यसनम्।

**अन्यैरपि तु वर्धनम्।**

चतुर्भिरपि स्मृत्युपस्थानैरेषां वर्धनम्। विवर्धयतः पूर्वप्रतिलब्धानामसंमुखीभावोऽवहुमानत्वात्[4]। मृदुमध्याधिमात्रक्रमाभिवृद्धेभ्यः पुनरुत्पद्यते

**तेभ्यः क्षान्तिः**

अधिमात्रस्य क्षमणादपरिहाणितः। साऽपि त्रिप्रकारा मृद्वी मध्याऽधिमात्रा च।

**द्विधा तद्वत्**

यथा मूर्धान उक्ताः एवं मृदुमध्ये क्षान्ती तथैवाकरणात्। विवर्धने त्व- [14b. 18B. IV]यं विशेषः। सर्वस्याः

**क्षान्त्या धर्मेण वर्धनम्॥१८॥**

स्मृत्युपस्थानेनैव नान्येन।

**कामाप्तदुःखविषया त्वधिमात्रा**

क्षान्तिरिति वर्त्तते। अग्रधर्मसंश्लेषादसौ[5] कामावचरदुःखालम्बनैव। अत एवोष्मगतादीनां त्रैधातुकदुःखाद्यालम्बनत्वसिद्धिर्नियमावचनात्। यदा किल रूपारूप्यप्रतिपक्षाद्येकैकसत्यालम्बनापह्रासेन[6] यावत् कावावचरमेव दुखं द्वाभ्यां क्षणाभ्यां मनसि करोत्येषा सर्वैव मध्या क्षान्तिर्यदैकमेव क्षणं तदधिमात्रेति।

---

१. Ms. drops ल। २. Ms. °मूर्द्धत्वात्मूर्द्धानः। ३. Ms. °मूर्द्धा°। ४. Y. अवहुमानात्। ५. Y. °धर्मश्लेषाद्। ६. Y. प्रतिपक्षादीनाम्....।

**क्षणं च सा ।**

क्षणिका चासौ न प्राकर्षिकी ।

**तथाग्रधर्माः**

यथैवाधिमात्रा क्षान्तिः । तेऽपि हि कामावचरदुःखालम्बनाः क्षणिकाश्च लौकिकाश्चैतेऽग्राश्च धर्माः । सर्वलौकिकश्रेष्ठत्वादिति लौकिकाग्रधर्माः । विना सभागहेतुना मार्गस्य तत्पुरुषकारेणाकर्षणात्[1] । त एत ऊष्मगतादयः स्मृत्युपस्थानस्वभावत्वात् प्रज्ञात्मका उच्यन्ते ।

**सर्वे तु पञ्चस्कन्धाः**

सपरिवारग्रहणात् ।

**विनाप्तिभिः ॥१९॥**

प्राप्तयो नोष्मगतादिभिः संगृह्यन्ते । मा भूदार्यस्य तत्संमुखीभावादूष्मगतादीनां संमुखीभाव इति । तत्र त्रिसत्यालम्बनोष्मगताकर-[15a. 18A. IV]णे[2] धर्मस्मृत्युपस्थानं प्रत्युत्पन्नमनागतानि चत्वारि भाव्यन्ते । निरोधसत्यालम्बने तदेवोभयथा । सर्वत्राकाराः सभागाः[3] । विवर्धने चतुर्णामन्यतमदनागतानि चत्वारि । तत्रैव निरोधालम्बनेऽन्त्यमनागतानि चत्वारि आकाराः सर्वे । लब्धत्वाद्गोत्राणाम् । मूर्धाकरणे चतुःसत्यालम्बनेऽपि निरोधालम्बनवर्धने[4] चान्त्यमनागतानि चत्वारि आकाराः सर्वे । त्रिसत्यालम्बनवर्धने[5] चतु[6]र्णामन्यतमदनागतानि चत्वारि आकाराः सर्वे । क्षान्तीनां सर्वत्र चान्त्यम्[7] । अनागतानि चत्वारि आकाराः सर्वे । अग्रधर्मेष्वन्त्यमनागतानि चत्वारि आकाराश्चत्वार एव । अन्याभावाद्दर्शनमार्गसादृश्याच्च ।

**इति निर्वेधभागीयं चतुर्धा**

---

१. Y. मार्गाकर्षणात् । २. Y. also reads like this. But is it त्रिसत्यालम्बन ऊष्मगताकरणे ? ३. Ms. सभागा विवर्द्धने । ४. Y. °विवर्धनेपि । ५. Y. विवर्धने and adds तु । ६. Ms. drops तु । ७. Y. omits. च ।

इत्येतानि चत्वारि निर्वेधभागीयानि कुशलमूलानि यदुतोष्मगतं मूर्धानः क्षान्तयोऽग्रधर्माश्च । एषां द्वे मृदूनी चलत्वात् परिहाणितः क्षान्तयो मध्यमग्रधर्मा अधिमात्रम्[1] । निर्वेधभागीयानीति कोऽर्थः । विध विभागे । निश्चितो वेधो निर्वेधः आर्यमार्गस्तेन विचिकित्सा प्रहाणात् सत्यानां च विभजनादिदं दुःखमयं यावत् मार्ग इति । तस्य भागो दर्शनमार्गैकदेशः । तस्यावाहक-[15b. 18B. V] त्वेन हितत्वान्निर्वेधभागीयानि । तच्चैतच्चतुर्विधमपि निर्वेधभागीयम्

**भावनामयम् ।**

न श्रुतचिन्तामयम् ।

**अनागम्या[2]न्तरध्यानभूमिकम्[3]**

अनागम्यं[4] ध्यानान्तरं चत्वारि च ध्यानान्यस्य भूमिस्तत्संगृहीतत्वात् । नोर्ध्वं[5] दर्शनमार्गपरिवारत्वात् । तदभावः कामधात्वालम्बनत्वात् । तस्य च पूर्वपरिज्ञेयप्रहेयत्वात् । तेषां रूपधातौ पञ्चस्कन्धको विपाकः । पूरिपूरकाण्येव[6]-नाक्षेपकाणि । भवद्वेषित्वात् ।

**द्वे त्वधोऽपि वा ।।२०।।**

वाशब्दो मतविकल्पार्थः । भदन्तघोषकस्य तु द्वे प्रथमे निर्वेधभागीये सप्तभूमिके कामावचरे अपि तः ।

सर्वाण्यपि त्वेतानि चत्वारि

**कामाश्रयाणि**

त्रीणि मनुष्येष्वेवोत्पद्यन्ते[7] । त्रिषु द्वीपेषु । उत्पादितपूर्वाणां तु देवेषु संमुखीभावः । चतुर्थं देवेष्वपि । त्रीणि स्त्रीपुरुषा उभयाश्रयाणि लभन्ते ।

**अग्रधर्मान् द्व्याश्रयान्[8] लभतेऽङ्गना[9] ।**

---

१. Ms. धर्माधिमात्रम् । २. Ms. अनागाम्या॰ । ३. Ms. drops भूमिक । ४. Ms. अनागाम्यं । ५. Ms. नोर्द्ध.... । ६. Y. परिपूरिकाण्येव । ७. Ms. °त्पाद्यन्ते । ८. Ms. व्याश्रयान् । ९. Ms. drops ङ्गना ।

अग्रधर्मास्तु स्त्र्येव द्व्याश्रयान् लभते। पुरुषः पुरुषाश्रयानेव। स्त्रीत्वस्याप्रतिसंख्यानिरोधलाभात्। कथं निर्वेधभागीयानां त्यागः।

**भूमित्यागात्त्यजत्यार्यस्तानि**

यद्भूमिकान्यनेन प्रतिलब्धानि भवन्ति तां भूमि त्यजन्नार्यस्तान्यपि त्य-[16a. 17A. VI]जति नान्यथा भूमित्यागः पुनर्भूमिसंचारात्।

**अनार्यस्तु मृत्युना ॥२१॥**

पृथग्जनस्तु निकायसभागत्यागेनैव त्यजति सत्यसति वा भूमिसंचारे।

**आद्ये द्वे परिहाण्या च**

त्यजति मृत्युना च पृथग्जन एव। आर्यस्य तु नास्ति ताभ्यां परिहाणिः। क्षान्त्यग्रधर्माभ्यां तु पृथग्जनस्यापि नास्ति परिहाणिः।

**मौलेस्तत्रैव सत्यदृक्।**

यो मौलध्यानभूमिकानि निर्वेधभागीयान्युत्पादयति स तत्रैव जन्मनि सत्यान्यवश्यं पश्यति। तीव्रसंवेगत्वात्।

**अपूर्वाप्तिर्विहीनेषु**

यदा विहीनेषु पुनर्लाभो भवत्यपूर्वाण्येव तदा लभ्यन्ते न पूर्वं त्यक्तानि। प्रतिमोक्षसंवरवदनुचितयत्नसाध्यत्वात्। सति प्रतिसीमादैशिके परेणोत्पादयन्त्यसति मूलादेव।

एते पुनर्विहीनिपरिहाणी किंस्वभावे।

**हानी द्वे असमन्वितिः ॥२२॥**

उभे अप्येते असमन्वागमस्वभावे। परिहाणिस्तु दोषकृता नावश्यं विहानिः। गुणविशेषकृता च सा। परिहीणो[1]ऽप्यूष्मगतलाभी नियतं परिनिर्वाणधर्मा भवति। मोक्षभागीयात्को विशेषः। सत्यदर्शनासन्नतरत्वमसत्यन्तराये।

---

१. Ms. परिहाणो।

**मूर्धलाभी न मूलच्छित्**

परिहीणोऽपि मूं-[16b. 18B. VI]र्धलाभी कुशलमूलानि न समुच्छिन्नत्ति। अपायांस्तु पापादानन्तर्याण्यपि कुर्यात्।

**क्षान्तिलाभ्यनपायगः[1]।**

विहीनायामपि क्षान्तौ न पुनरपायान्याति तद्भूमिक[2]कर्मक्लेशदूरीकरणात्। क्षान्तिलाभादेव हि गतियोन्युपपत्त्याश्रयाष्टमादिभवक्लेशानां केषांचिदनुत्पत्तिधर्मता प्रतिलभते। अपायगतीनामण्डजसंस्वेदजयोन्योरसंज्ञि[3]-सत्त्वोत्तरकुरुमहाब्रह्मोपपत्तीनां शण्ढ[4]पण्डकोभयव्यञ्जनाश्रयाणामष्टमादिभवानां दर्शनहेयक्लेशानां च। तां तु यथायोगं मृद्वधिमात्रायां च। मृद्व्यामपायगतीनाम्। अधिमात्रायामितरेषाम्। निर्वेधभागीयानि त्रिगोत्राणि श्रावकादिगोत्रभेदात्। तत्र

**शिष्यगोत्रा[5]न्निवर्त्य[6] द्वे बुद्धः स्यात्**

ऊष्मगतं मूर्धानं च श्रावकगोत्रादुत्पन्नं व्यावर्त्य पुनर्बुद्धः स्यादित्यस्ति संभवः। क्षान्तौ तु लब्धायां नास्त्येव संभवः। किं कारणम्। अपायानां किल व्यावृत्तत्वात्। बोधिसत्त्वाश्च परहितक्रियापारतन्त्र्यादपायानप्यवगाहन्त इति। तस्यैव तु गोत्रस्याविवर्त्यत्वादसंभवः।

**त्रीण्यपोतरः ॥२३॥**

विवर्त्य[7] स्यादिति वर्तते। त्रीण्यपि निर्वेधभागी-[17a. 18A. VII]यानि श्रावकगोत्राद्व्यावर्त्य बुद्धादिभवः स्यात् प्रत्येकबुद्ध इत्यर्थः। प्रत्येकबुद्धगोत्राणि तु व्यावर्तयितुमशक्यानि।

**आबोधेः सर्वमेकत्र ध्यानान्त्ये शास्तृखड्गयोः।**

शास्ता बुद्धः खड्गविषाणकल्पः प्रत्येकबुद्धः। तयोरेकत्रैवासने चतुर्थमेव ध्यानं निश्रित्यनिञ्ज्यपटुसमाधित्वान्निर्वेधभागीयान्यारभ्य यावद्बोधिरुत्पद्यते।

---

१. Ms. क्षान्त्यलाभ्य...। २. Ms. तत्...। ३. Ms. °रसंगि। ४. Y. षण्ढ। ५. Ms. looks like शोत्रा...। ६. विवर्त्य। below in Bh.। ७. निवर्त्य in kārikā।

क्षयानुत्पादज्ञाने हि वोधिरिति पश्चादुपपादयिष्यामः। अशुभामारभ्य यावद्वोधिरित्यपरे। येषां तु खड्गादन्योऽपि प्रत्येकबुद्धोऽस्ति तद्गोत्राणां व्यावर्तनाप्रतिषेधः[1]। किं पुनः प्रथम एव जन्मनि कृतप्रयोगो निर्वेधभागीयान्युत्पादयेत्। नैतदस्ति अवश्यं हि

प्राक्तेभ्यो मोक्षभागीयं

उत्पादयितव्यम्। सर्वस्वल्पं हि

क्षिप्रं मोक्षस्त्रिभिर्भवैः ।।२४।।

एकस्मिन्[2] जन्मनि मोक्षभागीयं कुशलमूलमुत्पादयेत्। द्वितीये निर्वेधभागीयानि। तृतीये आर्यमार्गम्। वीजविरोपण[3]सस्याभिवृद्धिफलोत्पत्तिक्रमवत्। क्रमेण हि संतानस्यास्यां धर्मतायामवतारपरिपाकविमुक्तयो भवन्तीति। तच्च पुनर्मोक्षभागीयं वर्णयन्ति।

श्रुतचिन्तामयं

न भावनामयम्। कति कर्माणि।

[17b. 18B. VII] त्रीणि कर्माणि

प्राधान्येन तु मनस्कर्म्म। तत्प्रणिधानपरिग्रहात्तु[4] कायवाक्कर्मापि मोक्षभागीयं भवति। कश्चिदेकभिक्षामपि दत्त्वैक[5]शिक्षामपि चादाय मोक्षाभिलाषवलाधानान्मोक्षभागीयान्याक्षिपति। तत्त्वेतत्

आक्षिप्यते नृषु।

मनुष्येष्वेव त्रिषु द्वीपेषु। नान्यत्र। प्रज्ञानिर्वेदयोरभावाद्यथायोगम्। उक्तं प्रसङ्गेन मोक्षभागीयम्।

अभिसमयक्रमस्तु वक्तुमारब्धः। तत्र च यावदग्रधर्मा उक्ताः। शेषं वक्तव्यम्। अत इदमुच्यते।

---

१. Y. व्यावर्त्तनस्याप्रतिषेधः। २. Ms. एकस्मिन्जन्मनि। ३. Y. बीजावरोपण।
४. Y. °परिग्रहणात्। ५. Ms. दत्त्वेक।

**लौकिकेभ्योऽग्रधर्मेभ्यो धर्मक्षान्तिरनास्रवा[1] ॥२५॥**

लौकिकाग्रधर्मानन्तरमनास्रव[2]धर्मज्ञानक्षान्तिरुत्पद्यते । कस्मिन्नालम्बने ।

**कामदुःखे**

कामावचरदुःखमस्या आलम्बनम् । सेयं दुःखे धर्मज्ञानक्षान्तिरित्युच्यते । अनास्रवज्ञानार्थं निःष्यन्देन विशेषणम् । कर्मज्ञानार्थं क्षान्तिः । पुष्पफलवृक्षवत् । सैव च नियामा[3]वक्रान्तिरित्युच्यते । सम्यक्त्वनियामावक्रमणात् । सम्यक्त्वं निर्वाणमुक्तं[4] सूत्रे । तत्र नियमो नियाम एकान्तीभावः । तस्याभिगमनमवक्रमणम्[5] । तस्यां चोत्पन्नायामार्यपुद्गल उच्यते । अनागतया पृथग्जनत्वं व्यावर्त्यते । एतदेव तस्याः कारित्रमनागतायामभ्युपगम्यते नान्य-[18a. 18A. VIII]त् । प्रदीपजातिवत् । लौकिकाग्रधर्मैरित्यपरे[6] । न तद्धर्मत्वात्तद्विरोधित्वाददोषः । शत्रुस्कन्धारूढतद्घातनवत्[7] । उभयैरित्यपरे । आनन्तर्यविमुक्तिमार्गसाधर्म्यादिति ।

**ततोऽत्रैव धर्मज्ञानं**

ततः पुनर्दुःखे धर्मज्ञानक्षान्तेरनन्तरमत्रैव कामावचरे दुःखे धर्मज्ञानमुत्पद्यते । तत् दुःखे धर्मज्ञानमित्युच्यते । अनास्रवाधिकारः सर्वत्र वेदितव्यः । यथा च कामावचरे दुःखे धर्मज्ञानक्षान्तिर्धर्मज्ञानं चोत्पद्यते

**तथा पुनः ।**

**शेषे दुःखेऽन्वयक्षान्तिज्ञाने[8]**

दुःखे धर्मज्ञानानन्तरं रूपारूप्यावचरे दुःखे समस्तालम्बनान्वयज्ञानक्षान्तिरुत्पद्यते । सा दुःखेऽन्वयज्ञानक्षान्तिरित्युच्यते । ततोऽन्वयज्ञानमुत्पद्यते । तत् दुःखेऽन्वयज्ञानमित्युच्यते । प्रथमतो धर्मतत्त्वज्ञानाद्धर्मज्ञानम् । तदन्वयादूर्ध्वं दुःखालम्बनमन्वयज्ञानम् । तथैवानुगमनात् । यथा चैतानि दुःखसत्ये चत्वारि क्षान्तिज्ञानान्युत्पद्यन्ते

---

१. Ms. °नाश्रवा । २ Ms. °मानाश्रव । ३. Ms. नियमा । ४. Y. निर्वाणमित्युक्तं । ५. Ms. तस्यभि०....। ६. Y. लौकिकैरग्र० । ७. Ms. तत् । ८. Ms. °न्वयज्ञान क्षान्तिज्ञाने ।

**सत्यत्रये[1] तथा ॥२६॥**

दुःखान्वयज्ञानादनन्तरं कामावचरे समुदये धर्मज्ञानक्षान्तिरुत्पद्यते। ततः समुदये धर्मज्ञानम्। एवं समनन्तरोत्पत्तिक्रमेण शेषे समुदयेऽन्वयज्ञानक्षान्तिः समुदयेऽन्वयज्ञानम् कामावचरदुःखनिरोधे[2] धर्मज्ञानक्षान्तिर्नि-[18b. 18B VIII]रोधे धर्मज्ञानं शेषे निरोधेऽन्वयज्ञानक्षान्तिर्निरोधेऽन्वयज्ञानं कामावचरदुःखप्रतिपक्षमार्गे धर्मज्ञानक्षान्तिर्मार्गे धर्मज्ञानं शेषे मार्गे[3]ऽन्वयज्ञानक्षान्तिर्मार्गेऽन्वयज्ञानम्।

**इति षोडशचित्तोऽयं सत्याभिसमयः**

इत्यनेन क्रमेणायं सत्यानामभिसमयः षोडशचित्तको भवति। ये तर्हि निकायान्तरीयाः सत्यानामेकाभिसमयं वर्णयन्ति। अभिप्राय एष[4] द्रष्टव्यः। अभेदेन ह्यभिसमय उच्यते सत्येषु।

**त्रिधा।**

**दर्शनालम्बकार्याख्यः[5]**

दर्शनाभिसमयोऽनास्रवया प्रज्ञया सत्यानाम्। आलम्बनाभिसमयस्तत्संप्रयुक्तैर्वेदनादिभिरपि। कार्याभिसमयो विप्रयुक्तैरपि शीलजात्यादिभिः। दुःखे हि दृश्यमाने तस्य त्रिविधोऽभिसमयः समुदयादीनां[6] कार्याभिसमयः। प्रहाणसाक्षात्करणभावनात्। तद्यदि सत्यानां दर्शनाभिसमयं प्रत्येकाभिसमयं ब्रूयात्। अयुक्तं ब्रूयादाकारभेदात्। अथाप्यनात्माकारेण सर्वेषां[7] दर्शनमिति ब्रूयात्। न तर्हि सत्यानां दुःखादितो दर्शनं स्यात्। एवं च[8] सूत्रविरोधः।[9] "इहार्यश्रावकस्य दुःखं वा दुःखतो मनसि कुर्वतः समुदयं वा समुदयतो यावत्[10] मार्गं वा मार्गतो मनसि कुर्वतोऽनास्रवे-[19a. 18A1. I]ण मनसिकारेण संप्रयुक्तो यो धर्माणां प्रविचय"[11] इति। भावनामार्ग एवमिति चेत्। न। यथादर्शनं भावनात्।

---

१. Ms. सत्यत्रय। २. Ms. °निरोधन्धर्म्म। ३. Ms. शेषमार्गे। ४. Ms. एषो। ५. Ms. °लम्बनाकार्याख्यः। ६. Ms. समुदाया०। ७. Y. adds सत्यानाम्। ८. Y. तथा च सति। ९. Ms. °विरोध इहा°। १०. Ms. यावत्मार्गं°। ११. Y. विचय।

अथाप्येकस्य दर्शनाच्छेषेषु वशित्वलाभादेकाभिसमयं ब्रूयान्न दोषः स्यात् । अन्तरा तु व्युत्थानमस्ति नास्तीति विचार्यं स्यात् । अथ पुनर्ब्रूयात् दुःखमेव परिजानन्समुदयं प्रजहाति निरोधं साक्षात् करोति मार्गं भावयति । अत एकाभिसमय इति । एवमपि न दोषः स्यादेकस्य दर्शने शेषाणां कार्याभिसमयवचनात् । दर्शनाभिसमयं तु प्रति सूत्रे सत्यानां क्रमेणाभिसमय उक्तो लक्ष्यते । "नहैव गृहपते सत्यानामेकाभिसमयोऽपि पूर्वाभिसयय"[1] इति विस्तरेण सदृष्टान्तानि त्रीणि सूत्राणि । "यो दुःखे निष्काङ्क्षो निर्विचिकित्सो बुद्धेऽपि स" इति सूत्रादेकाभिसमय इति चेत् । न ।[2] असमुदाचारावश्यंप्रहाणाभिसंधिवचनात् । य एष उक्तः षोढशचित्तकोऽभिसमयः

सोऽग्रधर्मैकभूमिकः ॥२७॥

यद्भूमिकोऽग्रधर्मस्तद्भूमिकान्येतानि षोडश चित्तानि । ते पुनः षड्भूमिका इत्युक्तं प्राक् । कस्मात् पुनः क्षान्तयो ज्ञानानि चावश्यं भवन्ति । यस्मात्

क्षान्तिज्ञानान्यनन्तर्य[3]मुक्तिमार्गा यथाक्रमम् ।

अनन्तर्यमार्गाः[4] क्षान्तयः क्लेशप्राप्तिविच्छेदं प्रत्यन्तरयितुमशक्यत्वात्[5] । विमुक्तिमार्गा[19b. 18B1. I]स्तु ज्ञानानि । क्लेशप्राप्तिविमुक्तानां विसंयोगप्राप्तिसहोत्पादात् । अत उभयैरवश्यं भवितव्यम् । द्वाभ्यां चौरनिष्कासनकपाटपिधानवत् । यदि पुनर्द्वितीयेनानन्तर्यमार्गेणैव सह विसंयोगप्राप्तिरुत्पद्येत किं स्यात् । प्रहीणविचिकित्सं ज्ञानं तत्रैवालम्बने नोत्पन्नं स्यात् । क्षान्तिभिः क्लेशप्रहाणान्नव संयोजननिकाया ज्ञानवध्या इति शास्त्रविरोध इति चेत् । न । क्षान्तीनां ज्ञानपरिवारत्वात् । राजपरिवारकृतस्य राजकृतव्यपदेशवत् ।

किं पुनः सर्वाणि षोडशचित्तानि सत्यदर्शनाद्दर्शनमार्गः । नेत्याह । किं तर्हि ।

अदृष्टदृष्टेर्दृङ्मार्गस्तत्र पञ्चदश क्षणाः ॥२८॥

---

१. It seems to be अनुपूर्वाभिसमय (see स्फुटार्था P. 543) । २. Y. नासमुदा....। ३. Ms. क्षान्तिज्ञानान्यन्तर्य । ४. Ms. आनन्तर्यमार्गाः । ५. Y. adopts the reading अनन्तर्यशक्यत्वात् and gives in note अन्तरयितुं श Mss ।

दुःखधर्मज्ञानक्षान्तिमारभ्य यावत्[1] मार्गेऽन्वयज्ञान क्षान्तिरेते पञ्चदश क्षणा दर्शनमार्गः। किं कारणम्। अदृष्टसत्यदर्शनात्। षोडशे तु नास्त्यपूर्वं द्रव्यमिति। यथादृष्टाभ्यसनाद्भावनामार्ग[2] एव। ननु च तेनाप्यदृष्टं पश्यति मार्गेऽन्वयज्ञानक्षान्तिम्[3]। सत्यं प्रति चिन्ता न क्षणम्। न हि क्षणेनादृष्टेन सत्यमदृष्टं भवति। यथा नैकेन[4] लुङ्गेनालूनेन केदारमलूनं भवति। फलत्वाद्दृष्टज्ञानषोडशाकारभावनात् पूर्वमार्गविहानेः प्रावन्धिकत्वाच्च मार्गान्वयज्ञानं भावनामार्गः। अपरिहाणिस्तु दर्शनहेयक्लेश-[20a. 18A1. 11]प्रहाणसंधारणात्। अत एव दर्शनमार्ग इति चेत्। न। अतिप्रसङ्गात्। सप्त ज्ञानानि कस्माद्दर्शनमार्गः। दर्शनस्यासमाप्तत्वात्। न हि सर्वं सत्यदर्शनं समाप्तमिति तदन्तरालत्वात्तान्यपि दर्शनमार्गः। उक्तं यथा दर्शनमार्गो भावनामार्गश्चोत्पद्यते।

यथेदानीमुत्पन्नार्यमार्गाणां पुद्गलानां व्यवस्थानं तथा वक्ष्यामः। य एते दर्शनमार्गस्वभावाः[5]पञ्चादश क्षणा उक्ता वेदितव्यौ

**मृदुतीक्ष्णेन्द्रियौ तेषु श्रद्धाधर्मानुसारिणौ।**

मृद्विन्द्रियस्तेषु वर्तमानः श्रद्धानुसारीत्युच्यते। तीक्ष्णेन्द्रियो धर्मानुसारीति। श्रद्धयानुसारः श्रद्धानुसारः। सोऽस्यास्तीति श्रद्धानुसारी। श्रद्धयानुसर्तुं[6]शीलमस्येति वा। पूर्वं परसंप्रत्ययेनार्थानुसरणात्[7]। एवं धर्मानुसारी। पूर्वं स्वयमेव सूत्रादिभिर्धर्मैरर्थानुसरणात्। तौ पुनः

**अहीनभावनाहेयौ फलाद्यप्रतिपन्नकौ ॥२९॥**

फलानामाद्यं स्रोत आपत्तिफलं सर्वफलप्राप्तौ तस्य प्रथमत्वात्। तावेव श्रद्धाधर्मानुसारिणौ यदि पूर्वं लौकिकेन मार्गेणाप्रहीणभावनाहेयौ भवतः सकलवन्धनौ तौ स्रोत आपत्तिफलप्रतिपन्नकावुच्येते।

**यावत् पञ्चप्रकारघ्नौ**

यदि पूर्वं लौकिकेन मार्गेण कामावचराणां भावनाहेयानां यावत् [30b. 18B1. II]पञ्च प्रकाराः प्रहीणा भवन्ति। तथैव प्रथमफलप्रतिपन्नकावुच्येते।

---

१. Ms. यावत्मार्गे। २. Ms. °भ्यसाना°। ३. Y. मार्गान्वय....। ४. Ms. नेकेन। Y. नैक°। ५. Ms. दर्शनार्ग...or दर्शमार्ग....। ६. Ms. श्रद्धानुसर्त्तुं। ७. Y. परप्रत्ययेना...।

**द्वितीयेऽर्वाङ्नवक्षयात् ।**

द्वितीयनिमित्तं द्वितीये । यदि तयोस्तस्मात् परेण षट् सप्ताष्टौ वा प्रकाराः पूर्वप्रहीणा भवन्ति । द्वौ[1] तौ द्वितीयफलप्रतिपन्नकावुच्येते । कतमच्च द्वितीयम् । सकृदागामिफलम् ।

**कामाद्विरक्तावूर्ध्वं वा तृतीयप्रतिपन्नकौ ॥३०॥**

यदि पुनर्नवमस्यापि प्रकारस्य प्रहाणात् कामधातोर्वीतरागौ भवत ऊर्ध्वं वा[2] यावदाकिञ्चन्यायतनात् तौ तृतीय[3] प्रतिपन्नकावुच्येते । कतमच्च तृतीयम् । अनागामिफलम् ।

**षोडशे तु फलस्थौ तौ यत्र यः प्रतिपन्नकः ।**

षोडशे तु चित्त उत्पन्ने तौ न पुनः श्रद्धाधर्मानुसारिणावुच्येते । नापि प्रतिपन्नकौ । किं तर्हि । फलस्थौ । यत्र फले यः प्रतिपन्नको भूतः स तदानीं तत्र फलस्थितो भवति । स्रोतआपत्तिफले सकृदागामिफले वा अनागामिफले वा । अर्हत्त्वं तु न शक्यमादितः प्राप्तुम् । दर्शनमार्गेण भावनाहेयानामप्रहाणात्[4] । पूर्वं च भवाग्रवैराग्यासंभवात् ।

**श्रद्धाधिमुक्तदृष्टचाप्तौ मृदुतीक्ष्णेन्द्रियौ तदा ॥३१॥**

तस्मिन्काले यो मृद्विन्द्रियः श्रद्धानुसारिपूर्वी स श्रद्धाधिमुक्त इत्युच्यते । यस्तीक्ष्णेन्द्रियो धर्मानुसारिपूर्वी स दृष्टिप्राप्त इत्युच्यते । श्रद्धा-[21a. 18A1. III]प्रज्ञाधिकत्वेनाधिमोक्षदृष्टिप्रभावितत्वात् । किं पुनः कारणं प्रहीणपञ्च-प्रकारोऽपि षोडशे चित्ते स्रोतआपन्न एवोच्यते न सकृदागामिफलप्रतिपन्नकः । यस्मात्

**फले फलविशिष्टस्य लाभो मार्गस्य नास्त्यतः ।**

**नाप्रयुक्तो विशेषाय फलस्थः प्रतिपन्नकः ॥३२॥**

फले हि लभ्यमाने फलविशिष्टो मार्गो न लभ्यत इत्येष नियमः । अतः फलस्थो यावन्न विशेषाय प्रयुज्यते फलान्तरप्राप्तौ तावत् प्रतिपन्नको नोच्यते । एवमन्यत्रापि फले वेदितव्यम् । यस्तु तृतीयध्यानवीतरागोऽधरां भूमिं निश्रित्य नियाममवक्रामति

१. Y. omits द्वौ । २. Y. च । ३. Ms. drops य । ४. Y. °हेयाप्रहाणात् ।

सोऽवश्यं फलविशिष्टं मार्गं संमुखीकरोति। अन्यथा हि स तस्मादूर्ध्वोपपन्नः सुखेन्द्रियेणासमन्वागतः स्यात्। एवं तावद्भूयः कामवीतरागाणां नियामावक्रान्तौ पुद्गलव्यवस्थानम्।

आनुपूर्विकं तु वक्तव्यम्। अत इदं तावद्व्यवस्थाप्यते। यथैते कामधातौ नवप्रकाराः क्लेशा उपदिष्टा एवं

**नवप्रकारा दोषा हि भूमौ भूमौ**

यावद्भवाग्रे। यथा च दोषाः[1]

**तथा गुणाः।**

तत्प्रतिपक्षा अप्यानन्तर्यविमुक्तिमार्गाख्या गुणा भूमौ भूमौ नवप्रकारा एव। कथं कृत्वा।

**मृदुमध्याधिमात्राणां पुनर्मृद्वादिभेदतः ॥३३॥**

मृदुम-[21b. 18B1. III]ध्याधिमात्रा हि त्रयो मूलप्रकाराः। तेषां पुनः प्रत्येकं मृदुमध्याधिमात्रत्वेन त्रिविधत्वात् नव व्यवस्थाप्यन्ते। तद्यथा मृदुमृदुः प्रकारो मृदुमध्यो मृद्वधिमात्रो मध्यमृदुर्मध्यमध्यो मध्याधिमात्रोऽधिमात्रमृदुरधिमात्रमध्योऽधिमात्राधिमात्रश्चेति। तत्र मृदुमृदुना मार्गेणाधिमात्राधिमात्रस्य क्लेशस्य प्रहाणम्। एवं यावदधिमात्राधिमात्रेण मृदुमृदोः। आदित एवाधिमात्रमार्गासंभवादुत्पन्नाधिमात्रमार्गस्य चाधिमात्रक्लेशासंभवात् औदारिको हि मलश्चेलात्पूर्वं निर्धूयते पश्चात् सूक्ष्मः। औदारिकं च तमः सूक्ष्मेणालोकेन हन्यते सूक्ष्मं चाधिमात्रेणेत्येष दृष्टान्तयोगः। शुक्ला हि धर्मा बलवन्तो दुर्बलास्तु कृष्णाः। क्षणिकमृदुकेनाप्यार्यमार्गेणानादिसंसारपरंपराप्यायिताधिमात्राणां[2] क्लेशानामुन्मूलत्वात्[3]। बहुकालसंवर्द्धितानां[4] दोषाणां त्रिवृत्कर्षवत्[5] क्षणिकाल्पप्रदीपमहातमोपघातवच्च[6]। एवं नवप्रकारेषु क्लेशेषु सर्वत्र

**अक्षीणभावनाहेयः फलस्थः सप्तकृत्परः।**

---

१. Ms. दोषास्तथा। २. Y. °ध्यापिताधिमात्राणां। ३. Y. न्मूलनात्। ४. Y. सुबहु....। ५. Y. त्रिवृत्कर्षनिष्कर्षणवत्। Ms. seems to drop निष्कर्ष। ६ Y. seems to be तमोघातवत्। Ms is it महातमउपघातवच्च।

यस्य हि फलस्थस्यैकोऽपि भावनाहेयः प्रकारोऽप्रहीणः स स्रोतआपन्नः। सप्तजन्मानि करोतीति सप्तकृत्। परः सर्वान्त्यः। न हि [22a. 18A1. IV] सर्वसप्तकृदिति। सप्तकृत्वःपरम इति सूत्रपाठः। सप्तकृत्वः परमं जन्माऽस्येत्यर्थः। प्रकर्षे परमशब्दः। निर्वाणस्रोतो[1] हि मार्गस्तेन तत्र गमनात्। तदसावापन्न[2] आगतः प्राप्त इति स्रोतआपन्नः। कथमापन्नः। आद्यमार्गलाभाच्चेत् अष्टमकोऽपि स्यात्। आद्यफललाभाच्चेत् भूयो वीतरागोऽपि स्यात्। कामवीतरागः[3]। सर्वफलप्रापिणमधिकृत्याद्यफललाभात्। किं पुनः कारणं स एव नाष्टमकः। प्रतिपन्नकफलमार्गलाभात्[4] दर्शनभावनामार्गलाभात् सकलस्रोतोऽभिसमयाच्च मार्गान्वयज्ञाने। स एव तस्मादन्यान्सप्तोपपत्तिभवान्मनुष्येषु प्रतिसंदधाति सप्तान्तराभवान्। एवं देवेष्वित्यष्टाविंशतियवान् प्रतिसंदधाति। सप्तकसामान्यात्तु सप्तकृत्वः। परम उक्तः। सप्तस्थानकौशलसप्तपर्णवदिति वैभाषिकाः। यत्तर्हि सूत्र उक्तं "अस्थानमनवकाशो यद्दृष्टिसंपन्नः पुद्गलोऽष्टमं भवमभिनिर्वर्तयिष्यति। नेदं स्थानं विद्यत" इति। एकस्यां गतावित्यभिप्रायः। यथारुतं वा कल्प्यमानेऽन्तराभवोऽपि न स्यात् एवमप्यूर्ध्वस्रोतसो भवाग्रपरमस्यैकस्यां गतावष्टम उपपत्तिभावो [22b. 18B1. IV] न प्राप्नोति। कामधात्वभिसंधिवचनाददोषः[5]। किमत्र ज्ञापकं सूत्रं युक्तिर्वा। इह चैव किं ज्ञापकं प्रत्येकं देवमनुष्येषु सप्तकृत्वो न पुनरुभयेष्वेव सप्तकृत्व इति। एवं हि पठ्यते। "सप्तकृत्वो देवाश्च मनुष्याश्चे"ति। प्रत्येकमपि तु काश्यपीयाः पठन्ति। "सप्तकृत्वो देवान् सप्तकृत्वो मनुष्यानि"ति। नात्राभिनिवेष्टव्यम्। यश्च मनुष्येषु स्रोतआपन्नो भवति स तानेवागम्य परिनिर्वाति। यो देवेषु स तानेव। किं पुनः कारणमष्टमं भवं नाभिनिर्वर्तयति। तावता कालेनावश्यं संततिपरिपाकात्। मार्गो हि स तज्जातीयः। सप्तपदाशीविष[6] दष्टवच्चचातुर्थकज्वरवच्च। सप्तसंयोजनावशेषत्वाच्च। द्वे अवरभागीये पञ्च चोर्ध्वभागीयानीति। अन्तरेणाप्यार्यमार्गं संमुखीकुर्वाणो न परिनिर्वाति। तावत् भववेदनीयस्य कर्मणो बलाधानात्। असति बुद्धोत्पादगृहस्थ एवार्हत्त्वं प्राप्नोति। अगारं तु[7] पुनर्नाध्यावसति। धर्मताप्रतिलम्भिकं तु भिक्षुलिङ्गं प्रतिलभते। अन्याश्रमिकं लिङ्गं नेत्यपरे। कस्मादविनिपातकधर्मा[8] भवति। तद्गामि[9]कर्मानुपचयादुपचितविपाकदानवै-[23a. 18A1. V]गुण्याच्च संततेर्बलवत्कुशला[10]धिवासनात्प्रयोगाशयशुद्धितः। अपायनिपाते तु कर्मण्यसौ क्षान्तिमपि नोत्पादयेत्। आह चात्र

१. Ms. drops ण। २. Ms. तदासा...। ३. Y. adds अपि स्यात्। ४. Ms. प्रतिपन्नकः। ५. Ms. °धात्वा। ६. Y. आशीविष। ७. Ms. अगाराग्तु। ८. Y. अविनिपातधर्माः। ९. Ms. तत्गामि...। Y. तद्गामिककर्म and gives in note °mi Mss। १०. Y. कुशलमूला°।

"कृत्वा बुधोऽल्पमपि पापमधः प्रयाति
कृत्वा बुधो महदपि प्राजहात्यनर्थम्
मज्जत्यधोऽल्पमपि वारिणि संहतं हि
पात्रीकृतं महदपि प्लवते तदेव" इति ।

दुःखस्यान्तं करोतीति को दुःखस्यान्तः । यस्मात् परेण दुःखं नास्ति । अप्रतिसंधिकं दुःखं करोतीत्यर्थः । अथवा निर्वाणमन्तः । कथं निर्वाणं करोति । तत्प्राप्तिविवन्धापनयनात् । यथाकाशं कुरु मण्डपं पातयेति भवन्ति वक्तारः । अन्योऽपि च[1] स्यात्सप्तकृत्वः परमो न तु नियत इति नोच्यते । एवं तावदक्षीण-भावनाहेयः फलस्थः सप्तकृत्वः परमो भवति ।

त्रिचतुर्विधमुक्तस्तु द्वित्रिजन्मा कुलंकुलः ।।३४।।

स एव स्रोतआपन्नस्त्रिभिः कारणैः कुलंकुलो भवति । क्लेशप्रहाणतस्त्रि-चतुःप्रकारप्रहीणत्वात् । इन्द्रियतस्तत्प्रतिपक्षानास्रवेन्द्रियलाभात् । जन्मतो द्वित्रिजन्मावशेषत्वात् । श्लोके तु द्वयोर्ग्रहणं स्रोतआपन्नस्य पश्चात्प्रहीणे सति तत्प्रतिप-[23b. 18B1. V]क्षानास्रवेन्द्रियस्यानुक्तसिद्धत्वात् । जन्म तु कदाचिदल्पीयः स्यात् । परेण भव्यत्वाद् । अतोऽस्य ग्रहणम् । कस्मान्न पञ्च-प्रकारप्रहाणात्[2] । तत्प्रहाणे षष्ठस्यावश्यं प्रहाणात् नहि तस्यैकः प्रकारः फलं विघ्नयितुं समर्थः । एकवीचिकस्येव[3] धात्वनतिक्रमात्[4] । स एव कुलंकुलो द्विविधः । देवकुलंकुलो यो देवेष द्वे त्रीणि वा कुलानि संश्रित्य[5] परिनिर्वाति तत्र वाऽन्यत्र वा देवनिकाये । मनुष्यकुलंकुलो यो मनुष्येषु तत्र वाऽन्यत्र वा द्वीपे परिनिर्वाति । स एव पुनः फलस्थः

आपञ्चमप्रकारघ्नो द्वितीयप्रतिपन्नकः ।[6]

यस्य फलस्थस्यैकप्रकारो यावत्पञ्चमः प्रहीणो भवति असौ द्वितीयफलप्रतिपन्नको वेदितव्यः ।

क्षीणषष्ठप्रकारस्तु सकृदागाम्यसौ पुनः ।।३५।।

---

१. Y. वा । २. Ms. प्रकारा but आकार seems to be cancelled । ३. Ms °वीचिकस्यैव । ४. Ms. धात्वतिनति° । ५. Y. संसृत्य । ६. Ms. drops कः ।

द्वितीयफलप्राप्तो भवति। देवान् गत्वा सकृन्मनुष्यलोकागमनात्स-कृदागामी। परेण जन्माभावात्। रागद्वेषमोहानां च तनुत्वादित्युच्यते। मृदुप्रकारावशेषत्वात्। स एव पुनः फलस्थः।

**क्षीणसप्ताष्टदोषांश एकजन्मैकवीचिकः।**
**तृतीयप्रतिपन्नश्च**

त्रिभिः कारणैः। स एव सकृदागाम्येकवीचिको वेदितव्यः। स-[24a. 18A1. VI]प्ताष्टप्रकारप्रहाणात्। तत्प्रतिपक्षानास्रवेन्द्रियलाभादेकजन्माव-शेषत्वात्। कथमस्यैकः प्रकारः फलं विघ्नयितुं शक्नोति। धात्वतिक्रमात्। 'अवस्थात्रये हि कर्माणि विघ्नायोपतिष्ठन्त" इत्युक्तं प्राक्। यथा कर्माण्येवं क्लेशा अपि वेदितव्या इति। विपाकनिःष्यन्दफलभूम्यतिक्रमात्। वीचिर्नामान्तरं तस्य चैक[1]जन्मव्यवहितत्वात् निर्वाणस्य एकक्लेशप्रकारव्यवहितत्वाद्वाऽना-गामिफलस्यैको वीचिरस्येत्येकवीचिकः। तृतीयफलप्रतिपन्नकश्चैकवीचिको[2] वेदितव्यः प्रहीणसप्ताष्टप्रकारः। पूर्वंप्रहीणप्रकारस्तु फलप्राप्तौ न तावत्कुलंकुलो भवत्येकवीचिको वा यावत्फलविशिष्टो मार्गो न समुखीकृतः।

**सोऽनागामी नवक्षयात् ॥३६॥**

स एव पुनः फलस्थो नवप्रकारप्रहाणादनागामी उपदिष्टः। कामधात्वना-गमनात्। "पञ्चानामवरभागीयानां संयोजनानां प्रहाणादि"त्युच्यते प्रहाण-संकुलनात्[3]। अवश्यं द्वे त्रीणि वा पूर्वं प्रहीणानि भवन्ति।

**सोऽन्तरोत्पन्नसंस्कारासंस्कारपरिनिर्वृतिः।**
**ऊर्ध्वस्रोताश्च**

अन्तरा परिनिर्वृतिरस्येत्यन्तरापरिनिर्वृतिः। एवमुत्पन्नस्य[4] संस्कारेणा-संस्कारेणेति योज्यम्। स एवानागा-[24b. 18B1. VI]मी पुनः पञ्चधा भवति[5]।

---

१. Y. वैक॰। २. Ms. On the top margin one more प्रति is written. In that case it should be तृतीयफलं प्रति प्रतिपन्नकश्चैकवीचिको वेदितव्यः।
३. Y. °संकलनात्। ४. Y. suggests one reading to be एवमुत्पन्नेऽस्य।
५. Ms. भवन्ति।

अन्तरापरिनिर्वायी योऽन्तराभवे परिनिर्वाति। उपपद्यपरिनिर्वायी य उपपन्नमात्रो न चिरात् परिनिर्वात्यभियुक्तवाहिमार्गत्वात्। सोपधिशेषनिर्वाणेन[1]। सोऽपि निरुपधिशेषेणेत्यपरे[2]। नायुरुत्सर्गवशित्वात्[3]। साभिसंस्कारपरिनिर्वायी किल उपपद्याप्रतिप्रस्रब्धप्रयोगः। साभिसंस्कारं परिनिर्वात्यभियुक्तावाहिमार्गत्वात्[4]। अनभिसंस्कारपरिनिर्वायी त्वनभिसंस्कारेणाभियोगवाहिमार्गाभावात्। संस्कृतासंस्कृतालम्बनमार्गनिर्वाणादित्यपरे। तत्तु न। अतिप्रसङ्गात्। सूत्रे त्वनभिसंस्कारपरिनिर्वायी पूर्वं पठ्यते। तथैव च[5] युज्यते। वाह्यवाहिमार्गयोरनभिसंस्काराभिसंस्कारसाध्यत्वादयत्नयत्नप्राप्तितः। उपपद्यपरिनिर्वायिणस्तु वाहितरोऽधिमात्रतरश्च मार्गो मृदुतराश्चानुशया इति। ऊर्ध्वंस्रोता यस्योर्ध्वं गतिर्न तत्रैव परिनिर्वाणं यत्रोपपन्नः। स्रोतो[6] गतिरित्येकोऽर्थः।

**स ध्याने व्यवकीर्णोऽकनिष्ठगः ॥३७॥**

ऊर्ध्वंस्रोता द्विवधो हेतुतः फलतश्च। हेतुतो व्यवकोर्णाव्यवकीर्णध्यानत्वात्। फलतोऽकनिष्ठभवाग्रपरमत्वरात् तत्र येन ध्यानं व्यवकीर्णं सोऽकनि- [25a. 18A1. VII]ष्ठान् गत्वा परिनिर्वाति।

**स प्लुतोऽर्धप्लुतः सर्वच्युतश्च**

स पुनरेषोऽकनिष्ठपरम ऊर्ध्वंस्रोतास्त्रिविधः। प्लुतादिभेदात्। तत्र प्लुतो नाम य इह ध्यानानि व्यवकीर्य ध्यानचयात् परिहीणः प्रथमं ध्यानमास्वाद्य ब्रह्मकायिकेषूपपन्नः पूर्वाभ्यासवशाच्चतुर्थं ध्यानं व्यवकीर्य तस्मात् प्रच्युतोऽकनिष्ठेषूपपद्यते। एष[7] हि मध्यानिमज्जनात् प्लुतः। अर्धप्लुतो नाम यस्ततः शुद्धावासेषूपपद्य मध्यादेकमपि स्थानान्तरं विलङ्घ्याकनिष्ठान् प्रविशति। महाब्रह्मस्वार्यो नोपपद्यते दृष्टिस्थानत्वादेकनायकत्वाच्चेति[8]। सर्वच्युतो नाम यः सर्वाणि स्थानान्तराणि संचर्याकनिष्ठान् प्रविशति। न च कदाचिदनागामी। तत्रैवोत्पत्त्यायतने द्वितीयं जन्माभिनिर्वर्तयति। विशेषगामित्वात्। एवं चास्य परिपूर्णमनागामित्वं भवति। यत्रोपपन्नस्तस्याधस्तत्र चात्यन्तमनागमनात्। एवं तावद्ध्याने व्यवकीर्णोऽकनिष्टगो वेदितव्यः। ततः

१. Y. One reading is....शेषेण ..। २. Y. °शेषनिर्वाणेन। ३. Y. न। आयु० ४. Ms. °भियुक्तवाहि०। ५. Y. adopts the reading तथैव and gives in note °था च Mss। ६. Ms. °पपन्नश्रोतो। ७. Ms. एषा। ८. Y. °मायक°।

**अन्यो भवाग्रगः[1] ।**

अव्यवकीर्णध्यान ऊर्ध्वंस्रोता भवाग्रनिष्ठो भवति । स हि समापत्त्यन्तराण्यास्वादयन् सर्वस्थानान्तरेषूपपद्याप्रविश्यैव शुद्धावासानारूप्यक्रमोत्पत्तितो भवाग्रं गत्वा परिनिर्वाति । शमथचरि [25b. 18B1. VII]तो ह्येषः । पूर्वकस्तु विपश्यनाचरितः । अन्तरापि तु[2] परिनिर्वाणमूर्ध्वंस्रोतसो युज्यमानं पश्यामः । अकनिष्ठभवाग्रपरमत्वं तु परेण गत्यभावाद्यथा सप्त कृत्वःपरमत्वं स्रोतआपन्नस्येति । इमे तावत् पञ्च रूपोपगा अनागामिनः ।

**आरूप्यगश्चतुर्धान्यः**

अन्य आरूप्यगोऽनागामी यो रूपवीतराग इतश्चच्युत्वारूप्येषूपपद्यते । स पुनश्चतुर्विध उपपद्यादिपरिनिर्वायिभेदात् । त एते षडनागामिनो भवन्ति । ततः

**इह निर्वापकोऽपरः ॥३८॥**

इहैव जन्मन्यपरः परिनिर्वाति । स दृष्टधर्मपरिनिर्वायी सप्तमः ।

**पुनस्त्रींस्त्रिविधान् कृत्वा नव रूपोपगाः स्मृताः ।**

पुनस्त्रयाणामनागामिनां त्रिधा भेदाद्रूपोपगा नवानागामिनो[3]भवन्ति । कतमेषां[4] त्रयाणाम् । अन्तरोपपद्यपरिनिर्वायिणोरूर्ध्वंस्रोतसश्च । कथं त्रिधाभेदात् । अन्तरापरिनिर्वायिणस्तावदाश्वनाशुचिरपरिनिर्वाणात् दृष्टान्तत्रयेण । उपपद्यपरिनिर्वायिण उपपद्याभिसंस्कारानभिसंस्कारपरिनिर्वाणात् । सर्वे ह्येते त्रयोऽप्युपपन्न[5] परिनिर्वाणादुपपद्यपरिनिर्वायिणः । ऊर्ध्वंस्रोतसः प्लुतादिभेदात् । सर्वेषां वा त्रयाणामाश्वनाशु-[26a. 18A1. VIII]चिरपरिनिर्वाणादिति त्रित्वम् ।

**तद्विशेषः पुनः कर्मक्लेशेन्द्रियविशेषतः ॥३९॥**

तेषां पुनस्त्रयाणां नवानां चानागामिनां कर्मक्लेशेन्द्रियविशेषाद्विशेषः । त्रयाणां तावदभिनिर्वृत्त्युपपद्यापरपर्यायवेदनीयकर्मोपचितत्वाद्यथाक्रमं मृदुमध्याधिमात्र-

---

१. G. भवाग्रजः । २. Y. omits अपितु । ३. Ms. नावा....। ४. Y. कथमेषां ।
५. Y. omits त्रयोऽपि and reads उपपद्य ।

क्लेशसमुदाचार त्वादधिमात्रमध्यमृद्विन्द्रियत्वाच्च । तेषामपि नवानां[१] प्रत्येकमत एव यथायोगं विशेषः । प्रथमयोस्त्रिकयोः क्लेशेन्द्रियविशेषात् पूर्ववत् । पश्चिमस्य त्रिकस्यापरपर्यायवेदनीयकर्मविशेषाच्चेति । त एते नवप्रकारक्लेशेन्द्रियत्वान्नवानागामिनो भवन्ति । कथं तर्हि सूत्रे सप्त सत्पुरुषगतयो देशिताः ।

**ऊर्ध्वंस्रोतुरभेदेन[२] सप्त सद्गतयो मताः ।**

ऊर्ध्वं स्रवणधर्मा[३] ऊर्ध्वंस्रोता[४] । तस्याभेदनिर्देशात्सप्त सत्पुरुषगतयः सूत्रेऽभिहिताः । कस्मात् पुनरेता एव सत्पुरुषगतयो नान्याः शैक्षगतयः । एता हि गतयो येषां तेषां सत्येव कर्माणि वृत्तिः कुशले असत्यवृत्तिरकुशले । एताश्च गतीर्गतानां न पुनः प्रत्यागतिरस्ति । नत्वेतद्यथोक्तमन्यत्रास्ति । अतः

**सदसद्वृत्त्यवृत्तिभ्यां गताप्रत्यागतेश्च ताः ॥४०॥**

सप्त सत्पुरुषगतयो नान्या इति । यत्तर्हि सूत्रे एवोक्तं "स-[26b. 18B1. VIII] त्पुरुषः कतमः । शैक्ष्यः[५] सम्यग्दृष्टया[६] समन्वागत" इति विस्तरः । अन्येषामप्यस्ति पार्यायिकं सत्पुरुषत्वम् । पञ्चविधस्य पापस्यात्यन्तमकरणसंवरप्रतिलम्भात् प्रायेणाकुशलप्रहाणाच्च । येषां तु निष्पर्यायेण तेषामिहाधिकारः ।

किं पुनः परिवृत्तजन्मनोऽप्यनागामिन एष भेदोऽस्ति । यस्मात्

**न परावृत्तजन्मार्यः कामे धात्वन्तरोपगः ।**

कामधातौ परावृत्तजन्मान्तर आर्यो न धात्वन्तरं गच्छति । अनागामि फलं प्राप्य तत्रैव जन्मनि परिनिर्वाणात् । रूपधातौ तु परावृत्तजन्मा कदाचिदारूप्यान्प्रविशति । य ऊर्ध्वंस्रोता भवाग्रपरमः । यत्तर्हि शक्रेणोक्तं "ये ते देवा अकनिष्ठा इति विश्रुताः । अन्ते मे हीयमानस्य तत्रोपपत्तिर्भविष्यति" । अभिधर्मा[७]नभिज्ञत्वादिति वैभाषिकाः । भवता "प्यनिवारणं संहर्षणीयत्वा"दिति ।

---

१. Y. omits नवानां । २. Ms. °श्रोतु···। ३. Y. ऊर्द्ध्वस्रवणधर्मा । Ms. ऊर्ध्वंश्रवणधर्मा । ४. Ms. ऊर्द्ध्वंश्रोता । ५. Ms. शैक्ष । ६. Ms. सम्यक्····। ७. Y. धर्मलक्षणा० ।

**स चोर्ध्वजश्च नैवाक्षसंचारपरिहाणिभाक् ।।४१।।**

स च कामधातौ परिवृत्तजन्मा उर्ध्वधातूपपन्नश्चार्यो नैवेन्द्रियाणि[1] संचरति नापि कथंचित् परिहीयते । किं पुनः कारणं परिवृत्तजन्मान्तरस्यार्यस्य रूपारूप्यप्रवेशेन्द्रियसंचारपरिहाणयो[2] नेष्यन्ते । यस्मान्न सन्ति । कस्मान्न सन्ति । जन्मान्तरपरिवासेनेन्द्रियाणां परि-[27a. 19A. I]पक्वतरत्वादाश्रयविशेषलाभाच्च । अथ कस्माद्वीतरागः शैक्षो नान्तराये परिनिर्वायी भवति । मार्गस्याजितत्वादसंमुखीभावतः अनुशयानां च नातिमन्दत्वात् दुःसमतिक्रामत्वात्कामधातोरिति वैभाषिकाः । बहु ह्यनेन कर्तव्यं भवति । अकुशलाव्याकृतक्लेशप्रहाणं द्वित्रिश्रामण्यफलप्राप्तिस्त्रिधातुसमतिक्रमश्च । तच्चान्तराभवस्थो न शक्तः[3] कर्तुमिति ।

यदुक्तं "स ध्याने व्यवकीर्णे[4] ऽकनिष्ठग" इति । अथ कतमद्ध्यानं प्रथमतो व्यवकीर्यते ।

**आकीर्यते चतुर्थं प्राक्**

स हि सर्वकर्मण्यः समाधिः सुखप्रतिपदामग्र्यत्वात्[5] । एवं च पुनः व्यवकीर्यते । अर्हन्ननागामी वा प्रवाहयुक्तमनास्रवं चतुर्थं ध्यानं समापद्यते । तस्माद्व्युत्थाय प्रवाहयुक्तं तदेव सास्रवं समापद्यते पुनश्चानास्रवम् । एवं प्रवाहाप्रहासेन यदा किल द्वौ क्षणावनास्रवौ समापद्यते द्वौ सास्रवौ पुनश्चानास्रवावयं[6] व्यवकिरणस्य प्रयोगः ।

**निष्पत्ति[7]क्षणमिश्रणात् ।**

यदा त्वनास्रवस्य क्षयस्यानन्तरं सास्रवं संमुखीकरोति सास्रवस्यानास्रवम् । एवं सास्रवस्य क्षणस्यानास्रवाभ्यां मिश्रणात् व्यवकिरणं निष्पन्नं भवतीति वैभाषिकाः । द्वौ हि क्षणावानन्तर्यमार्गसदृशौ तृती[27b. 19B. I]यो विमुक्तिमार्गसदृश इति । एवं चतुर्थं ध्यानं व्यवकीर्य तद्बलेनान्यान्यपि व्यवकीर्यन्ते । कामधातौ त्रिषु द्वीपेषु प्रथमं व्यवकीर्यते । पश्चात् परिहीणेन रूपधातौ । अशक्यं तु क्षणव्यवकिरणमन्यत्र बुद्धात् । अत इच्छातः प्रवाहत्रयसमापत्तितो निष्पन्नं भवतीति पश्यामः ।

किमर्थं पुनर्ध्यानं व्यवकीर्यते ।

---

१. Ms. नेवे···। २. Ms. परिणाहयो। ३. Ms. सक्तः। ४. Ms. व्यवकीर्णो। ५. Y. अग्रत्वात्। ६. Ms. स्रवायं। ७. G. सिध्यति।

**उपपत्तिविहारार्थं क्लेशभीरुतयाऽपि च॥४२॥**

त्रिभिः कारणैर्ध्यानं व्यवकिरन्ति। तीक्ष्णेन्द्रिया अनागामिनः शुद्धावासोपपत्त्यर्थं दृष्टधर्मसुखविहारार्थं च। मृद्विन्द्रियाः क्लेशभीरुतया चास्वादनासंप्रयुक्तसमाधि-दूरीकरणादपरिहीणार्थम्[1]। अर्हन्तस्तु तीक्ष्णेन्द्रिया दृष्टधर्मसुखविहारार्थम्। मृद्विन्द्रियाः क्लेशभीरुत्वाच्चापरिहीणार्थम्।

अथ कस्मात् पञ्चैव शुद्धावासोपपत्तयः। यदेतद्व्यवकीर्णभावितं चतुर्थं ध्यानमुक्तम्

**तत्पाञ्चविध्यात्पञ्चैव शुद्धावासोपपत्तयः।**

सा हि व्यवकीर्णभावना पञ्चप्रकारा मृदुमध्याधिमात्रतरतमभेदात्। प्रथमायां त्रीणि चित्तानि संमुखीक्रियन्ते। अनास्रवं सास्रवमनास्रवं च। द्वितीयायां षट्। तृतीयायां नव। चतुर्थ्यां द्वादश। पञ्चम्यां पञ्चदश। तासां यथासंख्यं पञ्च शुद्धावासाः फलम्। यत्तत्र सास्रवं तद्वशात्तेषूपपत्तिः। श्रद्धा-[28a. 19A. II] दीन्द्रियाधिक्यात् पञ्चेत्यपरे।

**निरोधलाभ्यनागामी कायसाक्षी पुनर्मतः॥४३॥**

निरोधलाभोऽस्यास्तीति **निरोधलाभी**। यो हि कश्चिदनागामी निरोध-समापत्तिलाभी स **कायसाक्षी**त्युच्यते। निर्वाणसदृशस्य धर्मस्य कायेन साक्षात्क-रणात्[2]। कथं पुनः कायेन साक्षात्करोति[3]। चित्ताभावात् कायाश्रयोत्पत्तेः। एवं तु भवितव्यम्। स हि तस्माद्व्युत्थायाप्रतिलब्धपूर्वां सविज्ञानकां कायशान्तिं प्रतिलभते। यतोऽस्यैवं भवति शान्ता वत निरोधसमापत्तिर्निर्वाणसदृशी वत निरोधसमापत्तिरिति। एवमनेन तस्याः शान्तत्वं कायेन साक्षात्कृतं भवति। प्राप्तिज्ञानसाक्षात्क्रियाभ्यां प्रत्यक्षीकारो हि साक्षात्क्रिया। -'अष्टादश शैक्षा" इत्यत्र सूत्रे किं कारणं कायसाक्षी नोक्तः। कारणाभावात्। किं पुनः कारणम्। अनास्रवास्तिस्रः शैक्षास्तत्फलं च। तद्विशेषेण हि शैक्षाणां व्यवस्थानम्। निरोध-समापत्तिश्च नैवशैक्षानाशिक्षा फलम्। अतो न तद्योगाच्छैक्षविशेष उक्तः। एष तावदनागामिनां यथास्थूलं भेदः। सूक्ष्मं तु भिद्यमानाः सहस्रशो भिद्यन्ते। अन्तरापरिनिर्वायिणस्त्रयो मृदुमध्याधिमात्रेन्द्रियभेदात्। भूमिभेदाच्चत्वारः[4]।

---

१. Y. अपरिहाण्यर्थम्। २. Ms. °कारणात्। ३. Ms. drops ति। ४. Y. °भेदाश्चत्वारः।

परिहाणधर्मादिगोत्रभेदात् षट्। स्थानान्तरभेदा[28b. 19B. II]त् षोडश भूमिवैराग्यभेदात् षट्त्रिंशत्। रूपधातौ सकलाबन्धनो यावच्चतुर्थध्यानाष्टप्रकार-वीतरागः। स्थानान्तरगोत्रवैराग्येन्द्रियभेदाद्वानवतानि[1] पञ्चविंशतिः[2] शतानि। कथं कृत्वा। एकस्मिन् स्थाने षट् गोत्राणि। गोत्रे[3] गोत्रे नव पुद्गलाः सकलवन्धनो यावदष्टप्रकारवीतरागः स्वस्मात्स्थानात् षण्णवकानि चतुष्पञ्चाशत् षोडश चतुष्पञ्चाशत्कानि चतुःषष्टान्यष्टौ शतानि। इन्द्रियभेदात् पुनस्त्रिगुणा इत्येवं कृत्वा योऽधरध्याने[4] नवप्रकारवीतरागः स उत्तरे सकलबन्धन उक्तः। समगण-नार्थम्। यथान्तरापरिनिर्वायिण एवं यावदूर्ध्वस्रोतस इत्यभिसमस्य[5] सर्वे चत्वा-रिंशदूनानि त्रयोदशसहस्राण्यनागामिनां भवन्ति।

**आभवाग्राष्टभागक्षिदर्हत्त्वे[6] प्रतिपन्नकः।**

अनागामीत्यधिकृतम्। स खल्वयमनागामी प्रथमध्यानैकप्रकारवैराग्यात् प्रभृति यावत् भवाग्राष्टप्रकारप्रहाणादर्हत्त्वप्रतिपन्नको भवन्ति।

**नवमस्याप्यानन्तर्यपथे[7]**

नवमस्यापि भावाग्रिकस्य प्रकारस्य प्रहाणायानन्तर्यमार्गे सोऽर्हत्त्वप्रति-पन्नक एव।

**वज्रोपमश्च सः ॥४४॥**

स चानन्तर्यमार्गो वज्रोपमः समाधिरित्युच्येत। [29a. 19A. III] सर्वानुशयभेदित्वात्। भिन्नत्वादसौ न पुनः[8] सर्वान्[9] भिनत्ति[10]। सर्वास्तु भेत्तुं समर्थः। सर्वानन्तर्यमार्गाणामधिमात्रतमत्वात्। वज्रोपमानां तु वहुभेदं वर्णयन्ति। अनागाम्यसंगृहीता[11] भावाग्रिकदुःखसमुदायालम्बनैर्दुःखसमुदयान्व-यज्ञानाकारैः संप्रयुक्ता अष्टौ। निरोधमार्गधर्मज्ञानाकारैः संप्रयुक्ता अष्टौ। निरोधान्वयज्ञानाकारैः संप्रयुक्ताः प्रथमध्याननिरोधालम्बनाश्चत्वारः। एवं यावत् भवाग्रनिरोधालम्वनाश्चत्वारः। मार्गान्वयज्ञानाकारैः संप्रयुक्ताश्चत्वारः।

---

१. Y. adopts the reading °नवनीति and gives in note °तानि Mss। २. Y. adopts विंशति० and gives in note °तिः Mss। ३. Y. adopts the reading गोत्र० and gives in note °त्रे Mss। ४. Y. यो ह्यवरे ध्याने। ५. Ms. °समयस्य। ६. G. °र्हत्त्व०। ७. G. °प्यनन्तर्य°। ८. Y. omits पुनः। ९. Y. सर्वा। १०. Ms. looks like भिनर्त्ति। ११. Y. अनागम्यसंगृहीता।

कृत्स्नस्यान्वयज्ञानपक्षस्यालम्बनात् । त इमे ज्ञानाकारालम्बनभेदभिन्ना द्वापञ्चाशद्वज्रोपमा भवन्ति । यथाऽनागाम्यसंगृहीता[1] एवं यावच्चतुर्थध्यानसंगृहीताः । आकाशविज्ञानानन्त्याकिंचन्यायतनसंगृहीता यथासंख्यमष्टाविंशतिश्चतुर्विंशतिर्विंशतिश्च[2] भवन्ति । तेषु धर्मज्ञानस्याधोभूमिनिरोधालम्बनस्य चान्वयज्ञानस्याभावात् । अधोभूमिप्रतिपक्षालम्बनं तु भवति । तस्यान्योऽन्यहेतुत्वादिति । येषां तु मार्गान्वयज्ञानमप्येकैकभूमिप्रतिपक्षालम्बनमिष्टं तेषामष्टाविंशतिमधिकान् प्रक्षिप्यानागम्यसंगृहीता[3] अशीतिर्वज्रोपमा भवन्ति । एवं यावच्चतुर्थध्यान सं-[29b. 19B. III] गृहीताः । आकाशानन्त्यायतनादिषु यथाक्रमं चत्वारिंशत् द्वात्रिंशच्चतुर्विंशतिश्च भवन्ति । पुनर्गोत्रेन्द्रियभेदात् भूयांसो भवन्ति ।

यस्त्वसौ भावाग्रिको नवमः प्रकार उक्तो यस्य वज्रोपमेन प्रहाणं

**तत्क्षयाप्त्या क्षयज्ञानं**

तस्य पुनर्नवमस्य प्रकारस्य सह क्षयप्राप्त्या क्षयज्ञानमुत्पद्यते । वज्रोपमसमाधेरनन्तरं पश्चिमो विमुक्तिमार्गः । अतएव तत्क्षयज्ञानं सर्वास्रवक्षयप्राप्तिसहजत्वात्प्रथमतः ।

**अशैक्षोऽर्हन्नसौ तदा ।**

उत्पन्ने च पुनः क्षयज्ञाने सोऽर्हत्त्वप्रतिपन्नकः अशैक्षो भवत्यर्हंश्चार्हत्त्वफलप्राप्तः । फलान्तरं प्रति पुनः शिक्षितव्याभावादशैक्षः । अत एव स परमार्थ[4] करणार्थत्वात् सर्वसरागपूजार्हत्त्वाच्चार्हन्निति सिद्धं भवत्यन्ये सप्त पूर्वोक्ताः पुद्गलाः शैक्षा इति । केन ते शैक्षाः । आस्रवक्षयाय नित्यं शिक्षणशीलत्वाच्छिक्षात्रये अधिशीलमधिचित्तमधिप्रज्ञं च । ताः पुनः शीलसमाधिप्रज्ञास्वभावाः । पृथग्जनोऽपि शैक्षः प्राप्नोति । न । यथाभूतं सत्याप्रज्ञानात् पुनश्चापशिक्षणात् । अत एव द्विरभिधानं सूत्रे "शिक्षायां शिक्षते शिक्षायां शिक्षत इति शिवक तस्माच्छैक्ष [30a. 19A. IV] इत्युच्यत" इति । यः शिक्षत एव नापशिक्षते स शैक्ष इत्यवधारणं यथा विज्ञायेत । प्रकृतिस्थ आर्यः कथं शिक्षणशीलः । आशयतः । स्थिताध्वगवत् प्राप्त्यनुषङ्गतश्च शिक्षात्रयस्य । अथ शैक्षा धर्माः कतमे । शैक्षस्यानास्रवाः । अशैक्षाः कतमे । अशैक्षस्यानास्रवाः । निर्वाणं कस्मान्न शैक्षम् । अशैक्षपृथग्जनयोरपि तद्योगात् । कस्मान्नाशैक्षम् । शैक्षपृथग्जनयोरपि

१. Y. यथानागम्य...। २. Ms. seems to drop one विंशति। ३. Ms. प्रक्षिप्य...। ४. Y. परार्थ० ।

तद्योगात्[1]। त एते सर्व एवाष्टावार्यपुद्गला भवन्ति। प्रतिपन्नकाश्चत्वारश्च फले स्थिताः। तद्यथा स्रोतआपत्तिफलसाक्षात्क्रियायै प्रतिपन्नकः स्रोतआपन्नः। एवं यावदर्हत्त्वफलसाक्षात्क्रियायै प्रतिपन्नकोऽर्हन्निति। नामत एतेऽष्टौ भवन्ति। द्रव्यतस्तु पञ्च। प्रथमः प्रतिपन्नकश्चत्वारश्च फलस्थाः। शेषाणां प्रतिपन्नकानां त्रिफलस्थाव्यतिरेकात्। अनुपूर्वाधिगमं प्रत्येवमुच्यते। भूयःकामवीतरागौ तु स्यातां दर्शनमार्गे सकृदागाम्यनागामिफलप्रतिपन्नकौ न च स्रोतआपन्न[2]सकृदागामिनाविति।

द्विविधो हि भावनामार्ग उक्तो लौकिको लोकोत्तरश्चेति। केनायं शैक्षः कुतो वैराग्यं प्राप्नोति।

**लोकोत्तरेण वैराग्यं भवाग्रात्**

न लौ-[30b. 19B. IV]किकेन। कि कारणम्। तत ऊर्ध्वं लौकिकाभावात् स्वभूमिकस्य वा प्रतिपक्षत्वात्। कस्मान्न प्रतिपक्षः। तत्क्लेशानुशयितत्वात्[3]। यो हि क्लेशो यत्र वस्तुन्यनुशेते न तस्य तद्वस्तु प्रहाणाय संवर्तते यस्य च यः प्रतिपक्षो न तत्र स क्लेशो[4]ऽनुशेत इति।

**अन्यतो द्विधा ॥४५॥**

भवाग्रादन्यतः सर्वतो भूमेर्लौकिकेनापि वैराग्यं लोकोत्तरेणापि। तत्र पुनः

**लौकिकेनार्यवैराग्ये विसंयोगाप्तयो द्विधा।**

लौकिकेन मार्गेणार्यवैराग्यं गच्छतो द्विविधा विसंयोगप्राप्तय उत्पद्यन्ते लौकिक्यो लोकोत्तराश्च।

**लोकोत्तरेण चेत्येके**

लोकोत्तरेणाप्येवमित्यपरे। किं कारणम्।

**त्यक्ते क्लेशासमन्वयात् ॥४६॥**

---

१. Ms. तत्...। २. स्रोतापन्न। ३. Ms. drops त। ४. Ms looks like संक्लेशो।

यदि ह्यार्यमार्गेण वैराग्यं प्राप्नुवतो लौकिकी विसंयोगप्राप्तिर्नोत्पद्यते एवं सति य आर्यमार्गेणाकिंचन्यायतनाद्वीतरागो ध्यानं निश्रित्येन्द्रियाणि संचरति स कृत्स्न-पूर्वमार्गत्यागात्केवलफलमार्गलाभाच्चोर्ध्वभूमिक्लेशविसंयोगेनासमन्वागतः स्यात्। त्यक्ते च तस्मिन् पुनरपि तैः क्लेशैः समन्वागतः स्यादिति।

**भवाग्राधविमुक्तोर्ध्वजातवत्त्वसमन्वयः[1]।**

असत्यामपि तु तस्यां[2] लौकिक्यां विसंयो-[31a. 19A. V]गप्राप्तौ न तैः समन्वागमः स्यात्। तद्यथा भवाग्रादर्ध[3]प्रकारविमुक्तस्यासत्यामपि तु लौकिक्यां तद्विसंयोगप्राप्तौ त्यक्तायामपि चेन्द्रियसंचारेण लोकोत्तरायां न पुनस्तैः क्लेशैः समन्वागमो भवति। यथा च पृथग्जनस्य प्रथमध्यानभूमेरूर्ध्वं जातस्य कामावचर-क्लेशविसंयोगप्राप्तित्यागान्न पुनस्तैः समन्वागमो भवतीत्यज्ञापकमेतत्।

कतमया पुनर्भूम्या कुतो वैराग्यं भवति।

**अनास्रवेण वैराग्यमनागाम्येन[4] सर्वतः ॥४७॥**

आभवाग्रात्। अथ यः सामन्तकं निश्रित्याधरभूमिवैराग्यं प्राप्नोति किमस्यानन्तर्यमार्गवत्सर्वे विमुक्तिमार्गाः सामन्तकाद्भवन्ति। नेत्याह। किं तर्हि।

**ध्यानात्सामन्तकाद्वाऽन्त्यो मुक्ति[5]मार्गस्त्रिभूजये।**

नव ह्युपपत्तिभूमयः। सर्वकामधातुरष्टौ च ध्यानारूप्याः। तत्र यावत् द्वितीयध्यानवैराग्यं त्रिभूमिजयः। तस्मिन् पश्चिमो विमुक्तिमार्गः सामन्तकाद्भवति ध्यानाद्वा मौलात्।

**नोर्ध्वं सामन्तकात्**

त्रिभूमिजयादूर्ध्वं मौलादेव न पुनः सामन्तकादुपेक्षेन्द्रियसामान्यात्। त्रिषु हि ध्यानेषु सामन्तकमौलयोरिन्द्रियभेदात् कश्चिन्न शक्नोति मौलं ध्यानं प्रवेष्टुम्।

---

१. Ms. looks like °वत्त्वे। २. Y. seems to be तस्य। ३. Ms. भावादर्द्ध° Y. भावाग्रार्धं। ४. G. °गम्येन। Ms. reads अनागम्येन below but अनागाम्येन also elsewhere। ५. Ms. विमुक्ति।

इन्द्रियसंचारस्य दुष्करत्वात् । [31b. 19B. V] अतस्त्रिभूमिवैराग्ये ध्यानसामन्तकादप्यन्यो विमुक्तिमार्गो भवति ।

"अनास्रवेण वैराग्यमनागम्येन सर्वत" इत्युक्तमन्यैस्तु नोक्तम् । अत उच्यते

**आर्यैरष्टाभिः स्वोर्ध्वभूजयः ॥४८॥**

अनास्रवैरष्टाभिर्ध्यानध्यानान्तरारूप्यैः स्वस्या ऊर्ध्वायाश्च भूमेर्वैराग्यं नाधराया वीतरागत्वात् । तत्र लोकोत्तरा आनन्तर्यविमुक्तिमार्गाः सत्यालम्बनत्वात्सत्याकारप्रवृत्ता इति सिद्धम् ।

**विमुक्त्यानन्तर्यपथा लौकिकास्तु यथाक्रमम् ।**
**शान्ताद्युदाराद्याकाराः[1]**

विमुक्तिमार्गाः शान्ताद्याकारा आनन्तर्यमार्गा औदारिकाद्याकाराः । ते पुनर्यथाक्रमम्

**उत्तराधरगोचराः ॥४९॥**

विमुक्तिमार्गा उत्तरां भूमिं शान्ततः प्रणीततो निःसरणतश्चाकारयन्ति संभवतः । आनन्तर्यमार्गा अधरां भूमिमौदारिकतो दुःखिलतः स्थूलभित्तिकतश्च[2] । अशान्तत्वादौदरिकतो महाभिसंस्कारतरत्वात् । अप्रणीतत्वात् दुःखिलतो वहुदौष्ठुल्यतरत्वेन प्रतिकूलभावात् । स्थूलभित्तिकतस्तयैव तद्भूम्यनिःसरणात्[3] भित्त्यनिःसरणवत् । एषां[4] विपर्ययेण शान्तप्रणीतनिःसरणाकाराः । गत[5] मानुषङ्गिकम् । इदं तु[6] वक्तव्यम् ।

अथ क्षयज्ञानादनन्तरं किमुत्पद्यते

**यद्यकोप्यः क्षयज्ञानाद-[32a. 19A. VI ]नुत्पादमतिः**

अकोप्यधर्मा चेदर्हन्भवति क्षयज्ञानात्समनन्तरमनुत्पादज्ञानमस्योत्पद्यते ।

**न चेत् ।**

---

१. G. °कार । २. Ms. seems to drop त । ३. Ms. °सरणा । ४. Y. adopts the reading तेषां and gives in note येषां Mss । ५. Ms. गत० । ६. Y. omits तु ।

**क्षयज्ञानमशैक्षी वा दृष्टिः**

न चेदकोप्यधर्मा भवति क्षयज्ञानात् क्षयज्ञानमेवोत्पद्यते अशैक्षी वा सम्यग्दृष्टिः। न त्वनुत्पादज्ञानं परिहाणिसंभवात्। किं पुनरकोप्यधर्मणः सा नैवोत्पद्यते।

**सर्वस्य साऽर्हतः ॥५०॥**

अकोप्यधर्मणोऽप्यनुत्पादज्ञानात्कदाचिदनुत्पादज्ञानमेवोत्पद्यते कदाचिदशैक्षी सम्यग्दृष्टिः।

यान्येतानि चत्वारि फलान्युक्तानि कस्यैतानि फलानि। श्रामण्यफलानि। किमिदं श्रामण्यं नाम।

**श्रामण्यममलो मार्गः**

अनास्रवो मार्गः श्रामण्यम्। तेन हि श्रमणो भवति। क्लेशसंशमनात्। "शमिता अनेन भवन्ति अनेकविधाः पापका अकुशला धर्मा विस्तरेण यावज्जरामरणीयास्तस्माच्छ्रमण इत्युच्यत" इति सूत्रे वचनात्। अनत्यन्तशमनान्न पृथग्जनः परमार्थश्रमणः। तस्य पुनः श्रामण्यस्य।

**संस्कृतासंस्कृतं फलम्।**

संस्कृतासंस्कृतानि हि श्रामण्यफलानि पुनश्चत्वार्युक्तानि सूत्रे। अपि तु

**एकान्ननवतिस्तानि**[1]

कानि पुनस्तानि

**मुक्तिमार्गाः सह क्षयैः ॥५१॥**

दर्शनहेयप्रहाणायाष्टावानन्तर्यमार्गा अष्टौ विमुक्तिमार्गा [32b. 19B. VI] भावनाहेयप्रहाणाय नवसु भूमिषु प्रत्येकं नव प्रकाराणां क्लेशानां प्रहाणाय तावन्त एवानन्तर्यमार्गा विमुक्तिमार्गाश्च। तत्रानन्तर्यमार्गाः श्रामण्यं विमुक्तिमार्गाः

१. G. एका न नवति०।

संस्कृतानि श्रामण्यफलानि। तन्निष्यन्दपुरुषकारफलत्वात्। तेषां क्लेशानां प्रहाणान्यसंस्कृतानि श्रामण्यफलानि। एवमेकान्ननवतिर्भवन्ति। एवं तर्हि बुद्धस्योपसंख्यानं कर्तव्यं जायते। न कर्तव्यम्। यद्यपि भूयांसि फलानि

**चतुष्फलव्यवस्था तु पञ्चकारणसंभवात्।**

यस्यां हि प्रहाणमार्गावस्थायां पञ्च कारणानि संभवन्ति तस्यां किल भगवता फलं व्यवस्थापितम्। कतमानि पञ्च।

**पूर्वत्यागोऽन्यमार्गाप्तिः क्षयसंकलनं फले ॥५२॥**

**ज्ञानाष्टकस्य लाभोऽथ षोडशाकारभावना।**

पूर्वमार्गत्यागोऽपूर्वमार्गाप्तिः प्रतिपन्नकफलमार्गत्यागलाभात्। प्रहाणसंकलनं सर्वस्यैकप्राप्तिलाभात्। युगपदष्टज्ञानलाभश्चतुर्विधनां धर्मान्वयज्ञानानाम्। षोडशाकारभावना अनित्याद्याकाराणाम्। इमानि हि पञ्च कारणानि फले फले भवन्ति।

यद्यनास्रवो मार्गः श्रामण्यं कथं लौकिकमार्गप्राप्तं फलद्वयं श्रामण्यफलं युज्यते।

**लौकिकाप्तं तु मिश्रत्वानास्रवाप्तिः धृतेः फलम् ॥५३॥**

न हि तत्र लौकिक-[33a. 19A. VII]मार्गफलमेव प्रहाणं सकृदागामिफलं वा भवत्यनागामिफलं वा। किं तर्हि। दर्शनमार्गफलमपि प्रहाणं तत्र मिश्रीक्रियते। सर्वस्य तत्फलसंगृहीतैकविसंयोगप्राप्तिलाभात्। अत एव हि सूत्र उक्तं "सकृदागामिफलं कतमत्। यत्त्रयाणां संयोजनानां प्रहाणं रागद्वेषमोहानां च तनुत्वमिति। अनागामिफलं कतमत्। यदुत पञ्चानामवरभागीयानां संयोजनानां प्रहाणमि"ति। अनास्रवया च विसंयोगाप्राप्त्या तत्प्रहाणं संधार्यते। तद्वलेन परिहीणामरणात्[1]। अतोऽप्यस्य मरणं युक्तं श्रामण्यफलम्। यदेव चैतच्छ्रामण्ययुक्तं

**ब्राह्मण्यं ब्रह्मचक्रं च तदेव**

क्लेशानां वाहना[2]द्वाह्मण्यं ब्रह्मचक्रं तु

१. Y. परिहीणात्। २. Ms. वाहाना....।

**ब्रह्मवर्तनात् ।**

अनुत्तरब्रह्मण्ययोगात् भगवान्ब्रह्मा। "एष हि भगवान् ब्रह्मा इत्यपि शान्तः शीतीभूत इत्यपी"ति सूत्रात् । तस्येदं चक्रमिति ब्राह्मं तेन प्रवर्तितत्वात् ।

**धर्मचक्रं तु दृङ्मार्गः**

चङ्क्रमणाच्चक्रं तत्साधर्म्याद्दर्शनमार्गो धर्मचक्रम् । कथमस्य साधर्म्यम् ।

**आशुगत्वाद्यरादिभिः ॥५४॥**

आशुगत्वात्त्यजनक्रमणात् अजितजयजिताध्यवसनादुत्पतननिपतनाच्च । एवमाशुगत्वादिभिःअरादिभिः साधर्म्यादार्याष्टाङ्गो मार्गश्चक्रमिति भदन्तघोषकः। सम्यग्दृष्टिसंकल्पव्यायामस्मृतयो ह्यरस्थानीयाः।सम्यग्वाक्कर्मान्ताजीवा नाभिस्थानीयाः समाधिर्नेमिस्थानीय इति दर्शनमार्गो धर्मचक्रमिति। कुत एतत्[33b.19B. VII] आर्यकौण्डिन्यस्य तदुत्पत्तौ "प्रवर्तितं धर्मचक्रमि"ति वचनात् । कथं तत्त्रिपरिवर्तं द्वादशाकारं च । इदं दुःखमार्यसत्यम् । तत् खलु परिज्ञेयं तत् खलु परिज्ञातमित्येते त्रयः परिवर्ताः । एकैकस्मिंश्च परिवर्ते चक्षुरुदपादि ज्ञानं विद्या बुद्धिरुदपादि इत्येते[1] द्वादशाकाराः । प्रतिसत्यमेवं भवन्ति । त्रिकद्वादशकसाधर्म्यात्तु त्रिपरिवर्तं द्वादशाकारमुक्तम् । द्वयसप्तस्थानकौशलादेशनावत्[2] । एभिश्च परिवर्तैर्दर्शनभावनाशैक्षमार्गा यथासंख्यं दर्शिता इति वैभाषिकाः । यद्येवं न तर्हि दर्शनमार्ग एव त्रिपरिवर्त्तो द्वादशाकार इति कथमसौ धर्मचक्रं व्यवस्थाप्यते । तस्मात्स एव धर्मपर्यायो धर्मचक्रं त्रिपरितं द्वादशाकारं च युज्यते । कथं च पुनस्त्रिपरिवर्तम् । सत्यानां त्रिः परिवर्त्तनात् । कथं द्वादशाकारम् । चतुर्णां सत्यानां त्रिधाकरणात् । दुःखं समुदयो निरोधो मार्ग इति । परिज्ञेयं[3] प्रहेयं[4] साक्षात्कर्तव्यं भावयितव्यमिति । परिज्ञातं प्रहीणं साक्षात्कृतं भावितमिति । तस्य पुनः प्रवर्तनं परसंताने गमनमर्थज्ञापनात् । अथवा सर्व एवार्यमार्गो धर्मचक्रं विनेयसंतानक्रमणात्[5] । तत्तु परसंताने दर्शनमार्गो-[34a. 19A. VIII]त्पादनाद्वर्तयितुमारब्धमतः प्रवर्तितमित्युच्यते ।

---

१. Ms. पादित्त्येते । २. Y. °कौशल... । ३. Y. परिज्ञातव्यम् । ४. Y. प्रहातव्यम् । ५. Y. विनेयजनसन्ताने क्रमणात् ।

अथ कस्मिन्धातौ कति श्रामण्यफलानि प्राप्यन्ते ।

**कामे त्रयाप्तिः**

कामधातावेव त्रयाणां श्रामण्यफलानां प्राप्तिर्नान्यत्र ।

**अन्त्यस्य त्रिषु**

अन्त्यं श्रामण्यफलमर्हत्वं तस्य त्रिषु धातुषु प्राप्तिः । फलद्वयस्य तावदवीतरागप्राप्यत्वादूर्ध्वमप्राप्तिर्युक्ता । तृतीयस्य तु कस्मादप्राप्तिः ।

**नोर्ध्वं हि दृक्पथः ।**

ऊर्ध्वं हि कामधातोर्दर्शनमार्गो नास्ति । न च तेन विनाऽस्ति वीतरागस्यानागामि फलप्राप्तिरित्येतत् कारणम् । किं पुनः कारणं तत्र दर्शनमार्गो नास्ति । आरूप्येषु तावत् श्रवणाभावादधोधात्वनालम्बनाच्च । रूपधातौ तु

**असंवेगादिह विधा तत्र निष्ठेति चागमात् ।।५५।।**

रूपावचरा हि पृथग्जनाः समापत्तिसुखसङ्गा दुःखवेदनाभावाच्च न संविजन्ते । न च विना संवेगेनार्यमार्गः शक्तो लब्धुम् । इयं तावद्युक्तिः । आगमोऽप्ययं "पञ्चानां पुद्गलानामिह विधा तत्र निष्ठा अन्तरापरिनिर्वायिणो यावदूर्ध्वंस्रोतस" इति । विधा हि मार्गारम्भो निर्वाणोपायत्वात् ।

इदमुक्तं "यद्यकोप्यः क्षयज्ञानादनुत्पादमति" रिति । तत्र किमर्हतामप्यस्ति भेदः । अस्तीत्युच्यते ।

**षडर्हन्तो मताः**

सूत्र उक्तं षडर्हन्तः परिहाणधर्मा चेतनाधर्मा अनु-[34b. 19B. VIII] रक्षणा धर्मा स्थिताकम्प्यः[1] प्रतिवेधनाभव्योऽकोप्यधर्मा चेति ।

**तेषां पञ्च श्रद्धाधिमुक्तिजाः[2] ।**

---

१. Ms. °कम्पः । २. Y. °मुक्तजाः ।

अकोप्यधर्माणं वर्जयित्वाऽन्ये पञ्च श्रद्धाधिमुक्ति[1]पूर्वकाः।

**विमुक्तिः सामयिक्येषाम्**

एषां च पञ्चानां सामयिकी कान्ता चेतोविमुक्तिर्वेदितव्या। नित्यानुरक्ष्यत्वात्। अत एवैते समयविमुक्ता उच्यन्ते। समयापेक्षाश्चैतेऽधिमुक्ताश्चेति समयविमुक्ता मध्यपदलोपात् घृतघटवत्। एषां हि समयापेक्षासमाधिसंमुखीभाव उपकरणारोग्यदेशविशेषापेक्षत्वात्।

**अकोप्याकोप्यधर्मणः ॥५६॥**

अकोप्यधर्मणस्त्वकोप्या विमुक्तिः। कोपयितुमशक्यत्वादपरिहाणितः।

**अतोऽसमयमुक्तोऽसौ**

अत एवासमयविमुक्ति उच्यते। स ह्यसमयापेक्षाविमुक्तिश्च। इच्छातः समाधिसंमुखीभावात्। कालान्तरात्यन्तविमुक्तितो वा कोप्याकोप्यधर्मणोः समयासमये विमुक्तत्वं[2] परिहाणिसंभवासंभवतः।

**दृष्टिप्राप्तान्वयश्च सः।**

स चाकोप्यधर्मा दृष्टिप्राप्तपूर्वको वेदितव्यः।

किं पुनरेते षडर्हन्त आदित एव तद्गोत्रा भवन्त्यथ पश्चात्।

**तद्गोत्रा आदितः केचित्केचिदुत्तापनागताः ॥५७॥**

कश्चित्प्रथमत एव चेतनाधर्मगोत्रको भवति। कश्चित्पुनः परिहाणधर्मा भूत्वेन्द्रिया-[35a. 19A1. I]णामुत्तापनया चेतनाधर्मतां गतः। एवं यावदकोप्यधर्मतां गतो वेदितव्यः। तत्र परिहाणधर्मा यः परिहातुं भव्यो न चेतनादिधर्मा। चेतनाधर्मा यश्चेतयितुं भव्यः। अनुरक्षणाधर्मा योऽनुरक्षितुं भव्यः। स्थिताकम्प्यो यः परिहाणिप्रत्ययं बलवन्तमन्तरेणानुरक्षन्नपि स्थातुं भव्यो न

१. Y. °मुक्त.। २. Ms. looks like विमुक्तित्वं.।

हातुं नापि वर्धयितुं विनाभियोगेन। प्रतिवेधनाभव्यो योऽकोप्यः[१] प्रतिवेद्धुं भव्यः। अकोप्यधर्मा यो नैव परिहातुं भव्यः। प्रथमौ द्वौ पूर्वमेव शैक्षावस्थायां सातत्यसत्कृत्यप्रयोगविकलौ। तृतीयः सातत्यप्रयोगी। चतुर्थः सत्कृत्यप्रयोगी। पञ्चम उभयथाप्रयोगी मृद्विन्द्रियस्तु। षष्ठ उभयथाप्रयोगी तीक्ष्णेन्द्रियश्च। नचावश्यं परिहाणधर्मा परिहीयते नापि यावत् प्रतिवेधनाभव्यः प्रतिविध्यति। संभवं तु प्रत्येवमुच्यते। एवं[२] कृत्वा धातुत्रयेऽपिषडर्हन्तो युज्यन्ते। येषां त्ववश्यं परिहीयते यावत् प्रतिविध्यति तेषां कामधातौ षट् रूपारूप्यधात्वोः स्थिताकम्प्योऽकोप्यधर्मा च। तयोःपरिहाणिचेतनेन्द्रियसंचाराभावात्।

कः पुनरेषां कुतः परिहीयते। फलात् गोत्राद्वा।

**गोत्राच्चतुर्णां पञ्चानां फलाद्धानिः**[३]

चे[35b. 19B₁. I]तनाधर्मादीनां **चतुर्णां गोत्रात्परिहाणिः**। न हि परिहाणधर्मा पुनः स्वगोत्रात् परिहीयते। परिहाणधर्मादीनां **पञ्चानां फलात्** परिहाणिः। तेषामपि तु

**न पूर्वकात्।**

यस्य यत् प्रथमगोत्रं स तस्मान्न परिहीयते। शैक्षाशैक्षमार्गाभ्यां दृढ़ीकृतत्वात्। शैक्षस्तु लौकिकलोकत्तराभ्यां दृढ़ीकृतत्वात् न परिहीयते स्वगोत्रात्। यत्तु पश्चात् प्रतिलब्धमुत्तापनया तस्मात् परिहीयते। यस्य च यत् प्रथमं फलं स तस्मान्न परिहीयते। शेषात् परिहीयते। अतएव[४] स्रोतआपत्तिफलान्नास्ति परिहाणिः। एवं च कृत्वा परिहाणधर्मणस्त्रयः प्रकारा भवन्ति। तदवस्थस्य परिनिर्वाणमिन्द्रियसंचारः। परिहाय वा शैक्षत्वम्। चेतनाधर्मणश्चत्वारः। एत एव त्रयः परिहाणधर्मगोत्रप्रत्यागमनं च। एवमन्येषां त्रयाणामेकैकप्रकारवृद्ध्या यथाक्रमं पञ्च षट् सप्त प्रकारा वेदितव्याः। यस्य च यत् प्रथमं गोत्रं स परिहाय शैक्षोभूतस्तत्रैवावतिष्ठते नान्यस्मिन्। अन्यथा हि तद्गोत्र[५]विशेष लाभाद् वृद्धिरेवास्य स्यान्न परिहाणिः।

किं पुनः कारणं प्रथमानां नास्ति[६] परिहाणिः। दर्शनहेयानामवस्तुकत्वात्। आत्माधिष्ठानप्रवृत्ता ह्येते। सत्का-[36a. 19A₁. II]यदृष्टिमूलकत्वात्[७]।

---

१. Ms यो कोप्या। २. Y. adds च। ३. Ms.°द्धानिश्चे०। ४. adds च। ५. Ms. तद् गोत्र। Y. omits तत्। ६. Y. प्रथमात् फलान्नास्ति। ७. Y. मूलत्वात्।

स चात्मा नास्तीति । असदालम्बनास्तर्हि प्राप्नुवन्ति । नासदालम्बनाः । सत्यालम्बनत्वात् । वितथालम्बनास्तु । कतमश्च क्लेशो नैवमस्ति विशेषः । आत्मदृष्टिर्हि रूपादिके वस्तुनि कारकवेदकवशवर्तित्वेनात्मत्वमभूतमध्यारोपयति[1] तदधिष्ठानानुवृत्ता[2]श्चान्तग्राहदृष्ट्यादय[3] इत्यवस्तुका उच्यन्ते । भावनाहेयास्तु रागप्रतिघमानाविद्या रूपादिके वस्तुनि केवलं सक्त्याघातोन्नत्यसंप्रख्यानभावेन वर्तन्त इति सवस्तुका उच्यन्ते । अस्ति च तच्छुतादिमात्रं यत्र तेषां प्रवृत्तयः न[4] त्वात्मादिलेशोऽपि[5] । तथा हि भावनाहेयानामस्ति प्रतिनियतं वस्तुमनापामनाप[6]लक्षणं न तु दर्शनहेयानामात्मादिलक्षणम् । तस्मादप्यवस्तुका[7] उच्यन्ते । अपि खल्वार्यस्यानुपनिध्यायतः स्मृतिसंप्रमोषात् क्लेश उत्पद्यते नोपनिध्यायतो रज्ज्वामिव सर्पसंज्ञा । न चानुपनिध्यायत आत्म[8]दृष्ट्यादीनामुपपत्ति[9]र्युज्यते सन्तीरकत्वादिति नास्ति दर्शनहेयक्लेश[10]-प्रहाणात्परिहाणिः । अर्हत्त्वादपि नास्ति परिहाणिरिति सौत्रान्तिकाः । एष एव च न्यायः । कथमिदं गम्यते । आगमाद्युक्तितश्च । कथमागमात् । "तद्धि भिक्षवः [36b. 19B1. II] प्रहीणं यदार्यया[11] प्रज्ञया प्रहीणमि"त्युक्तम् । आद्यन्तयोश्च फलयोरार्यैव प्रज्ञयाऽधिगमः । "शैक्षस्य चाप्रमादकरणीयेऽप्रमादकरणीयं वदामी"त्युक्तं नार्हतः । "अर्हतोऽप्यहमानन्द लाभसत्कारमन्तरायकरं वदामी"त्यत्र सूत्रे दृष्टधर्मसुखविहारमात्रादेव परिहाणिरुक्ता । "या त्वनेनाकोप्यचेतोविमुक्तिः कायेन साक्षात्कृता । ततोऽहं न केनचित् पर्यायेण परिहाणं वदामी"ति चोक्तम् । सामयिक्या अस्तीति चेत् । वयमप्येवं ब्रूमः । सा तु विचार्या । किमर्हत्त्वमाहोस्विद्ध्यानानीति । मौलो हि ध्यानसमाधिः समये संमुखीभावात्सामयिकी विमुक्तिरित्युच्यते । दृष्टधर्मसुखविहारार्थं च पुनः पुनरेषणीयत्वात्कान्तेत्युच्यते । आस्वादनीयत्वादित्यपरे । अर्हत्त्वविमुक्तिस्तु नित्यानुगतत्वान्न युज्यते सामयिकी अपुनःप्रार्थनीयत्वान्न कान्तेति । यदि चार्हत्त्वात् परिहाणिसंभवोऽभविष्यत् किमर्थं भगवानाधिचेतसिकेभ्य एव दृष्टधर्मसुखविहारेभ्यः परिहाणिमवक्ष्यत् । अतो गम्यते सर्वस्यैवार्हतो विमुक्तिरकोप्या दृष्टधर्मसुखविहारेत्यस्तु । कश्चित् लाभसत्काख्याक्षेपदोषात् परिहीयते वशि-[37a. 19A1. III]-त्वभ्रंशाद्यो मृद्विन्द्रियः । कश्चिन्न परिहीयते यस्तीक्ष्णेन्द्रियः । तत्र यः परिहीयते स परिहाणधर्मा । यो न परिहीयते सोऽपरिहाणधर्मा । एवं चेतनाधर्मादयोऽपि योज्याः । अपरिहाण-

१. Y. रोपयन्ति । २. Y. नुप्रवृत्ता° । ३. Y. ग्राहादयः । ४. Ms. प्रवृत्तियः । ५. Y. अस्ति । ६. Y. °मनापादि । ७. Y. omits अपि । ८. Ms. आत्मा । ९. Y. उत्पत्तिः । १०. Y. omits क्लेश । ११. Y. आर्यप्रज्ञया ।

धर्मस्थिताकम्प्याकोप्यधर्मणां[1] को विशेषः। अपरिहाणधर्माऽनुत्तापनागतः। अकोप्यधर्मा तूत्तापनागतः। तौ हि यं यमेव समापत्तिविशेषमुत्पादयतस्तस्मान्न परिहीयेते। स्थिताकम्प्यस्तु यस्मिन्नेव गुणे स्थितस्तस्मात्केवलं न परिहीयते न त्वन्यमुत्पादयति। उत्पादयति वा तस्मात्तु[2] कम्पत[3] इत्येव विशेषो लक्ष्यते। आयुष्मान्भौतिकः[4] शैक्षीभूतः सामयिक्या विमुक्तेरत्यास्वादनान्मृद्विन्द्रियत्वाच्चाभीक्ष्णं परिहीयमाणो[5] निर्विण्णः शस्त्रमाधारयन् कायजीवितनिरपेक्षत्वान्मरणकाल एवार्हत्त्वप्राप्तः परिनिर्वृत्तश्च[6]। तस्मात्सोऽपि नार्हत्त्वात् परिहीणः। दशोत्तरे चोक्तम्। "एको धर्म उत्पादयितव्यः सामयिकी कान्ता चेतोविमुक्तिः। एको धर्मः साक्षात्कर्तव्यः अकोप्या चेतोविमुक्तिरि"ति। यदि चार्हत्त्वं सामयिकी कान्ता चेतोविमुक्तिरभविष्यत् किमर्थं तत्रैव दशकेऽर्हत्त्वस्य द्विग्रहणमकरिष्यात्। न च क्वचिदर्हत्त्वमुत्पादयितव्यमुक्तम्। किं तर्हि। साक्षा-[37b. 19B1. III]त्कर्तव्यं मृद्विन्द्रियसंगृहीतं चार्हत्त्वमुत्पादयितव्यमिति। किमनेन ज्ञापितं भवति। यदि तावदुत्पादयितुं शक्यमित्यदपि[7] शक्यम्। अथोत्पादनमर्हतीति। अन्यत्सुतरामर्हति। तस्मान्न सामयिकी विमुक्तिरर्हत्त्वम्। कथं तर्हि समयविमुक्तोऽर्हन्नुच्यते। यस्य मृद्विन्द्रियत्वात्समयापेक्षः समाधिसमुखीभावः। विपर्ययादसमयविमुक्तः। अभिधर्मेऽपि चोक्तं "त्रिभिः स्थानैः कामरागानुशयस्योत्पादो भवति। कामरागानुशयोऽप्रहीणो भवत्यपरिज्ञातः कामरागपर्यवस्थानीयाश्च धर्मा आभासगता भवन्ति तत्र चायोनिशो मनस्कार" इति। परिपूर्णोत्पत्तिरेवमिति चेत्। कस्य वा परिपूर्णकारणस्योत्पत्तिः। एवं तावदागमात्। कथं युक्तितः। यदि तावदर्हतस्तद्रूपः प्रतिपक्ष उत्पन्नो येन क्लेशा अत्यन्तमनुत्पत्तिधर्मतामापन्नाः कथं पुनः परिहीयते। अथ नोत्पन्नः। कथं क्षीणास्रवो भवति। अत्यन्तमनयोद्धृतायां[8] तद्बीजधर्मतायामक्षीणास्रवो वा पुनः कथमर्हन्भवतीत्येवं युक्तिः। अङ्गारकर्षूपमं सूत्रं तर्हि परिहार्यम्। यत्रेदमुक्तं "तस्य खलु श्रुतवत आर्यश्रावकस्यैवं[9] चरत [38a. 19A1. IV] एवं विहरतः कदाचित्कर्हिचित् स्मृतिसंप्रमोषादुत्पद्यन्ते पापका अकुशला वितर्का" इति। स हि तत्रार्हन्नेव ज्ञापितः। "दीर्घरात्र[10]"

१. Ms. °धर्म्मणां। २. Y. adopts the reading तस्मान्न and gives in note तस्मात्तु Mss। ३. Y. कम्प्यत। ४. Y. adopts the reading गौतिकः and gives in note भौतिकः Mss। ५. Ms. °मानो। ६. Y. परिनिर्वृत्तिश्च। ७. Ms. °त्यदपि। ८. Y. adopts the reading अनपोद्धृतायाम् and gives in note anayoddh° Mss। ९. Ms. °स्येवं। १०. Y. दीर्घरात्रं।

विवेकनिम्नं[1] चित्तं भवति[2] यावन्निर्वाणप्राग्भारमि''ति वचनात्। अर्हतो ह्येतद्वलमन्यत्रोक्तम्। "सर्वैरास्रवस्थानीयैर्धर्मैः शीतीभूतं वान्तीभूतमि"ति चाभिधानात् अस्त्येतदेवम्। यावत्तु चारो न सुप्रतिबद्धस्तावदेवं चरतोऽपि शैक्षस्यास्ति संभवः क्लेशोत्पत्ताविति शैक्षावस्था[3]मधिकृत्यैवं वचनाददोषः। प्रतिज्ञायते हि लौकिकमार्गप्रतिलब्धात्फलद्वयात्परिहाणिः। अर्हत्त्वादपि तु परिहाणिं वर्णयन्ति वैभाषिकाः।

किं पुनरिमेऽर्हन्त एव षड्गोत्रा[4] भवन्ति अथान्येऽपि षड्गोत्रा भवन्ति।

**शैक्षानार्याश्च[5] षड्गोत्राः**

शैक्षपृथग्जना अप्येवं[6] षड्गोत्राः। तत्पूर्वकाण्येव ह्यर्हतां गोत्राणि। अपि तु

**संचारो नास्ति दर्शने ॥५८॥**

दर्शनमार्गादन्यत्रेन्द्रियसंचारो भवति। प्रयोगासंभवान्न दर्शनमार्गे। कश्चित् पृथग्जनावस्थायामिन्द्रियाणि संचरति। कश्चिच्छ्रद्धाधिमुक्तावस्थायाम्।

यदिदं सूत्र उक्तं "ये त्वनेन चत्वार आधिचैतसिका[7] दृष्टधर्मसुखविहारा अधिगतास्ततोऽहमस्यान्यतमान्यतमस्मात् परिहाणिं वदामि या त्वनेनैका-[38b. 19B1. IV]किना यावदकोप्या चेतोविमुक्तिः[8] कायेन साक्षात्कृता ततोऽहं न केनचित् पर्यायेण परिहाणिं वदामी"ति। कथमकोप्यधर्मणो दृष्टधर्म-सुखविहारेभ्यः परिहाणिः।

**परिहाणिस्त्रिधा ज्ञेया प्राप्ताप्राप्तोपभोगतः।**

प्राप्तपरिहाणिर्यदि प्रतिलब्धात् गुणात् परिहीयते। अप्राप्तपरिहाणिर्यदि प्राप्यं गुणं न प्राप्नोति। उपभोगपरिहाणिर्यदि प्राप्तगुणं न संमुखीकरोति। आसां पुनः परिहाणीनाम्

**अन्त्या शास्तुरकोप्यस्य मध्या चान्यस्य तु त्रिधा ॥५९॥**

---

१. Y. °निम्न। २. Y. उच्यते। ३. Ms. It looks like स on the top margin। ४. Ms. खड्गोत्रा। ५. Ms. शैक्षाणानार्याश्च and णा is not cancelled। ६. Ms. °जनाप्येवं। ७. Ms. अधिचैतसिका। ८. Ms. चेतोधिमुक्तिः।

बुद्धस्योपभोगपरिहाणिरेव नान्या। अकोप्यधर्मणः सा चाप्राप्तपरिहाणिश्च। पुद्गलविशेषधर्माप्रापणात्। अन्यस्यार्हतः प्राप्तपरिहाणिरप्यस्ति। अत उपभोगपरिहाणिवचनादकोप्यधर्मणः सूत्रविरोधः। सर्वस्यानास्रवा विमुक्तिरकोप्या। अकोप्यधर्मव्यवस्थानं तु यथा तथोक्तम्। अत एतदचोद्यमित्यपरिहाणिवादी।

अथ योऽर्हत्फलात्परिहीयते किमसौ पुनर्जायते। नास्त्येतत्। यस्मात्

म्रियते न फलभ्रष्टः

नैव हि कश्चित्फलात् परिहीणः कालं करोति। "धन्धा भिक्षव आर्यश्रावकस्य स्मृतिसंप्रमोषा अथ च पुनः क्षिप्रमेवान्तं परिक्षयं सपदि[1] संग-[39a. 19A₁. V] च्छतीति सूत्रे वचनात्। अन्यथा ह्यनाश्वासिकं ब्रह्मचर्यं स्यात्। यतश्च फलात् परिहीयते तत्फलस्थेन यदकार्यं

तदकार्यं करोति न।

परिहीणोऽपि संस्तत्फलविरुद्धां क्रियां न करोति। शूरप्रस्खलनापतनवत्।

अथेन्द्रियाणि संचरतां कत्यानन्तर्यविमुक्तिमार्गा भवन्ति।

विमुक्त्यानन्तर्यपथा नवाकोप्ये[2]

अकोप्यगोत्रे[3] प्रतिविध्यमाने प्रतिवेधभावनाभव्यस्य नवानन्तर्यमार्गा विमुक्तिमार्गाश्च भवन्ति। यथार्हत्त्वं प्राप्नुवतः। किं कारणम्।

अतिसेवनात्[4] ॥६०॥

तस्य मृद्विन्द्रियगोत्रं भवतीति नाल्पेन व्यावर्त्तयितुं शक्यते। शैक्षाशैक्ष[5]मार्गाभ्यां दृढीकृतत्वात्।

दृष्टचाप्ततायामेकैकः

---

१. Ms. पपदि। २. Ms. नवापेकोप्ये। ३. Ms. looks like श्रोत्रे। ४. Here a piece of kārikā is dropped. According to La vallee Poussin, it is अतिसेवनात्। ५. Ms. शैक्षाशैक्षा।

दृष्टिप्राप्तायां प्रतिविध्यमानायामेक एवानन्तर्यमार्गो भवत्येको विमुक्तिमार्गः । प्रयोगमार्गस्तु सर्वत्रैक एव । ते पुनः सर्व एवानन्तर्यविमुक्तिमार्गाः

**अनास्रवाः**

न हि सास्रवेण मार्गेणार्याणामिन्द्रियसंचारः । क्व पुनरिन्द्रियाणि वर्धन्ते ।

**नृषु वर्धनम् ।**

मनुष्येष्वेवेन्द्रियसंचारो नान्यत्र । परिहाण्यसंभवात् ।

कः पुनः कतमां भूमि निश्रित्येन्द्रियाणि संचरति ।

**अशैक्षो नव निश्रित्य भूमीः**

अनागम्यस्यानन्तरं[1] चत्वारि ध्यानानि त्रीणि चारूप्याणि ।

**शैक्षस्तु षट्**

आरू-[39b. 19B1. V]प्यवर्ज्यः । किं कारणम् ।

**यतः ।।६१।।**

**सविशेषं फलं त्यक्त्वा फलमाप्नोति वर्धयन् ।**

इन्द्रियाणि हि संचरन् फलं फलविशिष्टं[2] च मृद्विन्द्रियमार्गं त्यक्त्वा तीक्ष्णेन्द्रियगोत्रकं[3] फलमार्गमेव प्रतिलभते । न चानागामिफलमारूप्यभूमि[4]संगृहीतमस्तीत्येतत् कारणम् ।

त एते षडेवार्हन्तो नव भवन्ति । इन्द्रियभेदात् । कथं कृत्वा ।

**द्वौ बुद्धौ श्रावकाः सप्त नवैते नवधेन्द्रियाः ।।६२।।**

१. Ms. °नान्तरं । २. Ms. फलशिष्टं । ३. Ms. गोत्रंकं । ४. Y. omits भूमि ।

कतमे सप्त श्रावकाः । परिहाणधर्मादयः पञ्च । अकोप्यधर्मा च द्विविध उत्तापनागत आदितश्च तद्गोत्रः[1] अकोप्यभेद एव । द्वौ बुद्धौ प्रत्येकबुद्धो बुद्धश्च । इत्येते मृदुमृद्वादिनवप्रकारेन्द्रियभेदान्नव पुद्गला भवन्ति ।

सर्व एव त्वार्यपुद्गलाः सप्त भवन्ति । श्रद्धानुसारी धर्मानुसारी श्रद्धाधिमुक्तो दृष्टिप्राप्तः कायसाक्षी प्रज्ञाविमुक्त उभयतोविमुक्तश्च । एते पुनः

**प्रयोगाक्षसमापत्तिविमुक्त्युभयतः कृताः ।**

**पुद्गलाः सप्त**

प्रयोगतः श्रद्धाधर्मानुसारिणौ । पूर्वमेव परप्रत्ययधर्मानुसाराभ्यामर्थेषु प्रयोगात् । इन्द्रियतः श्रद्धाधिमुक्तदृष्टिप्राप्तौ । मृदुतीक्ष्णेन्द्रियत्वात् श्रद्धाधिमोक्षप्रज्ञाधिक्यतः । समापत्तितः कायसाक्षी निरोधसमापत्ति[2]साक्षात्करणा-[40a. 19A1. VI]त् । विमुक्तितः प्रज्ञाविमुक्तः । समापत्तिविमुक्तितः उभयतोभागविमुक्तः ।

नामत एते सप्त पुद्गलाः ।

**षट् त्वेते**

द्रव्यतस्त्वेते षट् भवन्ति ।

**द्वौ द्वौ मार्गत्रये यतः ।।६३।।**

दर्शनमार्गे हि द्वौ पुद्गलौ श्रद्धाधर्मानुसारिणौ । तावेव भावनामार्गे द्वौ भवतः । श्रद्धाधिमुक्तदृष्टिप्राप्तौ । तौ पुनरशैक्षमार्गे द्वौ भवतः । समयासमयविमुक्ताविति । तत्रेन्द्रियतस्त्रयः । श्रद्धानुसारिणः गोत्रतः पञ्च । मार्गतः पञ्चदश । अष्ट क्षान्तिसप्तज्ञानस्थाः । वैराग्यतस्त्रिसप्ततिः । सकलबन्धनः । कामवैराग्यान्नव । एवं यावदाकिंचन्यायतनवैराग्यात् । आश्रयतो नव । त्रिद्वीपषड्देवनिकायजाः[3] । इन्द्रियगोत्रमार्गवैराग्याश्रयतः पण्डिताः शतसहस्रं संपद्यन्ते सहस्राणि च सप्तचत्वारिंशच्छतानि चाष्टौ पञ्चविंशतिश्च । एवमन्येऽपि पुद्गलाः संभवतः संख्येयाः ।

---

१. Ms. तत् गोत्रः । २. Ms. सत्यापत्ति । ३. Ms. षट्…।

कोऽयमुभयतोभागविमुक्त इत्युच्यते कश्च प्रज्ञाविमुक्तः ।

**निरोधलाभ्युभयतोविमुक्तः प्रज्ञयेतरः ।**

यो निरोधसमापत्तिलाभी स उभयतोभागविमुक्तः । प्रज्ञासमाधिबलाभ्यां क्लेशविमोक्षावरणविमुक्तत्वात् । इतरः प्रज्ञाविमुक्तः । प्रज्ञाबलेन केवलं क्लेशावरणविमुक्तत्वात् ।

यदुक्तं भगवता "क्लेशान् प्र-[40b. 19B1. VI]हायेह हि यस्तु पञ्च अहार्यधर्मा परिपूर्णः शैक्ष" इति । कियता परिपूर्णः शैक्षो भवति ।

**समापत्तीन्द्रियफलैः पूर्णः शैक्षोऽभिधीयते ॥६४॥**

त्रिविधा शैक्षस्य परिपूरिः । फलतः इन्द्रियतः समापत्तितश्च । फलत एव श्रद्धा[1]धिमुक्तस्याकायसाक्षिणोऽनागामिनः । इन्द्रियत एव दृष्टिप्राप्तस्यावीतरागस्य । फलेन्द्रियतो दृष्टिप्राप्तस्य कायसाक्षिणोऽनागामिनः । फलसमापत्तितः श्रद्धाधिमुक्तस्य कायसाक्षिणः । फलेन्द्रियसमापत्तितो दृष्टिप्राप्तस्य कायसाक्षिणः । समापत्तित एव समापत्तीन्द्रियश्च परिपूर्णत्वं नास्ति विना फलेन ।

**अशैक्षपरिपूर्णत्वं द्वाभ्याम्**

इन्द्रियतः समापत्तिश्च । फलेन त्वपरिपूर्णस्याशैक्षत्वमेव नास्तीति नास्य पुनः फलेन परिपूर्णापरिपूर्णत्वं व्यवस्थाप्यते । इन्द्रियत एवासमयविमुक्तस्य प्रज्ञाविमुक्तस्य । समापत्तित एव समयविमुक्तस्योभयभागविमुक्तस्य । इन्द्रियसमापत्तिभ्यामसमयविमुक्तस्योभयतोभागविमुक्तस्य ।

बहव इमे मार्गभेदा उक्ता लौकिकलोकोत्तरदर्शनभावनाऽशैक्षमार्गाः प्रयोगानन्तर्यविमुक्तिविशेषमार्गा इति । कतिविध एष समासतो मार्ग इति ।

**मार्गः समासतः ।**

**विशेषमुक्त्यानन्तर्यप्रयोगाख्य[41a. 19A1. VII]श्चतुर्विधः ॥६५॥**

---

१. Ms. श्रद्ध ।

प्रयोगमार्गो यस्मादनन्तरमानन्तर्यमार्गोत्पत्तिः। आनन्तर्यमार्गो येनावरणं प्रजहाति। विमुक्तिमार्गो यस्तत्प्रहेयावरणविनिर्मुक्तस्तत्[1] प्रथमत[2] उत्पद्यते। विशेषमार्गो य एभ्योऽन्यो मार्गः। कस्मात् मार्ग[3] इत्युच्यते। एष हि निर्वाणस्य पन्था एतेन[4] तद्गमनात्।[5] निर्वाणं मार्गयन्त्यनेनेति वा। विमुक्तिविशेषमार्गयोः कथं मार्गत्वम्।[6] तज्जातीयादधिमात्र[7]तरत्वादुत्तरोत्तरप्रापणात् निरुपधिशेषप्रवेशाद्वा।

मार्ग एव पुनः प्रतिपदित्युक्तो निर्वाणप्रतिपादनात्। चतस्रः प्रतिपदः। अस्ति प्रतिपद्दुःखा धन्धाभिज्ञा। अस्ति दुःखा क्षिप्राभिज्ञा। एवं सुखाऽपि द्विधा। तत्र

**ध्यानेषु मार्गः प्रतिपत्सुखा**

चतुर्ध्यानेषु मार्गः सुखा प्रतिपदङ्गपरिग्रह[8]शमथविपश्यना समताभ्यामयत्नवाहित्वात्।

**दुःखाऽन्यभूमिषु।**

अन्यास्वनागम्यध्यानान्तरारूप्यभूमिषु मार्गो दुःखा प्रतिदङ्गापरिग्रहाच्छमथविपश्यनान्यूनत्वाच्च यत्नवाहित्वात् शमथन्यूने ह्यनागम्यध्यानान्तरे विपश्यनान्यूना आरूप्या इति। सा पुनर्द्विविधाऽपि प्रतिपत्

**धन्याभिज्ञा मृदुसतेः क्षिप्राभिज्ञेतरस्य तु ॥६६॥**

मृद्विन्द्रियस्य सुखा दुःखा वा प्रतिपद्धन्धाभिज्ञा तीक्ष्णेन्द्रियस्य क्षिप्राभि-[41b. 19B1. VII]ज्ञा धन्धाभिज्ञा अस्यां प्रतिपदि। सेयं धन्धाभिज्ञा। एवं क्षिप्राभिज्ञा। धन्धस्य वा पुद्गलस्येयमिति धन्धाभिज्ञा। पुनरप्येष मार्गो बोधिपक्ष्याख्यां[9] लभते। सप्तत्रिंशद्बोधिपक्षा धर्माः। चत्वारि स्मृत्युपस्थानानि। चत्वारि सम्यक् प्रहाणानि। चत्वार ऋद्धिपादाः। पञ्चेन्द्रियाणि। पञ्च बलानि। सप्त बोध्यङ्गानि। आर्याष्टाङ्गो मार्गः इति। तत्र

**अनुत्पादक्षयज्ञाने बोधिः**

---

१. Y. निर्मुक्तः and omits तत्। २. Ms. प्रथम। ३. Ms. कस्मात्मार्ग०। ४. Y. तेन। ५. Ms. °मनान्नि। ६. Ms °त्वन्तज्जा। ७. Y. तज्जातीयाधिमात्र०। ८. Y. °परिग्रहण। ९. This Ms. has both the spellings बोधिपक्ष and बोधिपक्ष्य।

क्षयज्ञानमनुत्पादज्ञानं च । पुद्‌गलभेदेन तिस्रो वोधय उत्पद्यन्ते । श्रावकवोधिः प्रत्येकवोधिरनुत्तरा सम्यक्संवोधिरिति । अशेषाविद्याप्रहाणात् । ताभ्यां स्वार्थस्य यथाभूत[1] कृतापुनःकर्तव्यतावबोधाच्च ।[2]

**तादनुलोम्यतः ।**

**सप्तत्रिंशत्तु तत्पक्ष्याः[3]**

वोधेरनुलोमत्वाद्‌वोधिपक्ष्याः सप्तत्रिंशदुत्पद्यन्ते ।

**नामतो द्रव्यतो दश ॥६७॥**

दश द्रव्याणि सर्वे वोधिपक्ष्याः । कतमानि दश ।

**श्रद्धा वीर्यं स्मृतिः प्रज्ञा समाधिः प्रीत्युपेक्षणे ।**
**प्रश्रब्धिशीलसंकल्पाः**

इत्येतानि दश द्रव्याणि । कथं कृत्वा ।

**प्रज्ञा हि स्मृत्युपस्थितिः ॥६८॥**

**वीर्यं सम्यक्प्रहाणाख्यमृद्धिपादाः समाधयः ।**

प्रज्ञावीर्यसमाधिस्वभाधा हि स्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादाः अत इन्द्रियाणि तावद्‌वलानि च नामग्राहिकया श्रद्धावीर्यस्मृतिसमाधिप्रज्ञाद्रव्याणि च [42a. 19A1. VIII] स्मृत्युपस्थानानि धर्मप्रविचयसंवोध्यङ्गं[4] सम्यग्दृष्टिश्च प्रज्ञैव । सम्यक्प्रहाणानि वीर्यसंवोध्यङ्गं सम्यग्व्यायामश्च वीर्यमेव । ऋद्धिपादाः समाधिसम्बोध्यङ्गं[5] सम्यक्[6] समाधिश्च समाधिरेव । स्मृतिसंवोध्यङ्गं सम्यक् स्मृतिश्च स्मृतिरेव । किमवशिष्यते । प्रीतिप्रस्रब्ध्युपेक्षासंवोध्यङ्गानि सम्यक्संकल्पः[7] शीलाङ्गानि च । तान्येतानि पञ्च द्रव्याणि एवमेते वोधिपक्ष्या दश द्रव्याणि भवन्ति । वैभाषिकाणा मेकादश[8] । कायवाक्कर्मणोरसंभिन्नत्वात् शीला-

---

१. Y. यथाभूतं । २. Ms. पुनः । कर्त्तव्य० । ३. Y. तत्पक्षाः । ४. Ms. बोध्यंग । ५. Ms. बोध्यंग । ६. Ms. drops क् । ७. Y. संकल्पाः । ८. Ms. वैभाषिकाना० ।

ङ्गानि द्वे द्रव्ये इति। यत्त्वेतदुक्तं "प्रज्ञावीर्यसमाधिस्वभावाः स्मृत्युपस्थानादय" इति। अत्र वेदितव्यम्।

प्रधानग्रहणं सर्वे गुणाः प्रायोगिकास्तु ते ॥६९॥

प्रधानग्रहणेनैवमुक्तम्। सर्वे तु प्रायोगिका[1] गुणाः स्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादाः। कस्माद्वीर्यं सम्यक्प्रधानमुक्तम्। तेन सम्यक्कायवाङ्मनांसि प्रधीयन्ते। समाधिः कस्माद् ऋद्धिपाद उक्तः। तत्प्रतिष्ठत्वात्सर्वगुणसंपत्तेः[2]। ये त्वाहुः "समाधिरेवर्द्धिः[3] पादाश्छन्दादय" इति। तेषां द्रव्यतस्त्रयोदश बोधिपक्ष्याः[4] प्राप्नुवन्ति। च्छन्दचित्तयोराधिक्यात्सूत्रं च विरुध्यते। "ऋद्धिं च वो भिक्षवो दर्शयिष्यामि ऋद्धिपादांश्च यावदृद्धिः कतमा। इह भिक्षुरनेकविधमृद्धिविषयं प्रत्य-[42a. 19B1. VIII]नुभवति। एको भूत्वा बहुधा भवती"ति विस्तरः। कस्मादिन्द्रियाण्येव बलान्युक्तानि। मृद्वधिमात्रभेदादवमर्दनीयानवमर्दनीयत्वात्। इन्द्रियाणां किंकृतोऽनुक्रमः। श्रद्दधानो हि फलार्थं वीर्यमारभते। आरब्धवीर्यस्य स्मृतिरुपतिष्ठते। उपस्थितस्मृतेरविक्षेपाच्चित्तं समाधीयते। समाहितचित्तो यथाभूतं प्रजानातीति।

कस्यामवस्थायां कतमे ते बोधिपक्ष्याः प्रभाव्यन्ते।

आदिकर्मिकनिर्वेधभागीयेषु प्रभाविताः।
भावने दर्शने चैव सप्त वर्गा यथाक्रमम् ॥७०॥

आदिकर्मिकावस्थायां कायाद्युपलक्षणार्थं स्मृत्युपस्थानानि। विशेषाधिगमेन वीर्यसंवर्धनादूष्मगतेषु सम्यक्प्रधानानि। अपरिहाणीयकुशलमूलप्रवेशत्वात्[5] मूर्धस्वृद्धिपादाः। अपुनःपरिहाणित आधिपत्यप्राप्तत्वात् क्षान्तिष्विन्द्रियाणि। क्लेशानवमर्दनीयत्वादग्रधर्मेषु बलानि लौकिकान्यधर्मानवमर्दनीयत्वाद्वा[6]। बोध्यासन्नत्वात् भावनामार्गे बोध्यङ्गानि। गमनप्रभावित्वाद्दर्शनमार्गे मार्गाङ्गानि। तस्याशुगामित्वात्। संख्यानुपूर्वीविधानार्थं तु पूर्वं सप्तोक्तानि पश्चादष्टौ। तत्र धर्मप्रविचयसंबोध्यङ्गं बोधिर्बोध्यङ्गं च सम्यग्दृष्टिर्मार्गो [43a. 20A. I] मार्गाङ्गं चेति वैभाषिकाः। अपरे पुनरभित्त्वैव क्रमं बोधिपक्ष्याणा[7]मानुपूर्वीं वर्णयन्ति। "आदित एव तावद्बहुविधविषयव्यासेकविसारिणीनां बुद्धीनां निग्रहार्थं

---

१. Y. प्रायोगिकः। २. Y. प्रतिष्ठितत्वात्। ३. Ms. °र्द्धिपादा°। ४. Y. °पक्षाः। ५. Ms. °त्वात्मू°। ६. Ms. धर्मानेव मर्दनीयत्वाद्वा। ७. Y. °पक्षाणा°।

स्मृत्युपस्थानानि चेतस उपनिबद्धानि भवन्ति यावदेव गर्धाश्रितानां[1] स्मरसंकल्पानां प्रतिविनोदनाये"ति सूत्रे वचनात्। तद्बलेन वीर्यसंवर्धनाच्चतुर्विधकार्यसंपादनाय सम्यक्चित्तं प्रदधातीति सम्यक्प्रधानानि। ततः समाधिविशोधनादृद्धिपादाः। समाधिसंनिश्रयेण लोकोत्तरधर्माधिपतिभूतानि श्रद्धादीनीन्द्रियाणि। तान्येव च निर्जितविपक्षसमुदाचाराणि बलानि। दर्शनमार्गे बोध्यङ्गानि। प्रथमतो धर्मतत्त्वावलोकात् उभयोर्मार्गाङ्गानि। तथा ह्युक्तम् "आर्याष्टाङ्गे खलु मार्गे भावनापरिपूरिं गच्छति। चत्वारि स्मृत्युपस्थानानि भावनापरिपूरिं गच्छन्ति यावत् सप्त बोध्यङ्गानी"ति। पुनश्चोक्तं "यथाभूतवचनारोचनमिति भिक्षवश्चतुर्णामार्यसत्यानामेतदधिवचनं यथागतेन मार्गेण प्रक्रमणमिति भिक्षो आर्याष्टाङ्गस्य मार्गस्यैतदधिवचनमि"ति[2]। तस्मादुभयोरार्याष्टाङ्गो मार्ग एष्टव्यः। सिद्धोऽनुक्रमः।

इदं तु वक्तव्यम्। कति बोधिपक्षा धर्माः सास्रवा इति [43b. 20B. I] कत्यनास्रवा इति।

**अनास्रवाणि बोध्यङ्गमार्गाङ्गानि[3]**

भावनादर्शनमार्गयोस्तद्व्यवस्थापनात्। लौकिका अपि हि सम्यग्[4]दृष्ट्यादयः सन्ति। ते तु नार्यमार्गशब्दं लभन्ते।

**द्विधेतरे।**

अन्ये बोधिपक्षाः सास्रवाः। कस्यां भूमौ कति बोधिपक्षाः।

**सकलाः प्रथमे ध्याने**

सर्वे सप्तत्रिंशत्प्रथमे ध्याने।

**अनागम्ये प्रीतिवर्जिताः ॥७१॥**

कस्मादनागम्ये प्रीत्यभावः। सामन्तकानां बलवाहनीयत्वादधरभूमिसाशङ्कत्वाच्च।

१. Ms. शर्द्धा°। २. Ms. मार्गस्येत॰। ३. Ms. Y. °मार्गागांणि। ४. Ms. सम्यक्।

**द्वितीयेऽन्यत्र संकल्पात्**

द्वितीये ध्याने सम्यक्संकल्पवर्ज्याः षट्त्रिंशदेव। तत्र वितर्काभावात्।

**द्वयोस्तद्द्वयवर्जिताः**[१]।

तृतीयचतुर्थयोर्ध्यानयोः प्रीतिसंकल्पाभ्यां वर्जिताः पञ्चत्रिंशत्।

**ध्यानान्तरे च**

ताभ्यामेव द्वाभ्यां वर्जिताः पञ्चत्रिंशदेव।

**शीलाङ्गैस्ताभ्यां च त्रिष्वरूपिषु ।।७२**

वर्जिता इति वर्तते। आरूप्येषु सम्यग्वाक्कर्मान्ताजीवैः प्रीतिसंकल्पाभ्यां च वर्जिता द्वात्रिंशत्।

**कामधातौ भवाग्रे च बोधिमार्गाङ्गवर्जिताः।**

द्वाविंशतिर्बोधिपक्ष्यास्तयोरनास्रवमार्गाभावात्।

बोधिपक्षेषु वर्तमानस्य कस्यामवस्थायामवेत्यप्रसादलाभो वेदितव्यः।

**त्रिसत्यदर्शने शीलधर्मावेत्यप्रसादयोः ।।७३।।**

[44a. 20A. II] **लाभो मार्गाभिसमये बुद्धतत्संघयोरपि।**

दुःखसमुदयनिरोधसत्यान्यभिसमयन् धर्मे चावेत्यप्रसादमार्यकान्तानि च शीलानि प्रतिलभते। मार्गसत्यमभिसमयन् बुद्धे तस्य च श्रावकसंघेऽवेत्यप्रसादं प्रतिलभते। यो हि तयोः प्रसादः सोऽशैक्ष्येषु बुद्धकरकेषु धर्मेषु शैक्षायाशैक्षेषु च संघकरकेषु प्रसादः। अपि शब्दाच्छीलधर्मावेत्यप्रसादौ च प्रतिलभते।

कोऽयमिह धर्मोऽभिप्रेतः।

---

१. Ms- °स्तत्....।

**धर्मः सत्यत्रयं बोधिसत्त्वप्रत्येकबुद्धयोः ।।७४।।**
**मार्गश्च**

अतश्चत्वार्यपि सत्यान्यभिसमयतो धर्मावेत्यप्रसादलाभः[१] । त एते श्रद्धाधिष्ठानभेदान्नामतश्चत्वारोऽवेत्यप्रसादा उच्यन्ते ।

**द्रव्यतस्तु द्वे[२] श्रद्धा शीलं च**

बुद्धधर्मसंघावेत्यप्रसादाः श्रद्धास्वभावाः[३] आर्यकान्तानि च शीलानि शीलमिति द्वे द्रव्ये भवतः । किं पुनरेते सास्रवानास्रवा एकान्तेनावेत्यप्रसादाः ।

**निर्मलाः ।**

अवेत्यप्रसादा इति कोऽर्थः । यथाभूतसत्यान्यवबुध्य संप्रत्ययोऽवेत्यप्रसादः । यथा च[४] व्युत्थितः संमुखीकरोति तथैषामानुपूर्वीम्[५] । कथं व्युत्थितः संमुखीकरोति । सम्यक्संबुद्धो वत भगवान् स्वाख्यातोऽस्य धर्मविनयः सु-[44b. 20B. II]प्रतिपन्नोऽस्य श्रावकसंघ इति वैद्यभैषज्योपस्थापकभूतत्वात् । चित्तप्रसादकृतश्च[६] शीलप्रसाद इत्युच्यते[७] चतुर्थं उक्तः[८] । एवं प्रसन्नस्यैषा प्रतिपत्तिरिति । आरोग्यभूतत्वाद्वा देशिक[९]मार्गसार्थिकयानवद्वा[१०] । सूत्र उक्त"मष्टाभिरङ्गैः समन्वागतः शैक्षो दशभिरङ्गैः समन्वागतोऽशैक्ष" इति । कस्माच्छैक्षस्य सम्यक् विमुक्तिः सम्यग्ज्ञानं च नोक्तम् ।

**नोक्ता विमुक्तिः शैक्षाङ्गं बद्धत्वात्**

बद्धो हि शैक्षः क्लेशबन्धनैरद्यापीति । कथं बद्धस्यैव सतो विमुक्तिर्व्यवस्थाप्येत । न हि बन्धनैकदेशान्मुक्तो मुक्त इत्युच्यते । विना च विमुक्त्या कथं विमुक्तिज्ञानं व्यवस्थाप्यते । अशैक्षस्तु सर्वक्लेशबन्धनात्यन्तनिर्मोक्षाद्विमुक्तितत्प्रत्यात्मज्ञानाभ्यां प्रभावित इति तस्यैव तद्वचनं न्याय्यम् ।

---

१. Y. धर्मेऽवेत्य... । २. Ms. द्वौ or द्वे । ३. Ms °स्वाभावाः । ४. Y. तु । ५. Y. °नुपूर्वम् । ६. Y. omits च । ७. Ms. °च्यन्ते । ८. Ms. उक्त एवं । ९. Y. दैशिक । १०. Ms. °वाद्वा ।

केयं विमुक्तिर्नाम ।

**सा पुनर्द्विधा ।।७५।।**

संस्कृता चासंस्कृता च । तत्र

**असंस्कृता क्लेशहान[1]मधिमुक्तस्तु संस्कृता ।**

क्लेशप्रहाणमसंस्कृता विमुक्तिः । अशैक्षाधिमोक्षः[2] संस्कृता विमुक्तिः ।

**साङ्गः**

सैवासंस्कृता विमुक्तिरशैक्षाङ्गयुक्ता । अङ्गानां संस्कृतत्वात् ।

**सैव विमुक्ती द्वे**

सैव संस्कृता विमुक्तिर्द्वे विमुक्ती सूत्र उक्ते । चेतो वि[45a. 22A. III]मुक्तिः प्रज्ञाविमुक्तिश्च । विमुक्तिस्कन्धोऽपि स एव द्रष्टव्यः । यत्तर्हि सूत्र उक्तं "कतमच्च व्याघ्रबोध्यायना विमुक्तिपरिशुद्धिप्रधानम् । इह भिक्षवो रागाच्चित्तं विरक्तं भवति विमुक्तं द्वेषान्मोहाच्चित्तं विरक्तं भवति विमुक्तमित्यपरिपूर्णस्य वा विमुक्तिस्कन्धस्य परिपूरये परिपूर्णस्य चानु[3]ग्रहाय च्छन्दो[4] वीर्यमि"ति विस्तरः । तस्मान्नाधिमोक्ष एव विमुक्तिः । किं तर्हि । तत्त्वज्ञानापनीतेषु रागादिषु चेतसो वैमल्यं विमुक्तिरित्यपरे । उक्ता विमुक्तिः ।

सम्यग्ज्ञानं तु सम्यग्दृष्टिः । व्यतिरिक्तं कतमत् ।

**ज्ञानं बोधिर्यथोदिता ।।७६।।**

यैव हि पूर्वं बोधिरुक्ता सैवेह सम्यग्ज्ञानं वेदितव्यम् । यदुत क्षयज्ञानमनुत्पादज्ञानं च ।

कतमत् पुनश्चित्तं विमुच्यते किमतीतमनागतं प्रत्युत्पन्नम् ।

**विमुच्यते जायमानमशैक्षं चित्तमावृतेः[5] ।**

१. Ms. °हाण । २. Y. omits अशैक्षा । ३. Y. वा । ४. Y. यश्च्छन्दो । ५. Ms. °मावृत्तेः ।

"अनागतं चित्तमुत्पद्यमानं विमुच्यते अशैक्षमावरणेभ्य" इति शास्त्रपाठः। किं पुनस्तस्यावरणम्। क्लेशप्राप्तिस्तदुत्पत्तिविबन्धत्वात्। वज्रोपमे हि समाधौ सा च प्रहीयते। तच्चोत्पद्यमानमशैक्षं चित्तं विमुच्यते। सा च प्रहीणा भवति। तच्चाशैक्षं चित्तमुत्पन्नं विमुक्तं च। यर्त्तहि नोत्पद्यमानं लौकिकं च[1]। तदपि विमुच्यते। यत्तु नियतमुत्पत्तौ तदेवोक्तम्। लौकिकं कु-[54b. 20B. III] तो विमुच्यते। तत एवोत्पत्त्यावरणात्। ननु चामुक्तस्यापि शैक्षस्य लौकिकमुत्पद्यते न तत्तादृशम्। कीदृशं तत्। क्लेशप्राप्तिसहितम्। किमवस्थो मार्गस्तदुत्पत्त्यावरणं प्रजहाति।

**निरुध्यमानो मार्गस्तु प्रजहाति तदावृतिम् ॥७७॥**

वर्तमान इत्यर्थः।

या चासंस्कृता विमुक्तिरुक्ता ये च त्रयो धातव उच्यन्ते प्रहाणधातुर्विरागधातुर्निरोधधातुरिति। क एषां विशेषः।

**असंस्कृतैव धात्वाख्या**

सैवासंस्कृता विमुक्तिस्त्रयो धातवः। तत्र पुनः[2]

**विरागो रागसंक्षयः।**

रागस्य प्रहाणं विरागधातुः।

**प्रहाणधातुरन्येषां**

संक्षय इति वर्तते। रागादन्येषां क्लेशानां प्रहाणं प्रहाणधातुः।

**निरोधाख्यस्तु वस्तुनः ॥७८॥**

संक्षय इत्येवानुवर्तते। क्लेशनिर्मुक्तस्य वस्तुनः प्रहाणं निरोधधातुः। येन वस्तु निर्विद्यते विरज्यतेऽपि तेन वस्तुना। चतुष्कोटिकम्[3]। कथं कृत्वा।

१. Y. वा। २. Ms. पुनर्विरागौ। ३. Y. चतुष्कोटिकः।

**निर्विद्यते दुःखहेतुक्षान्तिज्ञानैः**

दुःखे समुदयक्षान्तिज्ञानैरेव निर्विद्यते नान्यैः ।

**विरज्यते ।**

**सर्वैर्जहाति यैः**

सर्वैरपि दुःखसमुदयनिरोधमार्गक्षान्तिज्ञानैर्विरज्यते । यैः क्लेशान् प्रजहाति ।

**एवं चतुष्कोटिकसंभवः ।।७९।।**

एवं चतुष्कोटिकं सिध्यति । निर्विद्यत एव दुःखसमुदयक्षान्तिज्ञानैः । क्लेशान् प्रजहत् निर्वेदवस्त्वाल-[46b. 20B. 1V]म्बनत्वात् । विरज्यत एव निरोधमार्गक्षान्तिज्ञानैः क्लेशान् प्रजहत् । प्रामोद्यवस्त्वालम्बनत्वात् । उभयं पूर्वैः क्लेशान् प्रजहत् । नोभयमुत्तरैः क्लेशानप्रजहदिति । तत्र वीतरागः सत्यानि पश्यन्धर्मज्ञानक्षान्तिभिः क्लेशान्न प्रजहाति । ज्ञानैस्तु प्रयोगविमुक्तिविशेषमार्गसंगृहीतैर्न[1] प्रजहातीति[2] ।

❀ अभिधर्मकोशभाष्ये मार्गपुद्गलनिर्देशो नाम
षष्ठं कोशस्थानं समाप्तमिति ❀

।। श्री लामावाकस्य यदत्र पुण्यम् ।।

●

---

१. Y. omits संगृहीतैः । २. Ms. प्रजाहातीति ।

नमो बुद्धाय ॥

[श्री1b. 20B. V.] क्षान्तयश्चोच्यन्ते ज्ञानानि च सम्यग्दृष्टिः सम्यग्ज्ञानं च । किं पुनः क्षान्तयो न ज्ञानं सम्यग्ज्ञानं च न दृष्टिः ।

नामला क्षान्तयो ज्ञानं

तत्प्रहेयस्य विचिकित्साऽनुशयस्याप्रहीणत्वात् । दृष्टयस्तु ताः सन्तीरणात्मकत्वात् यथा च क्षान्तयो दृष्टिर्न ज्ञानमेवं पुनः

क्षयानुत्पादधीर्न दृक् ।

क्षयानमनुत्पादज्ञानं च न दृष्टिरसन्तीरणापरिमार्गणाशयत्वात् ।

तदन्योभयथार्या धीः

क्षान्तिक्षयानुत्पादज्ञानेभ्योऽन्याऽनास्रवा[1] प्रज्ञा दृष्टिः[2] ज्ञानं च ।

अन्या ज्ञानं

लौकिकी प्रज्ञा सर्वैव ज्ञानम् ।

दृशश्च षट् ॥१॥

पञ्च दृष्टयो लौकिकी च सम्यग्दृष्टिः । एषा षड्विधा लौकिकी प्रज्ञादृष्टिः अन्या न दृष्टिः । ज्ञानं त्वेषा चान्या च । कियता सर्वज्ञानसंग्रहः । दशभिर्ज्ञानैः । समासेन तु

सास्रवानास्रवं ज्ञानं

तयोः पुनः

आद्यं संवृतिज्ञापकम्[3] ।

---

१. Ms. ज्ञानेभ्योन्योनास्रवा । २. Ms. दृष्टि । ३. G. संज्ञकम् ।

यत्सास्रवं तत्संवृतिज्ञानम् । प्रायेण घटपटस्त्रीपुरुषादिसंवृतिग्रहात् । अज्ञानसंवृतत्वात् इत्यपरे ।

**अनास्रवं द्विधा धर्मज्ञानमन्वयमेव च ॥२॥**

अनास्रवं ज्ञानं द्विधा भिद्यते । धर्मज्ञानमन्वयज्ञानं च । एवमेते द्वे ज्ञाने त्रीणि भवन्ति । संवृतिज्ञानं धर्मज्ञानमन्वयज्ञानं च । तत्र

**सांवृतं सर्वविषयं**

संवृतिज्ञानस्य सर्वधर्माः संस्कृतासंस्कृता [2a. 20A. VI] आलम्बनं संभवतः ।

**कामदुःखादिगोचरम् ।**

**धर्माख्यम्**

धर्मज्ञानस्य कामावचरं दुखं तत्समुदयनिरोधप्रतिपक्षाश्चालम्बनम् ।

**अन्वयज्ञानं तूर्ध्वदुःखादिगोचरम् ॥३॥**

अन्वयज्ञानस्य रूपारूप्यावचरं दुःखं तत्समुदयनिरोधप्रतिपक्षाश्चालम्बनम् ।

**ते एव सत्यभेदेन चत्वारि**

ते एव धर्मज्ञानान्वयज्ञाने सत्यभेदेन पुनश्चत्वारि ज्ञानानि भवन्ति । दुःखसमुदयनिरोधमार्गज्ञानानि । तदालम्बनत्वात् ।

**एते चतुर्विधे ।**

**अनुत्पादक्षयज्ञाने**

एते एव धर्मज्ञानान्वयज्ञाने[1] चतुर्विधे अदृष्टिस्वभावे क्षयज्ञानमनुत्पादज्ञानं चोच्यते ।

**ते पुनः प्रथमोदिते ॥४॥**

---

१. Y. धर्मान्वयज्ञाने ।

दुःखहेत्वन्वयज्ञाने

प्रथमोत्पन्ने तु क्षयज्ञानानुत्पादज्ञाने दुःखसमुदयान्वयज्ञाने दुःखसमुदयाकारैर्भावाग्रिकस्कन्धालम्बनत्वात्[1]। किं खलु वज्रोपमोऽपि ताभ्यामेकालम्बनोऽस्ति[2]। यदि दुःखसमुदयालम्बनो भवति। अथ निरोधमार्गालम्बनो नैकालम्बनः।

**चतुर्भ्यः परचित्तवित्।**

वेत्तीति वित् ज्ञानम्। परचित्तज्ञानं चतुर्भ्यो ज्ञानेभ्यो द्रष्टव्यम्। धर्मान्वयज्ञानमार्गः संवृतिज्ञानेभ्यः। तस्य पुनरयं नियमः

**भूम्यक्षपुद्गलोत्क्रान्तं नष्टाजातं न वेत्ति तत् ॥५॥**

भूम्यतिक्रान्तं न जानातीति। अधरध्यानभूमि-[2b. 20B. VI]केनोत्तरध्यानभूमिकमिन्द्रियातिक्रान्तं[3] न जानाति। श्रद्धाधिमुक्तसमयमुक्तमार्गेण दृष्टिप्राप्तासमयविमुक्तमार्गं पुद्गलोत्क्रान्तं न जानाति। अनागाम्यर्हच्छ्रावक[4]प्रत्येकबुद्धबुद्ध[5]मार्गाणामधरेणोत्तरं [नष्टाजातं न जानाति। अतीतानागतं वर्तमानपर[6]चित्तचैत्तविषयत्वात्। किं च भूयः

**न धर्मान्वयधीपक्ष्यमन्योऽन्यं**

धर्मज्ञानपक्ष्यं परचित्तज्ञानमन्वयज्ञानपक्ष्यं [चित्तं न जानाति। अन्वयज्ञानपक्ष्यं च धर्मज्ञानपक्ष्यं न जानाति। कामधातूर्ध्वधातुप्रतिक्षालम्बनत्वात्तयोः। दर्शनमार्गे परचित्तज्ञानं नास्ति। तदालम्बनं त्वस्ति। तत्र परचित्तज्ञानेन दर्शनमार्गं ज्ञातुकामः प्रयोगं कृत्वा प्रथमौ

**दर्शनक्षणौ।**

**श्रावको वेत्ति खड्गस्त्रीन् सर्वान्बुद्धोऽप्रयोगतः ॥६॥**

श्रावको दर्शनमार्गात् पर[7]चित्तज्ञानेन द्वौ क्षणौ जानाति। दुःखे धर्मज्ञानक्षान्ति धर्मज्ञानं च। अन्वयज्ञानपक्षालम्बनस्यान्यप्रयोगसाध्यत्वात्। यावच्च स तत्र

---

१. Ms. °ग्रिकं। २. Y. भवति। ३. Ms. looks like °भूमिकं इन्द्रियातिक्रान्तं। ४. Y. omits श्रावक। ५. Ms. drops one बुद्ध। ६. Ms. परि°। ७. Ms. परि°।

प्रयोगमारभते तावदयं षोडशचित्तमनुप्राप्तो भवतीत्यन्तरा न जानाति। प्रत्येकबुद्धस्त्रीन् क्षणान्। प्रथमौ च द्वावष्टमं च समुदयान्वयज्ञानं मृदुप्रयोगत्वात्। प्रथमद्वितीयपञ्चदशानित्यपरे। बुद्धस्तु सर्वानि-[3a. 20A. VII]व दर्शनमार्गक्षणानप्रयोगेण जानाति।

अथ क्षयज्ञानानुत्पादज्ञानयोः को विशेषः।

**क्षयज्ञानं हि सत्येषु परिज्ञातादिनिश्चयः।**
**न परिज्ञेयमित्यादिरनुत्पादमतिर्मता ॥७॥**

'क्षयज्ञानं कतमत्। दुःखं मे परिज्ञातमिति जानाति[1]। समुदयः प्रहीणो निरोधः साक्षात्कृतो मार्गो भावित इति जानाति। तदुपादाय यत् ज्ञानं दर्शनं विद्या बुद्धिर्बोधिः प्रज्ञा आलोकोऽभिसमयमिदमुच्यते क्षयज्ञानम्। अनुत्पादज्ञानं कतमत्। दुःखं मे परिज्ञातं न पुनः परिज्ञेयमिति जानाति यावत्[2] मार्गो भावितो न पुनर्भावयितव्य इति। तदुपादाये''ति विस्तरेणोक्तं शास्त्रे। कथमनास्रवेण ज्ञानेनैवं जानाति। तत्पृष्ठलब्धेन व्युत्थित एवं जानाति। अतस्तद्विशेषेण तयोर्विशेषः। शास्त्रे ज्ञापित इति काश्मीराः। अनास्रवेणाप्येवं जानातीत्यपरे दर्शनवचनं तु भाष्याक्षेपात्। प्रत्यक्षवृत्तित्वाद्वा। अत एवोक्तं "यावत्[3] ज्ञानं दर्शनमपि तदि"ति। इत्येतानि दश ज्ञानानि भवन्ति यदुत धर्मज्ञानमन्वयज्ञानं संवृतिज्ञानं दुःखज्ञानं समुदयज्ञानं निरोधज्ञानं मार्गज्ञानं परचित्तज्ञानं[4] क्षयज्ञानमनुत्पादज्ञानं च। तत्र संवृतिज्ञानमेकं ज्ञानमेक-[3b. 20B. VII]स्य च भागः। धर्मज्ञानमेकं ज्ञानं सप्तानां च भागः। दुःखसमुदयनिरोधमार्गक्षयानुत्पादपरचित्तज्ञानानाम्। एवमन्वयज्ञानम्[5]। दुःखज्ञानमेकं ज्ञानं चतुर्णां च भागः। धर्मान्वयक्षयानुत्पादज्ञानानाम्[6]। एवं समुदयनिरोधज्ञाने चतुर्णां भागः[7]। मार्गज्ञानमेकं ज्ञानं पञ्चानां च भागः। चतुर्णामनन्तरोक्तानां परचित्तस्य च। परचित्तज्ञानमेकं ज्ञानं चतुर्णां च भागः। धर्मान्वयमार्गसंवृतिज्ञानानाम्। क्षयज्ञानमेकं ज्ञानं षण्णां च भागः। धर्मान्वयदुःखसमुदयनिरोधमार्गज्ञानानाम्। एवमनुत्पादज्ञानम्।

कस्मात् पुनरेतानि त्रीणि सन्ति दश व्यवस्थाप्यन्ते।

---

१. Ms. ज्ञायाति। २. Ms. यावत्मा०। ३. Y. यत् तावज्०। ४. Ms. drops परचित्तज्ञानम्। ५. Ms. °ज्ञान। ६. Ms °ज्ञानम्। ७. Ms. चतुर्णां भागः seems to be extra।

स्वभावप्रतिपक्षाभ्यामाकाराकारगोचरात् ।
प्रयोगकृतकृत्यत्वहेतूपचयतो दश ॥८॥

सप्तभिः किल कारणैर्दश ज्ञानानि व्यवस्थाप्यन्ते। स्वभावतः संवृतिज्ञानम-परमार्थज्ञानत्वात्। प्रतिपक्षतो धर्मान्वयज्ञाने। कामधातूर्ध्वधातुप्रतिपक्षत्वात्। आकारतो दुःखसमुदयज्ञाने। आलम्बनाभेदात्। आकारालम्बनतो निरोधमार्ग-ज्ञाने। आकारालम्बनभेदात्। प्रयोगतः परचित्तज्ञानम्। न हि तेन चैत्ता न ज्ञायते। चित्तज्ञानार्थे तु प्रयुक्तस्याभिनिष्पत्तेः परचित्तज्ञानमुक्तम्। कृतकृत्य-[4a. 20A. VIII]तः क्षयज्ञानं कृतकृत्यसंतानोत्पत्तेः। प्रथमतः हेतूपचयतोऽनुत्पादज्ञानं सर्वानास्रवहेतुकत्वादिति।

सकलस्य सकलप्रतिपक्षत्वात् कामधातुप्रतिपक्षो धर्मज्ञानमित्युक्तम्। अपि तु

धर्मज्ञाननिरोधे यन्मार्गे वा भावनापथे।
त्रिधातुप्रतिपक्षस्तत्

निरोधमार्गज्ञाने भावनामार्गसंगृहीते त्रिधातुप्रतिपक्षः।

कामधातोस्तु नान्वयम् ॥९॥

अन्वयज्ञानं तु सर्वथा नास्ति कामधातुप्रतिपक्षः।

एषां दशानां ज्ञानानां

धर्मज्ञानान्वयज्ञानं षोडशाकारम्

तान् पुरस्तादुपदेक्ष्यामः।

अन्यथा।

तथा च सांवृतं

संवृतिज्ञानं षोडशाकारमन्यथाकारं च सर्वधर्माणां स्वसामान्यलक्षणादिग्रहणात्।

स्वैः स्वैः सत्याकारैश्चतुष्टयम् ॥१०॥

दुःखसमुदयनिरोधमार्गज्ञानानि स्वैः स्वैः सत्याकारैः प्रवर्तन्त इत्येकैकं चतुराकारं भवन्ति ।

**तथा परमनोज्ञानं निर्मलं**

अनास्रवं परचित्तज्ञानं तथैव । स्वसत्याकारत्वाच्चतुराकारं मार्गज्ञानत्वात् ।

**समलं पुनः ।**

**ज्ञेयस्वलक्षणाकारं**

सास्रवं परचित्तज्ञानं ज्ञेयानां चित्तचैत्तानां यत् स्वलक्षणं तदाकारयति । स्वलक्षणग्राहकत्वात् । उभयमपि तु

**एकैकद्रव्यगोचरम् ॥११॥**

यदा चित्तं गृह्णा-[4b. 20B. VIII]ति न तदा चित्तानां यदा वेदनां न तदा संज्ञामित्येवमादि । यर्त्तीह भगवतोक्तं "सरागं चित्तं सरागं चित्तमिति यथाभूतं प्रजानाती"त्येवमादि । न तयोर्युगपद्ग्रहणम् । वस्त्रमलायुगपद्ग्रहणवत् । सरागं चित्तमिति द्विधा सरागता । संसृष्टसरागता संयोग[1]सरागता च । तत्र सराग-संप्रयुक्तं चित्तं द्वाभ्यां सरागं ततोऽन्यत्सास्रवं संयोगसरागतया सरागम् । अत्र तु सूत्रे रागसंप्रयुक्तं सरागं रागप्रतिपक्षो विगतरागमित्येके । यदि हि रागेणा-संप्रयुक्तं विगतरागं स्यादन्यक्लेशसंप्रयुक्तमपि स्यात् । एवं तर्हि तदप्रतिपक्षः सास्रवं चित्तमक्लिष्टं नैव सरागं न विगतरागं स्यादित्येवमादि । तस्माद्राग-संप्रयुक्ततयाऽपि सरागं चित्तमत्रेष्टव्यमित्यपरे । एवं यावत्समोहं[2] विगतमोहं च वेदितव्यम् । संक्षिप्तं कुशलमालम्बनाभिसंक्षेपात् । विक्षिप्तं क्लिष्टं विक्षेप-संप्रयोगात् । संक्षिप्तं मिद्धसंप्रयुक्तं विक्षिप्तमन्यत् क्लिष्टमिति पाश्चात्त्याः । तदेतन्न वर्णयन्ति । तदेव हि चित्तं संक्षिप्तविक्षिप्तं स्यात् क्लिष्टमिद्धसंप्रयोगात् । शास्त्रविरोधश्च स्यात् । "संक्षिप्तं चित्तं यथाभूतं प्रजानाति[3] । तज्ज्ञानं चत्वारि ज्ञानानि ध-[5a. 20A1. I]र्मज्ञानमन्वयज्ञानं संवृतिज्ञानं मार्गज्ञानमि"ति । लीनं चित्तं क्लिष्टं कौशीद्यसंप्रयोगात् । प्रगृहीतं कुशलं वीर्यसंप्रयोगात् । परीत्तं क्लिष्टं व्यवदानपरीत्तैर्निषेवितत्वात् । महद्गतं कुशलं तद्विपर्ययात् । मूलमूल्यपरि[4]-

१. Y. संयुक्त । २. Ms. °त्सम्मोहं । ३. Y. संप्रजानाति । ४. Ms. drops रि ।

वारानुपरिवर्तकवलाल्पवहुत्वाच्च। क्लिष्टचित्तं[1] द्वाभ्यामकुश[2]लमूलाभ्यां समूलम्। कुशलं त्रिभिः कुशलमूलैः। क्लिष्टमल्पमूल्यमयत्न-साध्यत्वात्[3]। कुशलं वहुमूल्यं महाभिसंस्कारसाध्यत्वात्। क्लिष्टं तज्जातीयानागत-भावनाऽभावान्न महापरिवारं त्रिभिश्च स्कन्धैः सानुपरिवर्तम्। कुशलं तु महापरिवारं चतुर्भिश्च स्कन्धैः सानुपरिवर्तम्। अल्पवलं खल्वपि क्लिष्टं वहुवलं कुशलम्। एकया हि दुःखे धर्मज्ञानक्षान्त्या[4] दशानुशयात्यन्तसमुद्घातः[5] क्रियते। तस्मादपि क्लिष्टं परीत्तं कुशलं महद्गतम्। उद्धतं क्लिष्टमौद्धत्यसंप्रयोगात्। अनुद्धतं कुशलं तत्प्रतिपक्षत्वात्। एवमव्युपशान्तं व्युपशान्तं च। असमाहितं क्लिष्टं विक्षेपसंप्रयोगात्। समाहितं कुशलं तत्प्रतिपक्षत्वात्। अभावितं क्लिष्टं प्रति-लम्भनिषेवणभावनाभ्यामभावितत्वात्। भावितं कुशलं ताभ्यां भावितत्वात् अ[5b. 20B1. I]विमुक्तं क्लिष्टं स्वभावसंतानविमुक्तिभ्यामविमुक्तत्वात्। विमुक्तं कुशलं ताभ्यां विमुक्तत्वादिति वैभाषिकाः। एवं तु सूत्रं नानुलोमितं भवति। एषां च पदानां नार्थविशेष उक्तो भवति। कथं सूत्रं नानुलोमितं भवति। सूत्र उक्तं "कथं चित्तमध्यात्मं संक्षिप्तं भवति। यच्चित्तं स्त्यानमिद्धसहगतमध्यात्मं संनिरोधसहगतं नो तु विपश्यनया समन्वागतम्। कथं वहिर्विक्षिप्तं भवति। यच्चित्तं पञ्चसु कामगुणेष्वनुविक्षिप्तं भवत्यनुविसृतमि"ति। ननु चोक्तं तदेव चित्तं संक्षिप्तं स्याद्विक्षिप्तं चेति। उक्तमिदमयुक्तं तूक्तं मिद्धसहगतस्य क्लिष्टस्य विक्षिप्तत्वाप्रतिज्ञानात्। ननु चोक्तं शास्त्रविरोधः स्यादिति। वरं शास्त्रविरोधो न सूत्रविरोधः। कथमेषां पदानां नार्थविशेष उक्तो भवति। विक्षिप्तलीनोद्धताव्युपशान्तासमाहिताभाविताविमुक्तानां चित्तानामभिन्नलक्षण-वचनात् संक्षिप्तप्रगृहीतादीनां च। न वै नोक्तः पदानामर्थविशेषो भवति। क्लिष्ट-सामान्येऽपि तद्दोष[6]संदर्शनात्। इत्यप्येतत् क्लिष्टं चित्तं विक्षिप्तं लीनमिति विस्तरः। एवं कुशलस्यापि गुणविशेषसंदर्शनादु-[6a. 20A1. II]क्त एवार्थविशेषो भवति। सूत्रविरोधस्यापरिहारान्नैष एषां पदानामर्थः। यदि च सूत्रे तदेव लीनं चित्तं तदेवोद्धतमित्यभिप्रेतं स्यात् इदं नोक्तं स्यात्। "यस्मिन्समये लीनं चित्तं[7] भवति लयाभिशङ्कि[8] वा अकालस्तस्मिन्समये प्रस्रब्धिसमाध्युपेक्षासंवोध्यङ्गानां भावनायाः। यस्मिन्समये उद्धतं चित्तं भवति औद्धत्याभिशङ्कि वा अकालस्त-स्मिन्समये धर्मविचयवीर्यप्रीतिसंवोध्यङ्गानां भावनाया" इति। किं पुनर्बोध्यङ्गानां[9]

---

१. Y. क्लिष्टं हि। २. Ms. drops श। ३. Ms. °सध्यत्वात्। ४. Y. दुःखधर्मज्ञान-क्षान्त्या। ५. Ms. समुत्घातः, Y. समुच्छेदः। ६. Y. adds विशेष। ७. Y. चित्तं लीनं। ८. Y. लीनाभिशङ्कि। ९. Y. पुनरत्र....।

व्यग्रा भावना। मनसिकरणं तेषां भावनेष्टा न संमुखीभाव इत्यदोष एषः। कौशी-द्याधिकमत्र[1] चित्तं लीनमित्युक्तम्। औद्धत्याधिकं चोद्धतमित्यविरोधः। तयोस्तु सह-भावात्तदेव चित्तं लीनं तदेवोद्धतमिति ब्रूमः। नाभिप्रायिकं वचनं वार्यते[2]। सूत्रे तु नायमभिप्राय इति ब्रूमः। यत्तूक्तं "सर्वमेव रागसंप्रयुक्तं चित्तं सरागमि"ति। कतमच्चित्तं रागसंप्रयुक्तम्। रागप्राप्तिसहितं चेत्। असास्रवमिति[3] सरागं प्राप्नोति शैक्षचित्तम्[4]। रागालम्बनं चेत्। अर्हतोऽपि सास्रवं चित्तं सरागमिति[5] गृह्णीयात्। रागालम्बनत्वात्। कथं वा तत्सास्रवम्। सामान्य[6] क्लेशा-[6b. 20B1. II]-लम्बनत्वादिति चेत्। एवमपि समोहं गृह्णीयान्मोहालम्बनत्वात्। न च परचित्त-ज्ञानं प्राप्त्यालम्बनं नापि तच्चित्तालम्बनं रागालम्बनम्[7]। तस्मान्न[8] रागसंप्रयो-गात्सरागं[9] चित्तमत्रेष्टम्। किं तर्हि। रागसंप्रयुक्तं चित्तं सरागमसंप्रयुक्तं[10] विगतरागमिति सूत्राभिप्रायो दृश्यते। यत् तूक्तं "विगतरागमस्य तच्चित्तं भवति विगतद्वेषं विगतमोहमनावर्त्तिकधर्मि कामभवे[11] रूपभवे[12] आरूप्यभवे" इति। तत्र तत्प्राप्तिविगमं[13] संधायोक्तम्। ननु चोक्तम् अन्यक्लेशसंप्रयुक्तमपि चित्तं रागविप्रयुक्तत्वाद्विगतरागं स्यादि"ति। एतेनाभिसंधिना न दोषः। न तु तद्विगतरागमिति कृत्वा गृह्यते। किं तर्हि। सद्वेषं समोहमित्येवमादि। अलं प्रसङ्गेन सिद्धान्तो वर्ण्यताम्।

किं परचित्तज्ञानं परचित्तस्याकारमालम्बनं वा गृह्णाति। न गृह्णाति आकारलम्बननिरपेक्षं हि तद्रक्तमिदं चित्तमिति जानाति नत्वमुष्मिन् रूपे रक्तमिति जानाति। अन्यथा हि तद्रूपालम्बनमपि स्यात् तदालम्बनं च परचित्तं गृह्णतः स्वभावग्रहणं प्राप्नुयात्। सर्वं च परचित्तज्ञानं[14] द्रव्यस्वलक्षणचित्तचैत्तप्रत्युत्पन्न-परसंततिकामरू [7a. 20A1. III] पप्रतिसंयुक्ताप्रतिसंयुक्तविषयं दर्शनमार्गप्रतिषिद्धं भावनामार्गे उपलभ्यते। शून्यताऽनिमित्तसमाधि विप्रयुक्तं[15] क्षयानुत्पादज्ञाना-संगृहीतमानन्तर्यमार्गं[16]प्रतिषिद्धं च वेदितव्यम्। उक्तं परचित्तज्ञानम्।

---

१. Y. कौसीद्या। २. Y. adopts अभिप्रायिकं यावत् and gives in note नाभि° Mss. ३. Y. अपि। ४. Y. शैक्षं चित्तम्। ५. Ms. साराग°। ६. Ms. Looks like सासात्रान्य। ७. Y. °लम्बनरागालम्बनम्। ८. Y. तस्मादपि न। ९. Y. संयोगात्₀। १०. Ms. सरागसंप्रयुक्तं। ११. Ms. °भावे। १२. Ms. °भावे। १३. Y. seems to drop प्राप्तिविगमं। १४. Ms. °चित्तज्ञां। १५. Ms. निमित्तासमाधि₀। Y. omits समाधि। १६. Y. °मार्गं।

**शेषे चतुर्दशाकारे शून्यानात्मविवर्जिते ।**

क्षयानुत्पादज्ञाने शेषे ते चतुर्दशाकारे शून्यानात्मकारौ वर्जयित्वा । पारमार्थिकयोरपि संवृतिभजनात् क्षीणा मे जातिर्नापरमस्माद्भवं प्रजानामीति तद्बलानुव्यवहारतः[1] ।

किमनास्रवः स्वलक्षणाकारोऽस्त्यथ न । काश्मीराणां तावत्

**नामलः षोडशभ्योऽन्य आकारः[3]**

नास्त्यनास्रवाकारः षोडशाकारनिर्मुक्तः ।

**अन्येऽस्ति शास्त्रतः ॥१२॥**

अन्ये पुनरस्तीत्याहुर्बहिर्देशकाः । कथं गम्यते । शास्त्रतः इति । शास्त्रे ह्येवमाह । "स्यादप्रतिसंयुक्तेन चित्तेन कामप्रतिसंयुक्तान्धर्मान्विजानीयात् । अनित्यतो दुःखतः शून्यतोऽनात्मतः हेतुतः समुदयतः प्रभवतः प्रत्ययतः । अस्त्येतत्स्थानमस्त्येतद्वस्त्विवति । योगविहिततो विजानीयादि"ति । नास्यायमर्थो यदस्त्येतत्स्थानमस्त्येतद्वस्त्वित्येवं विजानीया-[7b. 20B1. III]दिति अपि त्वस्त्येतत् स्थानमस्त्येतद्वस्तु यदनित्यादितो[4] विजानीयादिति चेत् । न । अन्यत्रावचनात् । एष चेच्छास्त्रार्थोऽभविष्यत् । यदिदं पठ्यते "स्याद्दर्शनप्रहातव्येन चित्तेन कामप्रतिसंयुक्तान्धर्मान्विजानीयादिति । आह । विजानीयात् । आत्मत आत्मीयत उच्छेदतः शाश्वततः अहेतुतोऽक्रियातोऽपवादतोऽग्रतः श्रेष्ठतो विशिष्टतः परमतः शुद्धितो मुक्तितो नैर्याणिकतः काङ्क्षातो विमतितो विचिकित्सातः । रज्येत द्विष्यान्मन्येत[5] मुह्येदयोगविहिततो[6] विजानीयादि"ति । अत्राप्येवं[7] पाठोऽभविष्यत् । अस्त्येतत् स्थानमस्त्येतद्वस्त्विवति । न त्वेवं पठ्यते । तस्मान्नास्यायमर्थः ।

किं पुनरिमे षोडशाकारा नामत आहोस्वित् द्रव्यतः । सप्त द्रव्यतो नामतः षोडशेत्येके । दुःखकाराश्चत्वारः समुदयनिरोधमार्गाकाराणामेकैकद्रव्यत्वात् । एवं तु वर्णयन्ति ।

---

१ Y. तद्बलेनानु० । २. Ms. षोडशेभ्यो । ३. G. °आकारो । ४. Ms. °दतो । ५. Ms. °ष्यात्मन्यते । ६. Y. adopts अयोगविहितता and gives in note °हितता Mss । ७. Y. one reading is एष ।

**द्रव्यतः षोडशाकाराः**

तत्प्रत्ययाधीनत्वात् अनित्यम् । पीडात्मकत्वात्[१] दुःखम् । आत्मीयदृष्टि-विपक्षेण शून्यम् । आत्मदृष्टिविपक्षेणानात्मा । हेतुर्वीजधर्मयोगेन । समुदयः प्रादुर्भावयोगेन । [8A. 20A1. IV] प्रभवः प्रबन्धयोगेन । अभिनिष्पादनार्थेन प्रत्ययः । तद्यथा मृत्पिण्डदण्डचक्रसूत्रोदकसमवायात् घटाभिनिष्पत्तिर्भवति तद्वदिति । स्कन्धोपरमत्वात् निरोधः । अग्निनिर्वापणात् शान्तः । निरुपद्रवत्वात् प्रणीतः । सर्वापक्षालविमुक्त[२]त्वान्निःसरणमिति । गमनार्थेन मार्गः । योगयुक्तत्वान्न्यायः । सम्यक्प्रतिपादनार्थेन प्रतिपत् । अत्यन्तसमतिक्रमणान्नैर्याणिक इति । अथवा अनात्यन्तिकत्वादनित्यम् । अभिन्यासभूतत्वात् दुःखम् । अन्तर्व्यापार-पुरुषरहितत्वाच्छून्यम् । अकामकारित्वादनात्मा । हेतुरागमनयोगेन । समुदय उन्मज्जनयोगेन । प्रभवः प्रसरणयोगेन । प्रतिसरणार्थेन प्रत्यय इति । असंवन्धः संवन्धोपरमत्वान्निरोधः[३] । त्रिसंस्कृतलक्षणविमुक्तत्वाच्छान्तः । कुशलत्वात् प्रणीतः । परमाश्वासत्वान्निःसरणमिति । कुमार्गविपक्षेण मार्गः । अन्यायविपक्षेण न्यायः । निर्वाणपुराविरोधनार्थेन प्रतिपत् । सर्वभवप्रतिपक्षत्वान्नैर्याणिकः । इत्येषां व्याख्यानमनेकपर्यायः । यथाभिप्रेतं प्रवक्ष्यामः[४] । उदयव्ययत्वादनित्यम् । प्रतिकूलभावात् । दुःखम् । आत्मरहितत्वाच्छून्यम्[५] । स्वयमनात्मत्वादनात्म । हेतुसमुदयप्रभवप्रत्ययत्वं तु यदेव सूत्र [8b. 20B1. IV] उक्तम् । "इमे पञ्चोपादानस्कन्धाश्छन्दमूलकाश्छन्दसमुदयाश्छन्दजातीयाश्छन्दप्रभवा" इति । प्रभव-शब्दः केवलं पश्चात् पठितव्यः शास्त्रे । कः पुनरेषां विशेषः । चतुर्विधो हि च्छन्दः । अस्मी[६]त्यभेदेनात्मभावच्छन्दः[७] । स्यामित्यभेदेन पुनर्भवच्छन्दः । इत्थं स्यामिति भेदेन पुनर्भवच्छन्दः[७] । प्रतिसंधिवन्धच्छन्द[७]श्चतुर्थः । कर्माभिसंस्कारच्छन्दो वा । तत्र प्रथमो दुःखस्यादिकारणत्वान्मूलहेतुः[८] । फलस्येव[९] वीजम् । द्वितीयः समुदयस्तेन तत्समुदागमात्फलस्येवाङ्कुरादिप्रसवः[१०] । तृतीयस्तज्जातीयदुःख-प्रत्ययः । फलस्येव[११] क्षेत्रोदकपाश्यादिकम् । क्षेत्रादिवशेन हि फलस्य गन्धरसवीर्यविपाकप्रभावभेदा भवन्ति चतुर्थः प्रभवस्ततः एव तत्संभवात्[१२] फलस्येव पुष्पावसानमिति । अथवा[१३] । तृष्णाविचरितानां द्वौ पञ्चकौ

---

१. Y. पीड़ना... । २. Y. वियुक्त० । ३. Y. ०परमात् । ४. Ms. The first two letters are not clear in the photo । ५. Ms. आत्मा० । ६. Ms. अरत्ती० । ७. Ms. ०श्छन्दः । ८. Ms. ०त्वात्ममूल० । ९. Ms. फलस्यैव । १०. Ms. ०त्फलस्यैवांकुरादि० । ११. Ms. फलस्यैव । १२. Ms. एतत्संभवात् । १३. Y. च ।

द्वौ चतुष्कौ चत्वारश्छन्दाः। "अस्मीति भिक्षवः सति इत्थमस्मीति भवति एवमस्मीति भवति अन्यथाऽस्मीति सदस्मीति असदस्मीति। भविष्यामीत्यस्य भवति न भविष्यामि इत्थं भविष्यामि एवं भविष्यामि अन्यथा भविष्यामि। स्यामित्यस्य भवति इत्थं स्याम् एवं स्याम् अन्यथा स्याम् अपितु स्याम् अपीत्थं स्याम् अप्येवं स्याम् अप्यन्यथा स्यामि-[9a. 20A1. V]त्यस्य भवति। प्रवृत्त्युपरमत्वान्निरोधः। निर्दुःखत्वाच्छान्तः। "इति हि भिक्षवो दुःखाः संस्काराः शान्तं निर्वाणमि"ति वचनात्। निरुत्तरत्वात् प्रणीतः। अपुनरावृत्तित्वान्निःसरणम्। पथिभूतत्वान्मार्गः। यथाभूतप्रवृत्तत्वान्न्यायः। प्रतिनियतत्वात् प्रतिपत्। यथोक्तम्

"एष मार्गो हि नास्त्यन्यो दर्शनस्य विशुद्धय" इति

अत्यन्तनिर्याणान्नैर्याणिकः। अथवा नित्यसुखात्मीयात्मदृष्टिचरितानां प्रतिपक्षेणा-नित्यदुःखशून्यानात्माकाराः[1]। अहेत्वेकहेतुपरिणामबुद्धिपूर्वक[2]दृष्टिचरितानां प्रतिपक्षेण हेतुसमुदयप्रभवप्रत्ययाकाराः। नास्ति मोक्ष इति दृष्टिचरितानां निरोधाकारः। दुःखो मोक्ष इति दृष्टिचरितानां शान्ताकारः। ध्यानसुखप्रणीत-दृष्टिचरितानां प्रणीताकारः। पुनः पुनः परिहाणितो नात्यन्तिको मोक्ष इति दृष्टिचरितानां निःसरणाकारः। नास्ति मार्गः कुमार्गोऽयमन्यो मार्गः पुनरावर्ती मार्ग इति दृष्टिचरितानां मार्गन्यायप्रतिपन्नैर्याणिकाकारा इति।

आकारो नाम क एष धर्मः।

**प्रज्ञाकारः**

एवं तर्हि प्रज्ञा साकारा न भविष्यति। प्रज्ञान्तरासंयोगात्। एवं तु युक्तं स्यात्। सर्वेषां चित्तचैत्ताना-[9b. 20B1. V]मालम्बनग्रहणप्रकार आकार इति। अथ किं प्रज्ञैवाकारयति नेत्याह। किं तर्हि।

**तया सह।**

**आकारयन्ति सालम्बाः**

---

१. Ms. °शून्यात्माकाराः। २. Y. पूर्वकृत।

प्रज्ञा चान्ये च सर्वे सालम्बना धर्मा आकारयन्ति ।

**सर्वमाकार्यते तु सत् ॥१३॥**

यत्किंचिदस्ति **सर्वमाकार्यते** । तदेवं कृत्वा सिद्धं भवति प्रज्ञा आकारश्चाकारयति चाकार्यते च । अन्ये सालम्बना आकारयन्त्याकार्यन्ते च । आलम्बना आकार्यन्त एवेति ।

अतः परमेषां ज्ञानानां कुशलादिभेदं निर्देक्ष्यामः ।

**त्रिधाद्यं कुशलान्यन्यानि**

संवृतिज्ञानं श्लोकादौ भवत्वादाद्यम् । तत्त्रिविधम् । कुशलाकुशलाव्याकृतम् । अन्यानि नव ज्ञानानि कुशलान्येव ।

**आद्यं सर्वासु भूमिषु ।**

कामधातौ यावद्भवाग्रे ।

**धर्माख्यं षट्सु**

धर्मज्ञानं चतुर्षु ध्यानेष्वनागम्ये ध्यानान्तरे च ।

**नवसु त्वन्वयाख्यं**[1]

अन्वयज्ञानं तास्वेव च षट्सु भूमिष्वारूप्यत्रये च ।

**तथैव षट् ॥१४॥**

दुःखसमुदयनिरोधमार्गक्षयानुत्पादज्ञानान्यप्येतास्वेव नवसु भूमिष्वभेदेन[2] । भेदेन पुनर्धर्मज्ञानसंगृहीतानि षट्सु अन्वयज्ञान संगृहीतानि नवसु ।

**ध्यानेष्वन्यमनोज्ञानं**

---

१. Ms. नवस्वन्तन्वयाख्यं and it means न्त as cancelled. But there will be metrical defect. G. नवसु त्वन्वयाख्यं । २. Ms. भेदेने ।

परचित्तज्ञानं चतुर्ष्वेव ध्यानेषु नान्यत्र ।

**कामरूपाश्रयं च तत् ।**

कामरूपधात्वोश्च तत् परचित्तज्ञानं सं-[10a. 20A1. VI]मुखीक्रियते ।

**कामाश्रयं तु धर्माख्यम्**

धर्मज्ञानं तु कामधात्वाश्रयमेव । न रूपारूप्यधात्वोः संमुखीक्रियते ।

**अन्यत्त्रैधातुकाश्रयम् ॥१५॥**

किं पुनरन्यत् । परचित्तज्ञानं धर्मज्ञाननिर्मुक्तम् । कुतो भूम्याश्रयनिर्देशः । स्मृत्युपस्थानसंग्रहो वक्तव्यः । सोऽयमुच्यते ।

**स्मृत्युपस्थानमेकं धीर्निरोधे**

धीः प्रज्ञा ज्ञानमिति पर्यायाः । निरोधज्ञानमेकं धर्मस्मृत्युपस्थानम् ।

**परचित्तधीः ।**

**त्रीणि**

परचित्तज्ञानं त्रीणि वेदनाचित्तधर्मस्मृत्युपस्थानानि ।

**चत्वारि शेषाणि**

निरोधपरचित्तज्ञानाभ्यामन्यानि ज्ञानानि चत्वारि स्मृत्युपस्थानानि । कतमस्य ज्ञानस्य कति ज्ञानान्यालम्बनम् ।

**धर्मधीगोचरो नव ॥१६॥**

धर्मज्ञानस्य नव ज्ञानान्यालम्बनमन्यत्रान्वयज्ञानात् ।

**नव मार्गान्वयधियोः**

अन्वयज्ञानस्यापि नव ज्ञानान्यालम्बनमन्यत्र धर्मज्ञानात् । मार्गज्ञानस्यापि नव ज्ञानान्यालम्बनमन्यत्र संवृतिज्ञानात् ।

**दुःखहेतुधियोर्द्वयम् ।**

दुःखसमुदयज्ञानयोर्द्वे संवृतिपरचितज्ञाने आलम्बनम् ।

**चतुर्णां दश**

संवृतिपरचित्तक्षयानुत्पादज्ञानानां दश ज्ञानान्यालम्बनम् ।

**नैकस्य**

एकस्य निरोधज्ञानस्य नैव ज्ञानमालम्बनम् ।

**योज्या धर्माः पुनर्दश ॥१७॥**

कतमे दश ।

**त्रैधातु-[10b. 20B1. VI]कामला धर्मा अकृताश्च द्विधा द्विधा ।**

संस्कृता धर्मा अष्टधा क्रियन्ते । कामरूपारूप्यावचरानास्रवाणां संप्रयुक्त-विप्रयुक्तभेदात् । असंस्कृता द्विधा क्रियन्ते । कुशलाव्याकृतभेदात् । इमे दश धर्माः कथं योज्याः कस्य ज्ञानस्य कत्यालम्बनमिति । तत्र संवृतिज्ञानस्य सर्वे दश धर्मा आलम्बनम् । धर्मज्ञानस्य पञ्च । कामावचरानास्रवा[1]श्चत्वारः कुशलं चासंस्कृतम् । अन्वयज्ञानस्य सप्त । रूपारूप्यावचरानास्रवाः षट् कुशलं चासंस्कृतम् । दुःख-समुदयज्ञानयोः कामरूपारूप्यावचराः षट् । निरोधज्ञानस्यैकः । कुशलमेवा-संस्कृतम् । मार्गज्ञानस्य द्वावनास्रवौ । परचित्तज्ञानस्य त्रयः । कामरूपावचरा-नास्रवाः संप्रयुक्ताः । क्षयानुत्पादज्ञानयोः नव धर्मा आलम्बनमव्याकृतमसंस्कृतं मुक्त्वा ।

स्यादेकेन ज्ञानेन सर्वधर्मान् जानीयात् । न स्यात् । अपि तु

---

१, Ms. °स्रव° ।

सांवृतं स्वकलापान्यदेकं विद्यादनात्मतः ।।१८।।

संवृतिज्ञानं स्वस्मात्कलापादन्यान् सर्वधर्माननात्मतो जानीयात् सर्वधर्मा अनात्मान इति। स्वभावस्तत्सहभुवश्च धर्मास्तस्य स्वकलापः। तेषामग्रहणं विषयविषयि-भेदादेकालम्वनत्वादिति।[१] संनिकृष्टत्वाच्च। तच्च कामावचरं श्रुतचिन्तामयं रूपावचरं श्रुतमयम् [11a. 20A1. VII] भावनामयम्। तस्य व्यवच्छिन्न-भूम्यालम्वनत्वात्[२]। अन्यथा हि युगपत्सर्वतो वैराग्यं स्यात्। गतमेतत्।

इदं तु वक्तव्यम्। कः कतिभिर्ज्ञानैः समन्वागत इति। पृथग्जनस्तावदेकेन समन्वागतः। संवृतिज्ञानेन। वीतरागस्तु परचित्तज्ञानेनापि। आर्यः पुनः

एकज्ञानान्वितो रागी प्रथमेऽनास्रवक्षणे।

कामावीतरागो[३] दुःखधर्मज्ञानक्षान्तावेकेनैव संवृतिज्ञानेन समन्वागतो भवति।

द्वितीये त्रिभिः

दुःखधर्मज्ञाने त्रिभिः संवृतिज्ञानधर्मज्ञानदुःखज्ञानैः।

ऊर्ध्वस्तु चतुर्ष्वेकैकवृद्धिमान्[४] ।।१९।।

अतः[५] परं चतुर्षु क्षणेषु एकैकज्ञानवृद्धिरस्य ज्ञातव्या। दुःखेऽन्वयज्ञानेऽन्वयज्ञानं वर्धते। समुदयनिरोधमार्गधर्मज्ञानेषु समुदयनिरोधमार्गज्ञानानि वर्धन्त इति मार्ग-धर्मज्ञाने सप्तभिर्ज्ञानैः समन्वागतो भवति। वीतरागस्तु सर्वत्राधिकेन परचित्तज्ञानेन समन्वागतो वेदितव्यः।

अथ कस्यामवस्थायां[६] कति ज्ञानानि भाव्यन्ते।

यथोत्पन्नानि भाव्यन्ते क्षान्तिज्ञानानि दर्शने।
अनागतानि

---

१. Y. अतिसंनिकृष्टत्वाच्च। २ Ms. drops व। ३. Ms. कामवीतरागो। ४. Ms. चतुर्ष्वेकैक....। ५. Ms. अत। ६. Ms. कस्यापमवस्थायां।

दर्शनमार्गे यद्यदेवोत्पद्यते क्षान्तिर्ज्ञानं वा तज्जातीयमनागतं भावनां गच्छति तदाकारा एव[1] चत्वारः। कस्माद्दर्शनमार्गे सभागज्ञानाकारभावनैव गो-[11b. 20B1. VII]त्राणामप्रतिलब्धत्वात्।

तत्रैव सांवृतं चान्वयत्रये ॥२०॥

तत्रैव दर्शनमार्गे संवृतिज्ञानं चापि भाव्यते त्रिषु दुःखसमुदयनिरोधान्वय-ज्ञानेषु। न धर्मज्ञानेष्वकृत्स्नसत्याभिसमयात्।

अतोऽभिसमयान्त्याख्यं

अतएव तदाभिसमयान्तिकं संवृतिज्ञानमाख्यायते। एकैकसत्याभिसमयान्ते भावनात्। कस्मान्न मार्गान्वयज्ञाने भावनां गच्छति। मार्गसत्यस्य[2] पूर्वं लौकिकेन मार्गेणानभिसमितत्वात् अकृत्स्नाभिसमयाच्च। कृत्स्नं हि दुःखं शक्यते परिज्ञातुं समुदयः प्रहातुं निरोधः साक्षात्कर्तुं न तु मार्गः शक्यते कृत्स्नो भावयितुम् इत्यभिसमयान्ताभावान्न तस्मिन्नाभिसमयान्तिकं भाव्यते। समुदयोऽपि न तदा[3] सर्वः प्रहीणो भवतीति न स्यादाभिसमयान्तिकम्। न। तत्सत्यदर्शनहेयः सर्वः प्रहीणो भवति। मार्गस्तद्दर्शनहेयप्रतिपक्षो[4] न सर्वः शक्यते भावयितुं बहुगोत्र-त्वात् इत्यस्ति महान्विशेषः। दर्शनमार्गपरिवारत्वादित्यपरे। तदिदं साध्यत्वाद-ज्ञापकम्। किं पुनस्तदाभिसमयान्तिकं संवृतिज्ञानं कदाचित्संमुखीक्रियते। न कदाचित् एकान्तेन हि

तदानुत्पत्तिधर्मकम्[5]।

कथं पुनस्तद्भावितं भवति। अलब्धलाभात् [12a. 20A1. VIII] कथमिदानीं तत्प्रतिलब्धं यदि नैव संमुखीकर्तुं शक्यते। प्राप्तितः। यस्माल्लब्धं तस्माल्लब्ध-मित्यपूर्वैषा निर्देशजातिः। तस्मान्नैवं भावना सिध्यति। एवं तु सिध्यति यदाहुः पूर्वाचार्याः। कथं च पूर्वाचार्या आहुः। लोकोत्तरमार्गसामर्थ्यात्संवृतिज्ञानं भाव्यते यद्व्युत्थितः सत्यालम्बनं विशिष्टतरं[6] लौकिकं ज्ञानं संमुखीकरोति। एष एव च तस्य लाभो यत्तत्संमुखीभावसमर्था-

१. Y. omits एव। २. Y. मार्गस्य। ३. Y. तदा न। ४. Ms. स्तत् दर्शन...। ५. G. तदनुत्पत्ति....। ६. Ms. °तर।

श्रयलाभः[१]। गोत्रे हि लब्धे[२] लब्धं गौत्रिकं भवति। एव तु नेच्छन्ति वैभाषिकाः।

कतिभूमिकं पुनस्तत्संवृतिज्ञानं भाव्यते। दर्शनमार्गस्य

**स्वाधोभूमि**

यद्भूमिको[३] दर्शनमार्गो भवति तद्भूमिकं[४] चावरभूमिकं च संवृतिज्ञानं भाव्यते। आनागम्यभूमिकश्चेद्भवति द्विभूमिकं भाव्यते। अनागम्यभूमिकं कामावचरं च। एवं यावच्चतुर्थध्यानभूमिके दर्शनमार्गे सप्तभूमिकं संवृतिज्ञानं भाव्यते।

तत्र पुनः कति स्मृत्युपस्थानानि।

**निरोधेऽन्त्यं**

निरोधेऽभिसमिते यत् संवृतिज्ञानं तदन्त्यं स्मृत्युपस्थानं धर्मस्मृत्युपस्थानम्। एकस्य परिसंख्यानात्सिद्धं भवति शेषं चत्वारि स्मृत्युपस्थानानीति। तच्चैतदाभिसमयान्तिकं संवृतिज्ञानं

**स्वसत्याकारं**[५]

यत्सत्याभिसमयाल्लभ्यते तत्सत्याकारमेव। [12b. 20B1. VIII] तदाकारवचनादालम्बनस्य तदेव सत्यमित्युक्तं भवति। दर्शनमार्गलभ्यत्वाच्च तत्।

**यात्निकम् ॥२१॥**

प्रायोगिकमित्यर्थः। सपरिवारग्रहणात्कामरूपावचाराणि चतुष्पञ्चस्कन्धस्वभावानि[६]।

**षोडशे षट् सरागस्य**

भाव्यन्त इति वर्तते। अवीतरागस्य षोडशे मार्गान्वयज्ञानक्षणे द्वे ज्ञाने प्रत्युत्पन्ने। मार्गज्ञानमार्गान्वयज्ञाने। पुरागतानि षट् भाव्यन्ते। धर्मान्वयदुःखसमुदयनिरोधमार्गज्ञानानि।

---

१. Y. यस्तत्संमुखीभाव...। २. Y. गोत्रेभिलब्धे। ३, Ms. यत्....। ४. Ms. तत्....। ५. For metre, the अनुस्वार may be omitted in the running verse. G. कार। ६. Ms. drops न्ध।

**वीतरागस्य सप्त तु ।**

वीतरागस्य परचित्तज्ञानं सप्तमं भाव्यते ।

**सरागभावना मार्गे तदूर्ध्वं सप्तभावना ॥२२॥**

षोडशात् क्षणादूर्ध्वं भावनामार्गे यावन्न वीतरागो भवति तावत् सर्वेषु प्रयोगान्तर्यविमुक्तिविशेषमार्गेषु सप्त ज्ञानानि भाव्यन्ते । धर्मान्वयदुःखसमुदयनिरोधमार्गसंवृतिज्ञानानि । लौकिकश्चेत् भावनामार्गः संवृतिज्ञानं प्रत्युत्पन्नम् । लोकोत्तरश्चेत् चतुर्णां धर्मज्ञानानामन्यतमत् ।

**सप्तभूमिजयाऽभिज्ञाकोप्याप्त्याकीर्णभाविते[1]**
**आनन्तर्यपथेषूर्ध्वं[2] मुक्तिमार्गाष्टकेऽपि च ॥२३॥**

सप्तज्ञानानि भाव्यन्ते इति वर्तते । सप्त भूमयः चत्वारि ध्यानानि त्रयश्चारूप्याः । तासां जयो वैराग्यं तस्मिन् सप्तभूमिके वैराग्ये पञ्चसु चाभिज्ञासु अ[13a. 21A. I]कोप्यप्रतिवेधे च व्यवकीर्णभाविते च ध्याने शैक्षस्य यावन्तः आनन्तर्यमार्गास्तेष्वपि सर्वेषु सप्त ज्ञानानि भाव्यन्ते तान्येव । लौकिकश्चेत् भावनामार्गः संवृतिज्ञानं प्रत्युत्पन्नम् । लोकोत्तरश्चेच्चतुर्णामन्वज्ञानानां द्वयोश्च धर्मज्ञानयोरन्यतमत् । अकोप्यप्रतिवेधे तु संवृतिज्ञानं न भाव्यते । भवाग्राप्रतिपक्षत्वात् । तत्र जयज्ञानं सप्तमं वेदितव्यम् । सप्तभूमिवैराग्यादपि चोर्ध्वंभवाग्रवैराग्ये विमुक्तिमार्गेष्वष्टासु सप्तैव ज्ञानानि भाव्यन्ते । धर्मान्वयदुःखसमुदयनिरोधमार्गपरचित्तज्ञानानि । संवृतिज्ञानं न भाव्यते । भवाग्राप्रतिपक्षत्वात् । प्रत्युत्पन्नं तु चतुर्णामन्वयज्ञानानां द्वयोश्च धर्मज्ञानयोरन्यतमत् ।

**शैक्षोत्तापनमुक्तौ[3] वा षट्सप्तज्ञानभावना ।**

शैक्षस्येन्द्रियोत्तापनायां विमुक्तिमार्गे सरागस्य षण्णां भावना धर्मान्वयदुःखसमुदयनिरोधमार्गज्ञानानां वीतरागस्य सप्तानां परचित्तज्ञानं प्रक्षिप्य । संवृतिज्ञानस्याप्युभयोरिति केचित् । तत्र मतविकल्पज्ञापनार्थो वाशब्दः । प्रयोगमार्गे तु तयोः संवृतिज्ञानस्यापि भावना ।

---

१. G. °कोप्याप्ता । G. °पूर्ध्वं° । ३. G. °मुक्तै° ।

**आनन्तर्यपथे षण्णां**

वीतरागस्यावीतरागस्य वा शैक्षस्येन्द्रियो-[13b. 21B. I]त्तापनाया-मानन्तर्यमार्गे षण्णां भावना पूर्ववत् । न संवृतिज्ञानस्य । दर्शनमार्गसादृश्यात् । न परचित्तज्ञानस्य । सर्वानन्तर्यमार्गप्रतिषिद्धत्वात् । किमर्थं प्रतिषिध्यते । अप्रति-पक्षत्वात् ।

**भवाग्रविजये तथा ॥२४॥**

भवाग्रवैराग्येऽप्यानन्तर्यमार्गेषु षण्णां भावना तथैव ।

**नवानां तु क्षयज्ञाने**

भवाग्रवैराग्ये नवमो विमुक्तिमार्गः क्षयज्ञानम् । तत्र नवानां ज्ञानानां भावना अन्यत्रानुत्पादज्ञानात् ।

**अकोप्यस्य दश भावना ।**

यस्त्वकोप्यधर्मा भवति तस्य दशानां ज्ञानानां भावना । अनुत्पादज्ञान-लाभात् ।

**तत्संचरेऽन्त्यमुक्तौ च**

योऽप्यकोप्यतां संचरति तस्याप्यन्त्ये विमुक्तिमार्गे दशानां भावना ।

**प्रोक्तशेषेऽष्टभावना[1] ॥२५॥**

किं पुनः शेषम् । कामवैराग्ये नवमो विमुक्तिमार्गः सप्तभूमिवैराग्या-भिज्ञाव्यवकीर्णभावितेषु[2] विमुक्तिमार्गः अकोप्यप्रतिवेधोऽष्टौ विमुक्तिमार्गाः सर्वे च वीतरागस्य प्रयोगविशेषमार्गाः । तेषु सर्वेष्वष्टौ ज्ञानानि भाव्यन्ते । अनागतभावनया क्षयानुत्पादज्ञाने हित्वा । शैक्षस्यैवम् । अशैक्षस्य पुनरभिज्ञादि-प्रयोगविमुक्तविशेषमार्गेषु नव ज्ञानानि दश वा । अभि-[14a. 21A. II]-ज्ञाव्यवकीर्णभावितानन्तर्यविमुक्तिमार्गेषु त्वष्टौ नव वा[3] द्वयोस्त्वभिज्ञाविमुक्ति-मार्गयोरव्याकृतत्वान्न किंचिदनागते भाव्यते । पृथग्जनस्य तु कामत्रिध्यान-वैराग्यान्त्यविमुक्तिमार्गेषु[4] ध्यानभूमिकेषु च प्रयोगाभिज्ञात्रय[5]विमुक्तिमार्गा-प्रमाणादिगुणाभिनिर्हारेषु संवृतिज्ञानमनागतं भाव्यते परचित्तज्ञानं चान्यत्र

१. G. प्रोक्ता । २. Ms. looks like ष्व । ३. Y. च । ४. Y. seems to be °मार्गे ।
५. Y. °त्रयो ।

निर्वेधभागीयेभ्यः। तेषु हि परचित्तज्ञानं न भाव्यते। दर्शनमार्गपरिवारत्वात्। अन्यत्रापूर्वमार्गलाभे संवृतिज्ञानमेवानागतं भाव्यते।

अथ कस्मिन्मार्गे कतिभूमिकं ज्ञानं भाव्यते। संवृतिज्ञानं तावद्यद्भूमिको मार्गो यां च प्रथमतो भूमिं[1] लभते तद्भूमिकमनागतं[2] भाव्यते। अनास्रवं तु न केवलं यद्भूमिको[3] मार्गः। किं तर्हि।

**यद्वैराग्याय यल्लाभस्तत्र चाधश्च[4] भाव्यते।**

यद्भूमिवैराग्यायापि हि द्विविधोऽपि मार्गो भवति प्रयोगमार्गादिः यां च भूमिं लभते वैराग्यतस्तद्भूमिकान्यधोभूमिकानि चानास्रवाणि[5] ज्ञानानि भावनां गच्छन्ति[6]।

**सास्रवाश्च क्षयज्ञाने**

क्षयज्ञाने तु सर्वभूमिकाः सास्रवा अपि गुणाः क्षयज्ञानलाभिका भावनां गच्छन्ति अशुभानापानस्मृति-[14b. 21B. II]स्मृत्युपस्थानाप्रमाणविमोक्षादयः रज्जुच्छेदादुच्छ्वसन्तीव पेड़ासाधर्म्येण। स्वचित्ताधिराज्यप्राप्तस्य प्राप्तिभिः सर्वकुशलधर्मप्रत्युद्गमना[7]दाधिराज्य[8]प्राप्तौ प्राभृतेन विषयप्रत्युद्गमनवत्[9]। यत् किंचिल्लभ्यते तत्सर्वं भाव्यते। यदपूर्वं लभ्यते तत् भाव्यते।

**लब्धपूर्वं न भाव्यते ॥२६॥**

यद्विहीनं पुनर्लभ्यते न तत् भाव्यते। भावितोत्सृष्टत्वात्।

किं खलु प्रतिलम्भ एव भावना नेत्युच्यते। चतुर्विधा हि भावना। प्रतिलम्भभावना निषेवणभावना प्रतिपक्षभावना विनिर्धावनभावना[10] च। तत्र

**प्रतिलम्भनिषेवाख्ये[11] शुभसंस्कृतभावने।**
**प्रतिपक्षविनिर्धावभावने सास्रवस्य तु ॥२७॥**

---

१. Y. यां भूमिं प्रथमतो। २. Ms. तद्...। ३. Ms. यत्...। ४. G. वाधश्च। ५. Y. वा...। ६. Ms. गच्छति। ७. Ms. प्रत्युत्गमना०। ८. Y. आधिराज्ये। ९. Ms. प्रत्युत्-गमनवत्। १०. Ms. विनिर्द्धावभावना। ११. Ms. निषेवणाख्ये।

प्रतिलम्भनिषेवणभावने कुशलसंस्कृतानां धर्माणामनागतानामेका प्रत्युत्पन्नानामुभे। प्रतिपक्षविनिर्धावनभावने सास्रवाणां धर्माणाम्। तदेवं कुशलसास्रवाणां चतस्रो भावना भवन्ति। अनास्रवाणां द्वे क्लिष्टाव्याकृतानां च। बाह्याभिधार्मिकाणां षट् भावनाः। एताश्चतस्रः संवरभावना विभावना च। इन्द्रियाणां पूर्वी[1] कायस्योत्तरा। "षडिमानीन्द्रियाणि सुदान्तानि यावत्सुभावितानि तथा सन्त्यस्मिन्काये क्ले-[15a. 21A. III]शा" इति विस्तरः। ते तु प्रतिपक्षनिर्धाव[2]-भावनान्तर्भूते इति काश्मीराः। सामान्येन सर्वेषां पुद्गलानां क्षयज्ञाने गुणभावनोक्ता।

**अष्टादशावेणिकास्तु बुद्धधर्मा बलादयः।**

ये बुद्धस्यैव भगवतः क्षयज्ञाने भावनां गच्छन्ति नान्यस्य। कतमेऽष्टादश। दश बलानि चत्वारि वैशारद्यानि त्रीणि स्मृत्युपस्थानानि महाकरुणा च। असाधारणं ह्यावेणिकमित्युच्यते। तत्र

**स्थानास्थाने दश ज्ञानानि**

स्थानास्थानज्ञानबलं दश ज्ञानानि।

**अष्टौ कर्मफले**

कर्मविपाकज्ञानबलमष्टौ ज्ञानानि। निरोधमार्गज्ञाने हित्वा।

**नव ॥२८॥**

**ध्यानाद्यक्षाधिमोक्षेषु धातौ च**

ध्यानविमोक्षसमाधिसमापत्तिज्ञानबलं नव ज्ञानानि। निरोधज्ञानं हित्वा। एवमिन्द्रियपरापरज्ञान[3] बलं नानाधिमुक्तिज्ञानबलं नानाधातुज्ञानबलं वेदितव्यम्।

**प्रतिपत्सु तु।**

---

१. Y. पूर्वा। २. Y. निर्धावन। ३. Ms. ज्ञानं।

**दश वा**

नव वेति मतविकल्पार्थो[1] वाशब्दः। यदि सफला प्रतिपत् गृह्यते। सर्वत्रगामिनी प्रतिपज्ज्ञानबलं[2] दश ज्ञानानि। न चेन्नव। अन्यत्र निरोधज्ञानात्।

**संवृतिज्ञानं द्वयोः**

पूर्वनिवासानुस्मृतिज्ञानबलं च संवृतिज्ञानम्।

**षट् दश[3] वा क्षये ॥२९॥**

आस्रवक्षयज्ञानबलं षड् ज्ञानानि धर्मान्वयनिरोधक्षयानुत्पादसंवृतिज्ञानानि। यदि निरोधज्ञान-[15b. 21B. III]मेवास्रवक्षयज्ञानम्। अथ क्षीणास्रवसंताने ज्ञानमास्रवक्षयज्ञानं ततो दश ज्ञानानि।

उक्तः स्वभावो भूमिरिदानीमुच्यते।

**प्राङ्निवासच्युतोत्पादबलध्यानेषु**

च्युतिरेव च्युतम्। पूर्वनिवासच्युत्युपपत्तिज्ञानं बलं चतुर्ध्यानभूमिकम्।

**शेषितम्।**

**सर्वभूमिषु**

शेषं बलं सर्वभूमिसंगृहीतम्। ताः पुनरेकादश। कामधातुरनागम्य ध्यानान्तरं ध्यानारूप्याश्च। सर्वाणि। जम्बूद्वीपपुरुषाश्रयाणि। अन्यत्र बुद्धानुत्पादात्। तदेतद्दशविधं[4] ज्ञानमन्यस्य बलं नोच्यते। बुद्धस्यैव बलमिति।

**केनास्य बलमव्याहतं यतः ॥३०॥**

यस्मादस्य सर्वत्र ज्ञेये ज्ञानमव्याहतं वर्तते तस्माद्बलम्। अन्येषां तु व्याहन्यते। ज्ञानं क्वचिदिच्छतामप्यप्रवृत्तेरिति नार्हति तद्बलाख्यां

---

१. Ms. विकल्पो०। २. Ms. प्रतिपत् ज्ञानबलं। ३. Ms. षट्दश। ४. Y. तदेव दशविध०।

लब्धुम् । स्थविरशारिपुत्रेण प्रव्रज्यापेक्ष[1]पुरुषप्रत्याख्यानं श्येनोपद्रुतस्य पक्षिण उपपत्त्यादिपर्यन्ताज्ञानं चात्रोदाहरणम् । एवं तावदव्याहतज्ञानत्वाद्बुद्धानां ज्ञेयवदनन्तं मानसं बलम् ।

नारायणबलं काये

काये पुनर्बुद्धस्य नारायणं बलं वर्णयति ।

संधिष्वन्ये

सन्धौ सन्धौ नारायणबलमित्यपरे । मानसवत् कायिकमप्यस्यानन्तं बलमिति भदन्तः । अन्यथा ह्यनन्तज्ञानबलसहिष्णुर्न स्यादिति । नागग्रन्थिशङ्कलाशङ्कुसंधयश्च बुद्धप्रत्येकबु-[16a. 21A. IV.]द्धचक्र[2]वर्तिनः ।

किं पुनर्नारायणस्य बलस्य प्रमाणम् ।

दशाधिकम् ।

हस्त्यादिसप्तकबलम्

यद्दशानां प्राकृतहस्तिनां बलं तदेकस्य गन्धहस्तिनः । एवं महानग्नप्रस्कन्दिवराङ्गचानूर[3]नारायणानां[4] दशोत्तरवृद्धिर्वक्तव्या । प्राकृतगन्धहस्तिमहानग्नप्रस्कन्दिनां दशोत्तरवृद्धचार्धनारायणं बलं[5] तत् द्विगुणं नारायण[6]मित्यपरे । यथा तु बहुतर तथा युज्यते ।

स्प्रष्टव्यायतनं च तत् ॥३१॥

तच्चैतत्कायिकं बलं सर्वस्यैव स्प्रष्टव्यायतनस्वभावं महाभूतविशेष एव । उपादायरूपं[7] सप्तभ्योऽर्थान्तरमित्यपरे । उक्तानि बलानि ।

वैशारद्यं चतुर्धा तु

यथासूत्रम् । एतानि पुनश्चत्वारि वैशारद्यानि

---

१. Y. प्रव्रजनप्रेक्ष । २. Ms. °श्चक्रवर्तिनः । ३. Y. चाणूर । ४. Ms. नाराणानां । ५. Y. °नारायणबलं । ६. Ms. नाराण । ७. Y. रूप० ।

यथाद्यदशमे बले ।

द्वितीयसप्तमे[1] चैव

यथा स्थानास्थानज्ञानवलमेवं सम्यक्संबुद्धस्य वत मे सत इत्येतद्वैशारद्यं वेदितव्यम् । यथास्रवक्षयज्ञानवलमेवं क्षीणास्रवस्य वत मे सत इत्येतद्वैशारद्यम् । यथा कर्मस्वकज्ञानबलमेवं ये वा पुनर्मया श्रावकाणामन्तरायिका धर्मा आख्याता इत्येतद्वैशारद्यम् । यथा सर्वत्रगामिनी प्रतिपज्ज्ञानं वलमेवं[2] यो वा पुनर्मया श्रावकाणां निर्याणाय मार्ग आख्यात इत्येतद्वैशारद्यं वेदितव्यम् । कथं न ज्ञानमेव वैशारद्यम् । निर्भयता हि वैशारद्यम् । एभिश्च निर्भ[16a. 21A. IV.]यो भवति । ज्ञानकृतं वैशारद्यं युज्यते । न ज्ञानमेव ।

त्रीणि स्मृत्युपस्थानानि पर्षद्भेदात् भवन्ति यथासूत्रम् । तत्त्वेतत्

स्मृतिप्रज्ञात्मकं त्रयम् ।।३२।।

स्मृतिसंप्रज्ञानस्वभावान्येतानि त्रीणि स्मृत्युपस्थानानि । यदा श्रावकस्यापि शुश्रूषमाणा[3]शुश्रूषमाणोभयेष्वानन्दी[4] न भवत्याघातो वा ।

कस्मादेते आवेणिका बुद्धधर्मा उच्यन्ते । सवासनप्रहाणात् । अथवा यस्य श्रावकास्तस्य चच्छुश्रूषमाणाशुश्रूषमाणोभयेषु सौमनस्याद्यवकाशः सुतरां न तथाऽन्यस्येति तस्यैव तदनुत्पादादाश्चर्यं व्यवस्थाप्यते नान्यस्येति ।

महाकरुणेदानीं[5] वक्तव्या । सेयमुच्यते ।

महाकृपा संवृतिधीः

संवृतिज्ञानात्मिका महाकरुणा । अन्यथा हि न सर्वसत्त्वालम्बना सिध्येत् न च त्रिदुःखताकारा । करुणावत् । कस्मादियं महाकरुणेत्युच्यते ।

संभाराकारगोचरैः ।

---

१. G. द्वितीये सप्तमे । २. Ms. प्रतिपत् ज्ञानम्बलमेवं । ३. Ms. drops ष । ४. Y. °भयेषु नन्दी । ५. Ms. °करणे....।

**समत्वादाधिमात्र्याच्च**[१]

संभारेण महापुण्यज्ञानसंभारसमुदागमात् । आकारेण त्रिदुःखताकरणात् । आलम्बनेन त्रैधातुकालम्बनात्[२] । समत्वेन सर्वसत्त्वेषु समवृत्तित्वात् । अभिमात्रत्वेन सर्वसत्त्वेषु समवृत्तित्वात् । अधिमात्रत्वेन ततोऽधिमात्रतराभावात् ।

करुणामहाकरुणयोः किं नानाकरणम् ।

**नानाकरणमष्टधा ॥३३॥**

स्वभावतोऽद्वेषामोहस्वभावत्वात् । आकारत एकत्रि-[17a. 21A. V]-दुःखताकारत्वात् । आलम्बनत एकत्रिधात्वालम्बनत्वात् । भूमितश्चतुर्ध्यानचतुर्थध्यानभूमिकत्वात् । संतानतः श्रावकादिबुद्धसंतानजत्वात् । लाभतः कामधातु[३]-भवाग्रवैराग्यलभ्यत्वात् । अपरित्राणपरित्राणतः अतुल्यकरुणायनाच्च[४] ।

किं पुनः सर्वे बुद्धाः सर्वप्रकारसामान्या भवन्ति । नेत्याह ।

**संभारधर्मकायाभ्यां जगतश्चार्थचर्यया ।**
**समता सर्वबुद्धानां नायुर्जातिप्रमाणतः ॥३४॥**

त्रिभिः कारणैः साम्यं **सर्वबुद्धानाम्** । सर्व[५]पुण्यज्ञानसंभारसमुदागमतः धर्मकायपरिनिष्पत्तितः **अर्थचर्यया** च लोकस्य । आयुर्जातिगोत्रप्रमाणकृतस्तु भेदो भवति । चिराल्पतरजीवनात्[६] क्षत्रियब्राह्मणजातिभेदात् काश्यपगौतमादिगोत्रभेदात् अल्पानल्पप्रमाणभेदाच्च यथाकालमिति । एतामेव च त्रिविधां संपदं मनसिकुर्वाणेन विदुषा शक्यं बुद्धानां भगवतामन्तिके तीव्रप्रेम गौरवं चोत्पादयितुं यदुत हेतुसंपदं फलसंपदमुपकारसंपदं च । तत्र चतुर्धा हेतुसंपत् । सर्वपुण्य[७]ज्ञानसंभाराभ्यासो दीर्घकालाभ्यासो निरन्तराभ्यासः सत्कृत्याभ्यासश्च । चतुर्विधा फलसंपत् । ज्ञानसंपत् प्रहाणसंपत् प्रभावसंपद्रूपकायसंपच्च । चतुर्विधोपकारसंपत् । अपाय-[17b. 21B. V]त्रयसंसारदुःखात्यन्तनिर्मोक्षसंपत् यानत्रयसुगति प्रतिष्ठापनसंपद्वा । ज्ञानसंपत् पुनश्चतुर्विधा । अनुपदिष्टज्ञानं सर्वत्रज्ञान सर्वथाज्ञानमयत्नज्ञानं

---

१. Ms. drops दा । २. Y. त्रैधातुकसत्त्वालम्बनत्वात् । ३. Y. omits धातु । ४. Ms. °करुणायमांनाच्च । ५. Y. पूर्व । ६. Y. omits तर । ७. Y. गुण ।

च। चतुर्विधा प्रहाणसंपत्। सर्वक्लेशप्रहाणम् अत्यन्तप्रहाणं सवासनप्रहाणं सर्वसमाधिसमापत्त्यावरणप्रहाणं च चतुर्विधा प्रभावसंपत्। बाह्यविषयनिर्माण-परिणामना[१]धिष्ठानवशित्वसंपत् आयुरुत्सर्गाधिष्ठानवशित्वसंपत् आवृताकाशदूर[२]-क्षिप्रगमनाल्पबहुत्वप्रवेशन[३] वशित्वसंपत् विविधनिजाश्चर्यधर्मसंपच्च। चतुर्विधा रूपकायसंपत्। लक्षणसंपत् अनुव्यञ्जनसंपत् बलसंपत् वज्रसारास्थिसंपत्[४]। इत्येतत्सामासिकं बुद्धानां माहात्म्यम्। अनन्तप्रभेदं तु तद्भिद्यमानं जायते। तच्च पुनर्बुद्धा एव सकलं ज्ञातुं वक्तुं च समर्थाः यद्यनेकासंख्येयं कल्पं[५] जीवितम-धितिष्ठेयुः। एवं च तावदनन्ताद्भुतगुणज्ञानप्रभावोपकारमहारत्नाकरास्तथागताः। अथ च पुनर्बालाः स्वगुणदारिद्र्यहताधिमोक्षाः शृण्वन्तोऽपि तां तादृशीं गुणसमृद्धिं बुद्धं च नाद्रियन्ते तस्य च धर्मम्। पण्डितास्तु पुनर्मज्जाभिरपि[६] तं भगवन्तमभि-प्रपद्यन्ते तस्य च धर्मम्। ते हि श्रद्धामात्र-[18a. 21A. VI]केणा[७]प्येकान्तिके-नाभिप्रसन्ना अनियतविपाकानां पापानां राशीनभिभूय दैवीं मानुषीं च श्रियम-भिभूय निर्वाणपरायणाः संवर्तन्ते। अतएव तथागता अनुत्तरं पुण्यक्षेत्रमुच्यन्ते। अवन्ध्येष्ठप्रकृष्टाशुस्वन्तफलत्वात्। उक्तं हि भगवता

"येऽन्यानपि जिने कारान्करिष्यन्ति विनायके।
विचित्रं स्वर्गमागम्य ते लप्स्यन्तेऽमृतं पदमि"ति।

इमे तावदष्टादश बुद्धानामावेणिका[८] धर्मा उच्यन्ते ॥

**शिष्यसाधारणा अन्ये धर्माः**

श्रावकसाधारणास्त्वन्ये गुणा बुद्धानाम्।

**केचित् पृथग्जनैः।**

के पुनस्त इति यथायोगम्

**अरणाप्रणिधिज्ञानप्रतिसंविद्गुणादयः[९] ॥३५॥**

---

१. Y. °परिणामा°। २. Y सुदूर। ३. Y. °बहुप्रवेश। ४. Y. वज्रसारास्थिशरीर-तासंपत्। ५. Y. °कासंख्येयकल्पं। ६. Ms. पुनर्मज्जभिरपि। ७. Ms. मात्रकेना....। ८. Ms. °वेनिका। ९. Ms. प्रतिसंवित्....।

अरणाप्रणिधिज्ञानप्रतिसंविदभिज्ञाध्यानारूप्यांप्रमाणविमोक्षाभिभ्वायतनकृत्स्नायतनादयः। तत्रारणा नाम कश्चिदेवार्हन्[1] क्लेशप्रभवं सत्त्वानां दुःखं विदित्वात्मानं च दक्षिणीयविशेषं परेषां तदालम्बनं क्लेशोत्पादं परिहर्तुकामस्तादृशं ज्ञानमुत्पादयति येन परेषां सर्वथाऽपि रणं नोत्पादयति। न कस्यचित्तदालम्बनो[2] राग उत्पद्यते द्वेषो मानो वा। नैषा प्रतिपत् कंचिदेव रणयतीत्यरणा। सा पुनरेषा

**संवृतिज्ञानमरणा**

अयमस्याः स्वभावः।

**ध्यानेऽन्त्ये**

चतुर्थध्यान-[18b. 21B. VI]भूमिका सुखप्रतिपदामग्रत्वात्।

**अकोप्यधर्मणः।**

नान्यस्यार्हतः। अन्यो हि स्वसंतानादपि कदाचित् क्लेशरणं परिहर्तुं न शक्नोति।

**नृजा**

मनुष्येष्वेवोत्पद्यते[3] त्रिषु द्वीपेषु।

**अनुत्पन्नकामाप्तसवस्तुक्लेशगोचराः ॥३६॥**

अनागताः कामावचराः सवस्तुकाः क्लेशाः अस्या आलम्बनं नापरेषां[4] क्लेश उदपादीत्येवं[5] प्रवृत्तत्वात्। अवस्तुकास्तु क्लेशा न शक्याः परिहर्तुं सर्वत्रगाणां सकल[6]स्वभूम्यालम्बनत्वात्। यथा चारणोक्ता

**तथैव प्रणिधिज्ञानं**

---

१. Ms. looks like कश्चिदेवार्हं न। २. Ms. कस्यचिदालम्बनो। ३. Ms. looks like अमुष्ये...। ४. Ms. मापरेषां। ५. उदयीदीत्येवं। ६. Ms. सफल।

तदपि हि संवृतिज्ञानं ध्यानेऽन्त्येऽकोप्यधर्मण: मनुष्याश्रयं च

**सर्वालम्बं तु[1] तत्**

सर्वधर्मालम्बनं तु प्रणिधिज्ञानमित्येव विशेष: । आरूप्यास्तु न साक्षात् प्रणिधिज्ञानेन ज्ञायन्ते । किं तर्हि । निष्पन्न[2]चरितविशेषात् । कर्षक[3]निदर्शनं चात्रेति वैभाषिका: । प्रणिधिपूर्वकं ज्ञानं प्रणिधिज्ञानं यद्धि प्रणिधाय प्रान्तकोटिकं चतुर्थं ध्यानं समापद्यते । इदं जानोयामिति तद्यथाभूतं जानाति । सर्व[4]स्तत्समाधिविषय:

**तथा ।**

**धर्मार्थयोर्निरुक्तौ च प्रतिभाने च संविद: ।।३७।।**

चतस्रो हि प्रतिसंविद: । धर्मप्रतिसंविदर्थप्रतिसंविन्निरुक्तिप्रतिसंवित्प्रतिभानप्रतिसंविच्च । ता अपि धर्मार्थनिरुक्तिप्रतिभानप्रतिसंवि-[19a. 21A. VII]दस्तथैव यथाऽरणा । किमासां तथैव अकोप्यधर्ममनुष्याश्रयत्वम् । आलम्बनभूमिस्वभावविशेषस्त्वासां पृथगुच्यते ।

**तिस्रो नामाथवाग्ज्ञानमविवर्त्यं यथाक्रमम् ।**

नामपदव्यञ्जनकायेष्वर्थवाचिता अविवर्त्यज्ञानं धर्मार्थनिरुक्तिप्रतिसंविदो यथाक्रमम् ।

**चतुर्थीयुक्तमुक्ताभिलापमार्गवशित्वयो: ।।३८।।**

अविवर्त्यं ज्ञानमिति वर्तते । युक्तमुक्ताभिलापितायां समाधिवशिसंप्रख्याने चाविवर्त्यं ज्ञानं प्रतिभानसंवित् ।

**वाङ्मार्गालम्बना चासौ**

वाक्च मार्गश्च तस्या: आलम्बनम् ।

**नव ज्ञानानि**

---

१. Ms. सर्वालम्बनन्तु, but there will be a metrical defect । २ Y. निष्पन्न० । ३. Y. कार्षक । ४. Y. यावांस्तत्.... ।

नवज्ञानस्वभावा प्रतिभानप्रतिसंविदन्यत्र निरोधज्ञानात् ।

**सर्वभूः ।**

सर्वभूमिका चासौ कामधातौ यावत् भवाग्रे वाङ्मार्गयोरन्यतरालम्वनात् ।

**दश षड्वा ऽर्थसंवित्**[1]

अर्थप्रतिभानसंवित् सर्वधर्माश्चेदर्था[2] दश ज्ञानानि । निर्वाणं चेदर्थः षट् ज्ञानानि । धर्मान्वयनिरोधक्षयानुत्पादसंवृतिज्ञानानि ।

**सा सर्वत्र**

सा पुनरेषाऽर्थप्रतिसंवित् सर्वभूमिका ।

**अन्ये तु सांवृतम् ॥३९॥**

अन्ये तु द्वे धर्मनिरुक्तिप्रतिसंविदौ संवृतिज्ञानस्वभावे नामकायादिवागालम्वनस्वभावत्वात् ।

**कामध्यानेषु धर्मे वित्**

धर्मप्रतिसंवित् पञ्चभूमिका कामधातुचतुर्थध्यानसंगृहीता ऊर्ध्वं नामका-[19b. 21B. VII]याभावात् ।

**वाचि प्रथमकामयोः ।**

वाङ्निरुक्तिरित्येकोऽर्थः । निरुक्तिप्रतिसंवित्कामधातुप्रथमध्यानभूमिका ऊर्ध्वं वितर्काभावात् । प्रज्ञप्तौ तु प्रतिसंविदामेव निर्देशः । "पदव्यञ्जने तस्यैवार्थे तस्यैकद्विबहुस्त्रीपुरुषाद्यधिवचने तस्यासक्ततायामविवर्त्यज्ञानं धर्माविप्रतिसंविद" इत्यत एवासां क्रमसिद्धिः । निर्वचनं[3] निरुक्तिः । यथा रूप्यते तस्माद्रूपमित्येवमादि । उत्तरोत्तरप्रतिभा प्रतिभानमित्यपरे । आसां च किल प्रतिसंविदां गणितं बुद्धवचनं[4] शब्दविद्या हेतुविद्या च पूर्वप्रयोगो यथाक्रमम् । नाप्येतेष्व-

---

१. Ms. षट्वा । २. Y. अर्थो । ३. Ms. निर्वाचनं । ४. °वचन ।

कृतकौशलस्ता उत्पादयितुं शक्नोतीति। बुद्धवचनमेव तु सर्वासां प्रयोगं वर्णयन्ति। यस्य चैका तस्यावश्यं चतस्रः प्रतिसंविदो भवन्ति।

**विकलाभिर्न तल्लाभी .**

नहि विकलाभिस्ताभिः प्रतिसंविल्लाभो भवति[1]।

ये चैत उपदिष्टा अरणादयो गुणाः

**षडेते प्रान्तकोटिकाः ॥४०॥**

प्रान्तकोटिकध्यानवलेनैषां लाभः।

**तत्षड्विधं**

तदपि प्रान्तकोटिकं चतुर्थं ध्यानं षडात्मकम्। अरणाप्रणिधिज्ञानं तिस्रः प्रतिसंविदः। तदेव प्रान्तकोटिकम्। निरुक्तिप्रतिसंविदस्तद्वलेन लाभो न तु सा चतुर्थध्यानभूमिका।

किं पुनरिदं प्रान्तकोटिकं नाम। ध्या-[20a. 21A. VIII]नमन्त्यं चतुर्थं ध्यानम्।

**सर्वभूम्यनुलोमितम्।**

**वृद्धिकाष्ठागतं तच्च**

कथं सर्वभूम्यनुलोमितम्। कामावचराच्चित्तात्प्रथमं ध्यानं समापद्यते। ततो द्वितीयमेवं क्रमेण यावन्नैवसंज्ञानासंज्ञायतनम्। प्रतिलोमं पुनर्यावत्कामावचरं चित्तं ततः पुनरनुलोमं यावच्चतुर्थध्यानमेवं सर्वभूम्यनुलोमितम्। कथं वृद्धिकाष्ठागतम्। तथाभावितान्मृदुनो मध्यं मध्यादधिमात्रं समापद्यते। वृद्धिप्रकर्षो हि वृद्धिकाष्ठा। इदमीदृशं प्रान्तकोटिकं प्रगताऽन्त[2]कोटिरस्येति कृत्वा। कोटिः पुनरत्र वृद्धिः प्रकारो वा। चतुष्कोटिकवत्।

एते पुनः बुद्धगुणाः

---

१. Ms. drops भ। २. Y. अन्ता।

**बुद्धान्यस्य प्रयोगजाः ॥४१॥**

बुद्धादन्यस्य प्रायोगिका न वैराग्यलाभिकाः। बुद्धस्य नास्ति किंचित् प्रायोगिकम्। तस्य सर्वधर्मेश्वरत्वादिच्छामात्र[१]प्रतिबद्धः सर्वगुणसंपत्संमुखीभावः। इमे तावच्छ्रावकसाधारणगुणा अभिज्ञादयः पृथग्जनैरपि।

केयमभिज्ञा नाम।

**ऋद्धिश्रोत्रमनःपूर्वजन्मच्युत्युदयक्षये।**
**ज्ञात[२]साक्षीक्रियाऽभिज्ञा षड्विधा**

ऋद्धिविषये[३] ज्ञानसाक्षात्क्रिया अभिज्ञा। दिव्यश्रोत्रचेतःपर्यायपूर्व[४]निवासानुस्मृतिच्युत्युत्पादा[५]स्रव[६]क्षयज्ञानसाक्षात्क्रिया अभिज्ञाः। एताः षडभिज्ञाः। आसां पञ्च पृथग्जनैः [20b. 21B. VIII] साधारणाः। सर्वास्त्वेताः

**मुक्तिमार्गधी[७]ः ॥४२॥**

विमुक्तिमार्गप्रज्ञास्वभावाः। श्रामण्यफलवत्।

**चतस्रः संवृतिज्ञानं**

चेतःपर्यायास्रव[८]क्षयज्ञानाभिज्ञे हित्वा।

**चेतसि ज्ञानपञ्चकम्।**

चेतःपर्यायाभिज्ञा पञ्च धर्मान्वयमार्गसंवृतिपरचित्तज्ञानानि।

**क्षयाभिज्ञा बलं यद्वत्**

यथास्रवक्षयज्ञानबलमुक्तं तथा वेदितव्या। षड् दश ज्ञानानीति। सर्वभूमिकाऽप्येषा तथैव ज्ञातव्या। शेषास्तु

---

१. Ms. °म्यात्र। २. G. ज्ञानं। ३. Y. °विषयेति and gives in note °ye. Mss। ४. Y. adopts पूर्वे and gives in note°rva Mss। ५. Y. च्युत्युपपादा₀। Ms. °श्रव। ७. G. °धी। ८. Ms. °पर्यायाश्रव।

**पञ्च ध्यानचतुष्टये ।।४३।।**

पञ्चाभिज्ञाः[1] चतुर्थध्यानभूमिकाः । कस्मादारूप्यभूमिका न सन्ति । तिस्रस्तावन्न सन्ति । रूपालम्बनत्वात् । चेतःपर्यायाभिज्ञापि नास्ति रूपतिर्थ्या[2]भिनिष्पाद्यत्वात् । पूर्वनिवास[3]स्मृतिरप्यनुपूर्वावस्थान्तरं मरणाभिनिष्पत्तेः । स्थानगोत्राद्यालम्बनत्वाच्च । परचित्तं हि ज्ञातुकाम आत्मनः कायचित्तयोर्निमित्तमुद्गृह्णाति[4] । कीदृशेऽपि मे काये कीदृशं चित्तं भवत्येवं परेषामप्याभुजतश्चित्तज्ञानादभिनिष्पन्ना भवति । अभिनिष्पन्नायामभिज्ञायां रूपनिरपेक्षो जानाति । पूर्वनिवासं समनुस्मर्तुकामः समनन्तरनिरुद्धमनोविज्ञानो निमित्तमुद्गृह्य[5] तत्समनन्तरप्रातिलोम्येना[6]वस्थान्तराणि मनसिकरोति । यावत्सं [21a. 21A1. I] धिचित्तम् । ततोऽन्तराभवस्यैकक्षणं मरणेऽपि निष्पन्नो भवति । एवं परस्यापि स्मरति । अभिनिष्पन्नायां विलङ्घ्यापि स्मरणम् । अनुभूतपूर्वस्यैव स्मरणम् । शुद्धावासानां कथं स्मरणम् । श्रवणेनानुभूतत्वात्[7] । आरूप्यच्युतस्येहोपपन्नस्य परसंतत्यधिष्ठानेनोत्पादनम् । अन्येषां स्वसंतत्यधिष्ठानेन । ऋद्ध्यादीनां तु लघुत्वशब्दालोकमनसिकरणं प्रयोगः । ताः पुनरेताः पञ्चाभिज्ञाः

**स्वाधोभूविषयाः**

यद्भूमिका[8] ऋद्ध्यभिज्ञा भवति तां भूमिं तया गच्छति । निर्मिणोति वा अधरां नोत्तराम् । एवं दिव्यश्रोत्राभिज्ञया स्वभूमिकमेव शब्दं शृणोत्यधरभूमिकं वा नोर्ध्वभूमिकम् । चेतःपर्यायाभिज्ञया नोर्ध्वभूमिकं चित्तं जानाति । पूर्वनिवासानुस्मृत्या न स्मरति । च्युतोपपादाभिज्ञया न पश्यति । अतएवारूप्यभूमिकं चित्तं चेतःपर्यायपूर्वनिवासाभिज्ञाभ्यां न गृह्णात्यूर्ध्वभूमिकत्वात् ।

कथमेता लभ्यन्ते । अनुचिताः प्रयोगतः

**लभ्या उचितास्तु विरागतः ।**

जन्मान्तराभ्यस्ता अभिज्ञा वैराग्यतो लभ्यन्ते. वैशेषिक्यः प्रयोगतः । सर्वासां तु प्रयोगेणोत्पादनम् ।

**तृतीया त्रीण्युपस्थानानि**

---

१. Ms. °भिज्ञा । २. Y. °तीर्था० । ३. Y. पूर्वनिवासानु० । ४. Ms. ०मुतगृह्णाति । ५. Ms. न्निमित्तमुतगृह्य । ६. Y. तत्प्रातिलोम्येन । ७. Ms. looks like श्रामणेना... । ८. Ms. यत् भूमिका ।

चेत:पर्यायाभिज्ञा त्रीणि वेदनाचित्तधर्मस्मृत्युपस्थानानि। चित्तचैत्तालम्बन-[21b 2IB1. I]त्वात्।

**आद्यं श्रोत्रर्द्धिचक्षुषि ॥४४॥**

अभिज्ञेति वर्तते। ऋद्धिदिव्यश्रोत्रदिव्यचक्षुरभिज्ञा आद्यं स्मृत्युपस्थान-मित्यर्थः। रूपालम्बनत्वात्। ऋद्धिश्चतुर्बाह्यायतनालम्बनाऽन्यत्र शब्दात्[1]। दिव्यश्रोत्रचक्षुरभिज्ञे शब्दरूपायतनालम्बने। कथं तर्हि "च्युतोपपाद[2]ज्ञानेनैव जानाति[3] अमी[4] भवन्तः सत्त्वाः कायदुश्चरितेन समन्वागताः" इत्येवमादि। न तत्तेन जानाति। अभिज्ञापरिवारज्ञानं तु तदन्यदार्याणामुत्पद्यते येनैवं जानन्ति। अनिर्धारणाच्छेषे चतुःस्मृत्युपस्थानस्वभावे इति सिद्धम्।

**अव्याकृते श्रोत्रचक्षुरभिज्ञे इतराः शुभाः।**

दिव्यचक्षुःश्रोत्राभिज्ञे अव्याकृते। ते पुनश्चक्षुःश्रोत्रविज्ञानसंप्रयुक्तप्रज्ञे। कथं तर्हि ते चतुर्ध्यानभूमिके सिध्यतः। आश्रयवशेन तद्भूमिनिर्देशात्[5]। तदाश्रये हि चक्षुःश्रोत्रे[6] चतुर्ध्यानभूमिके। आनन्तर्यमार्गवशेन वा। अन्याश्चतस्रः कुशलाः। यत्तर्हि प्रकरणेषूक्तम् "अभिज्ञा कतमा। कुशला प्रज्ञे"ति। प्राधानिक एष निर्देशो बाहुलिको वा। आसां चाभिज्ञानां

**तिस्रो विद्याः**

पूर्वनिवासच्युत्युपपादास्रवक्षयज्ञानसाक्षात्क्रियास्तिस्रः अशैक्ष्यो विद्या उच्यन्ते। कस्मादेता एव नान्याः।

**अविद्यायाः पूर्वान्तादौ निवर्त्त-[22a. 21A1. II]नात्[7] ॥४५॥**

एता[8] हि पूर्वापरान्तमध्यसंमोहं व्यावर्तयन्ति यथाक्रमम्।[9] आसां परमार्थेन

---

१. Ms. शब्दशब्दात्। २. Y. adopts च्युत्युपपाद and gives in note च्युतोप° Mss। ३. Y. omits जानाति। ४ Y. adds. वत। ५. Ms. तत्भूमि.... ६. Ms. °श्रोत्र। ७. Ms. निर्वर्त्तनात्। ८. Ms. एतानि। ९. Ms. यथाक्रममासां।

**अशैक्ष्यन्त्या**[1]

आस्रवक्षयज्ञानसाक्षात्क्रियैवाशैक्षी विद्या ।

**तदाख्ये द्वे तत्संतानमुद्भवात्**[2] ।

अन्ये द्वे अशैक्ष्यसंतानसंभूतत्वादशैक्ष्यावुच्येते । नैव तु ते शैक्ष्यौ नाशैक्ष्यौ । किं पुनरेते अभिज्ञे शैक्ष्यस्य नोच्येते । यतः शैक्ष्यौ विद्ये नोच्येते ।

**इष्टे शैक्षस्य नोक्ते तु विद्ये साविद्यसंततेः ।।४६।।**

न हि साविद्यसंताने[3] विद्याव्यवस्थानं युज्यते । पुनरप्यविद्याभिभवात् । आसां चाभिज्ञानाम्

**आद्या तृतीया षष्ठी च प्रातिहार्याणि**

ऋद्धिचेतःपर्यायास्रवक्षयाभिज्ञास्त्रीणि प्रातिहार्याणि यथाक्रमम् ऋद्धयादेशनानुशासनप्रातिहार्याणि । विनेयमनसामादितोऽत्यर्थं हरणात् प्रातिहार्याणि प्रातिशब्दयोरादिकर्मभृशार्थत्वात् । प्रतिहतमध्यस्थानां मनांस्येभिः प्रतिहरन्तीति प्रातिहार्याणि वा । एषां पुनः

**शासनम् ।**

**अग्र्यम्**[4]

अनुशासनं प्रातिहार्यमग्र्यम् ।

**अव्यभिचारित्वाद्धितेष्टफलयोजनात्**[5] ।।४७।।

ऋद्धयादेशने[6] हि विद्यया विक्रियेते । अस्ति हि च गान्धारी नाम विद्या ययाकाशेन गच्छति ईक्षणिका च नाम विद्या यया परचित्तं जानाति । न तु यथाभूतानु-

१. Ms. अशैक्ष्यान्त्या । २. Ms. समुत्भवात् । ३. Ms. °सान्ताने । ४. Ms. शासनमग्र्यमनु....। ५. Ms. हितेष्वफल....। ६. Ms. देशेने ।

शासनम् अन्यथा शक्यं कर्तुमव्यभिचारित्वात्। प्रधानमावर्जनमात्रं च ताभ्यामनुशासन- [22b. 21B₁. II]-नप्रातिहार्येण तु हितेन इष्टेन[1] फलेन योगो भवत्युपायोपदेशादित्येवावश्यम् ऋद्धिरित्युच्यते ।

केयमृद्धिः । वैभाषिकन्यायेन

**ऋद्धिः समाधिः**

ऋध्यत्यनेनेति[2] कृत्वा योजयितव्यम् । किं तेन समृध्यति ?

**गमनं निर्माणं च**

ततस्तत्र

**गतिस्त्रिधा[3] ।**

शरीरवाहिनी आधिमोक्षिकी मनोजवा च तत्र गतिः ।

**शास्तुर्मनोजवा**

मनस इवास्या जव इति मनोजवा गतिर्बुद्धस्यैव नान्यस्य । सुदूरमपि देशं चित्तोत्पादकालेन गमनात् । अतए"वाचिन्त्यो बुद्धानां बुद्धविषय" इत्युक्तं भगवता । इतरे तु गती बुद्धस्यानुक्तसिद्धे ।

**अन्येषां वाहिन्यप्याधिमोक्षिकी ॥४८॥**

श्रावकप्रत्येकबुद्धानां शरीरवाहिनी च गतिः । पक्षिवत्क्रमेण शरीरवाहनात् । आधिमोक्षिकी च दूरस्यासन्नाधिमोक्षेणाशुगमनात्[4] । निर्माणं पुनर्द्विविधम् । कामावचरं रूपावचरं च । तत्र तावत्

**कामाप्तं निर्मितं बाह्यं चतुरायतनं**

कामावचरं निर्माणं रूपरसगन्धस्प्रष्टव्यायतनस्वभावम् । तत् पुनर्[5]

---

१. Ms. मष्टेन । २. Ms. ऋत्यनेनेति । ३. G. ततो गतिः । ४. Y. आश्वागमनात् ।
५. Ms. पुनर्द्विधा ।

**द्विधा ।**

स्वपरशरीरसंबद्धम् ।

**रूपाप्तं द्वे तु**

रूपावचरनिर्माणं द्वे रूपस्प्रष्टव्यायतने । तत्र गन्धरसाभावात् । तदपि द्विविधं तथैव । कामधाताविदं चतुर्विधं निर्माणमेवं रूपधाताविव्यष्टविधं समासतो निर्माणम् । कथं रूपधातूपपन्नस्य कामावचरनि-[23a. 21A1. III]र्माणे गन्धरसाभ्यां न समन्वागमो भवति । वस्त्राभरणवन्न समन्वागमः । द्व्यायतनं निर्मिणोतीत्यपरे । किं खल्वभिज्ञयैव निर्माणं निर्मीयते । नेत्युच्यते[1] । किं तर्हि । अभिज्ञाफलैः[2] ।

**निर्माणचित्तैस्तानि चतुर्दश ।।४९।।**

तानि पुनश्चतुर्दश निर्माणचित्तानि

**यथाक्रमं ध्यानफलं द्वे यावत् पञ्च**

प्रथमध्यानफलं द्वे कामधातुप्रथमध्यानभूमिके निर्माणचित्ते । द्वितीयध्यानफलं त्रीणि कामधातुप्रथमद्वितीयध्यानभूमिकानि । एवं तृतीयचतुर्थध्यानभूमिकानि चत्वारि पञ्च च योज्यानि । स्वभूमिकाधरभूमिकं निर्माणचित्तं[3] ध्यानफलं वेदितव्यम् ।

**नोर्ध्वजम् ।**

नोर्ध्वभूमिकं निर्माणचित्तमधरध्यानफलमस्ति । द्वितीयादिध्यानफलं कामावचरं निर्माणं[4] प्रथमध्यानभूमिकाद्गतितो[5] विशिष्यते ।

**तल्लाभो ध्यानवत्**

तेषां च निर्माणचित्तानां ध्यानवल्लाभः । किं खलु निर्माणचित्तादेव स्यात् व्युत्थानम् । नास्त्येतत् । यस्मादुत्पद्यते ।

---

१. Ms. अनेनेत्युच्यते । २. Ms. किन्तर्ह्यभिज्ञाफलैः । ३. Ms. निर्म्माणचित्त । ४. Ms. निर्माण । ५. Ms. °भूमिकांगतितो ।

**शुद्धात्तत्स्वतश्च**[1]

शुद्धकाद्ध्यानादन्तरं निर्माणचित्तमुत्पद्यते निर्माणचित्ताद्वा नान्यतः।

**ततोऽपि ते ॥५०॥**

निर्माणचित्तादपि शुद्धकं ध्यानं निर्माणचित्तं चोत्पद्यते नान्यत्। न हि समाधिफलस्थितस्याप्रविश्य पुनः समाधिं तस्मात् व्युत्थानमस्ति। सर्वस्य च निर्मित-[23b. 21B1. III]स्य

**स्वभूमिकेन निर्माणं**

नान्यभूमिकेन निर्माणचित्तेनान्यभूमिकं निर्माणं निर्मीयते।

**भाषणं त्वधरेण च।**

स्वभूमिकेन चेति च-शब्दः। कामधातुप्रथमध्यानभूमिको हि निर्मितः स्वभूमिकेनैव चित्तेन भाष्यते। ऊर्ध्वभूमिकस्तु प्रथमध्यानभूमिकेन। ऊर्ध्वं विज्ञप्तिसमुत्थापकाभावात्। वहूनां निर्मितानां भाषणं

**निर्मात्रैव सहाशास्तुः**

बुद्धादन्यस्य निर्माणं निर्मात्रा सह भाषते। यदा च वहवो निर्मिता[2] भवन्ति तदा युगपत् भाषन्ते।

एकस्य भाषमाणस्य भाषन्ते सह निर्मिताः।

एकस्य तूष्णींभूतस्य सर्वे[3]तूष्णीं भवन्ति त" इति गाथा।

बुद्धस्य पूर्वं पश्चाद्वा यथेच्छं निर्मिता भाषन्ते। यदा भाषणचित्तं तदा निर्माण-चित्ताभावो निर्माणचित्ताभावान्निर्मिताभाव इति कथमेनं भाषयन्ति।

**अधिष्ठायान्यवर्त्तनात् ॥५१॥**

---

१. Ms. शुद्धात्तस्वेतश्च। २. Ms. निर्म्मिता। ३. Ms. सर्व्वं।

निर्माणमधिष्ठायावस्थानकामतयाऽन्येन मनसा[1] वाचं प्रवर्तयन्ति । किं जीवित एवाधिष्ठानमनुवर्तते अथ मृतश्चापि ।

**मृतस्याप्यस्त्यधिष्ठानं**

आर्यमहाकश्यपाधिष्ठानेन तदस्थिसंकलावस्थानात् । तत्तु

**नास्थिरस्य**

अस्थिरस्य तु भावस्य नास्त्यधिष्ठानम् । आर्यकाश्यपेन मांसादीनामधिष्ठानात् ।

**अपरे तु न ।**

अपरे पुनराहुर्नास्ति मृतस्याधिष्ठानम् । अस्थि-[24a. 21A1. IV]शंकलावस्थानं[2] तु देवतानुभावादिति । किमेकेन चित्तेनैकमेव निर्मित निर्मिणोति ।

**आदावेकमनेकेन जितायां तु विपर्ययात् ।।५२।।**

आदित एकं निर्मितमनेकेन निर्माणचित्तेन निर्मिणोति । जितायां त्वभिज्ञायामेकेन चित्तेनानेकं निर्मिणोति यावन्निर्मातुमिष्टं भवति । अथ किं सर्वनिर्माणचित्तमव्याकृतं भवति ।

**अव्याकृतं भावनाजं**

यद्भावनाफलं तदवश्यमव्याकृतं भवति ।

**त्रिविधं तूपपत्तिजम् ।**

उपपत्तिप्रतिलम्भिकं तु निर्माणचित्तं कुशलाकुशलमव्याकृतं भवति देवनागपिशाचादीनाम् । तत्कृतं च स्वपरशरीरनिर्माणं[3] नवायतनिकं भवत्यशब्दरूप्यायतनत्वादिन्द्रियाविनिर्भूतत्वात् । न[4] त्विन्द्रियं निर्मीयते । किमेषैव द्विविधर्द्धिर्भावनामयी[5] चोपपत्तिलाभिका च । एषा च द्विविधा

---

१. Y. चित्तेन । २. Ms. °वस्थानां । ३. Y. स्वपरसम्बद्धं निर्माणं । ४. Ms. न हि but हि seems to be cancelled । ५. Ms. भावनामय ।

ऋद्धिर्मन्त्रौषधाभ्यां[1] च[2] कर्मजा चेति पञ्चधा ॥५३॥

समासतः पञ्चविधामृद्धिं वर्णयन्ति । भावनाफलमुपपत्तिलाभिकं मन्त्रजामौषधजां कर्मजां च[3] । यथा मान्धातुरन्तराभविकानां च ।

यदिदं दिव्यश्रोत्रमुक्तं चक्षुश्च । किमेते दिव्ये एव आहोस्वित् दिव्ये इव दिव्ये । यथा बोधिसत्त्वचक्रवर्तिगृहपतिरत्नानाम्

दिव्यश्रोत्रा-[24b. 21B1. IV]क्षिणी

यस्मात्ते

रूपप्रसादौ ध्यानभूमिकौ ।

ध्यानसमापन्नस्य शब्दालोकाभोगप्रयोगेण ध्यानभूमिकानि भूतान्युपादाय रूपप्रसादौ निर्वर्तेते[4] चक्षुःश्रोत्रसामन्तके रूपशब्दयोर्दर्शनश्रवणहेतू इति ध्यानभूमिकत्वात् दिव्ये एव ते चक्षुःश्रोत्रे । ते च पुनः

सभागाविकले नित्यं दूरसूक्ष्मादिगोचरे[5] ॥५४॥

नास्ति दिव्यं चक्षुः श्रोत्रं च तत्सभागं नित्यं विज्ञानसहितत्वात् नापि विकलं काणविभ्रान्ताभावात् । रूपावचरसत्त्ववत् । दूरसूक्ष्म[6]वतान्यपि रूपाणि शब्दाश्च तयोर्विषयः । आह चात्र

दूरस्थमावृतं सूक्ष्मं सर्वतश्च न पश्यति ।
मांसचक्षुर्यतो रूपमतो दिव्यं दृगिष्यते ॥[7]

कियद्दूरं पुनर्दिव्येन चक्षुषा पश्यति । यस्य यादृशं[8] चक्षुर्भवति । श्रावकप्रत्येक-बुद्धबुद्धास्त्वनभिसंस्कारेण साहस्रद्विसाहस्रत्रिसाहस्रकान्[9] लोकधातून् यथासंख्यं पश्यन्ति । अभिसंस्कारेण तु

---

१. Ms. ऋद्धिमन्त्रौ । २. G. °षधाद्याश्च । ३. Ms. जाङ्कर्मजाश्च । ४. Ms. निवर्तेते । ५. Ms. शूक्ष्मा.... । ६. Ms. शूक्ष्म । ७. Ms. दृशिष्यते । ८. Ms. यावदृशश्चक्षु... । ९. Ms. साहस्र । द्विसाहस्र । द्विसाहस्रकान् ।

**द्वित्रिसाहस्रकासंख्यदृशोऽर्हत्खड्गदैशिकाः ।**

सर्वाभिसंस्कारेण सह श्रावकोऽपि द्विसाहस्रं लोकधातुं दिव्येन चक्षुषा पश्यति । त्रिसाहस्रं खड्गविषाणकल्पः । बुद्धस्तु भगवानसंख्येयान्[1] लोकधातून् पश्यति यावदेवेच्छति ।

किमृद्धिरेवोपपत्तिला-[25b. 21A1. V]भिका भवत्यथान्यदपि ।

**अन्यदप्युपपत्त्याप्तं**

दिव्यश्रोत्रादिकमपि चतुष्टयमुपपत्तिप्रतिलभ्यमस्ति । न तूपपत्त्याप्तं किंचिदभिज्ञाख्यां लभते । यत्तूपपत्तिप्रतिलम्भिकं दिव्यं चक्षुः

**तद्दृश्यो नान्तरीभवः[2] ॥५५॥**

अभिज्ञाचक्षुषैव ह्यन्तराभवो[3] दृश्यते । नोपपत्तिप्रतिलब्धेन ।

**चेतोज्ञानं तु तत्त्रेधा**

उपपत्त्याप्तमिति वर्तते । परचित्तज्ञानं तूपपत्तिप्रतिलब्धं त्रिविधं वेदितव्यं कुशलाकुशलाव्याकृतम् ।

**तर्कविद्याकृतं च यत् ।**

यच्चापि तार्किकं परचित्तज्ञानं नैमित्तिकानां यच्च विद्याकृतं तदपि त्रिविधं वेदितव्यम् । न यथा भावनाफलं कुशलमेव । उपपत्तिप्रतिलम्भिकाभ्यां तु परचित्तज्ञानपूर्वनिवासानुस्मृतिभ्यां

**जानते नारका आदौ**

यावन्न दुःखवेदनाभ्याहता भवन्ति । अन्यगतिस्था नित्यं जानते ।

**नृणां नोत्पत्तिलाभिकम्[4] ॥५६॥**

---

१. Ms. भगवान्नसंख्येयान् । २. Ms. °भावः, G. नान्तराभवः । ३. Ms. ह्यन्तभावो । ४. Ms. नोपपत्ति, but contra metrum, G, Y. नोत्पत्ति, Y. (note) ottika Mss. contra metrum.

मानुष्याणामेतद्यथोक्तमृद्ध्यादिकं नास्त्युपपत्तिप्रातिलम्भिकम्[1]। यत्तर्हि प्रकृतिजातिस्मरा भवन्ति। कर्मविशेषजाऽसौ तेषाम्। त्रिविधा हि पूर्वनिवासानुस्मृतिर्भावनाफलमुपपत्तिलब्धा[2] कर्मजा चेति ॥

॥*॥ अभिधर्मकोशभाष्ये ज्ञाननिर्देशो नाम सप्तमं कोशस्थानम् ॥*॥

स्थविरश्रीलामावाकस्य यदत्र पुण्यम्।

---

१, Y. उपपत्तिलाभिकम्। २. Ms. °स्मृतिभावना:...

[ श्री 1b. 22B1. VII] ज्ञानाधिकारेण ज्ञानमयानां गुणानां कृतो निर्देशः। अस्य स्वभावानां तु कर्तव्य[1] इत्यादित एव ध्यानान्यारभ्यन्ते सर्वगुणाश्रयत्वात्।

**द्विधा ध्यानानि**

समासतो द्विविधानि ध्यानान्युपपत्तिसमापत्तिध्यानभेदात्। तानि पुनः

**चत्वारि**

प्रथमं ध्यानं यावच्चतुर्थम् तत्र। ध्यानोपपत्तयः पुनर्न वक्तव्याः। लोकनिर्देशकोशस्थाने हि

**प्रोक्तास्तदुपपत्तयः।**

कथं प्रोक्ताः।

"पृथक् पृथक्।
ध्यानं त्रिभूमिकं तत्र चतुर्थं त्वष्टभूमिकमि"ति [iii. 2]।

समापत्तिध्यानं तु वक्तव्यम्। अत उच्यते

**समापत्तिः शुभैकाग्र्यं**

अभेदेन कुशलचित्तैकाग्रता ध्यानम्। समाधिस्वभावत्वात्।

**पञ्चस्कन्धास्तु सानुगम् ॥१॥**

सपरिवारं तु पञ्चस्कन्धस्वभावं वेदितव्यम्। केयमेकाग्रता नाम। एकालम्बनता। एवं तर्हि चित्तान्येवैकालम्बनानि समाधिर्न चैतसिकं धर्मान्तरमिति प्राप्नोति।

१. Ms. drops व्य।

न चित्तान्येव समाधिः। येन तु तान्येकाग्राणि वर्तन्ते स धर्मः समाधिः। सैव चित्तैकाग्रता। ननु च क्षणिकत्वात्सर्वं चित्तमेकाग्रं द्वितीयस्य तस्मादविक्षेप इति चेत्। संप्रयुक्ते समाधिवैयर्थ्यम्। यत एव च[1] समाधिस्तत एव[2] चित्तानामेकालम्बनत्वं किं नेष्यते। महाभूमिकत्वाच्च समाधेः सर्वचित्तानामेकाग्रताप्रस-[2a. 22A1. VII]ङ्गः। न दुर्बलत्वात्समाधेः। चित्तान्येवैकाग्राणि समाधिः। तथा ह्यधिचित्तं शिक्षा चित्तपरिशुद्धिप्रधानं च सूत्रे चत्वारि ध्यानान्युक्तानीत्यपरे।

ध्यानमिति कोऽर्थः। ध्यायन्त्यनेनेति। प्रजानन्तीत्यर्थः। समाहितचित्तस्य यथाभूतप्रज्ञानात्। चिन्तनार्थो ह्येष धातुः। चिन्तनं च प्रज्ञेति सिद्धान्तः। एवं तर्हि सर्वसमाधिध्यानप्रसङ्गः। न। प्रकर्षयुक्ते तन्नामविधानाद्भास्करवत्। कश्च प्रकर्षयुक्तः। योऽङ्गसमायुक्तः समाधिः। स हि शमथविपश्यनाभ्यां युगनद्धवाहित्वाद्दृष्टधर्मसुखविहार उक्तः सुखा च प्रतिपदिति। सुतरां तेन ध्यायन्ति। क्लिष्टस्य कथं ध्यानत्वम्। मिथ्योपनिध्यानात्। अतिप्रसङ्गः। न तत्प्रतिरूप एव तत्संज्ञाविनिवेशात् पूतिबीजवत्। उक्तानि चाकुशलानि ध्यानान्यपि[3] भगवता।

कीदृशं पुनः कुशलमैकाग्र्यं प्रथमं ध्यानं कीदृशं यावच्चतुर्थम्। प्रथमं तावत्

**विचारप्रीतिसुखवत्**

विचारप्रीतिसुखसंयुक्तं कुशलमैकाग्र्यं तत् प्रथमं ध्यानम्। विचारवचनाद्वितर्कोऽप्युक्तो भवति। साहचर्याद्धूमाग्निवत्। न हि प्रीतिसुखवान्विचारो विना वितर्केणास्ति। शेषं पुनर्ध्यानत्रयं

**पूर्वपूर्वाङ्गवर्जितम्।**

शुभैकाग्र्यमिति वर्तते। [2b. 22B1. VIII] विचारविवर्जितं प्रीतिसुखवत् द्वितीयं विचारप्रीतिवर्जितं तृतीयं विचारप्रीतिसुखवर्जितं चतुर्थमिति। यथा ध्यानानि

**तथारूप्याः**

१. Y. adds कारणात्। २. adds च कारणात्। ३. Y. चाकुशलान्यपि ध्यानानि।

केन प्रकारेण। एतेऽपि हि द्विधा उपपत्तिसमापत्तितः। चत्वारश्च एषामपि चोपपत्तय उक्ताः। समापत्त्यारूप्यास्त्वभेदेन कुशलैकाग्रतास्वभावा इत्यनेन प्रकारेण सपरिवाराः[1]

चतुस्कन्धाः

अनुपरिवर्तिरूपाभावात्[2]।

अधोभूमिविवेकजाः ॥२॥

चतुर्थध्यानविवेकजं ह्याकाशानन्त्यायतनम्। तद्विवेकजं विज्ञानानन्त्यायतनम्। तद्विवेकजमाकिंचन्यायतनम्। तद्विवेकजं नैवसंज्ञानासंज्ञायतनमित्येवं चत्वार आरूप्याः। कोऽयं विवेको नाम। येन मार्गेणाधस्ताद्विमुच्यते[3]। वैराग्यगमनात्। त एव चारूप्याः

विभूतरूपसंज्ञाख्याः सह सामन्तकैस्त्रिभिः।

आकाशानन्त्यायतनसामन्तकं चतुर्थध्यानालम्बनत्वा[4]द्विभूतरूपसंज्ञाख्यां न लभते। न हि तत्र रूपसंज्ञा विभूता न विगतेत्यर्थः। यदुक्तं "चतुस्कन्धा" इति साध्यं तावदेतदारूप्येषु रूपं नास्तीति। यदि हि स्यात्कथमारूप्या उच्येरन्। ईषद्रूपत्वादापिङ्गलवत्। कीदृशं तावदीषद्रूपं तत्रेष्यते। यदि कायवाक्-[3a. 23A. I] संवरमात्रं कथं तदभावे तत्संवरौ भविष्यतः। न चासति भूते[5]भौतिकं युज्यते। अनास्रवसंवरवच्चेत्। सास्रवभूतसद्भावात्। समापत्तावपि तत्प्रतिषेध उक्तः। अथ कायोऽप्यस्तीन्द्रियाण्यपि रूपीणि। कथं तदीषद्रूपा इष्यन्ते। परिमाणाल्पत्वाच्चेत्। उदकजन्तुकेष्वप्यदृश्यरूपेषु प्रसङ्गः। अच्छत्वाच्चेत्। अन्तराभवरूपावचरेष्वपि प्रसङ्गः। यतो नाच्छतरं चेत्। भवाग्रमेवारूप्यं स्यात्। समापत्तिवत्तदुपपत्तिविशेषात्। ध्यानोपपत्तिरूपस्यापि चाधरभूमिकेन्द्रियाग्रहणात् कस्तत्र विशेषः। द्वयोरन्वर्था संज्ञा नारूप्यधातोरिति चेत्। कात्र युक्तिः। आयुरूष्मणोः संसृष्टवचनान्नडकलापीद्वयवन्नामरूपयोरन्योन्यनिश्रितवचना "द्विज्ञानप्रत्ययं नामरूपमि"ति वचनात् अन्यत्ररूपाद्यावत्संस्कारेभ्यो विज्ञानस्यागतिगतिप्रतिषेधाच्चारूप्येषु रूपास्तित्वसिद्धिरिति चेत्। न। संप्रधार्यं तावदेतद्यदिदमायुरूष्मणोः संसृष्टत्वमुक्तम्। किमिदं कामावचरमायुः संधायोक्तमाहोस्वित्सर्वमिति। यच्च नामरूपयोरन्योन्याश्रितत्वमुक्तं किमिदं कामरूपावचरं नाम संधायोक्त-

1. Ms. °वाराश्चतुस्कन्धाः। 2. Y. अनुपरिवर्त्तकरूपा....। 3. Ms. विपच्यते। 4. Ms. °ध्यानालत्वा°। 5. Ms. दूरे।

माहोस्वित्सर्वं-[3b. 23B. I]मिति । यच्च विज्ञानप्रत्ययं नामरूपमुक्तं किमत्र सर्वं विज्ञानं[१] नामरूपस्य प्रत्ययमुक्तमाहोस्वित्सर्वं नामरूपं[२] विज्ञानप्रत्ययमिति । यच्चान्यत्र रूपादिभ्यो विज्ञानस्यागतिप्रतिषेधः । किमत्र सर्वैरेव[३] तैर्विना तत्प्रतिषेध आहोस्वित् एकेनापीति । अविशेषवचनान्न संप्रधार्यमिति चेत् । अतिप्रसङ्गः । बाह्यस्यापि ह्युष्मण आयुषा विना भावो न प्राप्नोति । बाह्यस्यापि च रूपस्य नामाश्रितत्व[४]मविशेषवचनात् । चतुर्विज्ञानस्थितिवच्चाहारचतुष्कवचनाद्रूपारूप्यधात्वो[५]रपि कवडीकाराहारप्रसङ्गः । "अतिक्रम्य देवान् कवडीकाराहारभक्षानि"ति वचनात् प्रीत्याहारवचनाच्चाप्रसङ्ग इति चेत् । आरूप्येष्वपि रूपस्याप्रसङ्गः । "रूपाणां निःसरणमारूप्याः" । "ये ते शान्ता विमोक्षा अतिक्रम्य रूपाण्यारूप्याः" । "अरूपिणः सन्ति सत्त्वाः सर्वशो रूपसंज्ञानां समतिक्रमादि"ति वचनात् । सति हि रूपे स्वं रूपमवश्यं संजानीरन्निति । औदारिकमधोभूमिकं रूपमभिसंधायोक्तमिति चेत् । कवडीकारेऽपि तुल्यम् । ध्यानानामपि चाधोभूमिनिःसरणत्वादारूप्य[६] प्रसङ्गः । वेदनादिनिःसरणं च किं [4a. 23A. II]नोक्ताः[७] । अधोभूमिक[८]वेदनानिःसरणात् । रूपजातिं तु कृत्स्नामतिक्रान्ता न वेदनादिजातिम् । अतो रूपाणां निःसरणमुक्ताः[९] । भवेन[१०] भवस्यानिःसरणवचनं तु तेनैव तस्यानिःसरणादसर्वानत्यन्त[११]निःसरणाच्च । ध्यानेषु चोक्तं भगवता "यत्तत्र भवति रूपगतं वा[१२] यावद्विज्ञानगतं वेति । आरूप्येषु तूक्तं[१३] "यत्तत्र भवति वेदनागतं वा यावद्विज्ञानगतं वे"ति । सत्यां तेषु रूपजातौ कस्माद्रूपगतं वेति नावक्ष्यत्[१४] । तस्मात्

## नारूप्ये रूपसद्भावः

कथमिदानीमनल्पकल्पोच्छिन्नाद्रूपात् पुनरपि रूपोत्पत्तिस्ततः प्रच्युतानाम् ।

**रूपोत्पत्तिस्तु चित्ततः[१५]** ॥३॥

रूपस्य चित्तादेवोत्पत्तिस्तद्विपाकहेतुपरिभावितात्लब्धवृत्तितः । कथमनाश्रित्य रूपं चित्तं वर्तते । कस्मान्न वर्तितव्यम् । इहैवमदर्शनात् । कवडीकारान्तरेणाऽपि विना रूपधातौ न वर्तितव्यम् । किं कारणम् । इहैवमदर्शनात् । उक्तं च पूर्वं[१६] यथा वर्तते । गतमेतदिदं वक्तव्यम् ।

---

१. Y. सर्वविज्ञानं । २. Ms. नामरूप । ३. Ms. °रेवा Y. एतैः । ४. Y. adopts विज्ञानाश्रितत्वम् and gives in note nyās Mss. It may be नामा । ५. Y. adopts धातौ and gives in note°to Mss. Is it त्वो ? ६. Y. आरूप्यत्व । ७. Y. नोक्तम् । ८. Ms. धोभूमिकं । ९. Y. उक्तम् । १०. Ms. भावन । ११. Ms. °दसर्वमत्यन्त । १२. Ms. रूपगन्धम्वा । १३. Ms. तूक्तं । १४. Ms. नाचक्षत । १५. Ms. चित्तवतः । १६. Y omits च पूर्वं ।

किमेषामाकाशानन्त्यायतनादीनामाकाशादय एवालम्बनं यत एवं समाख्यायते । न हि । कथं तर्हि । त्रयस्तावत्

आकाशानन्त्यविज्ञानानन्त्याकिंच-[4b. 23B. II]न्यसंज्ञकाः ।
तथाप्रयोगात्

अनन्तमाकाशमनन्तं विज्ञानं नास्ति किंचिदित्येव मनसिकुर्वाणस्तेषु प्रयुज्यन्ते यथासंख्यम् । अत एषामेताः संज्ञा इति ।

मान्द्यात्तु[1] नसंज्ञानाप्यसंज्ञकः ॥४॥

मृदुत्वात्तु संज्ञाया नैवसंज्ञानासंज्ञायतनमुक्तम् । न हि सा पट्वी संज्ञा न च पुनर्नैव संज्ञेति । "यद्यपि तत्राप्येवं प्रयुज्यन्ते[2] संज्ञारोगः संज्ञागण्डः संज्ञाशल्यः आसंज्ञिक[3]संमोहः[4] एतच्छान्तमेतत्प्रणीतं यदुत नैवसंज्ञानासंज्ञायतनमिति । कस्मात्तु तैस्तदेवं गृह्यत इत्यवश्यमिदं वक्तव्यं जायते । मृदुत्वात्संज्ञामित्येतदेवोक्तम् ।

इति मौलं समापत्तिद्रव्यमष्टविधं

इत्येतान्यष्टौ मौलानि समापत्तिद्रव्याणि यदुत चत्वारि ध्यानानि चत्वार आरूप्या इति । तेषां पुनः

त्रिधा ।

सप्त

भवाग्रादन्यानि सप्त त्रिविधानि ।

आस्वादनवच्छुद्धानास्रवाणि

आस्वादनासंप्रयुक्तानि शुद्धकान्यनास्रवाणि च ।

---

१. M. साक्षात्तु । २. Y. प्रयुज्येते । ३. Ms. आसंज्ञैकं Y adopts आसंज्ञिकः and gives in note °ज्ञिक N, °ज्ञक C । ४. Y. संमोहम् ।

अष्टमं द्विधा ।।५।।

भवाग्रमास्वादनासंप्रयुक्तं शुद्धकं च । अनास्रव नास्ति । तत्र पुनः

आस्वादनासंप्रयुक्तं सतृष्णं

तृष्णा ह्यास्वादना ।

लौकिकं शुभम् ।

शुद्धकं

लौकिकं कुशलं समापत्तिद्रव्यं शुद्ध-[5a. 23A. III] कमुच्यतेऽलोभादि शुद्धधर्मयोगात् । किं पुनस्तेनास्वादनासंप्रयुक्तेनास्वाद्यते ।

तत्तदास्वाद्यं[1]

तच्छुद्धकं समापत्तिद्रव्यं तेनास्वाद्यते समनन्तरातीतम् । यदास्वादयति तस्माद्व्युत्थितो येनास्वादयति तत्समापन्नः ।

लोकत्तरमनास्रवम् ।।६।।

यल्लोकोत्तरं समापत्तिद्रव्यं तदनास्रवम् । एषां च समापत्तिद्रव्याणां ध्यानान्येव[2] भवन्ति नारूप्याः । तत्र

पञ्चाद्ये

प्रथमे भागे पञ्चाङ्गानि ।

तर्कचारौ च प्रीतिसौख्यसमाधयः ।

वितर्को विचारः प्रीतिः सुखं चित्तैकाग्रता चेत्येतानि पञ्चाङ्गानि समाधिः[3] किलाङ्गं ध्यानं च । शेषाण्यङ्गानीति । यथा चतुरङ्गा[4] सेना एवं पञ्चाङ्गं ध्यानम्[5] ।

१. G. तु तदास्वाद्यं । २. Ms. looks like न्येषां । ३. Ms. समाधि । ४. Y. चतुरंग॰ । ५. Y. पञ्चागध्यानम् ।

**प्रीत्यादयः प्रसादश्च द्वितीयेऽङ्गचतुष्टयम् ॥७॥**

द्वितीये ध्याने चत्वार्यङ्गानि । अध्यात्मसंप्रसादः प्रीतिः सुखं चित्तैकाग्रता च ।

**तृतीये पञ्च तूपेक्षा स्मृतिः प्रज्ञा सुखं स्थितिः ।**

तृतीये तु ध्याने पञ्चाङ्गानि । उपेक्षा स्मृतिः संप्रज्ञानं सुखं समाधिश्च । समाधिपर्यायो हि स्थितिः । "सम्यक्समाधिः कतमः । या चित्तस्य स्थिति"रिति सूत्रे वचनात् ।

**चत्वार्यन्तेऽसुखादुःखोपेक्षास्मृतिसमाधयः ॥८॥**

चतुर्थं ध्यानमन्त्यम् । तत्र चत्वार्यङ्गानि । अदुःखासुखा वेदना उपेक्षापरिशुद्धिः स्मृतिपरिशुद्धि-[5b. 23B. II1]: समाधिश्च । तान्येतान्यष्टादश ध्यानाङ्गानि भवन्ति । प्रथमतृतीययोः पञ्चाङ्गत्वात् । द्वितीयचतुर्थयोश्चतुरङ्गत्वात् । नामत एवम् ।

**द्रव्यतो दश चैकं च**

द्रव्यत एतान्येकादश भवन्ति । प्राथमध्यानिकानि[1] पञ्च । द्वितीयेऽध्यात्मसंप्रसादो वर्धते । तृतीये उपेक्षास्मृतिसंप्रज्ञानसुखानि । चतुर्थेऽदुःखासुखा वेदनेति । अत एवोच्यते यान्यङ्गानि प्रथमे ध्याने द्वितीयेऽपि तानीति चतुष्कोटिकम् । प्रथमा कोटिर्वितर्कविचारौ । द्वितीया अध्यात्मसंप्रसादः[2] । तृतीया प्रीतिः सुखं चित्तैकाग्रता च[3] । चतुर्थी कोटिरुक्तनिर्मुक्ता[4] धर्मा इति । एवं सर्वाणि ध्यानाङ्गानि परस्परं योज्यानि । कस्मात् । तृतीये ध्याने सुखं द्रव्यान्तरमुच्यते । यस्मात्तद्वेदनासुखं ध्यानयोस्तु

**प्रश्रब्धि[5]सुखमाद्ययोः ।**

प्रथमद्वितीययोस्तु ध्यानयोः प्रश्रब्धिसुखमित्युक्तम् । इह प्रश्रब्धिसुखं तत्र वेदनासुखमिति कुत एतत् । द्वयोर्ध्यानसमापत्त्योः सुखेन्द्रियायोगात् । न हि तत्तयोः कायिकं युज्यते । समापन्नस्य विज्ञानकायाभावात् । नापि चैतसिकं प्रीतिवचनात् । प्रीतिर्हि सौमनस्यम् । न च सुखसौमनस्ययोर्यौगपद्यमस्ति । न चापि तयोः पर्यायेण ध्याने वृत्तिर्युक्ता पञ्चाङ्गवचनादिति ।

१. Y. प्रथमध्यानिकानि । २. Ms. अध्यात्मसंप्रसादः । ३. Ms. seems to drop च । ४. Ms. निर्युक्ता । ५. G. प्रस्रब्धिः ।

[6a. 23A. IV] अपरे पुनराहुः। नास्त्येव चैतसिकं सुखेन्द्रियं त्रिष्वपि हि ध्यानेषु।[1] कायिकमेव सुखमङ्ग[2] व्यवस्थापितमिति। यर्त्तहि सूत्र उक्तं "सुखेन्द्रियं कतमत्। यत्सुखवेदनीयेन स्पर्शेन स्पृष्टस्योत्पद्यते कायिकं चैतसिकं[3] सातं[4] वेदितं वेदनागतमिदमुच्यते सुखेन्द्रियमि"ति। अध्यारोपित एष पाठः। केनापि सर्वनिकायान्तरेषु कायिकमित्येव पाठात्। "सुखं च कायेन प्रतिसंवेदयत" इति स्वशब्देन वचनाच्च। मनस्कायेनेति[5] चेत्। एवमुक्त्वा को गुणः। चतुर्थे ध्याने प्रस्रब्धिभूयस्त्वेऽपि सुखावचनाच्च। सुखवेदनानुकूला प्रस्रब्धिः सुखमिति चेत्। तृतीये प्रस्रब्धिसुखावचनं कस्मात्। उपेक्षोपहतत्वादिति चेत्। न उपेक्षयैव तद्वृद्धिः[6]। पूर्विकाभ्यस्ताद्विशेषात्। "यस्मिन्समये आर्यश्रावकः[7] प्रविवेकजां प्रीतिं कायेन साक्षात्कृत्वोपसंपद्य विहरती"त्यत्र सूत्रे प्रस्रब्धिसुखयोः पृथग्वचनान्न प्रस्रब्धिरेव सुखम्। समापन्नस्य कथं कायविज्ञानमिति चेत्। समाधिविशेषजेन प्रस्रब्धिसंज्ञकेन[8] सुखवेदनीयेन वायुना कायस्फुरणात्। वहिर्विक्षेपात्समाधिभ्रंश इति चेत्। न। समाधिजस्यान्तःकायसंभूतस्य कायसुखस्य समाध्यनुकूलत्वात्। कायविज्ञा- [6b. 23B. IV] नकाले व्युत्थितः स्यादिति चेत्। न। अतएव[9]। कामावचरेण कायेन्द्रियेण[10] रूपावचरस्प्रष्टव्यविज्ञानानुत्पत्तिरिति चेत्। न। प्रस्रब्धिविज्ञानस्योत्पत्तेः[11]। अनास्रवे अपि स्प्रष्टव्यकायविज्ञाने स्याताम्। मा भूत्किंचिदङ्गं सास्रवं किंचिदनास्रवमिति चेत्। कायिकप्रस्रब्धिबोध्यङ्ग[12] वचनात्।[13] इष्टे बोध्यङ्गानुकूलत्वादिति चेत्। अनास्रवत्वमप्येवम्। "सास्रवा धर्माः कतमे। चक्षुर्यावदेव स्प्रष्टव्यमि"त्यस्य सूत्रस्य विरोधादिति चेत्। न। अन्यस्प्रष्टव्य[14] कायविज्ञानाभिसंधिवचनात्। न चानास्रवे किंचिदङ्गं सास्रवं किंचिदनास्रवं स्यादिति चेत्। अयौगपद्यात्को दोषः सुखप्रीत्यसमवधानान्न पञ्चाङ्गं स्यादिति चेत्। न संभवं प्रत्युपदेशाद्वितर्कविचारवत्। साध्यमिति चेत्। सिद्धं चित्तस्यौदारिकसूक्ष्मतयो[15] विरोधात् दोषावचनाच्च[16]। तस्माद्यान्येव प्रथमध्याने पञ्चाङ्गानि तेषां द्वित्रिचतुरङ्गापकर्षेण द्वितीयादिध्यानव्यवस्थानम्। अत एव च प्रथमे ध्याने पञ्चानामङ्गत्व-

---

१. Y. adds किं तर्हि। २. Y. अंग०। ३. Ms. चेतसिकं। ४. Ms. शातं। ५. Y. मनःकायेनेति। ६. Y. तद्वृद्धेः। ७. Ms. आर्यश्रावः। ८. Y. प्रस्रब्धिनाम्ना। ९. Ms. नातएव। १०. Y. कायविज्ञानेन। ११. Y. ज्ञानस्योत्पत्तेः। १२. Y. ०संबोध्यंग। १३. Ms. ०नादिष्टे। १४. Ms. drops व्य। १५. Y. seems to be वितर्कविचारयोः। १६. Y. reads दोषवचनाच्च। and says "केषांचित् पाठो भवति दोषावचनाच्चेति" (P. 675)।

मुक्तम्। तदपकर्षेणोत्तरध्यानव्यवस्थापनात्। न तु संज्ञादीनामङ्गत्वमुक्तम्। किमर्थं वा[1] पञ्चानामेवाङ्गत्वमुक्तम्[2]। उपकारकत्वादिति[3] चेत्। न। वितर्कविचाराभ्यां स्मृतिप्रज्ञयोरुपकारकतरत्वात्[4]। अस्त्येष एकेषां वादः। नैव तु पूर्वाचार्या एवं निर्दिशन्ति स्म यावन्तः प्रज्ञान्तम्। तस्माद्विचार्यमेतत्। अध्यात्मसंप्रसादो नाम क एष धर्मः। वितर्कविचारक्षोभविरहात्प्रशान्तवाहिता संततेः [7a. 23A. V] रध्यात्मसंप्रसादः। सोर्मिकेव हि नदी वितर्कविचारक्षोभिता संततिरप्रसन्ना वर्तते इति। न तर्हि स द्रव्यान्तरमिति कथं द्रव्यत एकादशाङ्गानि भवन्ति। तस्मात्तर्हि

**श्रद्धा प्रसादः**[5]

तस्य हि द्वितीयध्यानलाभात्समाहितभूमिनिःसरणे संप्रत्यय उत्पद्यते। सोऽत्राध्यात्मसंप्रसाद इति नैव हि वितर्कविचारसमाधयो नाप्यध्यात्मसंप्रसादो द्रव्यान्तराणीत्यपरे। कथमसति द्रव्यान्तरत्वे चैतसिकत्वं सिध्यति। अवस्थाविशेषो[6] हि नाम चेतसश्चैतसिको भवति। नत्वेष शास्त्रसिद्धान्तः। यदुक्तं "प्रीतिर्हि सौमनस्यमि"ति। कथमिदं गम्यते। किमन्यत् भवतु। यथेच्छन्ति निकायान्तरीयाः धर्मान्तरमेव चैतसिकं प्रीतिः सौमनस्यं तु त्रिष्वपि ध्यानेषु सुखमिति। न वै सुखं ध्यानेषु[7] सौमनस्यं युज्यते।

**प्रीतिस्तु सौमनस्यं द्विधागमात् ॥९॥**

उक्तं हि भगवता अविपरीतकसूत्रे[8] तृतीयं ध्यानमुक्त्वा "अत्रास्योत्पन्नं सौमनस्येन्द्रियमपरिशेषं निरुध्यत इति। चतुर्थे च ध्याने सुखेन्द्रियं निरुध्यत" इत्युक्तम्। पुनश्चोक्तं "सुखस्य च प्रहाणात् दुःखस्य च प्रहाणात्पूर्वमेव च सौमनस्यदौर्मनस्ययोरस्तंगमादि"त्यतोऽपि न तृतीये ध्याने सौमनस्येन्द्रियमस्ति। तस्मात् प्रीतिरेव सौमनस्यं न सुखम्।

---

१. Y. omits वा। २. Ms. पञ्चनामेवांगमुक्तम्। ३. Y. उपकरत्वात् and उपकरणत्वात्। ४. Ms. °रुपकारतरत्वात्। ५. But Y. explains श्रद्धैव प्रसादः श्रद्धाप्रसादः। ६. Y. adds अपि। ७. Ms. looks like नेप्य। ८. In both the Chinese translations it is विपरीतकसूत्रे।

किं पु-[7b. 23B. V]नः क्लिष्टेष्वपि ध्यानेषु यथाविहितान्यङ्गानि भवन्ति । न हि किं तेषु न विद्यते ।

क्लिष्टेष्व[1]सत्प्रीतिसुखं[2] प्रसादः संप्रधीः स्मृतिः ।
उपेक्षास्मृतिशुद्धिश्च

प्रथमे ध्याने विवेकजं प्रीतिसुखं नास्ति । क्लेशाविविक्तत्वात् । द्वितीये ध्यानेऽध्यात्मसंप्रसादो नास्ति । क्लेशाविलत्वात् । तृतीये स्मृतिसंप्रजन्यं नास्ति । क्लिष्टसुखसंभ्रमितत्वात् । चतुर्थे उपेक्षास्मृतिपरिशुद्धिर्नास्ति । क्लेशमलिनत्वात् । एवं तावत् केचिदाहुः ।

केचित्[3] प्रस्रब्ध्युपेक्षणे ।।१०।।

केचित्पुनः प्रथमद्वितीययोः क्लिष्टयोः प्रस्रब्धिर्नास्ति । तृतीयचतुर्थयोरुपेक्षा नास्ति । कुशलमहाभूमिकत्वादनयोरिति । त्रीणि च ध्यानानि सेञ्जितानि उक्तानि भगवता । सापक्षालत्वात् ।

अष्टापक्षालमुक्तत्वादानिञ्जं[4] तु चतुर्थकम्[5] ।

के पुनस्तेऽपक्षालाः ।

वितर्कचारौ[6] श्वासौ[7] च सुखादि च[8] चतुष्टयम्[9] ।।११।।

वितर्कविचारौ सुखदुःखे[10] सौमनस्यदौर्मनस्ये श्वासप्रश्वासाश्च ।[11] एषामष्टानामेकोऽप्यपक्षालश्चतुर्थे नास्त्यतस्तदानेञ्ज्यमुक्तम् । वितर्कविचारप्रीतिसुखैरकम्पनीयत्वादानेञ्ज्यं चतुर्थं ध्यानं सूत्रे निर्वात[12]प्रदीपनिदर्शनादित्यपरे ।

द्वयोर्ध्यानयोः सौमनस्यमुक्तं प्रीतिवचनात् । तृतीये सुखं चतुर्थे उपेक्षा । तत्किं या[13] [8a. 23A. VI] ध्यानसमापत्तिषु वेदनास्ता एव ध्यानोपपत्तिषु । नेत्याह । किं तर्हि ।

१. G. क्लिष्टे त्व० । २. Ms. सुखीं । ३. Ms. केचि । ४. G. आनेञ्ज्यं । ५. G. चतुर्थकः । ६. Ms. °विचारौ, but there will be metrical defect । ७. Ms. स्वासौ । ८. Ms. looks like व । ९. G. चतुष्टयः । १०. Ms. सुखदुःख । ११. Ms. स्वासप्रस्वासप्रश्वासाश्च । १२. Y. निवात... । १३. Ms. याश्चव ।

**सौमनस्यसुखोपेक्षा उपेक्षासुमनस्कते ।**
**सुखोपेक्षे उपेक्षा प्रविदो[1] ध्यानोपपत्तिषु ।।१२।।**

प्रथमध्यानोत्पत्तौ तिस्रो वेदनाः। सुखं त्रिविज्ञानकायिकं सौमनस्यं मनोभूमिकम्। उपेक्षा चतुर्विज्ञानकायिकी। द्वितीयध्यानोपपत्तौ द्वे वेदने[2] सौमनस्योपेक्षे मनोभूमिके। सुखं नास्त्यस्य विज्ञानकायाभावात्। तृतीयध्यानोपपत्तौ द्वे वेदने। सुखोपेक्षे मनोभूमिके। चतुर्थध्यानोपपत्तावुपेक्षैव।

यदि द्वितीयादिषु ध्यानेषु त्रयो विज्ञानकाया न संविद्यन्ते वितर्कविचारौ च कथं ते पश्यन्ति यावत्स्पृशन्ति कथं चाविज्ञप्तिं समुत्थापयन्ति। न वै केषूपपन्नानां चक्षुर्विज्ञानादयो न सन्ति। न तु स्वभूमिकाः। किं तर्हि।

**कायाक्षिश्रोत्रविज्ञानं विज्ञप्त्युत्थापकं च यत्।**
**द्वितीयादौ तदाद्याप्तं**

प्रथमध्यानभूमिकं चक्षुःश्रोत्रकायविज्ञानं विज्ञप्तिसमुत्थापकं च द्वितीयादिषु च ध्यानेषु संमुखीकुर्वन्ति। निर्माणचित्तवद्येन ते पश्यन्ति यावद्विज्ञप्तिं समुत्थापयन्ति।

**अक्लिष्टाव्याकृतं च तत् ।।१३।।**

अनिवृताव्याकृतं च तत् प्रथमध्यानभूमिकं विज्ञानं वेदितव्यं यत्ते संमुखीकुर्वन्ति। न क्लिष्टं वीतरा-[8b. 23B. VI]गत्वान्न कुशलं हीनत्वादिति। अवसितं ध्यानकार्यम्।

अथ शुद्धकादीनां ध्यानारूप्याणां कथं लाभः।

**अतद्वान् लभते[3] शुद्धं वैराग्येणोपपत्तितः।**

असमन्वागतस्तेन शुद्धकं ध्यानमारूप्यं वा प्रतिलभते। अधोभूमिवैराग्याद्वा। अधोभूम्युपपत्तितो वा। अन्यत्र भवाग्रात्। न हि तस्योपपत्तितो लाभः। अतद्वानिति किमर्थं समन्वागतः। शुद्धकेन प्रयोगतोऽपि[4] निर्वेधभागीयं शुद्धकं प्रतिलभते परिहाणो वा[5] हानभागीयम्। अत एवोच्यते "स्याच्छुद्धकं

१. G. च विदो। २. Ms. वेदनेने। ३. Ms. °द्वान्लभते। ४. Y. seems to omit अपि। ५. Y. अपि।

ध्यानं वैराग्येण प्रतिलभेत[1] वैराग्येण विजह्यात्। एवं परिहाण्या चोपपत्त्या च। स्याद्धानभागीयं[2] प्रथमं ध्यानम्। तद्धि कामवैराग्येण लभ्यते। ब्रह्मलोकवैराग्येण त्यज्यते। ब्रह्मलोकवैराग्यपरिहाण्या लभ्यते[3]। कामवैराग्यप्रहाण्या[4] त्यज्यते। उपरिष्टाद्ब्रह्मलोक उत्पद्यमानो[5] लभते[6]। तस्मात् पुनः[7] कामधातावुपपद्यमानो विजहातीति।

**अनास्रवं तु वैराग्यात्**

अतद्वान् लभते इति वर्तते। तद्वांस्तु क्षयज्ञानतोऽप्यशैक्षं लभते इन्द्रियसंचारतोऽपि शैक्षशैक्षम्। ननु च नियामा[8]वक्रान्तितोऽप्यनास्रवं प्रथमतो लभते। नावश्यमानुपूर्विकेणालाभात्। यथा त्ववश्यं लभते तथोक्तम्।

**क्लिष्टं हान्युपपत्तितः ॥१४॥**

अतद्वान् लभत इत्ये-[9a. 23A. VII]वानुवर्तते। परिहाणितो यदि तद्वैराग्यात्परिहीयते। उपपत्तितो यद्युपरिभूमेरधरायामुपपद्यते।

कतमस्मात्समापत्तिद्रव्यादनन्तरं[9] कत्युपपद्यन्ते। अनास्रवप्रथमध्यानान्तरं षडुत्पद्यन्ते। स्वभूमिके शुद्धकानास्रवे[10] द्वितीयतृतीयध्यानभूमिके च। आकिंचन्यायतनानन्तरं सप्त। स्वभूमिके शुद्धकानास्रवे विज्ञानाकाशानन्त्यायतनभूमिके च। भवाग्रं शुद्धकमेवानास्रवाभावात्। द्वितीयध्यानान्तरमष्टौ। स्वभूमिके शुद्धकानास्रवे तृतीयचतुर्थप्रथमध्यानभूमिके च। विज्ञानानन्त्यायतनानन्तरं नव। स्वभूमिके द्वे आकाशानन्त्यायतनचतुर्थध्यानभूमिकानि चत्वारि आकिंचन्यायतनभवाग्रभूमिकानि त्रीणीति। एवमन्यध्यानारूप्यानन्तरं[11] दश द्रव्याणि योज्यानि। एष तु संक्षेपः।

**तृतीयाद्यावदूर्ध्वाधो[12]ऽनास्रवानन्तरं शुभम्।[13]**
**उत्पद्यते**

---

१. Ms. प्रतिलभते। Y. seems to be लभेत। २. Y. आह। स्यात् हानभागीयं। ३. Y. लभते। ४. Y. कामधातुवैराग्यपरिहाण्या। ५. Y. उपपद्यमानो। ६. Ms. न लभते। ७. Y. omits पुनः। ८. Ms. नियमा। ९. Ms. द्रव्यानन्तरं। १०. Ms. शुद्धकामानास्रवे, Y. शुद्धनास्रवे। ११. Y. ध्यानारूप्यादनन्तरं। १२. Ms. °द्याचदू°। १३. शुभमुत्पद्यते।

शुभग्रहणेन शुद्धमनास्रवं च गृह्यते कुशलत्वात् अनास्रवस्य समापत्ति[1]द्रव्यस्यानन्तरं स्वभूमिके च शुद्धानास्रवे उत्पद्येते[2]। ऊर्ध्वाधोभूमिके च तृतीयाद्यावत्। व्युत्क्रान्तकसमापत्तारो हि तृतीयात् परेण लङ्घयितुं नोत्सहन्ते। अन्वयज्ञानानन्तरं चारूप्यान् समापद्यन्ते न धर्मज्ञानानन्तरम्। तस्याधराश्रयालम्बन-[9b. 23B. VII]त्वादिति। यथा चानास्रवादनन्तरमुक्तं वेदितव्यम्।

**तथा शुद्धात् क्लिष्टं चापि स्वभूमिकम् ॥१५॥**

स्वभूमिकं क्लिष्टमधिकं शुद्धकादनन्तरमुत्पद्यते। शेषं यथैवानास्रवात्। अनास्रवस्य हि समनन्तरं क्लिष्टोत्पत्तिर्नास्तीति।

**क्लिष्टात् स्वं शुद्धकं क्लिष्टं**

क्लिष्टात्समापत्तिद्रव्यादनन्तरं[3] स्वभूमिके शुद्धक्लिष्टे उत्पद्येते।

**एवं[4] चाधरशुद्धकम्।**

क्लेशोत्पीडितो ह्यधरमपि समापत्तिं शुद्धकं वहु मन्यते। यदि क्लिष्टं परिच्छिद्याधः संचरति[5]। कुशलात्संचरितो भवति न क्लिष्टात्। अथापरिच्छिद्य कथं संचरति। पूर्वविधात् पूर्वं हि स एवंकामो भवति वरमधस्तात् शुद्धकं नोपरिष्टात् क्लिष्टमिति। पूर्वाभिप्रायं च संततिरनुवर्तते सत्त्वानाम्। प्रणिधाय सुप्तस्याभिप्रेतकालप्रवोधवत्। अनास्रवं तु क्लिष्टादनन्तरं सर्वथा नोत्पद्यते। समापत्तिकालं प्रत्येतदुक्तम्। शुद्धकात् क्लिष्टाच्च समनन्तरं स्वभूमिकमेव क्लिष्टमुत्पद्यते नान्यभूमिकमिति।

**च्युतौ तु शुद्धकात् क्लिष्टं[6] सर्वं**

च्युतिकाले तु उपपत्तिलाभिकाच्छुद्धकादनन्तरं सर्वभूमिकं क्लिष्टमुत्पद्यते।

**क्लिष्टात्तु नोत्तरम् ॥१६॥**

---

१. Ms. समपत्ति। २. Ms. उत्पद्यते। ३. Ms. °द्रव्यानन्तरं। ४. G. एकं। ५. Ms. संचरन्ति। ६. Ms. क्लिष्ट।

क्लिष्टात्तु ध्यानारूप्यादनन्तरं च्युतिकाले स्वाधरभूमिकं क्लिष्टमुत्पद्यते । नोर्ध्वं-भूमिकम् । न च सर्व [10a. 23A. VIII]स्माच्छुद्धकादनास्रवं समापत्तिद्रव्य-मुत्पद्यते । किं तर्हि ।

**चतुर्धा शुद्धकं हानभागीयादि**[1]

हानभागीयं[2] विशेषभागीयं स्थितिभागीयं निर्वेधभागीयमिति चतुर्विधं शुद्धकम् । भवाग्रं तु त्रिविधमन्यत्र विशेषभागीयात् । किमस्य लक्षणम् ।

**यथाक्रमम् ।**
**क्लेशोत्पत्तिस्वभूम्यूर्ध्वानास्रवानुगुणं हि तत् ॥१७॥**

क्लेशोत्पत्त्यनुगुणं हानभागीयं[3] स्वभूम्यनुगुणं स्थितिभागीयमूर्ध्वभूम्यनुगुणं विशेष-भागीयमनास्रवानुगुणं निर्वेधभागीयम् । तस्मादनास्रवमुत्पद्यते ।

अथैषां चतुर्णां कति कस्मादनन्तरमुत्पद्यन्ते[4] ।

**द्वे त्रीणि त्रीणि चैकं च हान[5]भागाद्यनन्तरम् ।**

हान[6]भागीयं हानभाक् । तस्मादनन्तरं द्वे उत्पद्येते । हानिस्थितिभागीये । स्थिति-भागीयानन्तरं त्रीण्यन्यत्र निर्वेधभागीयात् । विशेषभागीयादनन्तरं त्रीण्यन्यत्र हानभागीयात् निर्वेधभागीयादनन्तरं तदेवैकमिति ।

कथं व्युत्क्रान्तकसमापत्तिरुत्पद्यते ।

**गत्वागम्य द्विधा भूमीरष्टौ श्लिष्टे[7]कलङ्घिताः ॥१८॥**
**व्युत्क्रान्तकसमापत्तिर्विसभागतृतीयगा ।**

गत्वेत्यनुलोमं समापद्य । आगम्येति प्रतिलोमं[8] समापद्य । द्विधेति सास्रवानास्रवा

---

१. Ms. हाणभागीयादि । २. Ms. हाणभागीयं । ३. Ms. हाणभागीयं । ४. Ms. °त्पद्यते । ५. Ms. हाण० । ६. Ms. हाण० । ७. Ms. श्लिष्टै० । ८. Ms. प्रति प्रतिलोमं ।

भूमीः। अष्टाविति ध्यानारूप्यसमापत्तीः। शिलष्टा[1] इत्यनुक्रमेण। एकलङ्घिता इत्येकामेकामु-[10b. 23B. VIII]त्क्रम्य। सास्रवा अष्टौ भूमीरनुलोमप्रतिलोमसमापत्तितो निर्जित्य अनास्रवाश्च सप्त। पश्चात्सास्रवात् प्रथमाद्ध्यानात् सास्रवं तृतीयं समापद्यते। तस्मादाकाशानन्त्यायतनं तस्मादाकिंचन्यायतनम्। एवं पुनः प्रतिलोमं निर्जित्य अनास्रवा अप्येकलङ्घिता अनुलोमप्रतिलोमं च समापद्यते। अयं प्रयोगो व्युत्क्रान्तकसमापत्तेः। यदा तु प्रथमात्सास्रवात् तृतीयमनास्रवं ध्यानं[2] समापद्यते तस्मात्सास्रवमाकाशानन्त्यायतनं तस्मादनास्रवमाकिंचन्यायतनम्। एवं पुनः प्रतिलोमम्। तदा विसभागतृतीयद्रव्यगमनादभिनिष्पन्ना भवति। अतिविप्रकृष्टत्वान्न चतुर्थी समापद्यते। तां च त्रिषु द्वीपेषु असमयविमुक्त एवार्हन्नुत्पादयति। निःक्लेशत्वात्समाधिवशित्वाच्च। दृष्टिप्राप्तस्य यद्यपि तीक्ष्णेन्द्रियत्वात् समाधौ वशित्वं न तु निष्क्लेशः। समयविमुक्तो यद्यपि निःक्लेशो नत्वस्य समाधौ वशित्वमिति।

केनाश्रयेण कति ध्यानारूप्याः संमुखीक्रियन्ते।

**स्वाधोभूम्याश्रया एव**

ध्यानाश्रया एव

**ध्यानारूप्याः**

भवाग्रं भवाग्रे च संमुखीक्रियते अधश्च यावत्कामधातौ। शेषाणि स्वस्यां भूमावधश्चेति। किं कारणमूर्ध्वोपपन्नो नाधरां समा-[11a. 23A1. I.]पत्तिं संमुखीकरोति। तस्मात्तस्य

**वृथाऽधरम्[3] ॥१९॥**

नहि तस्याधरेण समापत्तिद्रव्येण किंचित् प्रयोजनं विधीयते। निहीनत्वात्[4]। उत्सर्गं कृत्वाऽपवादं करोति

**आर्याकिंचन्यसांमुख्यात् भवाग्रे त्वास्रवक्षयः।**

भवाग्रे तूपपन्नस्यानास्रवाकिंचन्यायतनसंमुखीभावादास्रवक्षयो भवति। कथं तत्रोपपन्नस्य तत्संमुखीभावः। स्वस्याभावात्तस्य चाभ्यासात्।

१. Y. आकृष्टा। २. Ms. °स्रवंन्ध्यान। ३. G. अवरम्। ४. Ms. न हीनत्वात्।

अथैषां ध्यानारूप्याणां[1] किमालम्बनम् ।

**सतृष्णाः स्वभवालम्बाः**

आस्वादनासंप्रयुक्ताः स्वभूमिकं भवमालम्बन्ते । भवग्रहणेन सास्रवं वस्तु गृह्यते । नाधरमालम्बन्ते वीतरागत्वान्नोत्तरं तृष्णापरिच्छिन्नत्वात् भूमीनाम् । नानास्रवं कुशलत्वप्रसङ्गादिति ।

**ध्यानं सद्विषयं शुभम् ।।२०।।**

कुशलं ध्यानं शुभकमनास्रवं च । तत् सर्वालम्बनं यत्किंचिदस्ति संस्कृतमसंस्कृतं वा ।

**न मौलाः कुशलारूप्याः सास्रवाधरगोचराः ।**

मौलानां कुशलारूप्याणामधोभूमिकं सास्रवं वस्तु नालम्बनं स्वोर्ध्वभूम्यालम्बनत्वात् । अनास्रवं त्वालम्बनम् । सर्वान्वयज्ञानपक्ष्यो[2] न धर्मज्ञानपक्षो नाधोभूमिनिरोधः । सामन्तकानन्तर्यमार्गाणां त्वधरा भूमिरालम्बनम् । एषां च पुनस्त्रिविधानां ध्यानानां रूप्यारूप्याणाम्[3]

**अनास्रवेण हीयन्ते क्लेशाः**

न शुद्धकेन । कुत एव क्लिष्टे-[11b 23B1. I]न । वीतरागत्वान्नाधः । तस्यैव तदप्रतिपक्षत्वान्न स्वभूमौ[4] । विशिष्टतरत्वान्नोर्ध्वमिति ।

**सामन्तकेन च ।।२१।।**

ध्यानारूप्यसामन्तकेन च क्लेशाः प्रहीयन्ते शुद्धकेनापि । अधोभूमिप्रतिपक्षत्वात् । कति पुनः सामन्तकानि ।

**अष्टौ सामन्तकान्येषां**

एकैकस्यैकैकं येन तत्प्रवेशः । किं तान्यपि त्रिविधानि तथैव च तेषु वेदना । नेत्युच्यते ।

**शुद्धादुःखासुखानि हि ।**

---

१. Ms. °रूप्यानां । २. Y. °पक्षो । ३. Ms. रूप्पाणां । ४. Ms. स्वामौ ।

शुद्धकानि च तान्युपेक्षेन्द्रियसंप्रयुक्तानि च यत्नवाह्यत्वादधोभूम्युद्वेगानपगमात् वैराग्यपथत्वाच्च नास्वादनासंप्रयुक्तानि ।

**आर्यं चाद्यं**

आद्यं सामन्तकमनागम्यं तच्छुद्धकं चानास्रवं च यद्यपि सामन्तकचित्तेन प्रतिसंधिवन्धः[1] क्लिष्टो भवति । समाहितस्य तु क्लिष्टत्वं प्रतिषिध्यते ।

**त्रिधा केचित्**

केचित्पुनरिच्छन्ति । आस्वादनासंप्रयुक्तमप्यनागम्यं सामन्तकं चोच्यते ध्यानान्तरं च । किमिदमेकार्थमाहोस्विन्नानार्थकम् । सामन्तकं हि वैराग्यमार्गः ।

**अतर्कं ध्यानमन्तरम् ॥२२॥**

ध्यानमेव हि वितर्कासंप्रयुक्तं ध्यानान्तरं ध्यानविशेषत्वात् । अत एव द्वितीयादिषु ध्यानेषु न व्यवस्थाप्यते विशेषाभावादिति । तत्पुनर्ध्यानान्तरं

**त्रिधा**

आस्वादनासंप्रयुक्तं शुद्धकमनास्रवं च ।

**अदुःखासुखं [12a. 23A1. II] तच्च**[2]

नात्र सुखं दुःखमित्यदुःखासुखमुपेक्षेन्द्रियसंप्रयुक्तमित्यर्थः[3] । न प्रीतिसंप्रयुक्तं साभिसंस्कारवाहित्वात् । अत एव दुःखा प्रतिपत् । तस्य तर्हि ध्यानान्तरस्य कः फलविशेषः । तद्धि

**महाब्रह्मफलं**[4] **च तत् ।**

तां हि ध्यानान्तरिकां भावयित्वा महाब्रह्मा भवति । पुनः सर्वसमाधीन् संकलय्य त्रयः समाधयः उक्ताः सूत्रे । सवितर्कः सविचारः समाधिः । अवितर्को विचारमात्रः ।

---

१. Y. सन्धिलब्धः । २. Ms. सुखन्ततच्च । ३. Ms. °मुपेक्षेन्द्रियं संप्रयुक्त........ ४. G. महाब्रह्मा फलं ।

अवितर्कोऽविचार इति । तत्र ध्यानान्तरं तावदवितर्को विचारमात्रः समाधिरिति ज्ञापितम् । वितर्कमात्रप्रतिषेधात् । ततः

सवितर्कविचारोऽधःसमाधिः

तस्माद्ध्यानान्तरादधःसमाधिः सवितर्कः सविचारः । प्रथमं ध्यानमनागम्यं च ।

परतोऽद्वयः[1] ॥२३॥

नात्र द्वयमस्तीत्यद्वयः । परेण तु ध्यानान्तरात्समाधिरवितर्कोऽविचारः । द्वितीयध्यानसामन्तकाद्यावत् भवाग्रम् । पुनस्त्रयः समाधय उक्ताः । शून्यतासमाधिरप्रणिहित आनिमित्तश्च । तत्र

आनिमित्तः[2] समाकारैः

निरोधसत्याकारैः संप्रयुक्तः समाधिरानिमित्तश्चतुराकारः । निर्वाणं हि दशनिमित्तापगतत्वादनिमित्तम् । तदालम्बनः समाधिरानिमित्तः । पञ्चविषयस्त्रीपुरुषत्रिसंस्कृतलक्षणनिमित्तानि दश ।

शू-[12b. 23B1. II ]न्यतानात्मशून्यतः[3] ।

प्रवर्तते

अनात्मशून्यताकाराभ्यां संप्रयुक्तः शून्यतासमाधिर्द्व्याकारः ।

अप्रणिहितः सत्याकारैरतः परैः ॥२४॥

परैः शेषैः सत्याकारैः संप्रयुक्तः समाधिप्रणिहितो दशाकारः । अनित्यदुःखतद्धेतुस्य उद्वेगात्[4] मार्गस्य च कोलोपमतयाऽवश्यत्याज्यत्वात्तदाकारः समाधिरप्रणिहितः ।

---

१. Ms. after च reads प्रथमन्ध्यानपरतोऽद्वयः, but प्रथमन्ध्यान seems to be extra । २ G. अनिमित्तः । ३. Ms. शून्यतात्मतः शून्यतः । ४. Ms. उद्वेगात्मार्ग्गस्य ।

तदतिक्रमाभिमुखत्वात् शून्यतानात्मताभ्यां तु नोद्वेगो निर्वाणसामान्यात्। त एते त्रयः समाधयो द्विविधाः।

**शुद्धामलाः**

शुद्धकाश्चानास्रवाश्च। लौकिकलोकोत्तरत्वात्। लौकिका एकादशसु भूमिषु। लोकोत्तरा यत्र मार्गः।

**निर्मलास्तु ते विमोक्षमुखत्रयम्।**

अनास्रवास्त्वेते त्रयः समाधयस्त्रीणि विमोक्षमुखान्युच्यन्ते। शून्यता विमोक्षमुखमप्रणिहितमानिमित्तं विमोक्षमुखमिति। मोक्षद्वारत्वात्। पुनश्चोच्यन्ते

**शून्यताशून्यताद्याख्यास्त्रयोऽपरसमाधयः ॥२५॥**

शून्यताशून्यता अप्रणिहिताप्रणिहितः आनिमित्तानिमित्तश्च। शून्यताद्यालम्बनत्वात्तन्नाम। तेषां पुनः

**आलम्बेते अशैक्षं[1] द्वौ शून्यतश्चाप्यनित्यतः।**

अशैक्षं समाधिं द्वावपरसमाधी आलम्बेते। शून्यताशून्यता अशैक्षं शून्यतासमाधिमालम्बते शून्य-[13a. 23A. III]ताकारेण। अप्रणिहिताप्रणिहितोऽप्यशैक्षमप्रणिहितमनित्याकारेण। न दुःखतो न हेत्वादितोऽनास्रवस्यातल्लक्षणत्वान्न[2] मार्गाकारैः दूषणीयत्वात्।

**आनिमित्तानिमित्तस्तु शान्ततोऽसंख्यया क्षयम्[3] ॥२६॥**

आनिमित्तानिमित्तस्तु समाधिरशैक्षस्यानिमित्तस्याप्रतिसंख्यानिरोधमालम्बते। शान्ताकारेण। अनास्रवस्य प्रतिसंख्यानिरोधाभावात्। न निरोधप्रणीतनिःसरणाकारैरनित्यतानिरोधसाधारणत्वादव्याकृतत्वादविसंयोगाच्च। एकान्तेन चैते परसमाधयः

**सास्रवाः**

---

१. Ms. आलम्बेतेऽशैक्षं। २. Ms. नास्रवस्य तल्लक्षण...। ३. Y. असंख्येयाक्षयम्।

आर्यमार्गद्वेषित्वात् नह्येवमनास्रवा इति। कुत्रोत्पद्यन्ते।

**नृषु**

मनुष्येष्वेव न देवेषु। कस्योत्पद्यन्ते।

**अकोप्यस्य**

नान्यस्यार्हतः। कतिभूमिकाः

**सप्तसामन्तवर्जिताः।**

सप्त सामन्तकानि हित्वान्यास्वेकादशसु भूमिषु। कामधात्वनागम्यध्यानान्तरध्यानारूप्येषु। पुनश्चतस्रः समाधिभावना उच्यन्ते। अस्ति समाधिभावना आसेविता भाविता वहुलीकृता दृष्टधर्मसुखविहाराय संवर्तते" इति विस्तरः। तत्र

**समाधिभावना ध्यानं शुभमाद्यं सुखाय हि ॥२७॥**

कुशलं प्रथमं शुद्धकमनास्रवं वा दृष्टधर्मसुखविहाराय **समाधिभावना**। तदादिकत्वादन्यान्यपि[1] ज्ञेयानि। नावश्यं संप-[13b. 23B. III]रायसुखविहारायापरिहीणोर्ध्वोपपन्नपरिनिर्वृतानां[2] तदभावात्।

**दर्शनायाक्ष्यभिज्ञेष्टा[3]**

दिव्यचक्षुरभिज्ञा ज्ञानदर्शनाय[4] समाधिभावना।

**धीभेदाय प्रयोगजाः।**

प्रयोगजाः सर्वे गुणास्त्रैधातुका अनास्रवाः प्रज्ञाप्रभेदाय समाधिभावना।

**वज्रोपमोऽन्त्ये यो ध्याने सास्रवक्षयभावना ॥२८॥**

---

१. Y. adopts अन्योन्योऽपि and gives in note अन्योन्य Mss। २. Ms. drops नि Y adds च। ३. Ms. दर्शनाय....। ४. Ms. ज्ञाने दर्शनाय।

यश्चतुर्थध्याने वज्रोपमः समाधिः स आस्रवक्षयाय समाधिभावना। आत्मोपनायिकी[1] किलैषा भगवतो धर्मदेशना[2]। अतश्चतुर्म्य एवाह। कृतः समाधोनां कालगतो निर्देशः।

इदानीं समाधिसंनिश्रितानां गुणानां निर्देशकाल इति व्याख्यायन्ते

**अप्रमाणानि चत्वारि**

मैत्री करुणा मुदितोपेक्षा च। अप्रमाणसत्त्वालम्बनत्वात्। किमर्थं चत्वार्येव।

**व्यापादादिविपक्षतः।**

व्यापादविहिंसाऽरतिकामरागव्यापादबहुलानां तत्प्रहाणाय चत्वारि यथासंख्यम्। अशुभोपेक्षयोः कामरागप्रतिपक्षत्वे को विशेषः। वर्णरागस्याशुभा मैथुनरागस्योपेक्षेति वैभाषिकाः। एवं तु युज्यते। मैथुनरागस्याशुभा मातापितृपुत्रज्ञातिरागस्योपेक्षेति। तत्र

**मैत्र्यद्वेषः**

अद्वेषस्वभावा मैत्री

**अपि करुणा**

करुणाप्येवम्।

[14a. 23A. IV] **मुदिता सुमनस्कता ॥२९॥**

सौमनस्यस्वभावा मुदिता।

**उपेक्षाऽलोभः**

अलोभात्मिकोपेक्षा। कथं व्यापादप्रतिपक्षः। तस्य लोभाकृष्टत्वात्। उभयस्वभावा[3] त्वसौ युज्यते। एषां तु मैत्र्यादीनां

१. Y. °नायिका। १. Y. धर्मोपदेशना। ३. Y. °भावात्।

आकारः सुखिता दुःखिता वत ।
मोदन्तामिति सत्त्वाच्च

सुखिता वत सत्त्वा इति मनसिकुर्वन् मैत्रीं समापद्यते । दुःखिता वत सत्त्वा इति करुणां मोदन्तां वत सत्त्वा इति मुदितां सत्त्वा इत्येव मनसि कुर्वन्नुपेक्षां समापद्यते । माध्यस्थ्यात् । अतद्वतां सुखाधिमोक्षत्वात् कथं न विपरीतत्वं भवति । सन्त्वित्यभिप्रायात् । आशयस्याविपरीतत्वाद्वाऽधिमुक्तिसंज्ञानात् । अथवा क एवं विपरीतत्वे दोषः । अकुशलत्वमिति चेत् । न कुशलमूलत्वाद्व्यापादादिप्रतिपक्षत्वाच्च । उक्त एषामाकारः ।

कामसत्त्वास्तु गोचरः ॥३०॥

कामावचराः सत्त्वा एषामालम्बनम् । तदालम्बनानां व्यापादादीनां प्रतिपक्षत्वात् । यत्तूक्तमेकां दिशमधिमुच्येतेति तद्भाजनेन[1] भाजनगतं[2] दर्शितम् । कतिभूमिकान्येतानि ।

ध्यानयोर्मुदिता

प्रथमद्वितीयध्यानयोर्मुदिता । सौमनस्यत्वात् ।

अन्यानि षट्सु

अन्यानि त्रीणि अप्रमाणानि षट्सु भूमिषु । अनागम्ये ध्यानान्तरे-[14b. 23B1. IV]-ध्यानेषु च । सप्रयोगमौलग्रहणात् ।

केचित्तु पञ्चसु।

केचित् पुनः अनागम्यं हित्वा पञ्चस्वेतानीच्छन्ति । दशस्वित्यपरे । कामधातुं सामन्तकानि च प्रक्षिप्य समाहितासमाहितमौलप्रयोगग्रहणात् । यदुक्तं "व्यापादादिविपक्षत" इति किमप्रमाणैरपि क्लेशप्रहणं भवति ।

न तैः प्रहाणं

---

१. Ms. तत् भाजनेन । २. Ms. भाज्जनगतं ।

मौलध्यानभूमिकत्वादधिमुक्तिमनस्कारत्वात्सत्त्वालम्बनत्वाच्च। तत्प्रयोगेण तु व्यापादादिविष्कम्भणात्तत्प्रतिपक्षत्वमुक्तम्। प्रहाण[1]दूरीकरणाच्च। कामधात्वनागम्यभूमिकानि हि मैत्र्यादीनि मौलाप्रमाणसदृशानि संविद्यन्ते। तैंस्तान्विष्कम्भ्य प्रहाणमार्गैः प्रजहाति। ततो वीतरागावस्थायां मौलाप्रमाणलाभात्। बलवत्प्रत्यय[2]लाभेऽपि तैरनाधृष्यो भवति। कथं पुनरादिकर्मिको मैत्र्यां प्रयुज्यते। यथा सुखितमात्मानं मन्यते परान्वा शृणोति बुद्धबोधिसत्त्वार्यश्रावकांस्तथा सत्त्वानां तत्सुखमधिमुच्यते एवं सुखिता वत सन्तु सत्त्वा इति। न चेच्छक्नोति क्लेशस्योद्भूत[3]वृत्तित्वात् स मित्रपक्षं त्रिधा भित्त्वाऽधिमात्रे तत्सुखमधिमुच्यते। ततो मध्ये मृदौ च। तेषु चेत्समां मैत्रीं लभते तत उदासीनपक्षे। ततः शत्रुपक्षं त्रिधा भित्त्वा मृदौ तत् सुखमधिमुच्यते। ततो मध्येऽधिमात्रे च। [15a. 23A1. V] ततश्चेदधिमात्र इव मित्रपक्षे सुखाधिमोक्षो न व्यावर्तते। ततः क्रमेण ग्रामराष्ट्रसुखाधिमोक्षो यावदेकां[4] दिशं यावत्सर्वं लोकं मैत्र्या स्फुरति। यस्तु सर्वगुणग्राही स[5] मैत्रीं क्षिप्रमुत्पादयति। शक्यं हि समुच्छिन्न कुशलमूले[6]ऽपि गुणग्राहिणा भवितुं प्रत्येकबुद्धे च दोष[7] ग्राहिणा पूर्वं[8] पुण्यापुण्यफलसंदर्शनात्। एवं करुणायां मुदितायां च प्रयुज्यते अमी सत्त्वा बहुविधव्यसनौघनिमग्ना अप्येवं दुःखाद्विमुच्येरन् अप्येवातिप्रमोदेर[9]न्नित्यधिमुच्यमान उपेक्षां तूदासीनपक्षादारभते। एतानि चाप्रमाणानि

नृष्वेव जन्यन्ते

मनुष्येषूत्पाद्यन्ते[10]। नान्यत्र।

किं पुनर्य एकेनाप्रमाणेन समन्वागतः सोऽवश्यं सर्वैः। किन्तु

त्र्यन्वितो ध्रुवम् ॥३१॥

तृतीयचतुर्थध्यानोपपन्नो मुदितया न समन्वागतो भवति। त्रिभिस्त्वप्रमाणलाभी नित्यं समन्वागतो भवति।

अष्टौ विमोक्षाः

---

१ Y. प्रहीण...। २. Ms. बलप्रत्यय। ३. Ms. °स्येत् भूत्°। ४. Ms. °मोक्षो देकां। ५. Ms. सा। ६. Ms. मले। ७. Ms. दोषः। ८. Y. पूर्वं...। ९. Y. अप्येवाभिप्रमोदेरन्, Ms. drops र। १०. Ms. °त्पद्यन्ते।

रूपी रूपाणि पश्यतीति प्रथमो विमोक्षः। अध्यात्मरूपसंज्ञी बहिर्धा रूपाणि पश्यतीति द्वितीयः। शुभं विमोक्षं कायेन साक्षात्कृत्वोपसंपद्य विहरतीति तृतीयः। चत्वार आरूप्याः। संज्ञावेदितनिरोधश्चाष्टमः। तेषां

**प्रथमावशुभा**

प्रथमौ द्वौ विमोक्षावशुभास्वभावौ। [15b. 23B1. V] विनीलकाद्याकारत्वात्[1]। अत एतयोरशुभावन्नयो वेदितव्यः। एतौ च

**ध्यानयोर्द्वयोः।**

प्रथमद्वितीययोर्ध्यानयोर्नान्यस्यां भूमौ। कामावचरप्रथमध्यानभूमिकयोर्वर्णरागयोः प्रतिपक्षेण यथासंख्यम्।

**तृतीयोऽन्त्ये**

शुभो विमोक्षश्चतुर्थध्याने।

**स चालोभः**

सोऽप्यलोभस्वभावो नत्वशुभास्वभावः। शुभाकारत्वात्। सपरिवारास्त्वेते पञ्चस्कन्धस्वभावाः। आरूप्यविमोक्षास्तु

**शुभारूप्याः समाहिताः ॥३२॥**

कुशलाः समाहिता एव चारूप्यविमोक्षाख्यां लभन्ते न क्लिष्टा नाप्यसमाहितास्तद्यथामरणभवे। अन्यदाप्यसमाहिताः सन्तीत्यपरे। सामन्तकविमुक्ति[2]मार्गा अपि विमोक्षाख्यां लभन्ते। नानन्तर्यमार्गा अधरालम्बनत्वात्[3]। वैमुख्यार्थो हि विमोक्षार्थ इति।

**निरोधस्तु समापत्तिः**

१. Y. °द्यालम्बनत्वात्। २. Y. विमुक्त। ३. Ms. मार्गाधरा लम्बनत्वात् Y. मार्गः।

संज्ञावेदितनिरोधस्तु अष्टमो विमोक्षो निरोधसमापत्तिः। सा च पूर्वं निर्दिष्टा। संज्ञावेदितवैमुख्यात्सर्वसंस्कृताद्वा। समापत्त्यावरणविमोक्षणाद्विमोक्ष इत्यपरे[1]। तां तु समापद्यन्ते।

**सूक्ष्मसूक्ष्मादनन्तरम्।**

भवाग्रं हि संज्ञा सूक्ष्मं तत् पुनः सूक्ष्मतरं कृत्वा निरोधं समापद्यन्ते। समापन्नानां तु

**स्वशुद्धकाधरार्येण व्युत्थानं चेतसा ततः ॥३३॥**

भावाग्रिकेण वा शुद्धकेन [16a. 23A1. VI] चेतसा ततो व्युत्थानं भवत्याकिंचन्यायतन[2]भूमिकेन वा सास्रवेण। तदेवं तस्याः सास्रवं समापत्तिचित्तं भवति सास्रवानास्रवं तु व्युत्थानचित्तमिति। एषां च विमोक्षाणां

**कामाप्तदृश्यविषयाः प्रथमाः**

कामावचरमेषां रूपायतनमालम्वनममनोज्ञं मनोज्ञं च यथायोगम्।

**ये त्वरूपिणः।**

**तेऽन्वयज्ञानपक्षोर्ध्वस्वभूदुःखादिगोचराः ॥३४॥**

आरूप्यविमोक्षाणां स्वभूमिकोर्ध्वभूमिकं दुःखं तद्धेतुनिरोधौ चालम्वनं सर्वश्चान्वयज्ञानपक्षो[3] मार्गः। अप्रतिसंख्यानिरोधश्चेति वक्तव्यमाकाशं चैकस्येति। कस्मान्न तृतीये ध्याने विमोक्षः। द्वितीयध्यानभूमिक[4]वर्णरागाभावात् सुखमण्डेञ्जितत्वाच्च। तस्माच्छुभं[5] विमोक्षमुत्पादयति। अशुभया लीनां संततिं प्रमोदयितुं जिज्ञासनार्थं वा। कच्चिदशुभाविमोक्षौ[6] निष्पन्नाविति। एवं च पुनस्तौ निष्पन्नौ भवतो यदि शुभतोऽपि मनसि कुर्वतः क्लेशो नोत्पद्यत इति। द्वाभ्यां हि कारणाभ्यां योगिनो विमोक्षादीनुत्पादयन्ति। क्लेशदूरीकरणार्थं समापत्तिवशित्वार्थं च। अरणादिगुणाभिनिर्हाराय आर्याश्चर्द्धेः। सा पुनर्यया वस्तुपरिणामाधिष्ठानायुरुत्सर्गादीनि क्रियन्ते। कस्मा-[16b. 23B1. VI]-त्तृतीयाष्टमयोरेव साक्षात्करणमुक्तं नान्येषाम्। प्रधानत्वाद्धातुभूमिपर्यन्तावस्थितत्वाच्च।

---

१. Ms. °मोक्षमित्यपरे। २. Ms. °यत्न°। ३. Ms. सर्वाश्चान्वय....। ४. Ms. °भूमिकं। ५. Y. seems to be कस्माच्छुभं। ६. Ms. °विमोक्षो।

अभिभ्वायतनान्यष्टौ

अध्यात्मं रूपसंज्ञी बहिर्धा रूपाणि पश्यति परीत्तानि सुवर्णानि दुर्वर्णानि तानि खलु रूपाण्यभिभूयजानात्यभिभूय पश्यतीत्येवंसंज्ञी भवतीदं प्रथममभिभ्वायतनम् । एवमधिमात्राणि । अध्यात्ममरूपसंज्ञ्येवमेव[१] । इत्येतानि चत्वारि । अध्यात्ममरूपसंज्ञ्येव पुनर्नीलपीतलोहितावदातानि पश्यतीत्यष्टौ भवन्ति । तेषां

द्वयमाद्यविमोक्षवत् ।

यथा प्रथमो विमोक्ष एवं द्वे अभिभ्वायतने प्रथमद्वितीये ।

द्वे द्वितीयवत्

यथा द्वितीयो विमोक्ष एवं द्वे अभिभ्वायतने तृतीयचतुर्थे ।

अन्यानि पुनः शुभविमोक्षवत् ॥३५॥

यथा शुभो विमोक्ष एवमन्यानि चत्वारि । अयं तु विशेषः तैर्वैमुख्यमात्रम्[२] । एभिस्त्वालम्बनाभिभवनं यथेच्छमधिमोक्षात्[३] क्लेशानुत्पादाच्च ।

दश कृत्स्नानि

दश कृत्स्नायतनानि निरन्तर[४]कृत्स्नस्फरणात् । पृथिव्यप्तेजोवायुनीलपीतलोहितावदातकृत्स्नानि । आकाशविज्ञानानन्त्यायतनकृत्स्ने च । तेषाम्

अलोभाष्टौ[५]

प्रथमान्यष्टावलोभस्वभावानि

ध्यानेऽन्त्ये

चतुर्थ एव ध्याने ।

---

१. Ms. °संज्ञेवमेव । २. Y. विमोक्षमात्रम् । ३. Y. यथेष्ट.... । ४. Ms. निरन्तराणि but णि seems to be cancelled । ५. G. अलोभोऽष्टौ ।

[17a. 23A₁. VII] गोचरः पुनः ।

कामाः

कामावचररूपायतनमेषा[1]मालम्बनम् । वायोः[2] स्प्रष्टव्यायतन[3]मित्येके ।

द्वे शुद्धकारूप्ये[4]

द्वे पश्चिमे कृत्स्ने[5] शुद्धकारूप्यस्वभावे[6] ।

स्वचतुःस्कन्धगोचरे ॥३६॥

स्वभूमिकाश्चत्वारः स्कन्धा अनयोरालम्बनम् । विमोक्षप्रावेशिकान्यभिभ्वायतनानि । अभिभ्वायतनप्रावेशिकानि कृत्स्नायतनानि । उत्तरोत्तरविशिष्टत्वात् । सर्वाणि चैतानि[7] विमोक्षादीनि पृथग्जनार्यसांतानिकानि स्थापयित्वा निरोधविमोक्षम् ।

निरोध उक्तः

निरोधविमोक्षः पूर्वमेवोक्तः सर्वैः प्रकारैः ।

वैराग्यप्रयोगाप्तं तु शेषितम् ।

निरोधादन्यानि विमोक्षादीनि वैराग्यलाभिकानि प्रायोगिकाणि च । उचितानुचितत्वात् ।

त्रिधात्वाश्रयमारूप्यसंज्ञं शेषं मनुष्यजम् ॥३७॥

आरूप्यविमोक्षा आरूप्यकृत्स्ने च त्रैधातुकाश्रयाणि शेषं मनुष्याश्रयमेव । उपदेशसामर्थ्येनोत्पादनात् । कथं रूपारूप्यधात्वोरारूप्यध्यानविशेषोत्पादनम् । त्रिभिः कारणैर्ध्यानारूप्यसमापत्तीनामुपपत्तिर्हेतुकर्मधर्मताबलैः । तत्र

हेतुकर्मबलाद्धात्वोरारूप्योत्पादनं[8] द्वयोः ।

---

१. Ms. °यतनं । एषा° । २. Y. वायौ । ३. Ms. स्प्रष्टायतन । ४. Ms. शुद्धकामरूप्ये । ५. Ms. कृत्स्न । ६. Ms. शुद्धकामरूप्यस्वभावे । ७. Ms. drops नि । ८. Ms. °रारूपोत्पादनं ।

द्वयो रूपारूप्यधात्वोरारूप्यसमापत्त्युत्पादनम्। हेतुवलादासन्नाभीक्ष्णाभ्यासात्[१] कर्मव-[17b. 23B. VII]लाच्चोर्ध्वभूमिकस्यापरपर्यायवेदनीयस्य कर्मणः प्रत्युपस्थितविपाकत्वात्। नह्यधस्तादवीत[२]रागेणोर्ध्वं शक्यमुत्पत्तुमिति।

**ध्यानानां रूपधातौ तु ताभ्यां धर्मतयापि च ॥३८॥**

रूपधातौ ध्यानोत्पादनमेताभ्यां[३] हेतुकर्मवलाभ्यां धर्मतया च[४] संवर्तनीकाले। तदानीं हि सर्वसत्त्वा एवाधरभूमिकास्तद्ध्यानमुत्पादयन्ति। कृत्स्नानां[५] धर्माणामुद्भूतवृत्तित्वात्। कियच्चिरं पुनरयं सद्धर्मः स्थास्यति। यत्रेमे[६] ईदृशानां[७] धर्माणां प्रकाराः[८] प्रज्ञायन्ते।

**सद्धर्मो द्विविधः शास्तुरागमाधिगमात्मकः।**

तत्रागमः सूत्रविनयाभिधर्मा अधिगमो बोधिपक्ष्या इत्येष द्विविधः सद्धर्मः।

**धातारस्तस्य वक्तारः प्रतिपत्तार एव च ॥३९॥**

आगमस्य हि धारयितारो वक्तारः। अधिगमस्य प्रतिपत्तारः। अतो यावदेते स्थास्यन्ति तावत्सद्धर्म इति वेदितव्यम्। तेषां तु वर्षसहस्रमवस्थानमाहुः। अधिगमस्यैवम्। आगमस्य तु भूयांसं कालमित्यपरे।

योऽयमिह शास्त्रेऽभिधर्म उक्तः किमेष एव शास्त्रा[९]भिधर्मो देशितः।

**काश्मीरवैभाषिकनीतिसिद्धः**
**प्रायो मयाऽयं कथितोऽभिधर्मः।**
**यद्दुर्गृहीतं तदिहास्मदागः**
**सद्धर्मनीतौ मुनयः प्रमाणम् ॥४०॥**

---

१. हेतुव्रलाच्चा....। २. Ms. नह्यधस्ताद्वीत०....। ३. Y. adds च। ४. Y. धर्मतयापि च। ५. Y. कुशलानां। ६. Y. इम। ७. Y. ईदृशा। ८. Ms. प्रकारः। ९. Y. adopts शास्त्रो and gives in note strā Mss;

प्रायेण हि काश्मी-[18b. 22B1. VI]रवैभाषिकाणां नीत्यादिसिद्ध[1] एषोऽस्माभिरभिधर्म आख्यातः। यदत्रास्माभिर्दुर्गृहीतं सोऽस्माकमपराधः। सद्धर्मनीतौ तु पुनर्बुद्धा एव प्रमाणं बुद्धपुत्राश्च।

निमीलिते शास्तरि लोकचक्षुषि
क्षयं गते साक्षिजने च भूयसा।
अदृष्टतत्त्वैर्निरवग्रहैः कृतं
कुतार्किकैः शासनमेतदाकुलम्॥४१॥

गतेऽथ[2] शान्ति परमां स्वयंभुवि
स्वयंभुवः शासनधूर्धरेषु[3] च।
जगत्यनाथे गणघातिभि[4]र्मलैः[5]
निरङ्कुशैः स्वैरमिहाद्य[6] चर्यते॥४२॥

इति[7] कण्ठगतप्राणं विदित्वा शासनं मुनेः।
बलकालं मलानां च न प्रमाद्यं मुमुक्षुभिः॥४३॥

॥ अभिधर्मकोशभाष्ये समापत्तिनिर्देशो नामाष्टमकोशस्थानमिति ॥



१. Y. seems to omit आदि। २. G. हि। ३. G. धूर्त्वरेषु। ४. Ms. गणघातभिः G. गुणघातिभिः। ५. G. Y. मलैः। ६. G. °हात्र। ७. Y. एवं।

नमो बुद्धाय ।।

[श्री 1b. 21B1. VI] किं खल्वतोऽन्यत्र मोक्षो नास्ति । नास्ति । किं कारणम् । वितथात्मदृष्टिनिविष्टत्वात् । नहि ते स्कन्धसंतान एवात्मप्रज्ञप्ति व्यवस्यन्ति[1] । किं तर्हि । द्रव्यान्तरमेवात्मानं परिकल्पयन्ति आत्मग्राहप्रभवाश्च[2] सर्वक्लेशा[3] इति । कथं पुनरिदं गम्यते स्कन्धसंतान एवेदमात्माभिधानं वर्तते नान्यस्मिन्नभिधेय इति । प्रत्यक्षानुमानाभावात् । ये हि धर्माः सन्ति तेषां प्रत्यक्षमुपलब्धिर्भवत्यसत्यन्तराये । तद्यथा षण्णां विषयाणां मनसश्च । अनुमानं च । तद्यथा पञ्चानामिन्द्रियाणाम् । तत्रेदमनुमानम् । सति कारणे कारणान्तरस्याभावे कार्यस्याभावो दृष्टो भावे च पुनर्भावस्तद्यथाङ्कुरस्य । सत्येव चा[4]भासप्राप्ते विषये मनस्कारे च कारणे विषयग्रहणस्याभावो दृष्टः पुनश्च भावोऽन्धबधिरादीनामनन्धाबधिरादीनां च[5] । अतस्तत्रापि कारणान्तरस्याभावो भावश्च निश्चीयते । यच्च तत्कारणान्तरं तदिन्द्रियमित्येतदनुमानम् । न चैवमात्मनो[6]ऽस्तीति नास्त्यात्मा ।

यत्तर्हि वात्सीपुत्रीयाः[7] पुद्गलं सन्तमिच्छन्ति । विचार्यं तावदेतत् । किं ते द्रव्यत इच्छन्त्याहोस्वित् प्रज्ञप्तितः । किं चेदं[8] द्रव्यत इति किं वा प्रज्ञप्तितः । रूपादिवत् भावान्तरं चेत् द्रव्यतः । क्षीरादिवत्समुदायश्चेत् [2a. 21A1. VII] प्रज्ञप्तितः[9] । किं चातः । यदि तावत् द्रव्यतः । संभिन्न[10]स्वभावत्वात् स्कन्धेभ्योऽन्यो वक्तव्य इतरेतरस्कन्धवत् । कारणं चास्य वक्तव्यम् । असंस्कृतो वा । अतस्तीर्थिकदृष्टिप्रसङ्गो निष्प्रयोजनत्वं[11] च । अथ प्रज्ञप्तितः । वयमप्येवं ब्रूमः ।

नैव हि द्रव्यतोऽस्ति नापि प्रज्ञप्तितः । किं तर्हि[12] । आध्यात्मिकानुपात्तान्वर्तमानान् स्कन्धानुपादाय पुद्गलः प्रज्ञप्यते । तदिदमन्धवचनमनुन्मीलितार्थं न बुध्यामहे । किमिदमुपादायेति । यद्ययमर्थः स्कन्धानां लक्ष्यते तेष्वेव पुद्गलप्रज्ञप्तिः प्राप्नोति । यथा रूपादीनालम्ब्य[13] तेष्वेव क्षीरप्रज्ञप्तिः । अथायमर्थः स्कन्धान् प्रतीयेति । स्कन्धानां पुद्गलप्रज्ञप्तिकारणत्वात् । स एव दोषः । न स एवं प्रज्ञप्यते । कथं तर्हि यथेन्धनमुपादायाग्निः । कथं चेन्धनमुपादायाग्निः

---

१. Ms. व्यवस्यति । २. Ms. प्रभावाश्च । ३. Y. omits सर्व । ४. Y. वा । ५. Ms. °मन्धबधिरादीनां च । ६. Y. आत्मतो । ७. Ms. वत्सी° । ८. Y. किं वेदं । ९. Ms. प्रज्ञप्तिः । १०. Y. भिन्न । ११. Y. निःप्रयोजनत्वं । १२. Ms. किन्तर्ह्याध्यात्मिका .. । १३. Ms. रूपादीनामालंब्य ।

प्रज्ञप्यते । न हि विनेन्धनेनाग्निः प्रज्ञप्यते न चान्य इन्धनादग्निः शक्यते प्रज्ञपयितुं नाप्यनन्यः । यदि ह्यन्यः स्यादनुष्णमिन्धनं स्यात् । अथानन्यः स्याद्दाह्यमेव दाहकं स्यात् । एवं न च विना स्कन्धैः पुद्गलः प्रज्ञप्यते । न चान्यः स्कन्धेभ्यः शक्यते प्रतिज्ञातुं शाश्वतप्रसङ्गात्[1] । नाप्यनन्य उच्छेदप्रसङ्गादिति ।

अङ्ग तावद्ब्रूहि किमिन्धनं कोऽग्निरिति । ततो ज्ञास्या-[2b. 21B₁. VII]मः कथमिन्धनमुपादायाग्निः प्रज्ञप्यत इति । किमत्र वक्तव्यं दाह्यमिन्धनं दाहकोऽग्निः । एतदेवात्र वक्तव्यं किं दाह्यं को दाहक इति । लोके हि तावदप्रदीप्तं काष्ठादिकमिन्धनमुच्यते दाह्यं च । प्रदीप्तमग्निर्दाहकश्च । यच्च भास्वरं चोष्णं च भृशं च तेन हि तदिध्यते दह्यते च । संततिविकारापादानात्[2] । तच्चोभयमष्ट-द्रव्यकं तच्चेन्धनं प्रतीत्याग्निरुत्पद्यते । यथा क्षीरं प्रतीत्य दधि मधु प्रतीत्य शुक्तम् । तस्मादिन्धनमुपादायेत्युच्यते । अन्यश्च स तस्माद्भिन्नकालत्वात् । यदि चैवं[3] पुद्गलः स्कन्धान् प्रतीत्योत्पद्यते स तेभ्योऽन्यश्चानित्यश्च[4] प्राप्नोति । अथ पुनस्तत्रैव काष्ठादौ प्रदीप्ते यदौष्ण्यं[5] तदग्निस्तत्सहजातानि त्रीणि भूतानीन्धन-मिष्यन्ते । तयोरपि सिद्धमन्यत्वं लक्षणभेदात् ।

उपादायार्थस्तु वक्तव्यः । कथं तदिन्धनमुपादाय सोऽग्निः प्रज्ञप्यत इति । न हि तत्तस्य कारणं नापि तत् प्रज्ञप्तेः । अग्निरेव हि तत्प्रज्ञप्तेः कारणम् । यद्याश्रयार्थ उपादायार्थः[6] सहभावार्थो[7] वा । स्कन्धा अप्येवं पुद्गलस्याश्रयसह-भूताः[8] प्राप्नुवन्तीति विस्पष्टमन्यत्वं[9] प्रतिज्ञायते । तदभावे च पुद्गलाभावः प्राप्नोति । इन्धनभाव इवाग्न्यभावः ।

यत्तु तदुक्तं यदीन्धनादन्योऽग्निः स्यादनुष्णमिन्धनं स्यादिति । कि-[3a. 21A1. VIII]मिदमुष्णं नाम । यदि तावदौष्ण्यम् अनुष्णमेवेन्धनमन्यभूतस्व-भावत्वात् । अथ यदौष्ण्यवत् । अन्यदपि तदुष्णस्वभावादग्नेरुष्णं सिध्यत्यौष्ण्य-योगादिति । नास्त्यन्यत्वे दोषः । अथ पुनः सर्वमेव तत् प्रदीप्तं काष्ठादिकमिन्धनं चाग्निश्चेष्यते ।

तदुपादायार्थश्च वक्तव्यः । स्कन्धा एव च पुद्गला इत्यनन्यत्वमनिवार्यं प्राप्नोति । तस्मान्न सिध्यत्येतत् । यथेन्धनमुपादायाग्निः प्रज्ञप्यते एवं स्कधानुपादाय पुद्गलः

---

१. Ms. drops प्र । २. Ms. looks like विकारोपादानात् । ३. Ms. चेवं । ४. Ms. °न्यश्च नित्यश्च । ५. Ms. यदोष्ण्य° । ६. Ms. यद्याश्रयार्थमुपादायार्थः । ७. Y. सहभावोऽर्थो । ८. Ms आश्रयभूताः । ९. स्पष्टमन्यत्वं ।

इति। यदि चायमन्यः स्कन्धेभ्यो न वक्तव्यः "पञ्चविधं[1] ज्ञेयमतीतानागतं प्रत्युपन्नमसंस्कृतमवक्तव्यमि"ति न वक्तव्यं प्राप्नोति। नैव हि तदतीतादिभ्यः पञ्चमं नापञ्चमं वक्तव्यम्। यदा च पुद्गलः प्रज्ञप्यते किं तावत्स्कन्धानुपलभ्य प्रज्ञप्यते आहोस्वित् पुद्गलम्। यदि तावत् स्कन्धांस्तेष्वेव पुद्गलप्रज्ञप्तिः प्राप्नोति। पुद्गलस्यानुपलम्भात्। अथ पुद्गलं कथमस्य स्कन्धानुपादाय प्रज्ञप्तिर्भवति। पुद्गल एव हि तस्या उपादानं प्राप्नोति। अथ मतं सत्सु स्कन्धेषु पुद्गल उपलभ्यते ततः स्कन्धानुपादायास्य प्रज्ञप्तिरुच्यत इति। तदेवं रूपस्यापि चक्षुर्मनस्कारालोकेषु सत्सूपलम्भात् तानुपादाय प्रज्ञप्तिर्वक्तव्या। रूपवच्च पुद्गलस्यान्यत्वं स्पष्टम्।

इदं तावद्वक्तव्यम्। [3b. 21B₁. VIII] षण्णां विज्ञानानां कतमेन पुद्गलो विज्ञेयः। षड्भिरपीत्युच्यते। कथं कृत्वा। चक्षुर्विज्ञेयानि चेद्रूपाणि प्रतीत्य पुद्गलं प्रतिभावयति[2] चक्षुर्विज्ञेयः पुद्गलो वक्तव्यः नो तु वक्तव्यो[3] रूपाणि वानो वा। एवं यावत् मनोविज्ञेयान् चेद्धर्मान् प्रतीत्य पुद्गलं प्रतिविभावयति मनोविज्ञेयः पुद्गलो वक्तव्यो नो तु वक्तव्यो धर्मा वा नो वा। एवं तर्हि[4] क्षीरादिभिः समानः प्राप्नोति। चक्षुर्विज्ञेयानि चेद्रूपाणि प्रतीत्य क्षीरं विभावयत्युदकं[5] वा[6] चक्षुर्विज्ञेयं क्षीरमुदकं चेति वक्तव्यं नो तु वक्तव्यं रूपाणि वा नो वा[7]। एवं घ्राणजिह्वाकायविज्ञेयं वक्तव्यं नो तु वक्तव्यं स्प्रष्टव्यानि[8] वा नो वा। माभूत् क्षीरोदकयोश्चतुष्ट्वप्रसङ्ग इति। अतो यथा रूपादीन्येव क्षीरमुदकं वा प्रज्ञप्यते समस्तान्येवं स्कन्धाः पुद्गल इति सिद्धम्।

यच्चोच्यते चक्षुर्विज्ञेयानि रूपाणि प्रतीत्य पुद्गलं प्रतिविभावयतीति। कोऽस्य वाक्यस्यार्थः। किं तावद्रूपाणि पुद्गलोपलब्धेः कारणं भवतीति[9] आहोस्विद्रूपाण्युपलभमानः पुद्गलमुपलभत इति। यदि रूपाणि पुद्गलोपलब्धेः कारणं भवन्ति स च तेभ्योऽन्यो न[10] वक्तव्यः। एवं तर्हि रूपमप्यालोकचक्षुर्मनस्कारे[4a. 22A₁. I]भ्योऽन्यन्न[11] वक्तव्यम्। तेषां तदुपलब्धिकारणत्वात्। अथ रूपाण्युपलभमानः पुद्गलमुपलभते। किं तयैवोपलब्ध्योपलभते आहोस्विदन्यया। यदि तयैव। रूपादभिन्नस्वभावः पुद्गलः प्राप्नोति रूप एव वा तत्प्रज्ञप्तिः। इदं च रूपमयं पुद्गलः[12] कथमिदं गम्यते[13]। अथैवं न परिच्छिद्यते।

---

१. Ms. पञ्चविध, Y. पञ्चविधं ज्ञेयम्। २. Y. प्रतिविभावयति। ३. Ms. वक्तव्य। ४. Ms. एवन्तं। ५. Y. प्रतिविभावयत्युदकं। ६. Y. च। ७. Ms रूपाणि नो वा। ८. Ms. स्प्रष्टव्याणि। ९. Ms. reads भवन्ति below। १०. Ms. seems to drop न। ११. Ms. °न्यो न। १२ Y. seems to add इति। १३. Y. seems to be परिच्छिद्यते।

कथमिदं प्रतिज्ञायते[१] रूपमप्यस्ति पुद्गलोऽप्यस्तीति। उपलब्धिवशेन हि तस्यास्तित्वं प्रतिज्ञायते[२]। एवं यावद्धर्मेभ्यो वक्तव्यम्। अथान्यया[३] भिन्नकालोपलम्भादन्यो रूपात्प्राप्नोति। नीलादिव पीतं क्षणादिव च क्षणान्तरम्। एवं यावद्धर्मेभ्यो वक्तव्यम्। अथ रूपपुद्गलवत्तदुपलब्ध्योरप्यन्यानन्यत्वमवक्तव्यम्। तेन तर्हि संस्कृतेऽप्यवक्तव्यं[४] भवतीति सिद्धान्तभेदः। यदि चायमस्ति नो तु वक्तव्यो रूपाणि वा नो वा। किं तर्हि[५] भगवतोक्तं "रूपमनात्मा[६] यावद्विज्ञानमनात्मे"ति।

येन चायं चक्षुर्विज्ञानेन पुद्गल उपलभ्यते। किं तद्रूपाणि प्रतीत्योत्पद्यते आहोस्वित् पुद्गलमुभयं वा। यदि रूपाणि प्रतीत्योत्पद्यते। नोत्सहिष्यते पुद्गलं विज्ञातुं शब्दादिवत्। यमेव हि विषयं चक्षुर्विज्ञानेषु[७] प्रतीत्योत्पद्यते विज्ञानं स एव तस्यालम्बनप्रत्ययः। अथ पु-[4b. 22B. I]द्गलं प्रतीत्योत्पद्यते उभयं वा। इदमुत्सूत्रम्। सूत्रे हि निर्धारितं द्वयं प्रतीत्य विज्ञानस्योत्पादो भवतीति। "तथा चक्षुर्भिक्षो हेतू रूपाणि प्रत्ययश्चक्षुर्विज्ञानस्योत्पादाय। तत्कस्य हेतोः। यत्किंचित् भिक्षो चक्षुर्विज्ञानं सर्वं तच्चक्षुः प्रतीत्य रूपाणि चेति। अनित्यश्च पुद्गल एवं प्राप्नोति। "ये हि हेतवो ये प्रत्यया विज्ञानस्योत्पादाय तेऽप्यनित्या" इति सूत्रे वचनात्। अथ पुद्गलो न तस्यालम्बनं न तर्हि तेन विज्ञेयः।

यदि च पुद्गलः षड्विज्ञानविज्ञेयः प्रतिज्ञायते। स श्रोत्रविज्ञानविज्ञेयत्वाद्रूपादन्यः प्राप्नोति शब्दवत्। चतुर्विज्ञानविज्ञेयत्वाच्छब्दादन्यः प्राप्नोति रूपवत्। एवमन्येभ्योऽपि योज्यम्। इदं च सूत्रपदं बाधितं भवति। "यानीमानि ब्राह्मण पञ्चेन्द्रियाणि नानागोचराणि नानाविषयाणि स्वं स्वं[८] गोचरविषयं प्रत्यनुभवन्ति। नान्यदन्यस्य गोचरविषयं प्रत्यनुभवति। तद्यथा चक्षुरिन्द्रियं श्रोत्रेन्द्रियं घ्राणेन्द्रियं जिह्वेन्द्रियं कायेन्द्रियम्। मन एषां पञ्चानामिन्द्रियाणां गोचरविषयं प्रत्यनुभवति मनश्चैषां प्रतिसरणमि"ति। न वा पुद्गलो विषयः। न चेद्विषयो[९] न तर्हि विज्ञेयः। यद्येवं मनइन्द्रियस्याप्यव्यभिचारः प्रा[5a. 22A. II]प्नोति। षडिमानीन्द्रियाणि नानागोचराणि नानाविषयाणि स्वं स्वं[१०] गोचरविषयमाकाङ्क्षन्ती[११]त्युक्तं षट्प्राणकोपमे। न तत्रेन्द्रियमेवेन्द्रियं कृत्वोक्तम्। पञ्चानां

---

१. Y. seems to be परिज्ञायते। २. Y. seems to be प्रज्ञायते। ३. Ms. looks like अथान्थाथा। ४. Y. संस्कृतमप्यवक्तव्यं। ५. Y. adds एतद्। ६. Y. adds इति। ७. Ms. The letter after ने is not clear। ८. Y. स्वकं स्वकं। ९. Ms. °षया'''''। १०. Y. seems to be स्वकं स्वकं। ११. Y. आकांक्षन्ते।

दर्शनाद्या[1]काङ्क्षणासंभवात् तद्विज्ञानानां च । अतस्तदाधिपत्याध्याक्रतं[2]मत्र मनोविज्ञानेन्द्रियं[3] कृत्वोक्तम्[4] । यच्च तत्केवलं मनआधिपत्याध्याकृतं मनोविज्ञानं नैवं तदन्येषां विषयमाकाङ्क्षत्यतो नास्त्येष दोषः । उक्तं च भगवता "सर्वाभिज्ञेयं वो भिक्षवो धर्मपर्यायं देशयिष्यामी"त्युक्त्वा चक्षुरभिज्ञेयं रूपाणि चक्षुर्विज्ञानं चक्षुःसंस्पर्शो यदपि तच्चक्षुःसंस्पर्शप्रत्ययमध्यात्ममुत्पद्यते वेदितं सुःखं वा अदुःखासुखं वा यावत्[5] मनःसंस्पर्शप्रत्ययम् । अयमुच्यते सर्वाभिज्ञेयपरिज्ञेयो धर्मपर्यायः इति । अत एतावदेवाभिज्ञेयं प्रतिज्ञेयं चेत्यवर्धार्यते न पुद्गलः । तस्माद्विज्ञेयोऽप्यसौ न भवति । प्रज्ञाविज्ञानयोः समानविषयत्वात् । चक्षुषा च पुद्गलं पश्याम इति पश्यन्त पौद्गलिका अनात्मना आत्मानं पश्याम इति दृष्टिस्थानमापन्ना भवन्ति । सूत्रे च भगवता नीतमेतत् । "स्कन्धेष्वेव पुद्गलाख्ये"ति मानुष्यकसूत्रम् । "चक्षुःप्रतीत्य [5b. 22B. II] रूपाणि चोत्पद्यते चक्षुर्विज्ञानं त्रयाणां संनिपातः स्पर्शः स्पर्शसहजाता वेदना संज्ञा चेतना इतीमे चत्वारो रूपिणः स्कन्धाश्चक्षुरिन्द्रियं च रूपमेतावन्मनुष्यत्वमुच्यते । अत्रेयं संज्ञा सत्त्वो नरो मनुष्यो मानवश्च पोषः पुरुषः पुद्गलो जीवो जन्तुरिति । अत्रेयं प्रतिज्ञा अहं चक्षुषा रूपाणि पश्यामीति । अत्रायं व्यवहार इत्यपि स आयुष्मानेवंनामा एवंजात्य[6] एवंगोत्र एवमाहार एवंसुखदुःखप्रतिसंवेदी एवंदीर्घायुरेवंचिरस्थितिक एवमायुःपर्यन्त[7] इति । इति हि भिक्षवः संज्ञामात्रकमेवैत[8]द्व्यवहारमात्रकमेवैतत् । सर्वं इमे धर्माः अनित्याः संस्कृताश्चेति ताः प्रतीत्यसमुत्पन्ना इति । नीतार्थं च सूत्रं प्रतिसरणमुक्तं भगवता । तस्मान्न पुनः परीक्ष्यते । तथा चोक्तं "सर्वमस्तीति ब्राह्मण यावदेव द्वादशायनानी"ति । यदि चायं पुद्गलो नायतनं न सोस्तीति सिद्धम् । अथायतनं न तह्यं-वक्तव्यः । तेषामपि चैवं पश्यतो "यावता भिक्षो चक्षुर्यावता रूपाणि विस्तरेण एतावता भिक्षो तथागतः सर्वं च प्रज्ञापयति सर्वप्रज्ञप्ति चे"ति । बिम्बिसारसूत्रे चोक्तम् "आत्मा आत्मेति भिक्षवो बालोऽश्रुतवान् पृथग्जनः प्रज्ञप्तिमनुपतितो न त्वात्रा[6a. 22A. III]त्मा वा आत्मीयं वा दुःखमिदमुत्पद्य[9]मानमुत्पद्यते" इति विस्तरः । शैलयाप्यर्हन्त्या मारमारभ्योक्तं

१. Ms. दर्शनाद्यानां । २. Y. adopts °ध्याहृतं and gives in note °ध्याकृत Mss. । ३. Y. मनोविज्ञानमिन्द्रियम् । ४. Y. adopts इत्युक्तं and gives in note कृत्वोक्तम् Mss । ५. Ms. यावत्मनः° । ६. Y. एवंजन्य । ७. Ms. एवायुः.... । ८. Ms. drops त । ९. Ms. °मुपद्य° ।

"मन्यसे किं नु सत्त्वेति मारदृष्टिगतं हि ते ।
शून्यः संस्कारपुञ्जोऽयं नहि सत्त्वोत्र विद्यते ।।
यथैव ह्यङ्गसंभारात्संज्ञा रथ इति स्मृता ।
एवं स्कन्धानुपादाय संवृत्या सत्त्व उच्यते" ।। इति ।

क्षुद्रकेऽपि चागमे दरिद्रब्राह्मणमधिकृत्योक्तं

शृणु त्वं स्वादरे धर्मं सर्वग्रन्थिप्रमोचनम् ।
यथा संक्लिश्यते चित्तं यथा चित्तं विशुध्यति ।।
आत्मैव ह्यात्मनो नास्ति विपरीतेन कल्प्यते ।
नास्तीह सत्त्व आत्मा वा[1] धर्मास्त्वेते सहेतुकाः ।।
द्वादशैव भवाङ्गानि स्कन्धायतनधातवः ।
विचिन्त्य सर्वाण्येतानि पुद्गलो नोपलभ्यते ।।
शून्यमध्यात्मकं पश्य शून्यं पश्य वहिर्गतम् ।
न लभ्यते[2] सोऽपि कश्चिद्यो भावयति शून्यतामि"ति ।

तथोक्तं "पञ्चादीनवा आत्मोपलम्भे । आत्म[3]दृष्टिर्भवति सत्त्वदृष्टिः[4] । निर्विशेषो भवति तीर्थिकैः सार्धम् । उन्मार्गप्रतिपन्नो भवति । शून्यतायामस्य चित्तं न प्रस्कन्दति न प्रसीदति न संतिष्ठते न विमुच्यते[5] । आर्यधर्मा अस्य न व्यवदायन्त" इति । न वैत एवं ग्रन्थं प्रमाणं कुर्वन्ति । किं कारणम् । नास्माकमयं निकाये पठ्यत इ-[6b. 22B. III]ति । किं पुनस्तेषां निकाय एव प्रमाणमाहोस्विद्बुद्धवचनम् । यदि निकाय एव प्रमाणं न तर्हि तेषां बुद्धः शास्ता । न च ते शाक्यपुत्रीया भवन्ति । अथ बुद्धवचनं प्रमाणम् । अयं ग्रन्थः कस्मान्न प्रमाणम् । नहि किलैतत् बुद्धवचनमिति । किं कारणम् । नास्माकं निकाये पठ्यत इति । अयमन्यायो वर्तते । कोऽत्रान्यायः । यो हि ग्रन्थः सर्वेषु निकायान्तरेष्वाम्नायते न च सूत्रं धर्मतां वा बाधते सोऽस्माभिरपाठान्न बुद्धवचनमिति वचनं केवलं साहसमात्रम् । किं चेदमपि तेषां सूत्रं नास्ति "सर्वधर्मा अनात्मान" इति ।

---

१. Y. च । २. Y. विद्यते । ३. Ms. आत्मा । ४. Y. seems to be यावज्जीवदृष्टिः ।
५. Y. नाधिमुच्यते ।

स्यात् मतम् । नैव हि पुद्गलो धर्म उच्यते नाप्यन्यो धर्मादिति । एवं तर्हि न मनोविज्ञेयः सिध्यति । द्वयं प्रतीत्य विज्ञानस्योत्पादः इत्यवधारणात् । इह चैवं विकल्प्यते "अनात्मन्यात्मेति संज्ञाविपर्यास[1]श्चित्तविपर्यासो दृष्टिविपर्यास" इति । अनात्मन्यात्मेति विपर्यासो न त्वात्मनि किं च पुनः । "नात्मा स्कन्धायतनधातवः" यत्तावदुक्तं प्राक् "नो तु वक्तव्यं रूपाणि वा नो वे"ति तत्तावदशोचम्[2] । उक्तं च सूत्रान्तरे "ये केचित् भिक्षवः श्रमणा वा ब्राह्मणा वा आत्मेति समनुपश्यन्तः समनुपश्यन्ति सर्वे त इमानेव पञ्चोपा-[7a. 22A. IV]दानस्कन्धानि"ति[3] । तस्मात्सर्व एवानात्मन्यात्मग्राहः । तथोक्तं "ये केचिदनेकविधं पूर्वनिवासं समनुस्मरन्तः समनुस्मार्षुः समनुस्मरन्ति समनुस्मरिष्यन्ति वा पुनः सर्वे त इमानेव पञ्चोपादनस्कन्धानि"ति । यद्येवमिदं कस्मादाह "रूपवानहमभूवमतीते अध्वनी"-ति[4] । एवमनेकविधं ये समनुस्मरन्तीति प्रदर्शयति । यदि तु रूपवन्तं पुद्गलं पश्येत्सत्कायदृष्टिप्रसङ्गः स्यात् । अपाठ एव त्वत्र[5] शरणं स्यात् । तस्मात् प्रज्ञप्तिसत्पुद्गलो राशिधारावत्[6] ।

यद्येवं तर्हि न बुद्धः सर्वज्ञः प्राप्नोति । न हि किंचिच्चित्तमस्ति चैत्ता वा यत्सर्वं जानीयात् । क्षणिकत्वात् । पुद्गलस्तु जानीयात् । एवं तर्हि चित्तविनाशे पुद्गलस्याविनाशाभ्युपगमात् नित्यत्वमस्याभ्युपेतं भवति । नैव च वयं सर्वत्र ज्ञानसंमुखीभावाद् बुद्धं सर्वज्ञमाचक्ष्महे । किं तर्हि । सामर्थ्यात् । या ह्यसौ बुद्धाख्या संततिस्तस्या इदमस्ति सामर्थ्यं यदाभोगमात्रेणाविपरीतं ज्ञानमुत्पद्यते यत्रेष्टम् । आह चात्र ।

संतानेन समर्थत्वाद्यथाग्निः सर्वभुङ्मतः
तथा सर्वविदेष्टव्योऽसकृत्सर्वस्य[7] वेदनात् ।

कथमिदं गम्यते । अतीतादिवचनात् ।

"ये चाभ्यतीताः संबुद्धा ये च बुद्धा अनागता [7b. 22B. IV]: ।
यश्च[8] एतर्हि संबुद्धो बहूनां शोकनाशन" इति ।

---

१. Ms. °विपर्यासा° । २. Y. अपोढम् । ३. Ms. °दानस्कानिति । ४. Y. बभूवातीते... । ५. Y. चात्र । ६. Y. राशिधारादिवत् । ७. Ms. न सकृत्सर्वस्य, but there will be metrical defect. ८. Ms. यश्चैतर्हि; but for the sake of metre I have adopted this reading.

स्कन्धा एव च त्रैयध्विका इष्यन्ते न पुद्गला युष्माभिः। यदि स्कन्धा एव पुद्गलाः कस्मादिदमाह। "भारं च वो भिक्षवो देशयिष्यामि भारादानं च भारनिक्षेपणं च भारहारं चे"ति। कस्मादिदं न वक्तव्यं स्यात्। न हि भार एव भारहारो युक्तः। किं कारणम्। नह्येवं दृश्यत इति। अवक्तव्योऽपि न युक्तः। किं कारणम्। न ह्येवं दृश्यते। भारादानस्यापि स्कन्धासंग्रहप्रसङ्गाच्च।[1] इत्यर्थमेव[2] भारहारं[3] निर्दिदेश भगवान्। "योऽसावायुष्मानेवंनामा यावदेवंचिरस्थितिक एवमायुःपर्यन्तः" स एष यथा विज्ञायेत। मान्यथा विज्ञायि नित्यो वा अवक्तव्यं वेति। स्कन्धा एव च स्कन्धानामुपघाताय संवर्तन्ते पूर्वका उत्तरेषामिति भारं च भारहारं च कृत्वोक्ताः। उपघातार्थो हि भार इति।

अस्त्येव पुद्गलो यस्मादुक्तं "नास्ति सत्त्व उपपादुक इति मिथ्यादृष्टिः"। कश्चैवमाह नास्ति सत्त्व उपपादुक इति। सत्त्वस्तु यथाऽस्ति तथा विभक्तो भगवतेति ब्रूमो मानुष्यकसूत्रे। तस्माद्यः परत्रोपपादुकसत्त्वाख्यस्कन्धसंतानापवादं करोति तस्यैषा मिथ्यादृष्टिर्नास्ति सत्त्व उपपादुक इति। [8a. 22A. V] स्कन्धानामुपपादुकत्वात्। अथैषा मिथ्यादृष्टिः पुद्गलापवादिका सती किंप्रहातव्या भवेत्। नह्येषा दर्शनभावनाप्रहातव्या युज्यते। पुद्गलस्य सत्त्वेष्वन्तर्भावात्[4]। "एकः पुद्गलो लोक उत्पद्यमान उत्पद्यते" इति वचनात् न स्कन्धा इति चेत्। न। समुदायेऽप्येकोपचारादेकतिलैकतण्डुलवत् एकराश्येकवचनवच्च।

संस्कृत इति वा पुद्गलो वक्तव्य उत्पत्तिमत्त्वाभ्युपगमात्। न स एवमुत्पद्यते यथा स्कन्धा अपूर्वप्रादुर्भावात्। किं तर्हि। स्कन्धान्तरोपादानात्। यथा याज्ञिको जातो वैयाकरणो जात इत्युच्यते विद्योपादानात्। भिक्षुर्जातः परिव्राजको जात इति लिङ्गोपादानात्। वृद्धो जातो व्याधितो जात इत्यवस्थान्तरोपादानादिति। न प्रतिक्षेपात् सूत्र एव हि प्रतिक्षिप्तं भगवता परमार्थशून्यतायाम्। "इति हि भिक्षवोऽस्ति कर्मास्ति विपाकः कारकस्तु नोपलभ्यते। य इमांश्च स्कन्धान्निक्षिपति अन्यांश्च स्कन्धान् प्रतिसंदधात्यन्यत्र धर्म[5]संकेतादिति। फल्गु[6]सूत्रे चोक्तम् "उपादत्त इति फल्गु[7] न वदामीति। तस्मान्नास्ति स्कन्धानां कश्चिदुपादाता नापि निक्षिप्ता[8]। कं च तावद्भवान्याज्ञिकं[9] यावद्वद्या[8b. 22B. V]धित

---

१. Ms. स्कन्धासंग्रहाप्रसंगाच्च। २. Y. adds च। ३. Ms. भारं हारं। ४. Y. सत्येष्वनन्तर्भावात्। ५. Ms. चर्म्म°। ६. Y. seems to be फाल्गुन। ७. Y. फाल्गुन। ८. Is it निक्षेप्ता? Y. also निक्षिप्ता। ९. Ms. पाक्षिकं।

मधिमुच्यते[1]। दृष्टातं करोति पुद्गलं यदि। सोऽसिद्धः। अथ चित्तचैत्ताः। न। तेषां प्रतिक्षणमपूर्वोत्पत्तिरेव। अथ शरीरम्। तस्यापि तथा। शरीरविद्यालिङ्ग-वच्च स्कन्धपुद्गलयोरन्यत्वमापद्यते। जीर्णं[2] शरीरान्तरमेव व्याधितं च। प्रतिषिद्धो हि सांख्यीयः[3] परिणामवादः। तस्माददृष्टान्ता[4] एते।

यदि च स्कन्धानामपूर्वोत्पादो न पुद्गलस्येष्यते सोऽन्यश्च तेभ्यो नित्यश्च स्फुटं दीपितो भवति। पञ्च स्कधा एकः पुद्गल इति ब्रुवता कथमन्यत्वं नोच्यते। कथं तावत् भूतानि चत्वारि रूपं त्वेकं[5] न च भूतेभ्योऽन्यद्रूपम्। पाक्षिक एष दोषः। कतमस्मिन्पक्षे। भूतमात्रिकपक्षे। तथापि तु यथा भूतमात्रं रूपमेवं स्कन्धमात्रं पुद्गल इत्यभ्युपेतं भवति। यदि स्कन्धमात्रं पुद्गलः कस्मात् भगवता स जीवस्तच्छरीरकन्यो वेति न व्याकृतम्। प्रष्टुराशयापेक्षया। स हि जीवद्रव्यमेक-मन्तर्व्यापार[6]पुरुषमधिकृत्य पृष्टवान्। स च कस्मिंश्चिन्नास्तीति कथमस्यान्यत्व-मनन्यत्वं वा व्याक्रियताम्। कौर्मस्येव[7] रोम्णोऽन्तः खरता मृदुता वा।

एष च ग्रन्थः पूर्वकैरेव निर्मोचितः। स्थविरो हि नागसेनः कलिङ्गेन रा-[9a. 22A. VI.]ज्ञोपसंक्रम्योक्तः। "पृच्छेयमहं भदन्तं वहुवोल्लकाश्च[8] श्रवणा भवन्ति। यदि यदेव पृच्छेयं तदेव व्याकुर्या इति। पृच्छेत्युक्तः पृष्टवान्। किं नु स जीवस्तच्छरीरमन्यो जीवोऽन्यच्छरीरमिति। अव्याकृतमेतदित्यवोचत् स्थविरः। स आह। ननु भदन्तः पूर्वमेव प्रतिज्ञां कारितो नाऽन्यद्व्याकर्तव्यमिति। किमिद-मन्यदेवोक्तमव्याकृतमेतदिति। स्थविर आह। अहमपि महाराजं पृच्छेयं बहुवोल्ल-काश्च राजानो भवन्ति। यदि यदेव पृच्छेयं तदेव[9] व्याकुर्या इति। पृच्छेत्युक्तः पृष्टवान्। यस्तेऽन्तःपुरे आम्रवृक्षस्तस्य किमम्लानि फलानि आहोस्वित् मधुरा-णीति। नैव ममान्तःपुरे कश्चिदाम्रवृक्षोऽस्तीत्याह। ननु मया पूर्वमेव महाराजः प्रतिज्ञां कारितो नान्यद्व्याकर्तव्यमिति। किमिदमन्यदेवोक्तमाम्र एव नास्तीति। स आह कथमसतो वृक्षस्य फलानामम्लतां मधुरतां वा व्याकरोमोति। एवमेव महाराज स एव जीवो नास्ति कुतोऽस्य शरीरादन्यतामनन्यतां वा व्याकरोमीति।

कस्मात् भगवताऽपि नोक्तं नास्त्येवेति। प्रष्टुराशयापेक्षया। स हि यस्यापि स्कन्धसंतानस्य जीव इत्याख्या तस्याप्यभावं प्रतीयादिति मिथ्यादृष्टि पातितः स्यात्। प्रतीत्य-[10]समुत्पादस्याज्ञाना-[9b. 22B. VI]त्। स च तद्देशनाया

१. Ms. ॰द्व्याधिमधिमुच्यते। २. Ms. जीर्ण्णं। ३. Y. सांख्येयः। ४. Y. seems to be अपदृष्टान्ता। ५. Y. चैकम्। ६. Ms. मन्तर्व्यापार॰। ७. Ms. कौर्मस्ये च। ८. Ms. वाल्लकाश्च। ९. Ms. तदेवं। १०. Ms. प्रतीत॰।

अक्षमः। इतश्चैतदेवं निश्चीयते। यत् भगवतोक्तम्[1] "अस्त्यात्मेत्यानन्द वत्ससगोत्राय परिव्राजकाय प्रश्नं पृष्टो व्याकुर्यां नन्वकल्पं स्याद्वचनाय सर्वधर्मा अनात्मान इति। नास्त्यात्मेत्यानन्द वत्ससगोत्राय परिव्राजकाय प्रश्नं पृष्टो व्याकुर्यां ननु वत्ससगोत्रः परिव्राजकः पूर्वमेव संमूढो भूयस्या मात्रया संमोहमापद्येत अभूत् मे[2] आत्मा स मे एतर्हि नास्तीति। अस्त्यात्मेत्यानन्द शाश्वताय परेति। नास्त्यात्मेत्यानन्दोच्छेदाय परेतीति[3] विस्तरः। आह चात्र

दृष्टिदंष्ट्रा[4]वभेदं च भ्रंशं चापेक्ष्य कर्मणाम्।
देशयन्ति जिना धर्मं व्याघ्रीपोतापहारवत्॥

आत्मास्तित्वं ह्युपगतो भिन्नः[5] स्याद्दृष्टिदंष्ट्रया[6]
भ्रंशं कुशलपोतस्य कुर्यादप्राप्य संवृतिमि"ति।

पुनराह असत्त्वाद्भगवान् जीवं तत्त्वान्यत्वेन[7] नावदत्।
नास्तीत्यपि च नावोचन्माभूत्[8] प्राज्ञप्तिकोप्यसन्[9]॥

यत्र हि स्कन्धसंताने शुभाशुभफलास्तिता।
जीवाख्या तत्र सा न स्यात् जीवनास्तित्वदेशनात्॥

प्रज्ञप्तिमात्रं स्कन्धेषु जीव इत्यपि नावदत्।
अभव्यः शून्यतां बोद्धुं तदानीं तादृशो जनः॥

तथा ह्यात्मास्ति नास्तीति पृष्टो वास्त्येव[10] नावदत्।
आशयापेक्षाया[11] प्रष्टुः सति त्वस्तीति नाह किम्॥

शाश्वतलोका-[10a. 22A. VII]दीनामप्यव्याकरणं प्रष्टुराशयापेक्षया। यदि हि तावदात्मा लोक इष्टः स्यात्तस्याभावादयुक्तं चतुर्धा व्याकरणम्। अथ सर्व एव

---

१. Ms. °क्रमस्त्या...। २. Ms. अभूत्मे। ३. Ms. परैतीति। ४. Ms. द्रंष्ट्रा। ५. Ms. भिन्नेः। ६. Ms. द्रंष्ट्रया। ७. Ms. भगवान्तत्त्वान्यत्वेन, G. भगवान् जीवं तत्त्वान्यत्वेन। ८. Ms. °त्यपिवचनावोच....। ९. Ms. प्रज्ञप्तिको। १०. Ms. वास्त्येन G. वात्स्येन Huen Tsang has Fa ts'o (= वात्स्येन) but Paramartha has not and there it seems to be वास्त्येव। ११. G. आश्रयापेक्षया।

संसारो लोकस्तस्याप्ययुक्तम् । शाश्वते लोके न कस्यचित् परिनिर्वाणं प्राप्नुयात् । अशाश्वते सर्वेषामुच्छेदः प्राप्नुयात् । उभयथात्वे नियमत एकेषां परिनिर्वाणं प्राप्नुयात् एकेषां न । अनुभयथात्वे नैव परिनिर्वाणं नापरिनिर्वाणं प्राप्नुयात् । अतो मार्गाधीनत्वात् परिनिर्वाणस्य चतुर्धापि नियमो न व्याक्रियते निर्ग्रन्थश्रावकचटकवत् । अतएवान्तवान् लोक[1]इति चतुष्काव्याकरणम् । तुल्यार्थो ह्येष चतुष्कः । तथाहि मुक्तिकः[2] परिव्राजक एव चतुष्कं पृष्ट्वा पुनः पृष्टवान् किं नु सर्वो लोकोऽनेन मार्गेण निर्यात्या[3]होस्विदेकदेशो लोकस्ये"ति । स्थविर आनन्द आह "यमेव त्वं मुक्तिक तत्प्रथमतो भगवन्तं प्रश्नं पृष्टवांस्तमे[4]वैतर्हि पृच्छस्यनेन पर्यायेणे"ति सर्वम् । भवति तथागतः परं मरणादित्यपि चतुष्कः प्रष्टुराशयापेक्षया न व्याकृतः । स हि मुक्त्वामानं तथागतं कृत्वा पृष्टवान् ।

पौद्गलिकस्तु पर्यनुयोज्यः किं कारणं भगवान् जीवन्तं पुद्गलमस्तीति व्याकरोति परं मरणान्न व्याकरोतीति । शाश्वत [10b. 22B. VII] दोषप्रसङ्गः । इदं तर्हि कस्माद्व्याकरोति "भविष्यसि त्वं मैत्रेयानागतेऽध्वनि तथागतोऽर्हन् सम्यक्संबुद्धः" इति । कस्माच्च श्रावकमभ्यतीतं कालगतमुपपत्तौ व्याकरोत्यमुकोऽमुत्रोपपन्न इति । एवमपि हि शाश्वतत्वप्रसङ्गः । यदि च भगवान् पूर्वं पुद्गलं दृष्ट्वा परिनिर्वृतं पुनः न[5] पश्यत्यज्ञानान्न व्याकरोतीति सर्वज्ञत्वं[6] शास्तुरुत्पादितं भवति न वा सोऽस्तीत्यभ्युपगन्तव्यम् । अथ पश्यत्यनुच्यमानोऽप्यसावस्ति शाश्वतश्चेति सिद्धं भवति । अथैतदपि न वक्तव्यं पश्यति वा नवेति । एवं तर्हि इदमपि शनैः शनैरवक्तव्यं क्रियतां सर्वज्ञो वा न वा भगवान्न वेति । अस्त्येव पुद्गलो यस्मात्सत्यतः स्थितितो नास्ति मे आत्मेति दृष्टिस्थानमुक्तम् । अस्तीत्यपि दृष्टिस्थानमुक्तम् । तस्मादज्ञापकमेतत् । उभयमपि त्वेतदन्तग्राहदृष्टि[7]शाश्वतोच्छेददृष्टिसंगृहीतमित्याभिधार्मिकाः[8] । तथैव च युक्तम् ।[9] "अस्त्यात्मेत्यानन्द शाश्वताय परैति नास्त्यात्मेत्यानन्दोच्छेदाय परैती"ति वात्स्यसूत्रे वचनात् ।

यदि तर्हि पुद्गलो नास्ति क एष संसरति[10] । नहि संसार[11] एष[12] संसरतीति युक्तम् । उक्तं च भगवता "अविद्यानिवरणानां सत्त्वनां संधावतां

---

१. Ms. °वान्लोक$_{o}$ । २. Ms. उक्तितः । ३. Y. निर्यास्यति । ४. Y. adopts त्वम् and gives in note °tam Mss. । ५. Ms. seems to drop one न here. Both the chinese translations have one pu ( = न) here । ६. Y. seems to be सार्वज्ञम् । ७. Ms. दृष्टिः । ८. Ms. °त्यमिधार्मिकाः । ९. Ms. युक्तमस्या° । १०. Ms. संसारति । ११. Ms. संसारे । १२. Ms. It may be read एव also ।

संसरतामि"ति । अथ पुद्गलः कथं संसरति । स्कन्धान्तरत्यागो-[11a. 22A. VIII]पादानात् । उक्तोत्तर एष पक्षः । यथा तु क्षणिकोऽग्निः संतत्या संसरतीत्युच्यते[1] तथा सत्त्वाख्यः स्कन्धसमुदायस्तृष्णोपादानः संसरतीत्युच्यते । यदि स्कन्धमात्रमिदं कस्मादाह भगवान् "ग्रहमेव स तेन कालेन तेन समयेन सुनेत्रो नाम शास्ताऽभूवमि"ति । कस्मान्न वक्तव्यं स्यात् । अन्यत्वात् स्कन्धानाम् । अथ किं पुद्गलः । स एवासौ । शाश्वतो हि स्यात् । तस्मादहमेव स इत्येकसंतानतां दर्शयति । यथा स एवाग्निर्दहन्नागत इति । यदि चात्मा भवेत्तथागता एव सुव्यक्तं पश्येयुः । पश्यतां चात्मग्राहो दृढतरः स्यादात्मस्नेहश्च । "आत्मनि च सत्यात्मीयं भवती"ति सूत्रे वचनादात्मग्राहोऽप्येषां स्कन्धेष्वधिकं प्रवर्तेत । सैषा[2] स्यात्सत्कायदृष्टिः । आत्मीयदृष्टौ च सत्यामात्मीयस्नेहः । एवमेषां दृढतरात्मात्मीयस्नेहपरिसादित[3]बन्धनानां मोक्षो दूरतरीभवेत्[4] । अथ मतं नैवात्मनि प्रवर्तते स्नेह इति । तत् क इदानीमेष योगो यदनात्मन्यात्माधिमोक्षात् स्नेह उत्पद्यते आत्मन्येव तु नोत्पद्यते । तस्मात् दृष्टचर्वुदमेतस्मिन् शासने उत्पन्नं य एष एकेषां पुद्गलग्राह एकेषां सर्वनास्तिताग्राहः । येऽपि च द्रव्यान्तरमेवात्मानं मन्यन्ते तीर्थकारास्तेषामेव मोक्षाभावदोषो[5] निष्कम्पः ।

यदि तर्हि सर्व-[11b. 22B. VIII]थापि नास्त्यात्मा कथं क्षणिकेषु चित्तेषु चिरानुभूतस्यार्थस्य स्मरणं भवति प्रत्यभिज्ञानं वा । स्मृतिविषयसंज्ञान्वयाच्चित्तविशेषात् । कीदृशाच्चित्तविशेषात् यतोऽनन्तरं स्मृतिर्भवति । तदाभोगसदृशसम्बन्धिसंज्ञादिमतोऽनुपहत प्रभावादाश्रयविशेषशोकव्याक्षेपादिभिः । तादृशोऽपि ह्यतदन्वयश्चित्तविशेषो न समर्थः तां स्मृतिं भावयितुं तदन्वयोऽपि चान्यादृशो न समर्थस्तां स्मृतिं भावयितुम् । उभयथा तु समर्थ इत्येवं स्मृतिर्भवत्यन्यस्यां[6] सामर्थ्यादर्शनात् । कथमिदानीमन्येन चेतसा दृष्टमन्यत्स्मरति । एवं हि देवदत्तचेतसा दृष्टं यज्ञदत्तचेतः[7] स्मरेत् । नासम्बन्धात् । न हि तयोः संबन्धोऽस्ति अकार्य[8]कारणभावाद्यथैकसंतानिकयोः । न च ब्रूमोऽन्येन चेतसा दृष्टमन्यत्स्मरतीति । अपि तु दर्शनचित्तात्स्मृतिचित्तमन्यदुत्पद्यते[9] । संततिपरिणत्या यथोक्तमिति क एवं सति दोषः । स्मरणादेव च प्रत्यभिज्ञानं भवति । असत्यात्मनि क एष स्मरति । स्मरतीति कोऽर्थः । स्मृत्या विषयं गृह्णाति । किं तद्ग्रहणमन्यत्स्मरणात् । स्मृतिं तर्हि कः करोति । उक्तः स यस्तां करोति

१. Y. संचरतीत्युच्यते । २. Y. सैषां । ३. Y. °परिगाहित० । ४. Y. दूरीभवेत् । ५. Ms. मोक्षभावदोषो । ६. Y. अन्यस्य । ७. Ms. यज्ञदत्तं चेतः । ८. Ms. अकार्यकार्यः...। ९. Y. अन्यदेवोत्पद्यते ।

स्मृतिहेतुचित्तविशेषः । यर्त्तीह चैत्रः स्मरतीत्युच्यते । ततो चैत्राख्यात्संतानात्तां भवन्तीं दृष्ट्वोच्य-[12a. 22A1. I]ते चैत्रः स्मरतीति[1] । असत्यात्मनि कस्येयं स्मृतिः । किमर्थैषा षष्ठी । स्वाम्यर्था । यथा कस्य कः[2] स्वामी । यथा गोश्चैत्रः । कथमसौ तस्याः स्वामी । तदाधीनो हि तस्या वाहदोहादिषु विनियोगः । क्व च पुनः स्मृतिर्विनियोक्तव्या य एवं तस्याः[3] स्वामी मृग्यते । स्मर्तव्येऽर्थे । किमर्थं विनियोक्तव्या । स्मरणार्थम् । अहो सूक्तानि सुखैंधितानाम् । सैव हि नाम तदर्थं विनियोक्तव्येति । कथं च विनियोक्तव्या । उत्पादनत अहोस्वित्संप्रेषणतः । स्मृतिगत्ययोगादुत्पादनतः । हेतुरेव तर्हि स्वामी प्राप्नोति फलमेव च स्वम् । यस्माद्धेतोराधिपत्यं फले फलेन च तद्वान् हेतुरिति । यो ह्येव हेतुः स्मृतेस्तस्यैवासौ । यश्चापि स चैत्राभिधानः संस्कारसमूहसंतान एकतो गृहीत्वा गवाख्यस्वामीत्युच्यते स चापि तस्य देशान्तरविकारोत्पत्तौ कारणभावं चेतसि कृत्वा न तु खलु कश्चिदेकश्चैत्रो नामास्ति न चापि गौः । तस्मात्तत्रापि न हेतुभावं व्यतीत्यास्ति स्वामिभावः । एवं को विजानाति कस्य विज्ञानमित्येवमादिषु वक्तव्यम् । तस्य हेतुरिन्द्रियार्थमनस्कारा यथायोगमित्येष विशेषः ।

योऽप्याह भावस्य भवित्रपेक्षत्वात् सर्वो हि भावो भवितारमपेक्षते । यथा देवदत्तो गच्छतीत्यत्र गतिर्भावो गन्तारं देवदत्तमपेक्षते । तथा विज्ञानं भावः । तस्मा-[12b. 22B1. I]द्यो विजानाति तेन भवितव्यमिति । स वक्तव्यः । कोऽयं देवदत्त इति । यद्यात्मा स एव साध्यः । अथ व्यवहारपुरुषः । सोऽपि न कश्चिदेकः संस्कारा हि त एवंनामानः । तत्र यथा देवदत्तो गच्छति यथा विजानाति । कथं च देवदत्तो गच्छति । क्षणिका हि संस्कारा अभिन्नसंताना देवदत्त इति बालैरेकसत्त्वपिण्डग्राहेणाधिमुक्ताः स्वस्य संतानस्य देशान्तरे कारणं भवन्त उच्यन्ते गच्छति देवदत्त इति । सा च देशान्तरोपत्तिर्गतिरित । ज्वालाशब्दसंतानयोर्गच्छतिगमनाभिधानवत्[4] । त एव च पुनर्विज्ञानस्य कारणं भवन्त उच्यन्ते जानाति[5] देवदत्त इति । आर्यैरपि तेषां संज्ञया तथोच्यन्ते व्यवहारार्थम् ।

यर्त्तीह "विज्ञानं विजानाती"ति सूत्र उक्तं किं तत्र विज्ञानं करोति । न किंचित्करोति । यथा तु कार्यं कारणमनुविधीयत इत्युच्यते । सादृश्येनात्मलाभा[6]दकुर्वदपि किंचित् । एवं[7] विज्ञानमपि विजानातीत्युच्यते । सादृश्येनात्मलाभाद-

१. Y. seems to be संतानात् भवदृष्टचोच्यते only । २. Y. कः कस्य । ३. Y. एतस्याः । ४. Ms. गच्छतागमनाभिधानवत् । ५. Y. विजानाति । ६. Ms. drops भा । ७. Ms. किंचिदेवं ।

कुर्वदपि किंचित् । किं पुनरस्य सादृश्यम् । तदाकारता[१] । अत एव तदिन्द्रियादप्युत्पन्नं विषयं विजानातीत्युच्यते नेन्द्रियम् । अथवा तथाऽत्रापि विज्ञानसंतानस्य विज्ञाने कारणभावाद्विज्ञानं विजानातीति वचनान्निर्दोषं कारणे कर्तृशब्दनिर्देशात् । घण्टा रौतीति यद्वत् । अपि खलु यथा प्र-[13a. 22A1. II]दीपो गच्छति तथा विज्ञानं विजानातीति । कथं च प्रदीपो गच्छति । प्रदीप इत्यर्चिषां संतान उपचर्यते । स देशान्तरेषूत्पद्यमानस्तं देशं[२] गच्छतीत्युच्यते । एवं विज्ञानमपि चित्तानां संतान उपचर्यते । तद्विषयान्तरेषूत्पद्यमानं तं[३] विषयं विजानातीत्युच्यते । यथा चाभिजायते तिष्ठति रुपमित्यत्र[४] भवितुर्भावादनर्थान्तरत्वमेवं विज्ञानस्यापि[५] स्यात् । यदि विज्ञानाद्विज्ञानमुत्पद्यते नात्मानः कस्मान्न नित्यं तादृशमेवोत्पद्यते न च क्रमनियमेनाङ्कुरकाण्डपत्रादिवत् । स्थित्यन्यथात्वस्य संस्कृतलक्षणत्वात् । एष हि संस्कृतस्य स्वभावो यदवश्यं प्रबन्धस्यान्यथात्वं भवति । अन्यथा हि निकामध्यानसमाहितानां सदृशकायचित्तोत्पत्तौ प्रथमक्षणनिर्विशेषत्वात् पश्चादपि न स्यात् स्वयं व्युत्थानम् । क्रमोऽपि हि चित्तानां नियत[६] एव । यतो नूत्पत्तव्यं[७] तत एव तस्योत्पादात् । तुल्याकारमपि हि किंचिदुत्पादने[८] समर्थं भवति । गोत्रविशेषात् । यद्यथा स्त्रीचित्तानन्तरं[९] यदि तत्कायविदूषणाचित्तमुत्पन्नं भवति तत्पतिपुत्रादिचित्तं वा पुनश्च पश्चात्संततिपरिणत्या स्त्रीचित्तमुत्पद्यते तत् समर्थं भवति तत्कायविदूषणाचित्तोत्पादने तत्पतिपुत्रादिचित्तोत्पादने वा । तद्गोत्रत्वात्[१०] । अन्यथा न सम-[13b. 22B1. II]र्थम् । अथ पुनः पर्यायेग स्त्रीचित्ताद्वहुविधं चित्तमुत्पन्नं बहुतर[११]मासन्नतरं वा तदेवोत्पद्यते । तद्भावनाया[१२] बलीयस्त्वात् । अन्यत्र तत्कालिकात्कायबाह्यप्रत्ययविशेषात् । सैव बलीयसी भावना कस्मान्नित्यं न फलति । स्थित्यन्यथात्वस्य संस्कृतलक्षणत्वात्[१३] तस्य चान्यथात्वस्यान्यभावनाफलोत्पत्तावानुगुण्यात् । एतद्धि सर्वचित्तप्रकारेषु दिङ्मात्रम् । निरन्तरकारणज्ञाने तु बुद्धानां प्रभुत्वम् ।। एवं ह्याहुः ।

सर्वाकारकारणमेकस्य मयूरचन्द्रकस्यापि ।
नासर्वज्ञैर्ज्ञेयं सर्वज्ञबलं हि तज्ज्ञानमि"ति ।।

प्रागेवारूपिणां चित्तभेदानाम् ।

१. Ms. सादृश्यन्तादाकारता । २. Ms. °मानस्तन्तद्देशं । ३. Y. तं तं । ४. Y. seems to be यथा वा भवति जायते तिष्ठति रूपम्... । ५. Y. विज्ञानेऽपि । ६. Y. नियतम् । ७. Ms. नोत्पत्तव्यं । ८. Ms. किंचिदुपादाने । ९. Y. स्त्रीचित्तादनन्तरं । १०. Ms. तत गोत्रत्वात् । ११. Y. seems to add पटुतरम् । १२. Ms. तत् भावनाया । १३. Y. स्थित्यन्यथात्वलक्षणत्वात् ।

य एव त्वयमेकीयस्तीर्थिक आत्मप्रभवां चित्तोत्पत्तिं मन्यते तस्यैवेदं स्फुटं चोद्यमापद्यते कस्मान्न नित्यं तादृशमेवोत्पद्यते न च क्रमनियमेनाङ्कुरकाण्डपत्रादिवदिति। मनःसंयोगविशेषापेक्षत्वादिति चेत्। न। अन्यसंयोगासिद्धेः। संयोगिनोस्तु[1] परिच्छिन्नत्वादप्राप्तिपूर्विका प्राप्तिः संयोग इति लक्षणव्याख्यानाच्चात्मानः परिच्छेदप्रसङ्गः। ततो मनःसंचारादात्मनः संचारप्रसङ्गो[2] विरागस्य[3] वा। प्रदेशसंयोग इति चेत्। न। तस्यैव तत्प्रदेशत्वायोगात्। अस्तु वा संयोगस्तथापि नित्यमविशिष्टे मनसि कथं संयोग[4]-[14a. 22A1. III]-विशेषः। बुद्धिविशेषापेक्ष[5] इति चेत्। स एव परिचोद्यते[6] कथं बुद्धिविशेष इति। संस्कारविशेषापेक्षादात्ममनःसंयोगादिति[7] चेत्। चित्तादेवास्तु संस्कारविशेषापेक्षत्वात्[8]। नहि किंचिदात्मनः उपलभ्यते[9] सामर्थ्यमौषध[10] कार्यसिद्धाविव[11] कुहकवैद्यफुःस्वाहानाम्। सत्यात्मनि तयोः[12] संयोग[13] इति चेत्। वाङ्मात्रम्। आश्रयः स इति चेत्। यथा कः कस्याश्रयः। न हि ते चित्रवदरादिवदाधार्ये नापि स कुडचकुण्डादिवदाधारो युक्तः। प्रतिघातियुत[14]दोषात् नैव स एवमाश्रयः[15]। कथं तर्हि। यथा गन्धादीनां पृथिवीति चेत्। अतिपरितोषिताः स्मः। इदमेव हि नः प्रत्यायकं नास्त्यात्मेति। यथा न गन्धादिभ्योऽन्या पृथिवीति। को हि स गन्धादिभ्योऽन्यां[16] पृथिवीं[17] निर्धारयति[18]। व्यपदेशस्तु पृथिव्या गन्धादय इति विशेषणार्थम्। ते ह्येव तदाख्या गन्धादयो यथा प्रतीयेरन्नान्य[19] इति। काष्ठप्रतिमायाः शरीरव्यपदेशवत्। सत्यपि च संस्कारविशेषापेक्षत्वे कस्मान्न युगपत्सर्वज्ञानोत्पत्तिः। यो हि बलिष्ठस्तेनान्येषां प्रतिबन्धः। स एव बलिष्ठः कस्मान्नित्यं न फलति। योऽस्य न्यायः सोऽस्तु भावनायाः। आत्मा तु निरर्थकः कल्प्यते।

अवश्यमात्माभ्युपग-[14b. 22B1. III]न्तव्यः। स्मृत्यादीनां गुणपदार्थत्वात् तस्य चार्था[20]दवश्यं[21] द्रव्याश्रितत्वात् तेषां चान्याश्रयायोगादिति चेत्।

---

१. Y. च। २. Y. °प्रसङ्गाद्। ३. Y. विनाशस्य। ४. Ms. संयोगः। ५. Y. °पेक्षत्वात्। ६. Y. एवोपरिचोद्यते। ७. Ms. °दात्मनः....Y. आत्ममनः....। ८. Y. seems to be °पेक्षात्। ९. Ms. seems to drop ते। १०. Ms. drops ध। ११. Ms. °विवि। १२. Ms. तयो। १३. Y. संभव। १४. Y. °युतत्व॰। १५. Y. has another reading as प्रतिघातित्वयुक्तत्वादिदोषान्न वै स एवमाश्रयः। १६. Ms. °न्या। १७. पृथिवी। १८. Y. निधारयति and in the note nivār Mss। १९. Y. विज्ञायेरन्। २०. Y. seems to omit अर्थाद्। २१. Y. अवश्य॰।

न। न ह्येषां गुणपदार्थत्वं सिद्धम्। सर्वमेव नो विद्यमानं द्रव्यम्। "षट् द्रव्याणि श्रामण्यफलानी"ति वचनात्। नाप्येषां द्रव्याश्रितत्वं सिद्धम्। परीक्षितो ह्याश्रयार्थः। तस्माद्यत्किंचिदेव तत्।

आत्मन्यसति किमर्थः कर्मारम्भः। अहं सुखी स्यामहं दुःखी न स्यामित्येवमर्थः। कोऽसावहं नाम यद्विषयोऽयमहंकारः। स्कन्धविषयः। कथं ज्ञायते। तेषु स्नेहात्। गौरादिबुद्धिभिः सामानाधिकरण्यात्तु। गौरोऽहमहं श्यामः स्थूलोऽहमहं कृशः जीर्णोऽहमहं युवेति गौरादिबुद्धिभिः सामानाधिकरणोऽयमहंकारो दृश्यते। न चात्मन एते प्रकारा दृश्यन्ते। तस्मादपि स्कन्धेष्वयमिति गम्यते। आत्मन उपकारकेऽपि शरीर आत्मोपचारो यथा य एवायं स एवाहं स एवायं मे भृत्य इति भवत्युपकारकेऽपि आत्मोपचारो नत्वहंकारः। सति शरीरालम्बनत्वे परशरीरालम्बनोऽपि कस्मान्न भवति। असंबन्धात्। येनैव हि सहास्य संबन्धः कायेन चित्तेन वा तत्रैवायमहंकार उत्पद्यते नान्यत्र। अनादौ संसार ए-[15a. 22A1. IV]वमभ्यासात्। कश्च संबन्धः। कार्यकारणभावः। यद्यात्मा नास्ति कस्यायमहंकारः। इदं पुनस्तदेवायातं "किमर्थैषा षष्ठीति। यावद्य एवास्य हेतुस्तस्यैवायमि"ति। कश्चान्यो हेतुः। पूर्वाहंकारपरिभावितं स्वसंततिविषयं सावद्यं[1] चित्तम्। असत्यात्मनि क एष सुखितो दुःखितो वा। यस्मिन्नाश्रये सुखमुत्पन्नं दुःखं वा। यथा पुष्पितो वृक्षः फलितं वनमिति। कः पुनरनयोराश्रयः। षडायतनम्। यथा कृत्वा तथोक्तम्।

असत्यात्मनि क एषां कर्मणां कर्ता कश्च फलानां भोक्ता भवति। कर्तेति क एष[2] वाह्यर्थः[3]। करोतीति कर्ता। भुङ्क्त इति भोक्ता। पर्याय उच्यते नार्थः। "स्वतन्त्रः कर्ते"ति कर्तृलक्षणमाचक्षते लाक्षणिकाः। अस्ति पुनः क्वचिदेव कार्ये कस्यचित् स्वातन्त्र्यम्। लोके दृष्टं देवदत्तस्य स्नानासनगमनादौ। कः पुनर्भवान् देवदत्तमुदाहरति। यद्यात्मानं स एव साध्यः। अथ पञ्चस्कन्धकं[4] स एव कर्ता। त्रिविधं चेदं कर्म कायवाङ्मनस्कर्म। तत्र कायकर्मणि तावत् कायस्य चित्तपरतन्त्रा वृत्तिः। चित्तस्यापि काये स्वकारणपरतन्त्रा[5] वृत्तिस्तस्याप्येवमिति नास्ति कस्यचित्[6] स्वातन्त्र्यम्। प्रत्ययपरतन्त्रा हि सर्वे भावाः प्रवर्तन्ते। आत्मनोऽपि च [15b. 22B1. IV] निरपेक्षस्याकारणत्वाभ्युपगमान्न स्वातन्त्र्यं सिध्यति। तस्मान्नैवंलक्षण उपलभ्यते कश्चित्कर्ता। यत्तु यस्य प्रधानं कारणं[7] तत्तस्य

---

१. Ms. looks like सविद्यं। २. Ms. The letter after ए is not clear।
३. Ms. It looks like वाह्यार्थः। ४. Ms. drops न्ध। ५. Ms परतन्त्र्या।
६. Y. adds अपि। ७. Y. प्रधानकारणं।

कर्तेत्युच्यते । न च आत्मनः क्वचिदपि कारणत्वं दृश्यते । तस्मात्स एवमपि न कर्ता[1] युज्यते । स्मृतिजो[2] हि च्छन्दः च्छन्दजो वितर्को वितर्कात्प्रयत्नः प्रयत्नाद्वायुस्ततः कर्मेति किमत्रात्मा कुरुते । फलस्यापि च क उपभोगो यमयमात्मा कुर्वन्नुपभोक्ता कल्प्यते । उपलब्धिरिति चेत् । नात्मनः उपलब्धौ सामर्थ्यं विज्ञाने प्रतिषेधात् ।

असत्यात्मनि कस्मादसत्त्वाधिष्ठानः पापपुण्योपचयो न भवति । वेदनाद्यनाश्रयत्वात् तदाश्रयश्च षडायतनं नात्मा यथा तथोक्तम् ।

कथमसत्यात्मनि विनष्टात्कर्मण आयत्यां फलोत्पत्तिः । आत्मन्यपि सति कथं विनष्टात् कर्मण आयत्यां फलोत्पत्तिः । तदाश्रिताद्धर्माधर्मात् । यथा कः किमाश्रित इत्युक्तोत्तरैषा वाचो युक्तिः । तस्मादनाश्रितादेव धर्माधर्मात् भवतु । नैव तु वयं विनष्टात् कर्मण आयत्यां फलोत्पत्तिं ब्रूमः । किं तर्हि । तत्संततिपरिणामविशेषाद्बीजफलवत् । यथा बीजात्फलमुत्पद्यत इत्युच्यते । न च तद्विनष्टाद्बीजादुत्पद्यते । नाप्यनन्तरमेव । किं तर्हि । तत्संततिप-[16a. 22A1. V]रिणामविशेषादङ्कुरकाण्डपत्रादिक्रमनिष्पन्नात् पुष्पावसानात् । तत् पुनः पुष्पान्निष्पन्नं कस्मात्तस्य बीजस्य फलमित्युच्यते । तदाहितं हि तत् परयापुष्पे सामर्थ्यम् । यदि हि तत्पूर्विकान्नभविष्यत् तत्तादृशस्य फलस्योत्पत्तौ न[3] समर्थमभविष्यत् । एवं कर्मणः फलमुत्पद्यत इत्युच्यते । न च तद्विनष्टात्कर्मण उत्पद्यते नाप्यनन्तरमेव । किं तर्हि । तत्संततिपरिणामविशेषात् । का पुनः संततिः कः परिणामः को विशेषः । यः कर्मपूर्व उत्तरोत्तरचित्तप्रवसः सा संततिस्तस्या अन्यथोत्पत्तिः परिणामः । स पुनर्योऽन्तरं फलोत्पादनसमर्थः सोऽन्तपरिणामविशिष्टत्वात् परिणामविशेषः । तद्यथा सोपादानं मरणचित्तं पुनर्भवस्य । त्रिविधकर्मपूर्वकत्वेऽपि यत्कर्म गुरु वा भवत्यासन्नमभ्यस्तं वा यत्कृतं सामर्थ्यं[4] द्योत्यते[5] नत्वन्यस्य । आह च

"यत् गुरु यच्चासन्नं यच्चाभ्यस्तं कृतं च यत्[6] ।
पूर्वं पूर्वं पूर्वं विपच्यते कर्मसंसारे" ॥

तत्र विपाकहेत्वाहितं तु विपाकफलदानसामर्थ्यं विपाकं दत्त्वा विनिवर्तते । सभागहेत्वाहितं तु निष्यन्दफलदानसामर्थ्यं क्लिष्टानां प्रतिपक्षोदयाद्विनिवर्तते । अक्लिष्टानां चित्तसंतानात्यन्तविनि-[16b. 22B1. V]वृत्तेर्यदा परिनिर्वाति ।

१. Y. कर्त्ता न । २. Y. adopts स्मृतितो and gives in note स्मृतियो० ।
३. Ms. has no न, but one न seems to be necessary here ।
४. Ms. सामार्थ्यं । ५. Ms. It is doutful. It may be read as द्यात्यते or ह्यत्पते or ह्युत्पते । ६. Y. adds पूर्वम् ।

अथ कस्माद्विपाकाद्विपाकान्तरं नोत्पद्यते वीजफलादिव फलान्तरम्। न तावत् दृष्टान्तेन सर्वं समानं भवति। तत्रापि तु न फलादेव पुनः फलान्तरमुत्पद्यते। किं तर्हि। विक्लित्तिविशेषजाद्विकारविशेषात्। यो हि तत्र भूतप्रकाराङ्कुरं निर्वर्तयति स तस्य वीजं नान्यः। भाविन्या तु संज्ञया सादृश्याद्वा पूर्वकोऽपि संतानो वीजमित्याख्यायते। [एवमिहापि तस्माद्विपाकाद्यदि सदसद्धर्मश्रवणा[1]दिप्रत्ययविशेषजः कुशलसास्रवोऽकुशलो वा चित्तविकार उत्पद्यते तस्मात्पुनर्विकारान्तरमुत्पद्यते नान्यथेति समानमेतत्। अथवा पुनरेतदेवं विज्ञातव्यम्। यथा[2] लाक्षारसरञ्जितात्[3] मातुलुङ्गपुष्पात्संततिपरिणामविशेषजः फले रक्तः केशर[4] उपजायते न च[5] तस्मात् पुनरन्यः एवं कर्मजाद्विपाकात् न पुनर्विपाकान्तरमिति। यथास्थूलमिदमस्मद्बुद्धिगम्यं दर्शितम्। नानाविधशक्तिभिन्नैस्तु कर्मभिरधिवासिताः संततय एतामवस्थां गता ईदृशं फलमभिनिवर्तयन्तीति बुद्धानामेव विषयः। आह खल्वपि

"कर्म तद्भावनां तस्या[6] वृत्तिलाभं ततः फलम्।
नियमेन प्रजानाति बुद्धादन्यो न सर्वथा॥

इत्येतां सुविहित-[17b. 23B1. VIII]हेतुमार्गशुद्धां
वुद्धानां प्रवचनधर्मतां निशम्य।
अन्धानां विविधकुदृष्टिचेष्टितानां
तीर्थ्यानां मतमपविध्य यान्त्यनन्धाः॥

इमां हि निर्वाणपुरैकवर्तिनीं
तथागतादित्यवचोंऽशुभास्वतीम्।
निरात्मतामार्यसहस्रवाहितां
न मन्दचक्षुर्विवृतामपीक्षते[7]॥

इति दिङ्मात्रमेवेदमुपदिष्टं सुमेधसाम्।
व्रणदेशो विषस्येव स्वसामर्थ्यविसर्पण[8] इति।

---

१. Ms. श्रमणा। २. Ms. यथो। ३. Ms. °तात्मा°। ४. Y. केसर। ५. Y. adds स। ६. G. भावना तस्या। ७. Ms. °पीष्यते। ८. G. Y. °सर्पिणः।

पुद्‌गलकोशमभिधर्मकोशभाष्यं समाप्तमिति ।
कृतिरियमाचार्यवसुवन्धुपादानामिति ॥

ये धर्महेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत् ।
तेषां च यो निरोध[1] एवंवादी महाश्रमणः ॥

देवधर्मोऽयं प्रवरमहायान[2]सकलतथागतशासनधूर्द्धरस्य उत्तरापथिक-
पण्डितस्थविरश्रीलामावाकस्य यदत्र[3] पुण्यमित्यादि ।

॥ शुभमस्तु ॥



१. Ms. drops ध । २. Ms. °यागः । ३. Ms. यत्र ।

## APPENDICES

### GLOSSARY OF BUDDHIST TERMS USED
(With nearest English equivalent)

**A**

Abhidharma —Philosophical exposition of Truth
Abhinna Sabhāgatā —Generic homogeneity
Abhimāna — Egoism, I-ness in the sense of special peculiarity.
Acittaka —Defunct mind
Adhimāna —Superiority feeling
Adhimukti —Zealous application
Adhimukti Manasikāra—Attention due to interest
Aduḥkhasukhāvedanā —No pleasure no-unpleasure
Adhva — Temporality
Adveṣa —Non-hatred
Aheya —Ineradicable
Akṣara —Alphabet
Akhaṇḍopādhi —Highest genera
Akuśala Mūla —Root evil
Akūśalamahābhūmika Citta —Morally unwholesome Mind-state
Alobha —Non-greed
Amoha —Absence of basic ignorance or wrong knowledge
Anātma —Non-soul
Antarābhava —Intermediary existence
Antaḥgrāha dṛṣṭi —Wrong attitude with regard to absolute existence and non-existence
Anityaṭā —Impermanence
Anāsrava —Pure
Anāgata —Dormant, Future
Anābhoga —Non-concernment
Anājñātamājñāsyāmi Indriya —Faculty of 'I will know the unknown'

Anapatrāpya —Absence of fear of public condemnation for doing wrong.

Anāgamī —Never-returning adept

Anugraha —Receiving

Anubhava —Affection

Anulakṣaṇa —Sub-character

Anivṛtāvyākṛta citta —Morally neutral impure Mind state

Anuśaya —Impurity

Aniyatabhūmika Citta —Irregular Mind state not yet morally decided

Apadhātu —Water element

Apramāda —Vigilence, Constant diligence

Apatrapā —Fear for being publicly condemned for doing wrong

Apratisaṃkhyā Nirodha—Liberation obtained by means other than knowledge

Apramāṇa —Four cardinal virtues (Maitrī, Muditā, Karuṇā, Upekṣā)

Apramāṇopekṣā —Detachment or Neutrality and retaining the four cardinal virtues (mentioned above)

Aprāpti —Non-achievement

Apuṇya —Morally unwholesome

Apariṇāminī Citi-Śakti— Unmodalised psychic energy

Aparisphuṭa Mano-vijñāna —Unmanifest mind, subliminal consciousness

Arhat —Liberated

Asaṃṣkṛta —Unconstituted

Aśāta —Disagreeable

Aśaikṣa —Master, beyond all teaching

Asmimāna —Ego-ism, I-ness in the sense of Ahamkara

Atīta —Inactive, Past

Atītagrahaṇa (Pāli Atītaggahaṇa) —Past content

| | |
|---|---|
| Ativibhūta | —Very clear |
| Atiavibhūta | —Very obscure |
| Auddhatya | —Absence of serenity, perturbed mind, Insolence |
| Auddhatya Carita | —Personality dominated by perturbed mind, Insolence |
| Avadāta | —Black |
| Avidyā | —Wrong knowledge, basic ignorance |
| Avihiṃsā | —Non-hatred |
| Avijñapti | —Non-information Non-mentaux |
| Avyākṛta | —Morally neutral |
| Avipāka | —Non-resultant |
| Ayoniśomanaskāra | —Wrong application of attention to wrong object |

## Ā

| | |
|---|---|
| Ābādha | —Obstruction |
| Ābhoga | —Concernment |
| Ādhyātmika | —Internal |
| Āhāra | —Food |
| Āhrīkya | — Shamelessness |
| Ājñendriya | —Faculty of 'I have known' |
| Ājātavñīndriya | —Faculty of 'Omniscience' |
| Ākāśa | —Sky |
| Ākāśānantāyatana | —Infinite Sky |
| Ākincanyānantāyatan | —Infinite desirelessness |
| Ālaṃbana | — Object of Consciousness |
| Ālayavijñāna | —Spontaneous flow of unmanifest psychic unity |
| Āninjya | —Morally neutral or pure |
| Ārya | —Liberated |
| Ārūpya-Dhātu | —Sphere of no-corporeality |
| Āsaṃjñika | —Non-conscious beings |
| Āśraddhya | —Absence of faith |

| | |
|---|---|
| Āveṇika Citta | —Mind-state free of every other impurity except basic ignorance |
| Āvedha | —Limit, Range |
| Āyatana | —Base, Extent |
| Āyu (s) | —Longivity |

**B**

| | |
|---|---|
| Bhava | —Origin |
| Bhavāṅga | —Free flow of becoming part of being unmanifest psychic energy. |
| Bhavāṅgacālana | —Strring of unmanifest psychic energy |
| Bhavāṅga-upaccheda | —Arrest of free-flowing energy of becoming |
| Bhavāṅga Pāta | —Merging into the free flow of becoming |
| Bhavāgra | —The last of the four non-corporeal states (see Naiva samjña-Nasamjñāyatana) noted by the absence of modified consciousness or samjñā |
| Bhautika | Made up of the four Bhūtas or ultimate particles. |
| Bhūta | The four ultimate particles (Kṣiti, Ap, Tejas, Vāyu) |
| Bhāvanā | —Meditation |
| Bhāvanāheya | —Eradicable by means of meditation |
| Bhinna Sabhāgata | —Specific Homogenity |
| Bodhyaṅga | —Means conducive to the attainment of proper knowledge or Bodhi |
| Brahmavihāra | —Attainment of four cardinal virtues (Maitrī, Muditā, Karuṇā, Upekṣā, see Apramāṇa) |

**C**

| | |
|---|---|
| Caitta | —Mind-derivative |
| Caittaṣikī Vedanā | —Mental affection |

Cakṣudhātu —Eye element
Cakṣu Āyatana —Eye base
Cakṣu Vijñāna Dhātu —Eye or visual consciousness element
Cakṣu Indriya —Eye faculty
Cetanā —Psychic stirring, Initial consciousness
Ceṣṭā —Effort
Citta —Mind-state
Citta Viprayukta —Dissociated from mind
Citta Śakti —Psychic energy
Cyuti-citta —Death consciosness
Chanda —Will to do, Inclination

**D**

Darśana Heya —Eradicable by insight or realisation
Daurmanasya —Dissatisfaction
Daurmanasyendriya —Faculty of dissatisfaction
Duḥkha Satya —The first noble truth, suffering
Duḥkha Vedana —Pain
Dṛṣṭi —Attitude (Wrong)
Dṛsṭiyuktacitta —Mind-state associated with wrong attitude
Dṛsṭiparāmarśa —Wrong attitude as seen in false exaggeration of something inferior.
Dveṣa —Hatred, Repulsion
Dharma —Real
Dharmaskandha —Composition of Reals
Dharma Dhātu —Non-sensuous Element
Dharmāyatana —Non-sensuous Base or Extent
Dhyāna —Meditation

**G**

Gati —Species
Gandha-Dhātu —Olfactory element
Gandhāyatana —Olfactory base
Gandhavijñāna Dhātu —Olfactory Consciousness-element
Ghrāṇendriya – Olfactory Faculty

H

| | |
|---|---|
| Hetu | —Cause |
| Hrī | —Shame |
| Hṛdayavastu | —Heart-base of mind |

I

| | |
|---|---|
| Indriya | —Faculty |
| Īrṣyā | —Envy |
| Iṣṭasādhanatā Pravṛtti | —Urge for Organic well-being |
| Iraṇa | —Movement |

J

| | |
|---|---|
| Jarā | —Decay |
| Janma-Niḥśraya | —Cause of birth |
| Javana | —Full cognition Aperception |
| Jīvita | —Vitality |
| Jīvitendriya | —Faculty of vitality |
| Jihvā Dhātu | —Tongue-element |
| Jihvāvijñāna Dhātu | —Tongue Consciousness element |
| Jihvendriya | —Tongue faculty |
| Jighatsā | —Hunger |
| Jīvanayoniyatna | —Effort for upkeep of life |

K

| | |
|---|---|
| Kāma | —Sensuous Activity |
| Kaṣāya | —Sticky substance |
| Karuṇā | —Compassion (See Brahmavihara and Apramana) |
| Kaukṛtya | —Remorse |
| Kausīdya | —Passivity |
| Krodha | —Anger |
| Krodhacarita | —Personality with Anger as dominating character |
| Kleśa | —Impurity |
| Kleśa-Mahābhūmika Citta | —Impure Mind-state |

| | |
|---|---|
| Kṣaṇika | —Momentary |
| Kṣānti | —Cessation of Impurity |
| Kṣiti | —Earth |
| Kuśala | —Morally wholesome |
| Kuśala-Mahābhūmika Citta | —Morally wholesome Mind-state |
| Kuśala Mūla | —Root merit |
| Kāla | —Time |
| Kāma Dhātu | —The sphere of sensuous nature |
| Kāya | —Whole |
| Kāya Dhātu | —Tactile element |
| Kāya Vijñāna Dhātu | —Tactile consciousness element |
| Kāyendriya | —Tactile faculty |
| Kāyikī Vedenā | —Bodily or physical affection |
| Kāya Vijnapti | —Gestural communication |

L

| | |
|---|---|
| Lakṣaṇa | —Character |
| Lābha | —Attainment |
| Lobha | —Greed |

M

| | |
|---|---|
| Mada | —Pride |
| Mahābhūmika Citta | —Basic Mind-state |
| Mahābhūta | —Ultimate particles (Earth, Water, Fire, Air) |
| Mahikā | —Mist |
| Maitrī | —Friendliness (See Brahmavihara and Apramana) |
| Mana-Indriya | —Mind faculty |
| Mana Āyatana | —Mind base |
| Manovijnāna Dhātu | —Mind consciousness element |
| Mana Dhātu | —Mind element |
| Manobhūmika | —Mentally originated |
| Manodwārābarjana | —Advertance of Mind door |

| | |
|---|---|
| Manasikāra | —Attention |
| Mahantālambana | —Big or extensive object of consciousness |
| Maraṇabhava Citta | —Consciousness of the time of death |
| Mati | —Knowledge |
| Māna | —Self-conceit, Egoism |
| Mānacarita | —Personality with dominating character of egoism |
| Mānasika Karma | —Mental Act |
| Mānātimāna | —I-ness in relation to best |
| Mātsarya | —Jealousy |
| Mārgasatya | —The fourth noble truth, Path for liberation from suffering |
| Māyā | —Trick, wile |
| Mithyā dṛṣṭi | —Wrong attitude with regard to four noble truths. |
| Mithyā-māna | —False egoism |
| Middha | —Langour |
| Muditā | —Content (See Brahmavihara and Apramana) |
| Muṣitasmṛti | —Confused memory |
| Mṛdu | —Mild |
| Moha | —Absence of proper knowledge, Basic ignorance (See Avidya) |
| Mṛakṣa | —Ingratitude |

N

| | |
|---|---|
| Naivasamjnānāsamjnāyatana | —A level of meditation in the non-corporeal sphere noted by absence of modified consciousness |
| Naiḥṣyandika | —Continuous |
| Nāma | —Principle of Internality |
| Nāmakāya | —Nomenclature, Entirety of names |
| Nikāyasabhāga | —Abstract base of homogeneity |

| | |
|---|---|
| Nirodha satya | —Third noble truth, Cessation of suffering |
| Nirodha samāpatti | —State of mind noted by temporary withdrawal of Consciousness |
| Nīvaraṇa | —Hindrance, Obstacle |
| Nivṛtāvyakṛta Citta | —Morally neutral and impure Mind-state |
| Nirvāṇa | —Cessation of becoming |

P

| | |
|---|---|
| Paramāṇu | —Atomic particles |
| Parittālaṃbana | —Small objet of Consciousness |
| Paritta-kleśabhūmika Citta | —Mind-state consisting of minor vices |
| Paryekṣaka Citta | —Analysing Mind-state |
| Padakāya | —Vocabulary Entirety of words |
| Pancadwārābarjana | —Advertance of five sense doors |
| Pumindriya | —Faculty of masculinity |
| Pakti | —Maturation |
| Prathagjana | —Ordinary individual |
| Pratigha | —Striking, Repulsion |
| Pramāda | —Non-vigilence |
| Praśrabdhi | —Serenity |
| Praspanda | —Stirring stimulation |
| Prajñā | —Proper knowledge |
| Prajñendriya | —Faculty of proper knowledge |
| Pratyaya | —Condition |
| Pratyavekṣaka Citta | —Discerning Mind-state |
| Pratyabhijnā | —Recognition |
| Pratisaṃkhyā Nirodha | —Liberation obtained by means of knowledge |
| Pratyutpanna | —Active or present |
| Pradasa | —Envious rivalry |
| Puṇya | —Morally wholesome |
| Pūrvakalabhavika Citta | —Mind-state of previous birth |
| Prāpti | —Achievement |

## R

| | |
|---|---|
| Rasa Dhātu | —Gastatory element |
| Rasāyatana | —Gastatory base |
| Rāga | —Attachment, Inclination |
| Ruci | —Interest |
| Rūpa-Dhātu | —Matter element |
| Rūpa Skandha | —Matter formation/Composition |
| Rūpa-Prasāda | —Manifest Matter |
| Rūpa Āyatana | —Matter base |
| Rūpa | —The visible |
| Rūpa Saṃjñā | —Image |

## S

| | |
|---|---|
| Śabda Dhātu | —Sound element |
| Śabdāyatana | —Sound-base |
| Sabhāgatā | —Homogeneity |
| Sacetana | —Stimulated, Reacting to |
| Śaikṣa | —Trainee |
| Sakti | —Attachment |
| Śakti | —Power, capacity |
| Sakrdāgāmī | —Once returning |
| Samanvāgama | —Assimilation |
| Saṃkleśa | —Impurity |
| Samskṛta | —Constituted |
| Saṃskāra-skandha | —Impression formation |
| Saṃskāropekṣā | —Detachment with regard to impression |
| Samskāra | —Impression |
| Samjñā | —Perception |
| Saṃjñā Skandha | —Perception formation |
| Saṃyojana | —Fetter |
| Samādhi | —Concentration |
| Samādhīindriya | —Faculty of Concentration |
| Samāpatti | —Trance State |

| | |
|---|---|
| Samudaya satya | —The second noble truth, Cause of suffering |
| Samghāta | —Assemblege |
| Saṃbandha | —Relation |
| Saṃketa | —Symbol |
| Saṃgha | —Buddhist order |
| Santīraṇa | —Analysis |
| Santīrikā Prajñā | —Discursive thought |
| Santāna | —Unit in continuum |
| Sannipāta | —Contiguity |
| Śarīra | —Organism |
| Saumanasya | —Satisfaction |
| Saumanasyendriya | —Faculty of Satisfaction |
| Sattvākhya | —Human being |
| Satkāya Dṛṣṭi | —Wrong attitude with regard to soul which does not exist. |
| Śāta | —Agreeable |
| Śāṭṭhya | —Gibe, Hypocrisy |
| Sāsrava | —Impure |
| Sāmānyalakṣaṇa Manaskāra | —Attention due to or paid to common character |
| Strīnidriya | —Faculty of femininity |
| Smṛti | —Memory |
| Smṛtīndriya | —Faculty of memory |
| Sparśa | —contact |
| Spraṣṭavya Dhātu | —Tactile element |
| Spraṣṭavyāyatana | —Tactile base |
| Śraddhā | —Faith |
| Śraddhendriya | —Faculty of faith |
| Srotāpatti | —Adept carried in stream of liberation |
| Śrotra Dhātu | —Ear element |
| Śrotravijñāna Dhātu | —Auditory consciousness element |
| Styāna | —Lethargy |
| Styānacarita | —Personality dominated by lethargy |

| | |
|---|---|
| Sthiti | —Duration |
| Sukhāvedanā | —Pleasure |
| Sukhendriya | —Faculty of Pleasure |
| Svapna | —Sleep, Dream |
| Svalakṣaṇamanaskāra | —Attention due to or paid to unique character |

T

| | |
|---|---|
| Tatsabhāga | —Dissimilar |
| Teja Dhātu | —Fire element |

U

| | |
|---|---|
| Udbhūtavṛtti | —Emergent Character |
| Upekṣā | —Neutrality |
| Upaghāta | —Striking, resisling |
| Upakleśa | —Minor Impurity |
| Upanāha | —Grudge |
| Upapattibhava Citta | —Consciousness at the time of birth |
| Unamāna | —Inferiority Feeling |
| Uṣṇatā | —Temperature |
| Utpāda | —Origin |

V

| | |
|---|---|
| Varṇa | —Colour |
| Vayudhātu | —Air element |
| Vacivijñapti | —Verbal communication |
| Vedanā | —Affection |
| Vedanaopekṣā | —Detachment with regard to feeling |
| Vyanjanakāya | —Entirety of Alphabet |
| Vyavasthāpana | —Determining |
| Vyavadana | —Pure |
| Vibhūta | —Clear |
| Vicikitsā | —Lack of faith in Buddha, Dharma and Saṃgha |
| Vicāra | —Discerning consciousness |
| Vijñāna | —Consciousness |
| Vijñānadhātu | —Consciousness element |

| | |
|---|---|
| Vijñānāntāyatana | —Infinite consciousness of non-corporeal sphere |
| Vihiṃsā | —Injuriousness |
| Vipāka | —Resultant |
| Vipratīsara | —Remorse |
| Vināṣa | —Destruction |
| Viṣaya | —Object of Consciousness |
| Vīrya | —Energy |
| Vīryendriya | —Faculty of energy |
| Vitarka | —Investigating Consciousness |
| Vitti | —Experience |

Y

| | |
|---|---|
| Yoni | —Particular species |

# कारिकासूची

---

# शब्दसूची

[ निम्नरेखपदानि विशेषाभिधानं सूचयन्ति ]

## SELECTED BIBLIOGRAPHY


(A) Abhidharmakośa Kārikā—Edited by Rāhula Sāṃkṛtyāyaṇa, Kāśī Vidyāpīṭha, 1931.

Abhidharmakośa Bhāṣya—Edited by Principal Prahlad Pradhan, formerly of Sambalpore College, Orissa. Published by K. P. Jayaswal Instt. Patna.

Abhidharmakośa Vyākhyā—Sphuṭārthā: 1-3 Kośasthānas. Edited by Dr. N. Laha and N. Dr. Dutta, Luzac, London, Kośa 4, Edited by Dr. N. Dutta, Calcutta Oriental Series, 31.

Abhidharmakośa Vyākhyā—Sphuṭārthā: Editcd by V. Wogihara, Tokyo, Japan (1932-36).

Abhidharmasamuccaya (Asaṅga) Edited by Principal Prahlad Pradhan, formerly of Sambalpore College, Orissa.

Abhidharmāmṛta (Ghoṣaka) : Edited by Śāntibhikṣu, Śāntiniketan, W. Bengal.

Abhidhammattha Saṃggaha—Anuruddha—Edited by D. Kosāmbī.

Abhidharma Dīpa—Edited by P. Jain—Published by K. P. Jayaswal Instt. 1959.

Abhidhaṃmattha Saṃggaha of Anuruddha. Journal of Pali Text Society, 1884—Edited by Mrs. C. Rhys Davids.

Aṭṭhasalinī—Edited by P. Bapat and Vadekar, 1942.

Aspects of Mahāyāna Buddhism and its relation to Hīnayāna—By Dr. N. Dutta.

A Record of the Buddhist Religion—By I tsingh Translated by J. Takakusu.

A Catalogue of the Buddhist Tripitakas—By Buniu Nanjio.

A Manual of Buddhist Psychology—By W. M. Mcgovern, Kagan Paul, 1932.

A History of Philosophy—By F. Thilly and L. Wood.

A Historical Study of the terms Hīnayāna and Mahāyāna and Origin of Mahāyāna Buddhism by R. Kimura, Calcutta 1927.

Aṣṭādaśasāhasrikā Prajñāpāramitā—Edited and Translated by E. Conze. (Gilgit Manuscript)

A study of Paramārtha's Life of Vasubandhu and the Date of Vasubandhu—By J Takakusu (Journal of Royal Asiatic Society 1905).

A Manual of Buddhist Historical Traditions—By Dr. B. C. Law.

A History of Buddhist Logic—
By S. C. Vidyābhūṣaṇa.

A Briefer Course of Psychology—By G. Murphy (1953).

A Manual of Ethics—By J. S. Mackenize. University Tutorial Press 1920.

A History of Philosophy—C. Webb. The Home University Library, 1949.

(B) Buddhism—By C. Humphrys, Pelican, 1951.

Buddhist Logic—Prof. T. Stcherbatskoi.

Bibliotheca Buddhica XXV, XXVI, Leningard, 1930.

Buddhadharma O Sāitya—By Dr. P. C. Bagchi, Viśvabhāratī, Śāntiniketan.

Bodhisattva Bhūmi—Edited by Dr. N. Dutt—K. P. Jayaswal Instt.

Buddhist Manual of Psychological Ethics (Translation of Dhamma Saṅgaṇi) My Mrs. C. RhysDevids—Royal Asiatic Society, 1900.

Buddhism, Its Essence and Development by E. Conze.

Basic Conception of Buddhism—by Mm V. Bhattacarya Śāstrī, Calcutta University.

Buddhist Philosophy in India and Ceylon By A. B. Keith (1923).

